# प्रस्तावना ।

कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ।–भगवद्गीता ।

भवतु विदितं सकलसाधुजनेभ्यो भक्तजनेभ्यः पण्डितजनेभ्यश्च सरलहृदयेभ्यः । भक्तिमाहात्म्यं सर्वथाऽचिन्तनीयं खलु । यतो भगवतो भक्तेषु निरतिशयवात्सल्यं विलसति । तदेतत् "भक्तिप्रियो माधवः" इत्यादिषु सुस्पष्टम्–"श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः" इत्यादिना । भगवताध्यङ्गीकरणात् भक्तिर्नाम भगवति सर्वाधिकं निरतिशयं प्रेम । तदुक्तं नारदेन–"अथातो भक्तिं व्याख्यास्यामः ॥ १ ॥ सा त्वस्मिन्परमप्रेमरूपा ॥ २ ॥" इत्यादिना । तादृशी भक्तिरेव भवतारिणीति सुप्रसिद्धम् । एवं भक्तिकृतां भगवद्भक्तानां जगत्पावनानि कलिमलहराणि चरित्राणि सर्वतः सुप्रसिद्धानि । न च तानि सर्वैरपि समानतया बोद्धुं शक्यानि । अतः परमकारुणिकेन भगवद्भक्तवर्येण पश्चिमप्रान्ताधिपतिश्रीमानसिंहमहाराजगुरुश्रीकृष्णदासभक्तवर्यशिष्याग्रदासभक्तशिष्येण श्रीनाभदासभक्तेन निजगुर्वनुज्ञयातीतादिसर्वभक्तजनजीवनचरित्राणि चमत्कृतियुतानि भगवत्प्रसादोपलब्धया विशदया बुद्ध्या सर्वार्थपरिज्ञानपूर्वकं भाषाग्रन्थरूपेण यथावदुपनिबद्धानि । तानि च संस्कृतपद्यरूपेण श्रीमच्चन्द्रदत्तेन स्वप्रागतभगवत्प्रेरितेन विरचितानि । तच्चरित्राणां समग्रोऽयं ग्रन्थो भक्तमालेति नाम्ना सुप्रसिद्धः । अस्मिंश्च भक्तमालाग्रन्थे विष्णुखण्ड–शिवखण्ड–शक्तिखण्डाख्यं खण्डत्रयं कल्पितमस्ति । तत्रेदं प्रथमं विष्णुखण्डं ६७०० सप्तशताधिकषट्सहस्रश्लोकसङ्ख्यापरिमितमेकोनपञ्चाशदधिकशतसर्गविभूपितमस्माकं समीपे मीरपुरनिवासिभिः श्रीमद्भिः श्रीलक्ष्मणमहाजनाभिधैः संप्रेषितम् । तदेतदस्माभिः स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितम् । विज्ञापयामश्च सर्वान्साधुसज्जनभगवद्भक्तसद्गृहस्थादीञ्छ्रद्धालून् । यदेतत् सकलपुरातनादिसुप्रसिद्धभगवद्भक्तचरित्ररूपं भक्तमालाप्रथमखण्डं संगृह्य सर्वदेशीयभक्तचरित्राणि विज्ञाय तान्यनुसृत्यात्मनोऽपि भक्तिमुत्पाद्य भगवत्प्रियत्वमासाद्य भवबन्धनं निर्भिद्य मुक्तिसरणिरनुसन्धेयेति शम् ।

सर्वसज्जनकृपाकाङ्क्षी–क्षेमराज श्रीकृष्णदास–"श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालयाध्यक्षो मुम्बईस्थः ।

# अथ भक्तमालान्तर्गतवैष्णवखण्डादिस्थसर्गाणां विषयानुक्रमः ।



समाप्तेयं भक्तमालानुक्रमणिका।

ॐ स्वस्ति ॥ श्रीगणेशायनमः ॥ अथ भक्तमालप्रारम्भः ॥ आकुंचितोरुबाहुभ्यांरिंगमाणंव्रजांगणे ॥ श्रीनंदनंदनंवंदेप्राचांवाचा
मगोचरम् ॥ १ ॥ विनायकंनमस्कृत्यशारदांसर्वकामदाम् ॥ भक्तमाहात्म्यचरितंकुर्वेऽहंमैथिलोद्विजः ॥ २ ॥ यथामेमतिरुत्पन्नाभ
क्तमाहात्म्यवर्णने ॥ यथामेऽनुभवोजातोवक्ष्याम्यग्रेसविस्तरम् ॥ ३ ॥ खण्डत्रयंविधास्येऽहंग्रंथेऽस्मिन्नातिविस्तरम्॥प्रथमंविष्णुखं
डंचशिवखंडंततः परम् ॥ ४ ॥ तृतीयंशक्तिखंडंचेत्येतत्खंडत्रयंशुभम् ॥ भक्तिर्हिसर्वलोकानांमातेवहितकारिणी ॥ ५ ॥ वर्णाश्रम
स्थितानांतुतपोयागादिभिर्गतिः ॥ कलौवर्णाश्रमरताः प्रायेणमनुजानहि ॥६॥ तषांभक्तिंविनानान्यांगतिंपश्यामिकामपि ॥ भक्ति
स्तुद्विविधापूर्वावैधीरागादिजापरा ॥ ७ ॥ वर्णाश्रमरताःसंतोभगवंतंभजंतिये ॥ तेषांतुवैधीविज्ञेयाभक्तिःसंसारतारिणी ॥८॥ रागा
दिजातुचान्येषांसातिशीघ्रफलप्रदा ॥ आर्तोजिज्ञासुरर्थार्थीज्ञानीभक्तिंकरोतुवै ॥ ९ ॥ सर्वेषांजायतेसिद्धिःस्वार्थानांनात्रसंशयः ॥
नभक्तेःसदृशंकिंचित्प्रीणनंविद्यतेहरेः ॥ १० ॥ भक्तस्यवशगोब्रह्माभक्तस्यवशगोहरिः ॥ भक्तस्यवशगःशंभुःशक्तिर्भक्तवशानुगा ॥
॥ ११ ॥ देवदैत्याश्चगंधर्वायक्षराक्षसकिन्नराः॥पिशाचाःपितरोनागाव्याघ्रऋक्षेभवानराः॥१२॥ मनुष्याःप्राणिनोयेवैसर्वेभक्तवशानु
गाः ॥ संसारेजन्मसंप्राप्यभक्तिंकुर्वंतियेजनाः ॥ १३ ॥तएवधन्यास्तैरेवजितमेतच्चराचरम् ॥ श्रुतिस्मृतिपुराणानांमतमेतत्सनातनम्
॥ १४ ॥ सर्वेषांसाधनानांतुभक्तिरेवगरीयसी ॥ कौंतेयप्रतिजानीहिनमेभक्तःप्रणश्यति ॥१५॥ इत्येतद्भगवद्वाक्याद्भक्तिरेवगरीयसी॥
सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज॥१६॥अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमाशुचः॥इत्येतद्भगवद्वाक्याद्भक्तिरेवगरीयसी ॥ १७ ॥

भक्त्यात्वनन्ययाशक्यअहमेवंविधोर्जुन ॥ इत्येतद्भगवद्वाक्याद्भक्तिरेवगरीयसी ॥१८॥ श्रद्दधानामत्परमाभक्तास्तेऽतीवमेप्रियाः ॥
इत्येतद्भगवद्वाक्याद्भक्तिरेवगरीयसी॥१९॥पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति ॥ तदहंभक्त्युपहृतमश्नामिप्रयतात्मनः ॥ २० ॥
अपिचेत्सुदुराचारोभजतेमामनन्यभाक ॥ साधुरेवसमंतव्यःसम्यग्व्यवसितोहिसः ॥ २१ ॥ इत्येतद्भगवद्वाक्याद्भक्तिरेवगरीयसी
॥२२॥साभक्तिर्विद्यतेयेषांतेषांलक्षणमुच्यते ॥ शांतोदांतोदयायुक्तोदेवब्राह्मणपूजकः ॥२३॥ श्रद्धावाननसूयश्चसवैभक्तोद्विजोत्तमः ॥
स्वधर्मनिरतोनित्यंब्रह्मविष्णुमहेश्वरान् ॥ २४ ॥ एकबुद्ध्याप्रपश्यंतितेवैभक्तजनाःस्मृताः ॥ स्वधर्मपत्नीनिरतागृहस्थाअतिथिप्रि
याः ॥२५॥यथाशक्त्यार्चयंतोवैदेवंभक्तास्तुतेस्मृताः ॥ एकादशीव्रतरताआमिषाहारवर्जिताः ॥ २६ ॥ हरिनामपरानित्यंज्ञेयास्ते
वैष्णवाजनाः ॥ चतुर्दशीव्रतरतागणेशव्रतकारिणः ॥२७॥ विष्णुनामपरानित्यंवैष्णवास्तेनसंशयः॥एकपत्नीव्रतरतामिथ्याभाषणव
र्जिताः ॥२८॥ अर्चयंतोपिचहरिंज्ञेयास्तेवैष्णवाजनाः ॥तापयंतिहिमेवह्निंदास्यंतितूलिकाअपि ॥२९॥ शीतार्तेभ्यश्चदीनेभ्योज्ञेयास्ते
वैष्णवाजनाः॥ आरामवृक्षानारोप्यप्रयच्छंत्युदकंतुये ॥३०॥ग्रीष्मर्तौनिर्जलेदेशेज्ञेयास्तेवैष्णवानराः ॥ युवतिंरूपसंपन्नांदृष्ट्वापत्नींप
रस्यवै॥३१॥चलितंनमनोयेषांज्ञेयास्तेवैष्णवोत्तमाः ॥ दृष्ट्वासमृद्धिमन्येषांयेतुष्यंतिनरोत्तमाः ॥ ३२ ॥ स्वकीयामिवमन्वानाज्ञेयास्ते
वैष्णवाजनाः ॥ अन्यस्तुतिंसमाकर्ण्यनासूयावशगाश्चये॥३३॥ शिरसाचाभिनंदंतिज्ञेयास्तेवैष्णवाजनाः ॥ मातरंपितरंचैवलक्ष्मीना
रायणाविव॥३४॥पूजयंतितदाज्ञांवैकुर्वंतोवैष्णवाजनाः ॥ परोपकारनिरताः पररक्षणतत्पराः ॥३५॥ परनिंदामकुर्वंतोज्ञेयास्तेवैष्णवा

जनाः ॥ पाखंडसंगरहितादंभाचारविवर्जिताः ॥३६॥ विश्वस्तावेदशास्त्रेषुज्ञेयास्तेवैष्णवाजनाः ॥ शास्त्राचारव्रतैश्चैवनानाधर्मप्रजल्प
नैः ॥३७॥ संमोह्यवित्तहर्तारःपाखंडास्तेप्रकीर्तिताः ॥ यथाकथंचिच्चेद्विष्णौबुद्धिर्यस्यदृढाभवेत् ॥३८॥ रागतोद्वेषतोवापिसोपिभक्तोन
संशयः ॥ कामाद्गोप्योभयात्कंसोद्वेषाच्चैद्यादयोनृपाः ॥३९॥ निरंतरंतंसंचिंत्यप्रापुःकृष्णंनसंशयः ॥ हरेरीश्वरताचैषासदाचिंतयतोघ
नान् ॥४०॥ आत्मसात्कुरुतेतस्यरागद्वेषावुभौसमौ ॥ अज्ञानाद्वाप्रमादाद्वालोभान्मोहदृशापिवा ॥ ४१ ॥ चिंतयंतोहृषीकेशंगच्छंति
परमांगतिम् ॥ दिव्यादितिर्य्यक्पर्यंतायेकेचिज्जीवजातयः ॥ ४२ ॥ बभूवुःकृतकृत्यास्तेसंपूज्यहरिमीश्वरम् ॥ दुर्वारवैरिदुर्नीतेर्निजाङ्ग
क्षयशंकया ॥४३॥ उपास्यकतिधावृत्त्याहरिंसुखमवाप्नुयात् ॥ भस्मासुरस्यवरदःकष्टंसंप्राप्यशंकरः ॥ ४४ ॥ स्मृत्वात्मानंहरिंसद्यो
मुक्तस्तत्क्षणमेवहि ॥ एकमेवापरेसर्वेभजंतिहरिमीश्वरम् ॥ ४५ ॥ स्वस्वकामार्थसिद्ध्यर्थंपुराणेपरिकीर्तिताः ॥ नारदः पर्व
तश्चैवसनकाद्यास्तथैवच ॥ ४६ ॥ स्वायंभुवोयमश्चैवविष्वक्सेनोजयस्तथा ॥ विजयश्चसुनंदश्चनंदोभद्रःसुभद्रकः ॥ ४७ ॥
चंडःप्रचंडःकुमुदःकुमुदाक्षस्तथैवच ॥ पुण्यशीलःसुशीलश्चवैवस्वतमनुस्तथा ॥ ४८ ॥ महाभागवताश्चैते कीर्तिताविष्णु
भक्तिपाः ॥ अनंतोवासुकिश्चैवशेषनागस्तथैवच ॥ ४९ ॥ विष्णुभक्तिरताएतेसर्वदाविष्णुवल्लभाः ॥ प्रह्लादश्चबलिश्चैवविभी
षणमुखाश्चये ॥ ५० ॥ राक्षसास्तेऽतिभक्तावैकृष्णार्थेत्यक्तजीविताः ॥ दक्षश्चशरभंगश्चकविश्चहरिरेवच ॥ ५१ ॥ करभाजनोंतरि
क्षश्चचमसश्चप्रबुद्धकः ॥ आविर्होत्रःपिप्पलस्तुद्रविडश्चतथैवहि ॥ ५२ ॥ ऋषभस्यसुताएतेजगतोनंदनाःस्मृताः ॥ प्रजानां

पतयोभक्ताःख्यातानारायणांशतः ॥ ५३ ॥ पृथुःप्रियव्रतश्चैवमुचुकुंदोनिमिस्तथा ॥ सुधन्वाशिबिरिक्ष्वाकुर्ऋभुर्गाधिःपुरूरवाः ॥
॥ ५४॥ प्राचीनबर्हिर्भगवाञ्छतधन्वारघुर्भृगुः ॥ मांधाताजनकश्चैवसत्यसंधरहूगणौ ॥५५॥ रुक्मांगदोऽम्बरीषश्चसगरश्चभगीरथः ॥
हरिश्चद्रोदधीचिश्चसुरथोभरतस्तथा ॥ ५६ ॥ रयोमूर्तीरंतिदेवउत्तंकोभूरिदैवकः ॥ ययातिर्नहुषश्चैवदिलीपःपुरुरेवच ॥ ५७ ॥ यदु
रुत्तानपादश्चभीष्मोदशरथस्तथा ॥ एतेराजर्षयश्चान्येविष्णुभक्तिरताःसदा ॥५८॥ हनुमाञ्जांबवांश्चैवसुग्रीवोगरुडस्तथा ॥ ग्राहो
गजोजटायुश्चनीलःकाकभुशुन्डकः ॥५९ ॥ इत्येतेवैष्णवश्रेष्ठाविष्णुलीलाप्रवर्तकाः ॥ ध्रुवश्चचंद्रहासश्चचित्रकेतुश्चपांडवाः ॥ ६० ॥
मयूरध्वजोप्यलर्कोरंतिदेवश्चकौरवः ॥ ताम्रध्वजःपरीक्षिद्वैराजानोविष्णुवल्लभाः ॥ ६१॥ वाल्मीकिश्चशुकश्चैवसूतःशौनकएवच ॥भर
द्वाजःप्रचेताश्चशमीकोयाज्ञवल्क्यकः॥६२॥अगस्त्यश्चपुलस्त्यश्चपुलहश्च्यवनस्तथा ॥ वसिष्ठःसौभरिश्चैवकर्दमोऽत्रिस्तथैवच ॥६३॥
ऋचीकोगौतमश्चैवगर्गोव्यासस्तथैवच ॥ अंगिराभृगुदालभ्योवैशंपायनलोमशौ ॥ ६४ ॥ विश्वामित्रोथदुर्वासाःशृंगीमांडव्यएवच ॥
जमदग्निःकश्यपश्चमायादर्शःपराशरः॥६५॥मार्कंडेयश्चऋषयोविष्णुभक्ताःप्रकीर्तिताः॥उद्धवोविदुरश्चैवसुदामाक्रूरएवच॥६६॥संजयः
श्रुतिदेवश्चगुहोऽजामिलएवच ॥ एतेचान्येपुराणेषुमनुष्यावैष्णवोत्तमाः ॥ ६७ ॥ शबरीद्रौपदीकुंतीतथाविंध्यावलीसती ॥ सत्यरू
पाऽऽत्रेयसुतासतीचैवमदालसा ॥६८॥ मथुरायांचब्राह्मण्योयाश्चान्नंहरयेददुः ॥ एताश्चान्याश्चगोप्योवैश्रीकृष्णार्पितमानसाः ॥ ६९॥
पतिंपुत्रंभ्रातृवर्गंपरित्यज्यहरिंमुदा ॥ चिंतयंत्योहरिंप्रेम्णातमेवापुर्नसंशयः ॥ ७० ॥ इतिसंक्षेपतोभक्तारूपंमाहात्म्यमेवच ॥ कथितं

विस्तरादग्रेवक्ष्यामिसर्वकामदाम् ॥७१॥ पुराणोक्तेषुभक्तेषुकथातत्रैवविस्तृता॥योलोकेविद्यतेतस्यनास्तिसाकल्यतेमया ॥ ७२ ॥
पुराणानुक्तभक्तानांकथाचैवात्रगीयते ॥ यथामतिचतांश्रुत्वासंतस्तुष्यंतुमत्कृते ॥ ७३ ॥ इति श्रीभगवद्भक्तिमाहात्म्ये प्राचीनभक्त
स्मरणंनामप्रथमःसर्गः ॥ १ ॥ ७ ॥ अथेतिहासंवक्ष्यामियथाभक्तावलीकथा ॥ लोकेप्रसिद्धायेनाथकृतायस्यप्रसादतः ॥१॥ पश्चिमे
मानसिंहोभूद्राजासर्वसमृद्धिमान्॥विजेतासर्वशत्रूणांदाताचैवद्विजन्मनाम् ॥ २ ॥ गुरुस्तस्यमहानासीत्कृष्णदासइतिश्रुतः ॥ महात्मा
विष्णुभक्तश्चसर्वभूतसुहृत्तमः ॥ ३ ॥ तत्रैवनगरेतेनस्थानंराज्ञाविनिर्मितम्॥गुर्वर्थंतत्रसगुरुरुवासविजितेन्द्रियः ॥ ४ ॥ तस्यशिष्यौच
विख्यातौकीलाग्रौतुततः परम् ॥ एकदातौमहात्मानौकीलाग्रौनिर्गतौगृहात् ॥ ५ ॥ पूजोपकरणार्थायवनंयातौमुदान्वितौ ॥ गृही
त्वाकुशपुष्पादिपरावृत्तौगृहंप्रति ॥ ६ ॥ पथितिष्ठंतमंधंचशिशुमेकमपश्यताम् ॥ दुर्भिक्षसमयेत्यक्तंजनन्यानिर्जनेवने ॥ ७ ॥
कीलोऽग्रंप्राहपश्येमंबालमंधंवनेस्थितम् ॥ नयेमंस्वाश्रमेवत्सपालयैनंममाज्ञया ॥ ८ ॥ इत्युक्त्वाजलमादायममार्जतस्यच
क्षुषी ॥ ततोनेत्रेऽतिविमलेजातेतस्यततःशिशोः ॥ ९ ॥ नीत्वातंताबुपागत्यकृष्णदासाश्रमंप्रति ॥ तदाज्ञयाचप्रोवाचसोऽग्रदा
सःशिशुंप्रति ॥ १० ॥ अरेमद्वारिनिवसगृहाणेमंकटंशिशो ॥ साधूच्छिष्टजलेकुंडेस्नाहित्वमुदकेशिवे ॥ ११ ॥ सद्भिर्भुक्तावशिष्टान्नं
पत्रेत्यक्तंबहिस्तुयत् ॥ तद्भुक्त्वासाधुसेवायांनिरतोभवसर्वदा ॥ १२॥ इतिसंश्लिष्यतंबालमग्रदासोदयान्वितः ॥ अन्यानुवाचबालो
यंभवद्भीरक्ष्यतामिह ॥ १३ ॥ एवंकतिपयेकालेगतेबालस्त्वहर्निशम् ॥ रामनामजपन्द्वारिनिवसन्गुर्वनुज्ञया ॥१४॥ साधुसेवाप्र

सादेनव्यवर्द्धतसदीप्तिमान् ॥ एकदातंगुरुःप्राहनाभाख्यंकृपयान्वितः ॥ १५ ॥ अथमत्संनिधानेत्वंवत्सकार्यंकरोभव॥इत्युक्तःसोपि संतुष्टोगुरुसंनिधिमावसत् ॥ १६ ॥ एकदासोऽग्रदासस्तुकृतासनपरिग्रहः ॥ नित्यंवैमानसींपूजांचकाररहसिस्थितः ॥ १७ ॥ तत्राप्ययंस्थितोनाभश्चामरेणचवीजयन् ॥श्रीरामंस्वापयित्वाससंस्थाप्यकनकासने ॥ १८ ॥ परिधाप्यततोवस्त्रमलंकारान्ददौमुदा ॥ चंदनेनापिसंपूज्यमाल्यंधृत्वासमुत्थितः ॥ १९ ॥ एतस्मिन्समयेकश्चिच्छिष्योऽग्रस्यवणिग्जनः ॥ सस्मारजलधौनाथंगुरुमग्रंतदाहृदि ॥ २० ॥ तस्यनौर्वित्तसंपूर्णाक्वचिल्लग्नामहोदधौ ॥ नशशाकबहिर्गन्तुंयदानौःसतदावणिक् ॥ २१ ॥ धनप्राणक्षयाद्भीतःसस्मारात्मगुरुंहृदा ॥ तदाग्रस्यतुहस्तेवैमाल्यंतादृगवस्थितम् ॥ २२ ॥ मनस्तत्रगतंज्ञात्वारामोनावमतीतरत् ॥ ततोऽग्रदासस्यमनोयावदासीत्प्रपूजने ॥ २३ ॥ तावन्नाभःस्थितःपृष्ठेनाथदूरंगताहिनौः ॥इत्यब्रवीत्ततोऽग्रस्तुपृष्ठस्थंवीक्ष्यसस्मितः ॥२४॥ मनसापूजयित्वाथरामंसर्वोपचारकैः ॥ नमस्कृत्यसमुत्तस्थौतदानाभमुवाचसः ॥२५॥ अरेनाभाख्यमेशिष्यवैष्णवानांयशांसिभोः ॥ वर्णयत्वंमयाज्ञप्तस्तस्माच्छ्रेयोभविष्यति ॥ २६ ॥ ततःप्रणम्यनाभस्तंप्राहजानाम्यहंकथम् ॥गुरुराहयथाज्ञासीर्दूरंनौकांगतेतिभोः ॥ २७ ॥ किंचमद्वचनात्साधुसेवामाहात्म्यतस्तव ॥ भूतायेवर्तमानाश्चभविष्यंतश्चसाधवः ॥२८॥ तेषांयशांसिजानीहिनतेमिथ्याभवेद्वचः ॥ इत्याज्ञांशिरसाधृत्वागुरोरग्रस्ययत्नतः ॥२९॥ चकारभक्तिचरितंनाभदासस्तुभाषया ॥ तदुक्तमन्यकथितंश्रुत्वाहंतुयथामति ॥ ३० ॥ भगवद्भक्तिमाहात्म्यंचक्रेसंस्कृतभाषया ॥ ३१ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येनाभदासमाहात्म्यंनामद्वितीयःसर्गः ॥ २ ॥ ७ ॥

अथ वक्ष्येहनुमतोमाहात्म्यंपरमाद्भुतम् ॥यस्यस्मरणमात्रेणरामेभक्तिर्दृढाभवेत् ॥१॥ एकदाजलधेस्तीरेसेतुबंधसमुद्यमे॥रामर्मिंदीवर
श्यामंपरिवार्य्यस्थिताअमी ॥२॥ लक्ष्मणश्चैवसुग्रीवोहनुमानंगदस्तथा ॥ नीलोनलश्चराजावैऋक्षाणांजांबवांस्तथा ॥३॥ अस्मिन्नेवमु
हूर्तेतुसमायातोविभीषणः॥मालामादायमहतींसर्वरत्नमयींशुभाम् ॥४॥ रत्नाकरस्यसर्वस्यमूलंभूमंडलस्यच ॥ तांमालांरामपुरतोद
दौभक्त्याविभीषणः ॥ ५ ॥ प्रशशंसगृहीत्वातांरामोमालामनिंदिताम् ॥ निरीक्ष्यसहनूमंतंप्रांजलिंपुरतःस्थितम् ॥ ६ ॥ तस्यकंठे
ददौमालांमारुतेर्भक्तवत्सलः ॥ मारुतिस्तुसमुत्थायप्रणम्यजगृहेस्रजम् ॥ ७ ॥ उपविश्यततोमालांकरेकृत्वानिरीक्ष्यच ॥ मणिमेकमु
पादायदंतैरस्फोटयत्स्फुटम् ॥ ८ ॥ ततोमनसिसर्वेतेजहसुःसस्मिताजनाः ॥ रामंविनाहनूमांस्तुपुनरेकमपिस्फुटम् ॥ ९ ॥ स्फोट
यित्वामणिद्वंद्वंनिरीक्ष्यचपुनःपुनः ॥ चिक्षेपमालामेवाग्रेभूमौसर्वस्यपश्यतः ॥ १० ॥ ततःकिमितितेसर्वेविस्मयात्प्रष्टुमुद्यताः ॥हनु
मान्स्वयमेवाहनिजभक्तिंप्रदर्शयन् ॥ ११ ॥ यस्यरामोनचस्वामीरामनामांकितंनयत्॥नतत्प्रियंममास्तीहसत्यमेतन्नसंशयः ॥१२॥
देहोयंसर्वभूतानांप्रियोभवतिसर्वदा ॥ रामनामविनाहंतुजह्यांतमपिसर्वदा ॥ १३ ॥ इत्युक्त्वासत्वचोदेहान्निष्कास्यादर्शयज्जनान् ॥
रामनामाभिलिखितमंगंसर्वंहनूमतः ॥ १४ ॥ तद्दृष्ट्वासाधुसाध्वेवमूचुः सर्वेऽतिविस्मिताः ॥भक्तराजममन्यंतहनूमंतंतदाजनाः ॥१५॥
एवंहनुमतोभक्तिर्नभूतानभविष्यति ॥ तादृशीदेवलोकेऽपिनृणामत्रतुकाकथा ॥ १६ ॥ सुग्रीवसख्यघटनंसीतान्वेषणमेवच ॥ समुद्र
लंघनंसीतासंभाषणमतःपरम् ॥ १७॥ आरामभंजनंचाक्षकुमारस्यवधस्तथा ॥ लंकायादीपनंरामसान्निध्यागमनंपुनः ॥ १८ ॥

सेतुबंधश्चजलधौद्रोणाद्यानयनंतथा ॥ लक्ष्मणप्राणरक्षाचरामशोकनिवारणम् ॥ १९ ॥ एवमादीनिकर्माणिप्रख्यातानिहनूमतः ॥
पुराणेऽभ्युदयायैतन्मयाकिंचिदिहोदितम् ॥ २० ॥ अपरंशृणुमाहात्म्यंहनुमत्संभवंपरम् ॥ परमाश्चर्य्यजनकंसर्वाहंकारनाशनम् ॥ २१ ॥
एकदाद्वारकायांतुजित्वाकृष्णःशचीपतिम् । पारिजातंसमानीयसत्यायैप्रददौहरिः ॥ २२ ॥ सर्वाधिकाहमितिसातदात्मानममन्यत ॥
गरुडोऽपितदात्मानंवेगेनचबलेनच ॥ २३ ॥ सर्वाधिकंमन्यमानोहृदिगर्वंसमावहत् ॥ बाणासुरभुजच्छेदाद्यैर्नैकाद्भुतकर्म्मभिः ॥ २४ ॥
चक्रस्यापिमनस्यासीन्नमेतुल्यपराक्रमः ॥ इतित्रयाणांमानंतुखर्वीकुर्वञ्जनार्दनः ॥ २५ ॥ दर्शयन्हनुमद्वार्क्केलीलामेकांचकारसः ॥ सत्य
भामासमीपेतुतस्थावुत्साहवर्जितः ॥ २६ ॥ श्रीकृष्णंतंप्रियाप्राहप्राजलिर्दुःखितासती । अद्यत्वामन्यमनसंपश्याम्युत्साहवर्जितम् २७
कुतस्तद्ब्रूहिमेदास्यैनोचेत्प्राणांस्त्यजाम्यहम् ॥ नाप्यद्राक्षमनुत्साहंत्वांकदापिमहाभुजम् ॥ २८ ॥ अद्यत्वामीदृशंद्रष्टुंनोत्सहेजी
वितुंप्रिय ॥ इतिसत्यावचःश्रुत्वाभगवान्वाक्यमब्रवीत् ॥ २९ ॥ अनुत्साहस्यमेसाध्विनास्तिकारणमण्वपि ॥ एकोभक्तस्यविरहोबा
धतेमांयदातदा ॥ ३० ॥ नतादृशोमेप्रद्युम्नोनेदृग्देहोऽपिमेसति ॥ तद्विश्लेषादहंखिन्नःकदाद्रक्ष्यामितंहितम् ॥ ३१ ॥ इतिश्रुत्वावच
स्तस्यसत्याप्राहातिविस्मिता ॥ किमेतद्भाषसेनाथयस्तवैतादृशःप्रियः ॥ ३२ ॥ गच्छावस्तत्रतंवापिसमानयितुमर्हसि ॥ तवापिरखि
द्यतेचित्तंमदर्थंतंनवेद्म्यहम् ॥ ३३ ॥ कस्तेसभक्तःकुत्रास्तेकिंनामब्रूहितन्मम ॥ इत्युक्तःप्रिययाकृष्णःप्राहतांचिंतितंवचः ॥ ३४ ॥
प्रियेयावोनसंदेहस्तंचात्रैवानयाम्यहम् ॥ परंतुशृणुतस्यैकानिष्ठाप्राणिसहायिनी ॥ ३५ ॥ हनुमान्नामभक्तोमेपर्वतेगंधमादने ॥ अस्ति

मद्रूपमेवैकंहृदिध्यायन्सदाकपिः ॥ ३६ ॥ सीतायाहरणेपूर्वमहंरामशरीरवान् ॥ तमेकंबलमादायजित्वारावणमाहवे ॥ ३७ ॥ सीता
लक्ष्मणसंयुक्तःकुशलीगृहमागमम् ॥ लक्ष्मणेशक्तिनिहतेमयिमतुंव्यवस्थिते ॥ ३८ ॥ संरक्षितमनेनैवरघूणांकुलमुत्तमम् ॥
तस्यैकापरमानिष्ठासीतारामौविनापुनः ॥ ३९ ॥ नान्यंपश्यतिनोयातिनमेन्मामपिनैवसः ॥ अतस्तत्रकथंयावःसआगच्छेत्कथंपुनः
॥ ४० ॥ प्रसन्नोयास्यतीत्येताञ्चिंतामेहृदिजायते ॥ अहंरामस्वरूपंहिधर्तुंशक्नोमिजानकी ॥ ४१ ॥ काभवेदितिमेचिंतात्वंवासारुक्मि
णीकिंमु॥नान्यासामागतिंजानेयथाजनकजाभवेत् ॥ ४२ ॥ इत्युक्तासत्यभामातुकृष्णंप्राहातिहर्षिता ॥ अहोचिंतांत्यजाशुत्वमहं
स्यांजनकात्मजा ॥ ४३ ॥ आनयस्वप्रियंभक्तंनरुष्टःसभविष्यति ॥ इतिश्रुत्वावचस्तस्याःसस्मारगरुडंहरिः ॥ ४४ ॥आगत्यविन
तापुत्रःकिंकरोमीतिचाब्रवीत् ॥ तमाहकृष्णःसंस्तुत्यगंधमादनपर्वते ॥ ४५ ॥ हनुमान्ममभक्तोस्तितमानयमदुक्तितः ॥ तत्रगत्वा
ब्रूहितस्मैद्वारकायांसमागतः ॥ ४६ ॥ सीतयासहरामस्तुद्रष्टुंत्वामिच्छतिप्रभुः ॥ इत्युक्त्वातंतुशीघ्रंमांसमागत्येतिबोधय ॥ ४७ ॥
इत्युक्त्वातंपुनश्चक्रंप्राहत्वंद्वारितिष्ठभोः ॥ आगतेकपिराजेतुद्वारिसंस्थाप्यतंपुनः ॥ ४८ ॥ निवेद्यमांततःपश्चादानयेःसन्निधौमम ॥
तथेत्युक्त्वागरुत्मांस्तुययौतंगंधमादनम् ॥ ४९ ॥ हनुमंतंददर्शाथनमस्कृत्याब्रवीद्वचः ॥ यदुक्तंहरिणासर्वंश्रुत्वातन्मारुतिःपुनः ॥
॥ ५० ॥ अर्घपाद्यादिकंकृत्वाकृत्वातिथ्यंचपुप्लुवे ॥ गरुडोऽपिचतत्सर्वंपृष्ठस्तेनसहैवतु ॥ ५१ ॥ यावदायातिगरुडस्तावदागतवा
न्कपिः ॥ द्वारिचक्रंसमालोक्यक्वमेस्वामीमहाप्रभुः ॥ ५२ ॥ तच्छ्रुत्वावचनंतस्यमारुतेर्भक्तवत्सलः ॥ बभूवरामरूपस्तुधनुर्बाण

धरोहरिः ॥ ५३ ॥ सत्यापिगृहमध्येतुचचारंतस्ततस्तुसा ॥ नसीतारूपमभजद्रुक्मिणींप्राहकेशवः ॥ ५४ ॥ सीतारूपंसमादायशी
घ्रमागच्छमेंऽतिकम् ॥ इत्युक्त्वासातुतत्रैवसीताजाताविदर्भजा ॥ ५५ ॥ हनुमंतंतदाचक्रंप्राहतिष्ठात्रयाम्यहम् ॥ त्वांनिवेद्यगृही
त्वाज्ञामागच्छामिततोव्रज ॥५६॥ इतिश्रुत्वातुहनुमांस्तच्चक्रंज्वलनप्रभम् ॥ भ्रममाणंभुजेदक्षेधृत्वाकंकणवत्कपिः ॥ ५७ ॥ जगा
मांतःपुरेसद्यःक्कमेस्वामीतिचासकृत् ॥ भाषमाणोददर्शाग्रेनीलजीमूतसन्निभम् ॥ ५८ ॥ द्विभुजंपुंडरीकाक्षंधनुर्बाणधरंप्रभुम् ॥
स्मितानननंपीतवस्त्रंदिव्यालंकारभूषितम् ॥ ५९ ॥ तद्वामपार्श्वगांदेवींजानकींजननीमिव ॥ दृष्ट्वामुहुर्निपत्योर्व्यांप्रणनाममहाकपिः ॥
॥ ६० ॥ हर्षाश्रुपरिपूर्णाक्षःसमुत्थायकृतांजलिः ॥ हर्षगद्गदयावाचाकिंकरोमीतिचाब्रवीत् ॥ ६१ ॥ श्रुत्वातद्भगवान्प्रीत्याप्राहतेकु
शलंकपे ॥ इत्युक्त्वापाणिनापाणिंगृहीत्वास्वसमीपतः ॥ ६२ ॥ उपवेश्यकरेणास्यपृष्ठेपस्पर्शचासकृत् ॥ ततःसारुक्मिणीसीता
लड्डुकादिकमोदकान् ॥ ६२ ॥ हनूमतेददौप्रीत्यामारुतिर्बुभुजेमुदा ॥ भक्तिमंतंततस्तंतुमारुतिंभगवान्हरिः ॥ ६४ ॥ प्राहत्वत्स्म
रणाच्चेतोबभूवोत्कंठितंमम ॥ अतस्त्वांद्रष्टुकामेनगरुडःप्रेषितोमया॥६५ ॥दृष्टोऽसित्वंतुभद्रंतेगच्छतत्रसुखीभव ॥ एवंप्रभावोहनुमान
वतारोमहेशितुः ॥६६॥ धर्मसंस्थापनार्थायप्रादुर्भूतोऽस्तिभूतले ॥ सएवरामःकृष्णोसौहनुमान्गरुडःसच॥ ६७ ॥ आत्मनोऽनेकमूर्ती
श्चकृत्वारक्षतिमेदिनीम् ॥ सेव्यसेवकभावेनलोकंसंमोह्यमायया ॥ ६८ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येहनुमच्चरितकथनंनामतृतीयः
सर्गः ॥३॥ विभीषणकथांवक्ष्येमहाश्चर्यमयींशुभाम् ॥ यांश्रुत्वामनुजःसद्योरामेभक्तिंलभेद्ध्रुवम् ॥१॥ विभीषणस्तुपौलस्त्योरावण

स्यानुजोबली ॥जातिधर्मंपरित्यज्यबंधुवर्गंतथैवच ॥ २ ॥ श्रीरामंशरणंगत्वायुयुधेबंधुभिःसह ॥ लंकाविध्वंसनंज्येष्ठबंधुमारणमप्य

हो ॥३॥ हितंमेनेनरामस्यभक्तिंतत्याजराक्षसः ॥ ततोलंकाधिपत्यंचचिरंजीवित्वमेवच ॥ ४ ॥ संप्राप्यांतेहरेर्धामगमिष्यतिनसंश

यः ॥ एवंरामायणेतस्यभक्तिरुक्तामहर्षिणा ॥५॥ लोकेप्रसिद्धांतांभक्तिंवक्ष्येऽहंतुयथाश्रुतम् ॥ एकदापानपात्रेतुकश्चित्सांयात्रिकोव

णिक् ॥ ६ ॥ विधायवित्तमंभोधौव्यवहर्तुंजगामह ॥लग्नानौःक्वचिदंभोधौनचचालातियत्नतः ॥७॥ ततोवैश्योऽतिसंदिग्धःकिंकरोमी

त्यचिंतयत् ॥ तदाकेनचिदुक्तःसबलिरत्रप्रदीयताम् ॥८॥ एकोमनुष्योनोचेत्तुनौर्गमिष्यतिसंक्षयम् ॥ इत्युक्तःसवणिक्प्राहकथंदास्या

मिमानुषम् ॥९॥ अहमेवबलिर्भूत्वापतिष्यामिमहोदधौ ॥ तदैवतेषांकुशलंभविष्यतिनसंशयः ॥ १० ॥ मृतेमयिधनंचैतन्मत्पुत्राय

प्रदीयताम् ॥ एवंनिश्चितबुद्धिंतवणिजंप्राहकश्चन ॥ ११ ॥ कुष्ठरोगातुरोवृद्धोभृत्योवैश्यसुहृत्तमः ॥ नत्वंपतबलिर्भूत्वामृतेत्वयि

मृतावयम् ॥ १२ ॥ अहंतुकुष्ठरोगार्तोवृद्धोमर्तुमनाःस्वयम् ॥बलिभूतःपतिष्यामिजीवत्वंरक्षबांधवान् ॥ १३ ॥ इत्युक्त्वानिपपाता

धोदेवोगृह्णातुमांबलिम् ॥ अविघ्नमत्रनौरेषागच्छत्वभिमतांदिशम् ॥१४॥ एवंसंकल्प्यपतितेवृद्धेरामेतिभाषिणि ॥ तत्क्षणाच्चलितानौ

कासर्वेकुशलिनोऽभवन् ॥ १५ ॥ सतुवृद्धोवीचिभिस्तुनीतोलंकासमीपतः ॥ तत्ररक्षोगणैर्दृष्टोगृहीत्वाभक्षणायसः ॥ १६ ॥ नीतो

विभीषणस्याग्रेभक्ष्यमेतत्प्रगृह्यताम् ॥ विभीषणस्तुतंदृष्ट्वाभृत्येभ्यःपारितोषिकम् ॥ १७ ॥ दत्त्वाबहुधनंप्रीत्यातंवृद्धंतुस्वयंपुनः ॥

सिंहासनेसुसंस्थाप्यपूजयामासभक्तितः ॥ १८ ॥ अहोधन्योऽहमद्यैवतन्मनुष्यनिरीक्षणात् ॥ रामचन्द्रस्यरूपंमेहृद्याविर्भवतिस्फुटम्

॥ १९ ॥ अत्रैवतिष्ठतेराज्यमिदंकुरुयथासुखम् ॥ विभीषणवचः श्रुत्वावृद्धःप्राहातिभीतवत् ॥ २० ॥ नाहंराज्यमिदंकांक्षेनचान्य
त्किञ्चिदप्यहो ॥ तस्यामेवतुनौकायांगंतुमिच्छाम्यहंविभो ॥ २१ ॥ इत्युक्तःसतुदैत्येंद्रोरत्नानिविविधानिसः ॥ तदंगेपट्टवस्त्रेणबद्ध्वा
भालेऽथतस्यवै ॥ २२ ॥ रामनामलिखित्वातुप्रोवाचजलधिंस्वयम्॥ अहोऽस्यभालेमुद्रेयंप्रभुनामांकितामया ॥२३॥ तत्प्रभावात्त्व
याचैषनेयोयत्रायमिच्छति ॥ गंतुंतत्रेतिसंप्रार्थ्यप्राक्षिपज्जलधौसतम् ॥ २४ ॥ सतुवृद्धोविष्णुभक्तकरस्पर्शप्रभावतः ॥ तदाभाषणसं
सर्गान्महारोगाद्विमुक्तवान् ॥ २५ ॥ लब्ध्वादिव्यवपुःकुष्ठीसमुद्रसलिलेऽपतत् ॥ वीचिभिःप्रेरितस्तस्यानौकायाःसन्निधिंगतः॥२६॥
तत्रनौकास्थितैर्दृष्टोमनुष्योयमुपागतः ॥ यःपोताज्जलधौमग्नोनौस्तंभेसमुपास्थितः ॥ २७ ॥ परंतुनास्यरोगोऽस्तिदिव्यरूपधरः
कथम् ॥ इतिसंदिह्य ते सर्वेसंपप्रच्छुस्तमादरात्॥ २८ ॥कोऽसिकस्मादिहायातःसत्यंकथयनःपुरः ॥इतितेषांवचः श्रुत्वासउवाचप्रहृष्ट
वत् ॥२९ ॥ अहोभ्रांताः कथंयूयंसएवाहंनसंशयः ॥पुराजलेनिपतितोलंकायाःसंनिधौगतः॥३०॥विभीषणाग्रेरक्षोभिर्नीतोऽहंभक्षणा
यच ॥ ततोविभीषणोदृष्ट्वामांसस्माररघूत्तमम् ॥ ३१॥ स्मारकोयदहंजातस्तस्मान्मांसोऽप्यपूजयत् ॥ दत्त्वारत्नान्यनेकानिभालेरामे
त्यलीलिखत् ॥ ३२ ॥ ततःसमुद्रेनिक्षिप्यप्रापयेमंयथेप्सितम् ॥ इत्युक्ताहंतत्संस्पर्शतदालापनयोगतः ॥ ३३ ॥ कुष्ठरोगाद्विमुक्तः
सन्निहायातोऽस्मिसांप्रतम्॥ धन्यो विभीषणोभक्तोधन्यंरामेतिनामतत् ॥३४ ॥ यत्प्रसादान्महापापादहमेवंविमोचितः ॥ इतिश्रुत्वा
तुतेसर्वेविस्मयंपरमंगताः ॥३५॥ रामभक्तिंप्रशंसंतोजग्मुस्तेस्वंस्वमालयम् ॥ एवंविभीषणेभक्तिः प्रसिद्धालोकपावनी ॥३६॥ अद्या

पिभक्तिमाहात्म्यमेवमेवास्त्यसंशयम् ॥ ३७ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येविभीषणचरितंनामचतुर्थःसर्गः ॥४ ॥ छ ॥शबरीभक्ति
माहात्म्यंकथयामियथाश्रुतम् ॥ परमाश्चर्यजनकंरामभक्तिप्रवर्द्धनम् ॥ १ ॥ दंडकारण्यमध्येतुमातंगाश्रमसंनिधौ ॥ शबरस्यसु
ताकाचित्पतिपुत्रविवर्जिता ॥ २ ॥ अरण्येनिवसंतीसाफलमूलाशनाशुभा ॥ दैवान्मतंगंतमृषिमेकदासंददर्शह॥३॥प्रातःस्नात्वास
मायांतंस्वाश्रमेनियतेंद्रियम्॥दृष्ट्वापलायमानापिपश्यंतीशक्तितोमुनिम् ॥ ४ ॥ विचारयामासहृदिसेवयाहंकथंमुनिम् ॥ द्रष्टुंहिनाहि
शक्नोमिनीचातंकथमर्चयेत् ॥ ५ ॥ तथाप्येतस्यमार्गेहिशर्कराकंटकान्वितम्॥तंमार्जयाम्यहंनित्यंयावद्द्रक्ष्यतिनैवमाम् ॥ ६ ॥ इंध
नानिगृहीत्वाचतदाश्रमसमीपतः ॥ संस्थापयिष्येरात्रौतुततःसेवाभविष्यति ॥ ७ ॥ एवंकृतेकदाचित्स्यात्कृपामयिमुनेरहो ॥ इति
निश्चित्यमनसारात्रिशेषेचनित्यशः ॥ ८ ॥ मार्गंसंमार्जयित्वासाधारयामासचेंधनम्॥एवंगतेषुकालेषुमतंगःशिष्यमब्रवीत् ॥ ९ ॥
कोयंमार्गंमार्जयित्वाददात्यत्रेंधनानिभोः ॥ रात्रावागत्यनोजानेज्ञातव्यःकोऽस्तिकानने ॥ १० ॥इत्युक्तोमुनिनाशिष्योरात्रौमार्गेनि
लीयसः ॥ स्थितोददर्शशबरींदधानांशिरसेंधनम् ॥ ११ ॥ धृत्वेंधनंमार्जयित्वामार्गंचलितुमुत्सुका ॥ तदाशिष्यःसमुत्थायशबरींप्राह
सत्वरः ॥ १२॥ कासित्वमिहमार्गमेसंमार्जयसिनित्यशः॥जिज्ञासुस्तेगुरुस्त्वांमेचलतस्यसमीपतः ॥१३॥ इत्युक्तावेपमानासाशबरी
भयविह्वला॥जगामचमुनेरग्रेभीताभक्तिमतीसती ॥ १४ ॥ तांदृष्ट्वासमुनिःप्राहकिमर्थमिंधनानिमे ॥ ददासिममभार्गंचमार्जयंतीदिने
दिने ॥ १५ ॥ इत्युक्ताशबरीप्राहमतंगंप्रणिपत्यच॥नाथाहंशबरीनीचयोनिजाभाग्यवर्जिता ॥१६॥ तिष्ठंतीविपिनेचाहमपश्यंत्वांतप

स्विनम् ॥ तदादिभवतःसेवांकर्तुंव्यवसिताभवम् ॥ १७ ॥ कथंसेवांकरिष्यामिनीचेत्येवंविचार्यच ॥ त्वदीयस्नानमार्गंतुमार्जयामिदिने
दिने ॥ १८ ॥ इंधनानिपरिक्षिप्यत्वदाश्रमसमीपतः ॥ निशिस्वपर्णशालायामासीनैवंव्रतंमम ॥ १९ ॥ नचान्यसेवायोग्याहंनाथैतत्क्ष
म्यतांमम ॥ इतितस्यावचःश्रुत्वामतंगस्तद्दयान्वितः ॥ २० ॥ उवाचशिष्यमेषातुसंरक्ष्याश्रमतोबहिः ॥ नित्यमन्नंप्रदेह्यस्यैकृपणासेव
तेहिनः ॥ २१ ॥ इतिश्रुत्वावचस्तस्यमतंगस्यमहात्मनः ॥ भूमौनिपत्यशबरीबद्धांजलिपुटाब्रवीत् ॥ २२ ॥ नाथैतत्क्षम्यतामत्रचान्नमि
च्छाम्यहंतव ॥ कदाचित्तेदयामेस्यात्कृतार्थास्यांनसंशयः ॥ २३ ॥ नचमेविभवाकांक्षासंसारोनास्तिमेप्रियः ॥ यथामेसद्गतिर्भूया
त्तथादेहिममाशिषम् ॥ २४ ॥ इति श्रुत्वावचस्तस्यामतंगोमुनिपुंगवः ॥ क्षणंध्यात्वाब्रवीत्तांतुभद्रेतिष्ठात्रनिर्भया ॥ २५ ॥ इत्युक्त्वा
समुनिर्गेहंजगामशबरीतुसा ॥ जगामस्वकुलंह्येवंदिवाचक्रेगतागतम् ॥ २६ ॥ एवंगतेषुकालेषुदंडकारण्यवासिनः ॥ मतंगंप्रावदन्स
र्वेशबरीसन्निधानतः ॥ २७ ॥ तत्यजुस्तस्यसंभाष्यंभोजनादिषुकाकथा ॥ ज्ञात्वापितन्मतंगस्तुनचुक्रोधमहामुनिः ॥ २८ ॥ अवदातं
स्वचरितंनिश्चित्यक्षमयान्वितः ॥ एवंगतेषुकालेषुमतंगोमुनिसत्तमः ॥ ॥ २९ ॥ ज्ञात्वाशरीरपातंचकुशासनमुपाविशत् ॥ ततः शिष्य
गणाः सर्वेरुदंतस्तमपूजयन् ॥ ३० ॥ रुदंतीशबरीचापिकृतांजलिपुटागता ॥ मुनेःसम्मुखतस्तस्थौतांदृष्ट्वामुनिरब्रवीत् ॥ ३१ ॥
आगच्छवत्सेशबरिविषादंत्यजसुव्रते ॥ रामोदाशरथिःसाक्षाद्विष्णुरेवसनातनः ॥ ३२ ॥ अवतीर्णोऽस्त्ययोध्यायामागमिष्यतिचात्र
सः ॥ तस्यातिथ्यंविधायत्वंदिवियास्यसिनान्यथा ॥ ३३ ॥ तावत्त्वंतस्यरामेतिनामभाषणतत्परा ॥ वसात्रदंडकारण्येमत्सेवाफलम

स्तुते॥ ३४ ॥इत्युक्त्वातांततःशिष्यानुक्त्वाचैवयथोचितम्॥जगामदिव्यलोकंतुमतंगोमुनिपुंगवः ॥ ३५ ॥ तदारभ्यप्रतिपलंशबरी
रामभाषिणी॥ फलमूलाशनानित्यंरामागमनकांक्षिणी ॥ ३६ ॥ कदागमिष्यतिश्रीमान्रामोदाशरथिःप्रभुः ॥ इत्येवंचिंतयंतीसामुहुः
पश्यतितत्पथम् ॥ ३७ ॥ फलमूलादिकंयच्चबदरीतिंदुकादिकम् ॥ भुंजानामधुरंज्ञात्वारामातिथ्यायसात्वधात् ॥ ३८ ॥ प्रातरेव
समागच्छेत्कदाचिदिहचेत्प्रभुः ॥ इतिसंचिंत्यमनसाविलिलेपकुटींनिशि ॥ ३९ ॥ शयानापुनरुत्थायबहिरेत्यमहानिशि ॥ पश्यंती
सादिशःसर्वाआगमिष्यतिकिंप्रभुः ॥ ४० ॥ एवमुत्कंठितारण्येशबरीरामतत्परा ॥ पलंनैवविसस्माररामंराजीवलोचनम् ॥ ४१ ॥
एकदामुनिपुत्रास्तुशुश्रुवूरघुनंदनम् ॥ समागतमरण्येसाविदित्वैवंबभूवसा ॥४२॥ धावित्वेतस्ततोमूलफलान्यादायमंदिरे ॥ संरक्ष्य
जलमाहर्तुंजलाशयमुपागमत् ॥ ४३ ॥ अथदृष्टोमुनिः कोऽपिस्नात्वागच्छंस्तयापथि॥प्रदक्षिणीकृत्यमुनिंभयाद्दुद्रावसापुनः ॥४४॥
अथतस्याःशरीरस्यच्छायामुनिपदांबुजे॥संलग्नातःसचुकोपमुनिस्तांभर्त्सयन्रुषा ॥४५॥ परावृत्यपुनःस्नातुंजलाशयमुपागमत् ॥ त
त्रगत्वाददर्शांभोसृङ्निभंकृमिसंयुतम् ॥ ४६॥ चिंतयामाससमुनिःकिंजातमिदमंभसि ॥ तथापिमार्जनंकृत्वासमायातोनिकेतनम् ॥
॥ ४७ ॥ शबरीतुततः पूर्वंजलंनीत्वास्ववेश्मगा ॥ अथैतस्मिन्क्षणेरामोलक्ष्मणेनसमन्वितः ॥ ४८ ॥ शबर्याश्रमसायातः क्वसास्तिश
बरीमम ॥ इतिब्रुवाणस्तद्भक्त्याचांगणेसमुपागतः ॥ ४९ ॥ दृष्ट्वारामंघनश्यामंशबरीपुष्करेक्षणम् ॥ जटामुकुटशोभाढ्यंधनुर्बाणधरं
तुसा ॥५०॥ ननर्तांगणमागत्यकरतालपरामुदा॥रामंददर्शहर्षेणनान्यत्किंचिद्बुबोधसा॥५१॥ पतितंचोत्तरीयंतुपरिधानीयमप्यहो ॥

तथापिनानिवृत्तासा निमग्नानंदसागरे ॥ ५२ ॥ अथतांचोदयामासलक्ष्मणः सस्मिताननः ॥ अहोनृत्यान्निवर्तस्वरामोऽयंतवतिष्ठति
॥ ५३ ॥ कुरुष्वातिथ्यमत्र त्वंभवपूर्णमनोरथा ॥ इत्युक्ताशबरीनृत्यंत्यक्त्वाभूमौपपातह ॥ ५४ ॥ प्रणिपत्योत्थिताशीघ्रंकुशास
नमुपाहरत् ॥ ततःपादौतयोर्भक्त्याप्रक्षाल्यबदरीफलम् ॥ ५५ ॥ तिंदुकानिचमूलानिफलान्यन्यानियानितु ॥ रामार्थेरक्षितान्या
सन्दंतैश्छित्त्वापरीक्ष्यच ॥ ५६ ॥ अग्रेधृत्वाददौप्रीत्यारामपाणौस्वपाणिना ॥ ततोरामःफलंतस्याबुभुजेप्रशशंसच ॥ ५७ ॥
ततोन्यत्फलमादायसमाघ्रायचसापुनः ॥ ददौरामायभुंक्ष्वेदंमधुरंपुष्करेक्षण ॥ ५८ ॥ ततोरामःफलंप्रीत्यालक्ष्मणश्चमहामनाः ॥
बुभुजेशबरीहस्तात्फलंभक्त्यावशीकृतः ॥५९॥अथसर्वेसमायातादंडकारण्यवासिनः ॥ मुनयःशबरीवेश्मद्रष्टुंरामंसलक्ष्मणम्॥६०॥
नमस्कृत्यचतान्रामःपप्रच्छकुशलंमुनीन् ॥ अथोचुर्मुनयःसर्वेसदाकुशलिनोवयम् ॥ ६१ ॥ त्वद्दर्शनाद्रघुश्रेष्ठजाताःस्मोनिर्भयाव
यम् ॥ अथैकःप्राहरामंतुधन्येयंशबरीप्रभो ॥ ६२ ॥ यत्सान्निध्यात्परित्यक्तोमतंगोऽस्माभिरेवतु ॥तस्याएवांगणेत्वांतुस्थितंवयमु
पास्महे ॥ ६३ ॥ पुनरेकउवाचाथजलमस्मिञ्जलाशये ॥ अकस्मात्कृमिभिर्दुष्टंशोणिताभमभूत्कुतः ॥ ६४ ॥ कथंसम्यक्प्रजा
येततमुपायंवदप्रभो ॥ इत्युक्तवंतंतंप्राहलक्ष्मणःसस्मिताननः ॥ ६५ ॥ अहोधन्यतमायूयंतपोव्रतपरायणाः ॥ त्यक्त्वाविषयजंसौख्यं
वनेवसथनिःस्पृहाः ॥ ६६ ॥भवद्भिरेवलोकोयंधार्यतेसचराचरः ॥ यआसीद्भवतामेकोमतंगोनामवैमुनिः ॥ ६७ ॥ तस्यानुग्रहत
श्चैषाभक्तिमार्गरताभवत् ॥ अतएषापिधन्याभून्मुनयोनात्रसंशयः ॥ ६८ ॥ जलंयत्कृमिभिर्दुष्टंतदस्याएवभर्त्सनात्॥अस्याश्छाया

पदेलग्नामुनिनातेनभर्त्सिता ॥६९॥ पुनःस्नातुंगतेविप्रेजलमेवंबभूवतत्॥मतंगमुनिविद्वेषाद्रामभक्तावमानतः ॥७०॥ जलमेतादृशंजातं
भवतामभिमानतः ॥ अतःपरंमतंगस्यशिष्यान्सन्मानयंतुतान् ॥ ७१ ॥ भवंतःशबरींत्वेषागत्वास्पृशतुवारितत् ॥ ततोजलंपूर्ववत्तु
ल्यंस्यादेवात्रनसंशयः ॥ ७२ ॥ इत्युक्तामुनयःसर्वेलक्ष्मणेनमहात्मना॥मतंगमुनिशिष्यांस्तुतोषयामासुरानताः ॥७३॥ शबरीचापि
रामार्थमुदकंनेतुमागता ॥ जलाशयेप्रविष्टासाजलंसम्यग्बभूवतत् ॥ ७४॥ अथनीत्वाजलंसातुशबरीरामसन्निधिम् ॥ समागत्यजलं
दत्त्वारामस्तामब्रवीत्पुनः ॥ ७५ ॥ त्वद्भक्तितःप्रसन्नोऽहंवरंब्रूहिददामितत् ॥ इत्युक्ताशबरीप्राहनाथातःपरमस्तिकिम् ॥७६॥ यत्त्वां
साक्षात्प्रपश्यामिनीचवंशभवाप्यहम् ॥ तथापियाचेभगवंस्त्वद्भक्तिःस्याद्दृढामम ॥ ७७ ॥ नातःपरंनिवत्स्यामिनाथसंसारसागरे ॥
इतिश्रुत्वावचस्तस्याएवमस्त्वितिसोऽब्रवीत् ॥ ७८ ॥ ततःसाशबरीरामंस्तुत्वागद्गदभाषिणी ॥ त्यक्त्वादेहंययौस्वर्गंपश्यतीरघुनंद
नम् ॥ ७९ ॥ विमानवरमारुह्यजातावाणीवशापुनः ॥ पश्यतांसर्वलोकानांमुनीनामेतदद्भुतम् ॥ ८० ॥ ततोरामस्तुशबरीशरीरंकाष्ठ
संचयैः ॥ भस्मीकृत्योदकंतस्यैददौभक्तिवशीकृतः ॥ ८१ ॥ तांदृष्ट्वामुनयःसर्वेतुष्टुवुस्तांसुविस्मिताः ॥ क्वेयंमहादुराचाराशबरीनी
चसंभवा ॥८२ ॥ क्वचैतद्गमनंस्वर्गेजलदानमिदंपुनः॥तस्माद्भक्तैर्नवैकिंचिदसाध्यमिहविद्यते ॥८३॥ इत्युक्तवंतस्तेसर्वेस्तुत्वारामंसल
क्ष्मणम् ॥ जग्मुःस्वंस्वंचनिलयंययौरामोऽपिचान्यतः ॥ ८४॥ दृष्ट्वातुपरमाश्चर्यंविस्मितास्तेतपोधनाः ॥ इत्येतच्छबरीभक्तिमाहा
त्म्यंकथितंमया ॥ ८५ ॥ श्रुत्वैतत्परमांभक्तिंलभतेरघुनंदने ॥ ८६ ॥ इतिश्रीमद्भगवद्भक्तिमाहात्म्येशबरीचरितंनामपंचमः

सर्गः ॥ ५ ॥ ६ ॥अजामिलकथांवक्ष्येपरमाश्चर्यकारिणीम् ॥ यस्मिन्नाम्नश्चमाहात्म्यंव्यक्तीचक्रेजनार्दनः ॥ १ ॥ आसीत्कश्चिद्द्वि
जःपूर्वमंतर्वेदितिविश्रुतः ॥कान्यकुब्जोऽतिधनवान्सर्वधर्म्मविवर्जितः ॥ २ ॥ दुःसंगविवशाद्विप्रोवेश्यायांनिरतोऽभवत्॥ मद्यंवापि
पपौनित्यंमांसमश्नातिनित्यशः ॥ ३ ॥ विसस्मारनिजज्ञातिकर्मनामतथाहरेः ॥ एवंभूतोबंधुवर्गैस्त्यक्तोग्रामसमीपतः ॥४ ॥निर्मा
यभुवनंवेश्यांसंरक्ष्यगृहिणीमिव ॥ उवासग्रामाद्वाह्येसचांडालइवचापरः ॥ ५ ॥ परंतुस्वगृहद्वारमंगणंचापिसर्वदा ॥ ब्राह्मणाश्रमवच्च
क्रेरक्षाजामिलस्तुताम् ॥ ६ ॥ एवंनिनायकतिचित्समास्तत्रद्विजाधमः ॥ गृहिण्यावेश्ययारेमेमद्यपानरतःसदा ॥७॥ एकदातत्समीपे
चग्रामात्तत्रागतोऽतिथिः ॥सायंकालेविष्णुभक्तःशालग्रामशिलांवहन् ॥ ८ ॥ किंचिदाहातिथिःप्रेम्णानिश्यत्रनिवसाम्यहम् ॥ स्थलं
दर्शयवासार्थंसोऽब्रवीच्चातिदुर्जनः ॥९॥ ग्रामाद्वाह्येमहानेकोधर्मात्माजामिलोद्विजः॥शुश्रूषतिससर्वांस्तुभोजनास्तरणादिभिः ॥१०॥
इत्युक्त्वासगतोदुष्टः सोऽतिथिस्तत्रचागतः ॥द्वारदेशादाजुहावनाम्नाचाजामिलस्यवै ॥११॥ श्रुत्वातद्गृहिणीवेश्यासमागत्याब्रवीच्च
तम् ॥ कोऽसिकस्मादिहायातः किमर्थंतमिहेच्छसि ॥१२॥ सउवाचततःसाधुःपथिकोनिवसाम्यहम्॥गतःपूर्वमहंग्रामेतत्रत्योमामुवा
चह ॥१३ ॥ग्रामाद्वाह्येऽतिधर्मात्माविप्रोऽजामिलसंज्ञकः ॥तत्रगच्छनिवासायसतेवासंप्रदास्यति॥१४॥इत्युक्तोऽहमिहायातःक्वचास्ते
ऽजामिलःसतु । इति श्रुत्वातुसावेश्याबहिर्वेश्मनितंतदा॥१५॥ निवासायददौस्थानंसनास्तिभवनेऽधुना ॥ आगमिष्यतिचेत्त्वांतुनम
स्यतिनसंशयः ॥ १६ ॥ अथसाशीघ्रमागत्यग्रामेकंचिद्वणिग्जनम् ॥ समानीयतमालादिभोजनाद्यर्थमाहरत् ॥१७॥ ततःप्रांजलिश्चा

हेदंकूपोयमुदकंततः ॥ गृहाणनाहमुदकंदातुंयोग्यांत्यजाधमा ॥ १८ ॥ इति श्रुत्वाद्विजस्साधुस्तद्गृहिमंदिरेस्वयम् ॥ उपलिप्यशुचौ
देशेयत्नादेवंसमर्प्यच ॥ १९ ॥ बुभुजेनिशिसुष्वापसुप्रीतेनांतरात्मना ॥ अथार्धरात्रसमयेवारुणीमदविह्वलः ॥ २० ॥ अजामिलः
समायातोनिन्बेतंसाद्भुतंगृहे ॥ अथरात्र्यांव्यतीतायांप्रभातेसोऽतिथिर्द्विजः ॥ २१॥ गंतुंप्रवृत्तोद्वारिस्थ आजुहावपुनश्चतम् ॥ तदेवं
रात्रिवृत्तांतमुवाचाजामिलायसा ॥२२॥ पुनराहव्रजस्वत्वंगत्वातंचनमस्कुरु ॥ सदास्यति वरंचैवंपुत्रंवरयमेप्रियम् ॥२३॥ इतिश्रुत्वा
गतोद्वारितंसाधुंप्रणनामह ॥ तमाहसाधुःसंतुष्टस्त्वयिदास्यामितेवरम् ॥ २४ ॥ ब्रूहीति श्रुत्वाप्रोवाचप्रांजलिः सोऽप्यजामिलः ॥
भगवन्ननपत्योऽहंपुत्रोमेजायतामिति ॥२५॥ प्रार्थयामिवरंत्वत्तोनान्यमिच्छाम्यहंवरम्॥इतिश्रुत्वावचस्तस्यसोऽतिथिः प्राहतंवचः॥
॥ २६ ॥ अहोते भवितापुत्रःसत्यमेतन्नसंशयः ॥ परंतुतस्यनामाहोनारायणइतित्वया ॥ २७ ॥ रक्षितव्यमितिस्वांतेस्थापनीयं
मदीरितम् ॥ इत्युक्त्वासगतोविप्रोऽजामिलोप्यगमद्गृहम् ॥ २८ ॥ वेश्यायैसर्वमाचष्टश्रुत्वासापिजहर्षच ॥ ततःकतिपयेकालेयाते
सागर्भवत्यभूत् ॥ २९ ॥ सुषुवेदशमेमासिपुत्रंसर्वांगसुन्दरम् ॥ ततोनामापिचक्रेसनारायणइतिस्फुटम् ॥ ३० ॥ सोऽप्यवर्धतकालेन
युवावस्थामुपागतः ॥ अजामिलोऽतिवृद्धोऽभूज्जरयाजर्जरीकृतः ॥ ३१॥ तथापिमदिरापानंमांसाहारंनतत्यजे ॥ अथसोऽजामिलो
रोगान्म्रियमाणोगृहेस्थितः ॥ ३२ ॥ शय्यायांसेवितः प्रीत्यारुदंत्यावेश्ययासच ॥ अथतंम्रियमाणंतुज्ञात्वावैवस्वतः प्रभुः ॥ ३३ ॥
प्राहदूतान्दंडपाशहस्तानतिभयंकरान् ॥ यातयूयंकान्यकुब्जोम्रियमाणोऽतिपातकी ॥ ३४ ॥ जात्याद्विजः कर्मणासौचांडा

लादधिकोऽभवत् ॥ तमानयित्वापाशेनबद्ध्वात्रनरकेषुच ॥ ३५ ॥ पातयध्वंनतंचाहंद्रष्टुमिच्छामिपापिनम् ॥ इत्याज्ञांशिरसा
धृत्वागतास्तेयमकिंकराः ॥ ३६ ॥ दंडपाशधराः सर्वेदीर्घदंष्ट्राभयंकराः ॥ आगत्याजामिलगृहेतंपाशैर्बद्धुमुद्यताः ॥ ३७ ॥
तान्दृष्ट्वाजामिलोभीत्याजुहावतनयंनिजम् ॥ अहोनारायणात्रेतिमांबध्नंतिभयंकराः ॥ ३८ ॥ नारायणततः पाहीत्येवंपुत्र
मभाषत ॥ मुहूरेवंवदत्यस्मिन्विष्णुदूताः समागताः ॥ ३९ ॥ शंखचक्रधराःसर्वेतुलसीदामभूषिताः ॥ यमदूतान्भर्त्सयंतो
विजहीतेऽतिवादिनः ॥ ४० ॥ ततस्तुयमदूतास्तैर्युध्यंतमहात्मभिः॥ ततोघोरतरंयुद्धंकृत्वातेविष्णुकिंकराः ॥ ४१ ॥ अजामिलं
समादाय विमानेहरिमंदिरम् ॥ वैकुंठंप्रापयामासुरित्याश्चर्यमभूदहो ॥ ४२ ॥ अथतेयमदूतास्तुच्छिन्नहस्तोरुनासिकाः ॥ संप्रा
प्यधर्मराजांतेरुदंतो वाक्यमब्रुवन् ॥ ४३ ॥ अविचार्यैवभवताप्रेष्यंतेकिंकरानिजाः ॥ अथवाचित्रगुप्तोऽयंमहसासंवदत्यहो ॥४४॥
वयंतत्रगतानेतुंविप्रंचाजामिलंतदा ॥ विष्णुदूताःसमागत्ययुद्धंकृत्वातिदारुणम् ॥ ४५ ॥ विनिर्जित्यचनःसर्वान्निन्युस्तंभुवनंहरेः ॥
येनास्मदीयान्यंगानिचक्रच्छिन्नान्यनेकधा ॥ ४६ ॥ तमप्यानयितुंचास्माञ्छ्रीमंतःप्रेषयंतिहि ॥ तस्मादियमवस्थानोयोनामागंतु
मर्हति ॥४७॥इतिश्रुत्वावचस्तेषांयमराजोऽतिविस्मितः ॥ आहूयचित्रगुप्तंतुपप्रच्छाजामिलस्यसः ॥ ४८ ॥ चित्रगुप्तोनिरीक्ष्याहआ
जन्ममरणावधि॥पुण्यलेशोनचास्त्यस्यनिश्चित्यैतद्ब्रवीम्यहम् ॥ ४९ ॥ किंतुप्राणांतसमयेदृष्ट्वादूतान्भयंकरान् ॥ नारायणेतिनामा
नंतनयंस्वमुपाह्वयत ॥ ५० ॥ तदाजुहावपुत्रंसनतुतंजगदीश्वरम् ॥ इतिश्रुत्वावचस्तस्यचित्रगुप्तस्यभास्करिः ॥ ५१ ॥ गृहीत्वानि

जदूतान्वैवैकुण्ठंप्रययौद्रुतम् ॥ तत्रगत्वाजगन्नाथंविष्णुंनारायणंहरिम् ॥५२॥ प्रणम्यप्रार्थयामासबद्धांजलिपुटोयमः॥भगवन्नधिकारो
मेवृथातवगणैःकृतः ॥ ५३ ॥ महापातकिनांश्रेष्ठोऽजामिलोऽभूद्द्विजाधमः ॥ तमानेतुंमयादूताःप्रेषिताजगदीश्वर ॥ ५४ ॥ अथांत
रेभवद्दासायमदूतान्निहत्यतम् ॥ समानिन्युरिहायंतेराजतेभवनेद्विजः ॥ ५५ ॥ श्रुत्वैतद्धर्मराजस्यवचनंभगवान्हरिः ॥ सस्मितं
सांत्वयित्वातंयमराजमभाषत ॥ ५६ ॥ अहोसत्यंनास्यपुण्यमाजन्ममरणावधि ॥ परंतुमृत्युसमयेमन्नामोच्चारणादयम् ॥ ५७ ॥
विमुक्तःसर्वपापेभ्योननीतोयमकिंकरैः ॥शृणुष्वसमयंमत्तोनिजचित्तेऽवधारय ॥५८॥ पापिनोऽपियथादंडंभवतोनाप्नुवंतिहि ॥ तथाऽ
वधार्यचित्तेवैविहरस्वमहीतले ॥ ५९ ॥ येनामसंततमहोममशंकरस्यदेव्याजपंतिमनुजाअपिपापिनोऽपि ॥ तांस्त्वंजहीहिनचतेतव
दंडयोग्याअस्मत्प्रियाइतिनतच्चरितंविचार्यम् ॥६०॥ तत्रापियेविजहतिस्वकलेवराणिमन्नामभाषणपुरःसरमप्यचिन्त्य ॥ किंचामले
त्रिपथगातटभाजितोयेसंसेवितार्द्धतनवःखलुतेऽतिपूज्याः ॥ ६१ ॥ एवंशिक्षामुरीकृत्यनमस्कृत्ययमोहरिम् ॥ निजगामगणैःसार्द्धं
हृष्टःसंयमनींपुरीम् ॥ ६२ ॥ तत्रापिनिजदूतेभ्यःशिक्षामाहहरेःकृताम् ॥ इत्यजामिलसंबंधाद्भक्तिमाहात्म्यमुत्तमम् ॥ ६३ ॥ पर
माश्चर्यजनकंनामसामर्थ्यबृंहितम् ॥ श्रुत्वाभक्तिमवाप्नोतिमहापापात्प्रमुच्यते ॥ ६४ ॥ इति श्रीभगवद्भक्तिमाहात्म्येअजा
मिलचरितंनामषष्ठस्सर्गः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥ जटायुचरितंवक्ष्येमहानंदप्रदायकम् ॥ अयोध्यायांरघुश्रेष्ठोराजा
दशरथःसुतम् ॥ १ ॥ ज्येष्ठंरामंयौवराज्येऽभिषेक्तुमुपचक्रमे ॥ तदावक्रावचोमत्वाहितंकेकयभूपजा ॥ २ ॥ निवारया

मासनृपंरामराज्याभिषेचनात् ॥ किंचरामंसपत्नीकंचतुर्दशसमावने ॥ ३ ॥ निर्वासयामासनृपाद्वरंप्राप्याथकैकयी ॥ तदारामः
पितुर्धर्मसंरक्षणपरायणः ॥ ४ ॥ सीतयालक्ष्मणेनाथययौदंडककाननम् ॥ वसन्रक्षोगणांस्तत्रनिजघानसहस्रशः ॥ ५ ॥ एकदा
दंडकारण्येगोदावर्य्याःसमीपतः ॥ पंचवट्यांस्थितंरामंसीतयालक्ष्मणेनच ॥ ६ ॥ घोराशूर्पणखानाम्नाखरदूषणयोःस्वसा ॥ ददर्शको
टिकंदर्पसुन्दरंपुरुषोत्तमम् ॥ ७ ॥ समागत्याब्रवीद्वाक्यंसकामाहंत्वयासह ॥ रंतुमिच्छामितच्छुत्वारामोवचनमब्रवीत् ॥ ८ ॥ द्वारि
तिष्ठतिमेभ्राताकनीयान्ममवल्लभः ॥ निस्त्रीकस्तंव्रजाहंतुसस्त्रीकः सीतयानया ॥ ९ ॥ अथसालक्ष्मणंगत्वाप्रोवाचात्ममनोरथम् ॥
ततःप्रहस्यसौमित्रिराहशूर्पणखांवचः ॥ १० ॥ अहंतुतस्यरामस्यदासोऽस्म्यतिमनोहरे ॥ अतस्तमेवगच्छस्वमाभूद्दासीमदाश्रयात्
॥ ११ ॥ इति श्रुत्वागतारामंपुनर्लक्ष्मणमभ्यगात् ॥ एवंगतागतेकृत्वाभक्षितुंजनकात्मजाम् ॥ १२ ॥ प्रवृत्तालक्ष्मणःशीघ्रंतस्याश्चि
च्छेदनासिकाम् ॥ ततःसंच्छिन्ननासासारुदंतीखरदूषणौ ॥ १३ ॥ गत्वोवाचवनेदृष्टावुभौतापसरूपिणौ ॥ तयोःसहायिनीरामासाक्षा
च्छ्रीरिवसुंदरी ॥ १४ ॥ तांत्वदर्थमिहानेतुंप्रवृत्ताहंततस्तुमे ॥ नासांछित्त्वाश्रमाद्दूरेतेननिष्कासितात्वहम् ॥ १५ ॥ समागतेयं
तौहत्वागृहीतुंतांयुवांप्रियाम्॥इतितस्यावचः श्रुत्वाभ्रातरौखरदूषणौ ॥ १६ ॥ प्रकुप्यसेनयासार्धंयुयुधातेध्रुवंक्रुधा ॥ युध्यमानौतत
स्तौतुरामेणनिहतौरणे ॥ १७ ॥ ततःशूर्पणखासातुविनसाहतसोदरा ॥ रावणंसमुपागत्यरुदंतीप्राहराक्षसी ॥ १८ ॥ मयाद्यदंड
कारण्येराजपुत्रौयमावुभौ ॥ धनुर्बाणधरौरामलक्ष्मणाख्यौतपस्विनौ ॥ १९ ॥ समागमत्तयोस्साकंस्त्रीरत्नमतिसुंदरम् ॥ विराजतेत्व

दर्थंतुचानेतुमुद्यतामुदा ॥ २० ॥ भ्रातरौमेत्वहंचापितदापलक्ष्मणोऽनुजः ॥ चिच्छेदममनासांसरामोमेभ्रातरावुभौ ॥ २१ ॥ खरदू
षणोजघानाथोसैन्यंचापिरुषावधीत्॥इतिश्रुत्वारावणस्तुगत्वामारीचसन्निधिम् ॥ २२ ॥ गत्वासहायंतंनीत्वादंडकारण्यमागमत् ॥
हिरण्मयसुखोभूत्वाराममाश्रमतोबहिः ॥ २३ ॥ नीत्वालक्ष्मणनाम्नासौरामोक्तमिवचाह्वयत् ॥ श्रुत्वातद्वचनंसीतादुर्वाक्येनाथ
लक्ष्मणम् ॥ २४ ॥ तत्रैवप्रेषयामासरामसाहाय्यकारणात् ॥ अत्रांतरेसमागत्यरावणोमुनिवेषधृक् ॥ २५ ॥ जहारसीतांहारामहाल
क्ष्मणनिनादिनीम्॥अथाकाशेजनकजावाक्यंश्रुत्वाव्यलोकयत् ॥ २६ ॥ जटायुर्दृष्टवान्सीतांरावणेनहृतामिति ॥ पक्षीदाशरथेर्भक्तः
सखादशरथस्यसः ॥ २७ ॥ उड्डीयाकाशगोभूत्वारावणस्याग्रतः स्थितः ॥ उवाचवचनंक्रोधाद्धर्षयन्रावणंमुहुः ॥ २८ ॥ अहो
ब्रह्मकुलेजातः पुलस्त्यतनयस्त्वसि ॥ अधीत्यवेदशास्त्राणिकरोष्येवंजुगुप्सितम् ॥ २९ ॥ ताभ्यांविनाश्रमेशून्येचोरयित्वाविदेह
जाम् ॥ श्वेवापहरसेयज्ञागाराद्बलिमिवाधम ॥३०॥ अद्यत्वांसरथंचाहंनिहन्म्येवनसंशयः ॥ अयोधयित्वानवंतेगंतव्यंरावणत्वया ॥
॥ ३१ ॥ यद्यप्यहंजराग्रस्तोविरथोनायुधःखगः ॥ तथापिगंतुंशक्नोषिनैवत्वंमयिजीवति ॥ ३२ ॥ इत्युक्त्वोड्डीयगगनेपदाभ्यां
तस्यमूर्धनि ॥ प्रहृत्यपातयामासमुकुटंरावणस्यसः ॥ ३३ ॥ पतितेमुकुटेदैत्योजहासप्रचुकोपच ॥ विव्याधपत्रिभिर्बाणैर्जटायुं
पक्षिसत्तमम् ॥ ३४ ॥ असमानयित्वातान्बाणानुड्डीयसपुनःखगः ॥ पक्षाभ्यांचरणाभ्यांचचक्षुभ्यांयुयुधेरुषा ॥ ३५ ॥ भूमौनिपा
तयामासरावणस्यरथंखगः ॥ ततश्चुकोपपौलस्त्योविव्याधबहुभिःशरैः ॥ ३६ ॥ जटायुंसतुवृद्धोऽपियुद्धान्नैवन्यवर्तत ॥ तुंडप्रहार

तोबाहूंश्चिच्छेदरावणस्यसः ॥ ३७ ॥महदाश्चर्य्यमेतत्तुपश्यतांलोमहर्षणम् ॥ ततश्चुकोपपौलस्त्योबाहून्स्वान्परिकल्प्यसः ॥ ३८ ॥
आग्नेयास्त्रेणविव्याधगृध्रराजंसरावणः ॥ सदग्धपक्षोविद्धांगःपपातधरणीतले ॥ ३९ ॥ अर्धप्राणोनिर्निमेषोरामागमनकांक्षया ॥
तद्वत्त्यातद्विवक्षुस्तुनममारखगोत्तमः ॥ ४० ॥ सीतांगृहीत्वालंकायांजगामसतुराक्षसः ॥ अथरामःसहभ्रात्रालक्ष्मणेनमहात्मना
॥ ४१ ॥ तत्राजगामशनकैर्विचिन्वञ्जनकात्मजाम् ॥ ददर्शपतितंभूमौविंध्यशृंगमिवाध्वनि ॥ ४२ ॥ लक्ष्मणःशंकमानस्तु
गच्छन्राममुवाचह ॥ कोयंकबंधवद्दृष्टःपथमाक्रम्यतिष्ठति ॥ ४३ ॥ तावत्तन्मुखतोरामनामशुश्रावलक्ष्मणः ॥ रामेणसहितस्तत्र
गत्वातंपर्य्यपृच्छत ॥ ४४ ॥ कोऽसिकस्मादिहायातःपक्षदाहःकृतोऽधुना ॥ शस्त्रैरतिसुतीक्ष्णैश्चविद्धंकेनांगमस्तिते ॥ ४५ ॥ इत्युक्तः
पक्षिराजःसकस्त्वमित्यब्रवीच्चतम् ॥तमाहलक्ष्मणः सर्वंवनवासादिकंनिजम् ॥ ४६॥ सीतान्वेषणपर्य्यन्तंततोरामंनिरीक्ष्यसः ॥ उवा
चरामवृद्धोऽहमाग्नेयास्त्रप्रहारतः ॥ ४७ ॥ मुमूर्षुर्नहिशक्नोमिबहुभाषितुमक्षमः ॥ तथापिवक्ष्येसंक्षेपाच्छ्रुत्वाकुरुयथोचितम् ॥४८॥
जटायुर्नामगृध्रोहंवाचस्तस्याश्चचातुरः ॥ श्रुत्वाहंसमुपागत्यह्ययुध्येतंयथाबलम्॥ ४९॥ निपात्यसरथंभूमौछिन्नास्तस्यभुजामया ॥
ततःसतुभुजानन्यान्परिकल्प्यानलास्त्रतः ॥५०॥मांनिपात्यगतोलंकांरावणोनामराक्षसः ॥सीतासापिचमांदृष्ट्वापतितंधरणीतले॥५१॥
म्रियमाणंरुरोदाथप्रार्थयंतीतवास्पदम् ॥ इत्येतत्कथितंसर्वंरामत्वंसंमुखोभव ॥ ५२ ॥ पश्यन्भवंतंचक्षुर्भ्यांत्यजाम्येतत्क
लेवरम् ॥ इत्युक्त्वासरुदन्रामस्तंपस्पर्शस्वपाणिना ॥ ५३॥ गृध्रोगतव्यथोरामकरस्पर्शाज्जहावसून् ॥ अथरामोऽपिविपलञ्जटायुं

काष्ठसंचयैः ॥ ५४ ॥ दग्ध्वादत्त्वोदकंतस्मैहत्वाचैवमृगान्वने॥मांसमादायपक्षिभ्योददौतत्प्रीतयेप्रभुः ॥५५॥ जटायुरपिदिव्येनवि
मानेनययौदिवम् ॥ तंदृष्ट्वामुनयः सर्वेदंडकारण्यवासिनः ॥५६॥ साधुसाध्वितिजल्पंतः प्रशशंसूरघूत्तमम् ॥ स्तुवंतोथजटायुंतेवदंत्ये
तत्परस्परम् ॥ ५७ ॥ अहोयद्योगिनांयोगैर्दुष्प्रापंरामदर्शनम् ॥ प्राणव्ययेतंसाक्षाद्यत्पश्यन्प्राणाञ्जहौखगः ॥५८॥ नैवंदशरथस्यापि
पितुर्भाग्यमभूदहो ॥ यद्यभूद्गृध्रराजस्यमृत्युकालेमहासुखम्॥५९॥तस्माद्भक्तिर्हिजंतूनांसर्वसौख्यप्रदायिनी ॥ करासंकचगृध्रोऽसौ
तथाप्यस्यौर्ध्वदैहिकम् ॥६०॥ चकारस्वयमेवात्रभक्तिरेवहिकारणम् ॥ इतिब्रुवंतोमुनयः स्वंस्वमाश्रममाययुः ॥६१॥ इति श्रीभगव
द्भक्तिमाहात्म्येजटायुचरितंनामसप्तमस्सर्गः ॥ ७ ॥ ॥ छ॥ अंबरीषकथांवक्ष्येसद्योभक्तिविवर्द्धिनीम् ॥ राजर्षिरंबरीषोऽभूदयोध्यायां
महायशाः ॥१॥ विष्णुभक्तोदयायुक्तोदातानीतिमदुत्तमः॥यस्यदेशेजनाः सर्वेबालवृद्धातुराआपि॥२॥एकादश्यांनिराहाराविष्णुभक्ति
परायणाः ॥ आसन्नृपाज्ञयामिथ्याहिंसानिंदापराङ्मुखाः ॥ ३ ॥ एकदासतुराजर्षिरेकादश्यामुपोषितः ॥ रात्रौजागरणंकृत्वाप्रातः
स्नात्वाथपूजितुम् ॥ ४ ॥ विष्णुंयदोपविष्टः सतदातत्रमहातपाः ॥ दुर्वासाबहुभिः शिष्यैरागतोनृपवेश्मनि ॥ ५ ॥ दृष्ट्वाराजातमायां
तंपाद्यार्घ्याद्यैः समर्चयत् ॥ उवाचकिंकरोऽहंतेसाधोकिंकरवाण्यहम् ॥६॥ इति श्रुत्वाब्रवीद्वाक्यं दुर्वासामुनिसत्तमः ॥ एकादश्यांम
हाराजशिष्यैः सार्द्धमुपोषितः ॥७ ॥ बुभुक्षितोऽन्नंयाचेत्वामितिश्रुत्वाथभूपतिः ॥ अहोभाग्यमितिप्रीत्याबद्धांजलिपुटोमुनिम् ॥ ८॥
उवाचभगवन्स्नात्वासमागच्छात्रतेवयम् । इति श्रुत्वागतःस्नातुंदुर्वासाऋषिसत्तमः ॥९॥ राजापिपाचयामासभोज्यंसर्वरसान्वितम् ॥

अथांतेससमुपायातःपुरोधानृपसन्निधौ ॥ १० ॥ राजानमाहभूपाद्यद्वादश्यल्पाततोद्भुतम् ॥पारणंकुरुनोचेद्वैव्रतमेवनिरर्थकम् ॥ ११ ॥
उपोष्यैकादशींयस्तुत्रयोदश्यांतुपारणम् ॥ कुरुतेनिष्फलंतस्यव्रतंत्यक्त्वात्र्यहस्पृशम् ॥ १२ ॥ इत्युक्तोनृपतिः प्राहपुरोधसमु
पस्थितम् ॥ कथंकुर्यामहंब्रह्मन्पारणंमुनिसत्तम ॥१३॥ दुर्वासाअतिथिः शिष्यैः सहितोऽस्तिनिमंत्रितः ॥ स्नातुंगतस्ततस्तस्मिन्नमु
क्तेममभोजनम् ॥ १४ ॥ कथंस्यादत्रयच्छ्रेयस्तद्ब्रवीतुभवान्मम ॥ इतिश्रुत्वावचस्तस्यराजर्षेः स पुरोहितः ॥ १५ ॥ उवाच
राजन्सत्यंतेनतावद्भोजनंहितम् ॥ परंतुव्रतरक्षार्थंविष्णोः पादोदकेनतु ॥ १६ ॥ पारणंकुरुराजेंद्रनैवंधर्मस्तुहीयते ॥ इतिश्रुत्वाततो
राजाकिंचित्पादोदकंहरेः ॥ १७ ॥ ददौमुखेऽन्नसमयेसमायातोमहामुनिः ॥ततोराजांजलिंबद्ध्वाक्षमापयितुमुद्यतः ॥ १८ ॥ दुर्वासा
दंडमुद्यम्यराजानंहंतुमुद्यतः ॥ ततःकोलाहलोजातोमहांस्तत्रनृपालये ॥१९ ॥ राजाकृतांजलिपुटस्तूष्णींतस्थौनिजासने ॥ अथ
चक्रंहरेस्तत्ररक्षार्थंनृपतेःस्थितम् ॥ २० ॥ तंतुदुर्वाससंहंतुमिवायातंतदाग्रतः ॥ तद्दृष्ट्वासमुनिर्भीत्यादुर्वासाः प्रपलायितः ॥
॥ २१ ॥ राजामंदिरतोबाह्येसमागत्यददर्शतत् ॥ चक्रंकालानलसमंग्रसदेतच्चराचरम् ॥ २२ ॥ ततोमुनिर्महाभीत्याब्रह्माणंशरणंय
यौ ॥ ब्रह्माज्ञात्वातुतच्चक्रमायातमतिसत्वरम् ॥ २३ ॥ स्वयमग्रेसमागत्यवैकुंठंप्रययौसह ॥ तत्रापिविष्णुर्विज्ञायब्रह्माणं
तंमुनिंतथा ॥ २४ ॥ प्रोवाचभगवान्पूर्वंब्रह्माणंशरणागतम् ॥ ममाप्येतदशक्यंत्वंजानीहिकमलासन ॥ २५ ॥ मयैवाज्ञा
पितंचक्रंप्रतिज्ञायपुराविधे ॥ योमेभक्तोऽस्तिभुवनेभजतेमामनन्यभाक् ॥ २६ ॥ त्वंरक्षस्वचतंचक्रजहित्वंतंज्जिघांसकम् ॥

तथाप्युपायंकुर्वेहंत्वमागच्छमयासह ॥ २७ ॥ एषोऽप्यागच्छतुमुनिर्गच्छामोवयमंतिकम् ॥ अंबरीषस्यराजर्षेःसचक्रंशमयिष्यति
॥ २८ ॥ ततः समागताःसर्वेब्रह्मविष्णुमुनीश्वराः ॥ चक्रंचापिनृपद्वारिराजातावत्तथैवसः ॥ २९ ॥ आसनेनिवसन्नासीज्जलपा
नमपित्यजन् ॥ दृष्ट्वातानंबरीषस्तुहर्षेणमहतावृतः ॥ ३० ॥ पूजयामासविधिवद्ब्रह्माणंकेशवंमुनिम् ॥ पूजितोभगवानाहराजन्मुनि
रयंक्षुधा ॥ ३१ ॥ त्वांहंतुमुद्यतस्तस्माच्चक्रमेतवरक्षणम् ॥ मुनिंहंतुमुपाधावत्सगतोब्रह्मसंनिधिम् ॥ ३२ ॥ ब्रह्मासमागतोभीतंनी
त्वाहंत्वामिहागतः ॥ चक्रंनिवर्तयस्वत्वंशीघ्रंभोजयितुंमुनिम् ॥ ३३ ॥ स्वयंभुक्त्वायथाकामंकुरुराज्यमकंटकम् ॥ एषब्रह्मासुर
श्रेष्ठोवरंदातुंतवाग्रतः ॥ ३४ ॥ ब्रूहिकिंतेवरंदद्यादंबरीषप्रियोऽसिमे ॥ इति श्रुत्वावचस्तस्यविष्णोराजर्षिसत्तमः ॥ ३५ ॥ उवाचव
चनंभक्त्याप्रणिपत्यकृतांजलिः॥धन्योऽहमद्यदेवेशकृतार्थोऽहंनसंशयः ॥३६॥ अतः परोवरःकोन्योवर्ततेजगतीतले ॥ यत्पश्याम्या
गतंगेहंब्रह्माणंत्वांनृचक्षुषा ॥३७॥ तथाप्येकंवरंयाचेत्वयिभक्तिर्दृढास्तुमे ॥ इत्युक्तौतौब्रह्मविष्णूराज्ञेदत्त्वातुतंवरम् ॥ ३८ ॥ जग्म
तुःस्वस्वभवनमंबरीषोऽपितंमुनिम् ॥ दुर्वाससंभोजयित्वाविसृज्यबुभुजेस्वयम् ॥ ३९ ॥ अहंकारंविनिर्धूयसर्वंविष्णुमयंजगत् ॥
पश्यञ्छशासपृथिवींविष्णुभक्तिपरायणः ॥ ४० ॥ इत्येतदेकमाख्यानमंबरीषविचेष्टितम् ॥ ४१ ॥ इति श्रीभगवद्भक्तिमाहा
त्म्येंबरीषचरितंनामाष्टमःसर्गः ॥ ८ ॥ छ ॥ ॥ अथापरंप्रवक्ष्यामितद्भक्तिचरितंपुनः ॥ यथाप्रसिद्धंलोकेऽस्तिमहदाश्चर्य्यमुत्तमम् ॥
॥ १ ॥ क्वचित्कतिपयग्रामस्वामिकश्चस्थितोनृपः ॥ तस्यैकाकन्यकाजाता पुत्रतोऽप्यतिहर्षणा ॥ २ ॥ सकालेतनयोद्वाहेकर्म्म

कारयितुंनृपः ॥ महोत्साहात्प्रवृत्तोऽभूत्तदासातनयाब्रवीत् ॥ ३ ॥ पितरंत्यक्तलज्जाकानाहमन्यंपतिंवृणे ॥ अंबरीषमृतेतातस
त्यमेतन्नसंशयः ॥ ४ ॥ अथान्यस्मैददासित्वंत्यक्ष्याम्येतत्कलेवरम् ॥ इतिश्रुत्वावचस्तस्याःसुतायाअतिविस्मितः ॥ ५ ॥
पत्नींप्राहसुतायास्तेकोऽयंवैमतिविभ्रमः ॥ अंबरीषोमहाराजःसप्तद्वीपाधिपोमहान् ॥ ६ ॥ सकथंतनयामेनांमत्तःप्रतिग्रहीष्य
ति ॥ इमांवार्तामपिश्रुत्वैतदग्रेकोवदिष्यति ॥ ७ ॥ तस्माद्बोधयतदापुत्रीशपथंकृतवत्यपि ॥ पतिश्चेदंबरीषोमेयदान्योमेपतिर्भवेत्
॥ ८ ॥ तदोद्बंधनतोमातर्मरिष्यामिनसंशयः ॥ सत्यमेतन्नसंदेहःशपामिचरणौतव ॥ ९ ॥ इतिश्रुत्वावचस्तस्याःपुत्र्यामा
तातिविस्मिता ॥ निवारयामासपतिंतस्यावैवाहिकेविधौ ॥ १० ॥ राजापिविनिवृत्तोऽभूच्चिंतयानोदिवानिशम् ॥ लेभेनशर्म्मकुत्रा
पितांमेनेहृदिशल्यवत् ॥ ११ ॥ कर्णेकन्यकयाचैतद्वृत्तंपौरजनैःश्रुतम् ॥ ततोऽप्यन्यत्रनिर्गच्छद्ग्रामांतरमुपागतम् ॥ १२ ॥ संति
यद्यपिमेपत्न्यःसुरूपाश्चपतिव्रताः ॥ तथापितवपुत्रीसामत्तोऽन्यंनाभिकांक्षति ॥ १३ ॥ अतस्तांप्रतिगृह्णामिरक्षार्थंस्वव्रतस्यच ॥
व्रतमेतत्तुराजन्मेयोयोयद्वदभीप्सति ॥ १४ ॥ तस्मैतस्मैप्रदास्यामिशक्त्यातत्तन्नसंशयः ॥ तस्माद्गच्छस्वभवनंमुहूर्त्तंनिश्चिकाय
तम् ॥ १५ ॥ लिखित्वाप्रेषयाशुत्वंदूतमेष्याम्यहंत्वरम् ॥ इतिश्रुत्वाल्पनृपतिःसमुत्थायकृतांजलिः ॥ १६ ॥ अहोनगंतुंभवतांयो
ग्योऽहंदासवत्तव ॥ आनयाम्यहमेवात्रसुतांतांनात्रसंशयः ॥ १७ ॥ महाराजनतत्रत्वंगंतुमर्हसिमेगृहे ॥ इतिश्रुत्वावचस्तस्यप्राहरा ॥ १४ ॥
जर्षिसत्तमः ॥ १८ ॥ अहोमानावमानौतुस्यातांलौकिककर्म्मणि ॥ भक्तिप्रसंगेह्येतौतुकुर्वाणौनहिसत्यभाक् ॥ १९ ॥ भगवाञ्जगतां

नाथोविधिविद्योमहत्तरः ॥ गणिकागोपशबरीकुब्जासंगरतोह्यभूत् ॥ २० ॥ तथेयंमयिभक्तातेपुत्रीराजन्नसंशयः ॥ तत्रैवागत्य
तत्पाणिंग्रहीष्यामिविधानतः ॥ २१ ॥ किंधनैर्नसमोऽसित्वंधनेनाहंसुपूजितः ॥ तवैवचेदृशीसंपत्स्याद्भवान्नचमेसमः ॥ २२ ॥
कस्येयंश्रीःस्थिरालोकेकोवेत्तिहरिचेष्टितम् ॥ तस्मान्मच्छासनंचेदमंगीकृत्यव्रजाशुभोः ॥ २३ ॥ इत्युक्तःक्षुद्रनृपतिर्जगामनिज
मंदिरम् ॥ हर्षेणमहतायुक्तःपत्नींसर्वमुवाचह ॥ २४ ॥ उक्त्वातस्यैनिजान्बंधूनाहूयाथपुरोहितम् ॥ निश्चीयसमुहूर्त्तंसप्रेषयामास
तंद्रुतम् ॥ २५ ॥ पुरोहितंचांबरीषसान्निधौनृपतिस्तदा ॥ दृष्ट्वापत्रंसराजर्षिरंबरीषोमहामनाः ॥ २६ ॥ वैवाहिकंवस्तुजातंगृहीत्वाबंधु
भिर्युतः ॥ जगामवारयोषिद्भिर्वाद्यैःसंनर्तकैःसह ॥ २७ ॥ तत्रगत्वामहोत्साहात्प्रतिगृह्यचतांनृपः ॥ समानीयगृहेऽन्यत्तत्तस्यैनिर्मायद
त्तवान् ॥ २८ ॥ दासीर्दासांश्चबहुशोग्रामानन्यांस्त्रियाइव ॥ ततःसानूतनस्त्रीवैराज्ञःपूजागृहागमे ॥२९॥ आज्ञांगृहीत्वाथागत्यदृष्ट्वामू
र्तिंहरेरिह ॥ प्रणम्यतुमुदासाध्वीस्वकर्म्मप्रशशंससा ॥ ३० ॥ अथसारात्रिशेषेतुप्रत्यहंहरिमंदिरे ॥ समागत्यचसंमार्ज्यपूजोपकरणा
दिकम् ॥३१॥ संपाद्यस्वगृहंगत्वातस्थौसेवापरायणा॥ गतोऽथनृपतिःपूजांकर्तुंश्रीपतिमंदिरे ॥३२॥ दृष्ट्वापूजोपकरणंसर्वंसंपादितंस्व
यम् ॥ दिनद्वयंततोराजाप्राहकोऽयंगृहेहरेः ॥३३॥ समागत्योपकरणंसंपाद्यव्रजतिस्वयम्॥ततःपूजागृहस्थस्तुविप्रःप्राहनृपंमुदा॥३४॥
राजंस्तवैवपत्नीयंकनिष्ठायासमागता ॥ सारात्रिशेषेऽनुदिनंसमागत्यात्रमंदिरे ॥३५॥ सर्वपूजोपकरणंसंपाद्यव्रजतिस्वयम् ॥ इतिश्रुत्वां
बरीषस्तुतुतोषकिलमानसे ॥३६॥ तांपत्नीमात्मसदृशींमेनेराजर्षिसत्तमः॥गत्वातद्भवनंतस्यैददावाज्ञांप्रसन्नधीः ॥३७॥ समर्च्चयहरिं

भक्त्यात्वमप्यत्रैवेवेश्मनि ॥ निर्मायागमयद्वेश्मदीयतेऽत्रैवतेप्रिये ॥ ३८ ॥ अहमप्यागमिष्यामिनित्यमत्रैवतेंतिके ॥ इत्युक्तासा मु
दायुक्ताप्रणनामपतिंसती ॥ ३९ ॥ राजापिसर्वमकरोत्तदासातत्रसर्वदा ॥ हरिभक्तिपराराज्ञीपतिसेवापरायणा ॥ ४० ॥ पूजयामास
गोविंदंरेमेतत्रैवभूपतिः ॥ ज्ञात्वैतत्प्रेमभूपस्यपत्न्योमान्यामहीपतेः ॥ ४१ ॥ ताभिःस्वस्वगृहेविष्णोः पूजारब्धाप्रयत्नतः ॥ एवंगते
षुकालेषुसाक्षुद्रनृपतेःसुता ॥ ४२ ॥ पत्नीराज्ञोऽतिसुभगाकन्यामेकामजीजनत् ॥ नृपतिःपरमप्रीत्यानामकर्मादिपुत्रवत् ॥ ४३ ॥
कारयामासधर्मात्माबहुदानपुरस्सरम् ॥ श्रीमतीतिचनाम्नासापित्राप्रख्यापिताभुवि ॥ ४४ ॥ साकन्याववृधेकालेरूपेणात्यंतसुन्दरी
शीलस्वभावगांभीर्य्यैर्भक्त्याश्रीरिवरूपिणी ॥ ४५ ॥ तांदृष्ट्वासुन्दरींकन्यांनारदःपर्वतस्तथा ॥ अयाचेतांमहाराजमंबरीषंसुतांत
दा ॥ ४६ ॥ अंबरीषोऽब्रवीद्वाक्यंविनयादतिनम्रधीः ॥ अहोभवतौयाचेतेकन्यैकाममवेश्मनि ॥ ४७ ॥ कथंद्वाभ्यांप्रदातव्यातस्मा
त्किंचिद्ब्रवीम्यहम् ॥ स्वयंवरेणविधिनाविवाहोऽस्याभविष्यति ॥ ४८ ॥ यदायंवरयेदेषातस्मैदास्याम्यसंशयम् ॥ इतिश्रुत्वातुतौ
द्वौतुनारदःपर्वतःसतु ॥ ४९ ॥ गतौपृथक्पृथक्कृष्णमूचतुःस्वमनोरथम् ॥ कृष्णाहंपर्यटन्भूमावपश्यंकन्यकांशुभाम् ॥ ५० ॥
अंबरीषस्यराजर्षेस्तांययाचेसुतांतदा ॥ समामुवाचराजर्षिःस्वयंवरविधानतः ॥ ५१ ॥ दास्यामितनयामेतांयस्मैमालांप्रदास्यति ॥
इतिज्ञात्वाहमायातोविचार्य्यहृदयेपुनः ॥ ५२ ॥ इयंतुवैष्णवीकन्याध्यायतित्वामहर्निशम् ॥ तवरूपधरोयःस्यात्तमेववरयिष्यति ॥ 
॥ ५३ ॥ ततोममशरीरंतुकुरुष्वसदृशंविभो ॥ इतिप्रत्येकमेवोभौभगवंतंसमूचतुः ॥ ५४ ॥ भगवान्प्रददौताभ्यांशरीरंस्वसमंपुनः॥

मुखंवानरतुल्यंतुजातमद्भुतमेतयोः ॥ ५५ ॥ अथस्वयंवरेतस्याःसभायांतावुभावपि ॥ भगवानपितद्भक्त्याभूत्वाचमनुजाकृतिः ॥
॥ ५६ ॥ कोटिकामप्रतीकाशःश्यामःकमललोचनः ॥ युवासर्वांगसुभगस्तत्रागत्यस्थितोऽभवत् ॥ ५७ ॥ अथसानृपतेःकन्या
श्रीमतीविष्णुतत्परा ॥ मालांगृहीत्वासदसिसमायातातिहर्षिता ॥ ५८ ॥ दृष्ट्वातंभगवंतंसासाक्षाद्विष्णुंनराकृतिम् ॥ प्रणम्यमनसामा
लांतस्यकंठेन्यवेशयत् ॥ ५९ ॥ ततोजयाशिषांनादस्तुमुलःसमपद्यत ॥ प्रतिगृह्यचतांकन्यामागतोभगवान्हरिः ॥ ६० ॥ तत
स्तावपितंज्ञात्वाभगवंतंसमागतम् ॥ स्वमुखंवानरस्याभंज्ञात्वादेवंययौद्रुतम् ॥ ६१ ॥ तत्रगत्वाब्रवीत्क्रुद्धोनारदोविष्णुमप्रि
यम् ॥ छलयित्वातुमामेतांयथात्वंहृतवानसि ॥ ६२ ॥ तथातवापिछलतःकांतामपिहरिष्यति ॥ कोऽपिदैत्योनसंदेहःपुनः
शृणुवदाम्यहम् ॥ ६३ ॥ यतोमुखंवानराभंकृतवानसिमेप्रभो ॥ भवानपिसखाभूत्वावानरस्यकियद्दिनम् ॥ ६४ ॥
तत्साहाय्यंकांक्षमाणोनिवसिष्यतिभूतले ॥ इत्येवंवचनंतस्यश्रुत्वासभगवान्हरिः ॥ ६५ ॥ शांतिपूर्वमुवाचेदंनारदायमहात्मने ॥
अहोनारदसत्यंतेभाषितंनात्रसंशयः ॥ ६६ ॥ भविष्यतिममाप्येतद्भाविकार्यस्यगौरवम् ॥ एषांबरीषतनयावक्रमांपतिमुत्त
मा ॥ ६७ ॥ मातृवक्राच्छ्रुतवतीध्यायंतीमामहर्निशम् ॥ अतोनयोग्यायुवयोर्विचार्यैवंकृतंमया ॥ ६८ ॥ एतद्यु
वाभ्यांक्षंतव्यंपूर्वमुक्तंपुरस्तुवाम् ॥ इतिश्रुत्वाप्रसन्नौतौतुष्टुवातेतमीश्वरम् ॥ ६९ ॥ भगवानपिवैकुंठेरेमेपत्न्यातयासह ॥ इत्येतत्क
थितंसर्वमंबरीषस्यचेष्टितम् ॥ ७० ॥ महदाश्चर्यभूतंचहरिभक्तिप्रदायकम् ॥ श्रुत्वैतत्परमाख्यानंसकष्टान्मुच्यतेनरः ॥ ७१ ॥

सर्वान्कामानवाप्नोतिविष्णुभक्तिप्रदायकान् ॥ ७२ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येंऽबरीषचरितंनामनवमः सर्गः ॥ ९ ॥ ॥ छ ॥
विदुरस्त्रीकृतांभक्तिंवक्ष्येऽहंशृणुभक्तितः ॥ एकदाविदुरेयातेक्वचिन्निजगृहादथ ॥ १ ॥ विदुरस्त्रीगृहेनग्नाकुर्वतीस्नानमादरात् ॥ अथां
तरेसमयातः कृष्णोद्वारिसमाह्वयत् ॥२॥ विदुरोऽस्तिगृहेनेतिश्रुत्वासाविदुरप्रिया ॥ तथैवोत्थायद्रुतंवगताकृष्णस्यसन्निधिम् ॥ ३ ॥
आगच्छायातिसोप्यत्रेत्युक्त्वाधृत्वाकरंहरेः ॥ निनायभवनेसातुविस्मृतात्मकलेवरा ॥ ४ ॥ श्रीकृष्णदर्शनौत्सुक्यादुन्मत्तेवाभव
त्सती ॥ ततःपीतांबरंकृष्णोदधौतदुपरिस्वकम् ॥ ५ ॥ उवाचतांततःकृष्णोभोज्यंचेदस्तिदेहिमे ॥ ततोऽतिहर्षात्तद्वस्त्रवेष्टिताकद
लीफलम् ॥ ६ ॥ समादायोपविष्टाग्रेभोजयामासकेशवम् ॥ रंभाफत्वचंनीत्वाभोजनायददौकरे ॥ ७ ॥ फलंतत्याजभूमौसाबुभुजे
भगवान्स्वयम् ॥ अस्मिन्नेवमुहूर्तेतुविदुरःसमुपागतः ॥ ८ ॥ ददर्शतांप्रियांभार्यांकृष्णपीताम्बरावृताम् ॥ भोजयंतींत्वचंकृष्णं
त्यजंतींतत्फलंपुनः ॥ ९ ॥ उवाचतांमहोद्विग्नःपत्नींनिर्भर्त्सयन्मुहुः ॥ अरेफलत्वचंकस्माद्भोजयिष्यसित्वंहरिम् ॥ १० ॥ इदंपीतां
बरंचास्यकुतःपरिदधासिच ॥ इत्युक्तातुबुबोधाथजगर्हात्मानमात्मना ॥ ११ ॥ उत्थायांतर्गृहेगत्वापरिधायस्ववाससी ॥ पीतां
बरंननामाथशिरस्याधायसामुहुः ॥ १२॥ अथकृष्णायविदुरोददौतत्फलमुत्तमम् ॥दूरीकृत्यत्वचंपश्चात्पप्रच्छमधुराक्षरम् ॥ १३ ॥
ततःकृष्णोऽब्रवीत्प्रेम्णानत्वचासदृशंफलम् ॥ इत्युक्त्वाताआजुहावविदुरस्त्रींहसन्प्रभुः ॥ १४ ॥ नायातिलज्जितागेहात्प्रार्थयंतीहरिंमु
हुः ॥ एकदापांडवार्थंतुश्रीकृष्णोहस्तिनापुरे॥१५॥ दुर्योधनगृहेनीतिंवक्तुंतंसमुपागतः ॥ततोनस्वीचकराथकृष्णोक्तंधृतराष्ट्रजः॥१६॥

एवंकथाप्रसंगेनमध्याह्नंसमुपागतम् ॥ दुर्योधनगृहेपाकशालायांभोजनायवै ॥ १७ ॥ श्रीकृष्णंप्रार्थयामासुःकुरवोविनयान्विताः ॥
धृतराष्ट्रोऽपिबहुधाकृष्णंप्राहातिलज्जितः ॥ १८ ॥ भुक्त्वागच्छमहाबाहोतवतुल्यावयंचते ॥ इत्युक्तोभगवानाहसत्यमुक्तंत्वया
नृप ॥ १९ ॥ परंतुयोनिसंबंधान्नचप्रीत्यानधर्म्मतः ॥ प्रीतिभोज्यानिचान्नानियावद्भोज्यानिचापरे ॥ २० ॥ नचत्वंप्रीयसेराजन्न
हिचोपहृतावयम् ॥ इत्युक्तोधृतराष्ट्रस्तुसर्वेऽन्येकुरवस्तथा ॥ २१ ॥ तूष्णींस्थिताःस्वकर्म्माणिस्मृत्वाकिंचिन्नचाब्रुवन् ॥ तत
उत्थायभगवान्विदुरस्यगृहंगतः ॥ २२ ॥ तमाहविदुरंभक्तंश्रीकृष्णोभक्तवत्सलः ॥ बुभुक्षितोऽहंभोक्तुंमेदेहियद्यास्तिकिंचन ॥ २३ ॥
इत्युक्तोविदुरोभक्त्यासपत्नीकोऽतिहर्षितः ॥ स्वार्थंत्यक्त्वाशाकमात्रंदारिद्र्याद्दातुमुद्यतः ॥ २४ ॥ एतस्मिन्नंतरेकृष्णःसमागत्येदम
ब्रवीत् ॥ ततोऽतिहर्षात्संस्कृत्यस्थलंतत्रपुरातनम् ॥ २५ ॥ काष्ठपीठंनिधायाथभगवंतमुवाचह ॥ अद्यमेशाकमात्रंतुजातम
स्तिजनार्दन ॥ २६ ॥ कथंतत्तवदास्यामिभोक्तुंतिष्ठक्षणंततः ॥ द्रुतमन्नंसाधयामिततोभोक्ष्यसिमाधव ॥ २७ ॥ ततःसभगवान्
शीघ्रमुत्थायेतिवदन्हसन् ॥ अहोशाकप्रियंमांत्वंनजानासिविशेषतः ॥ २८ ॥ तवशाकेभक्तिपूर्वंयत्तोषोममजायते ॥ नत्वभक्त्या
न्नकूटस्यकृतःसर्वरसःप्रियः ॥ २९ ॥ इत्युक्तोजलमादायप्रक्षाल्यचरणौहरिः ॥ गत्वामंदिरमध्येतुपीठेसमुपविष्टवान् ॥ ३० ॥
विदुरस्त्रीतदाप्रेम्णापात्रेशाकंनिधायसा ॥ कृष्णाग्रेस्थापयामासभक्त्याहर्षाश्रुमालिनी ॥ ३१ ॥ तदासबुभुजेशाकंभगवान्भक्त
वत्सलः ॥ भुक्त्वातृप्तिंगतोऽस्म्यद्यमहतीमितिचासकृत् ॥ ३२ ॥ वदन्नुत्थायहस्तौचप्रक्षाल्यविदुरःसच ॥ पूगीफलस्यखंडानि

ददौतन्मुखशुद्धये ॥ ३३ ॥ विसृज्यभगवंतंतंसस्त्रीकोविदुरोमहान् ॥ कृष्णभुक्तावशिष्टंयदुच्छिष्टंबुभुजेस्वयम् ॥ ३४ ॥ एवं प्रभावोभक्तेस्तुदृश्यतेऽस्मिन्युगेयुगे ॥ क्वचत्रैलोक्यनाथोऽसौकृष्णोलक्ष्मीपतिःस्वयम् ॥ ३५ ॥ क्वचशाकाशनंचात्रभक्तिरेवहिकारणम् ॥ ३६ ॥ इति श्रीभगवद्भक्तिमाहात्म्येविदुरस्त्रीचरितंनामदशमःसर्गः ॥ १० ॥ ॥ छ ॥ सुदाम्नोभक्तिमाहात्म्यंवक्ष्येसर्वमनोरमम् ॥ यच्छ्रुत्वाभक्तिमाप्नोतिनिर्द्धनोधनमाप्नुयात् ॥ १ ॥ द्वारकायाःसमीपेतुसुदामानामवैद्विजः ॥ सर्वशास्त्रार्थतत्त्वज्ञःसदासत्कर्मतत्परः ॥ २ ॥ परंतुकर्म्मदोषेणब्राह्मणोऽस्त्यतिनिर्धनः ॥ प्रत्यहंभोजनमपियस्यगेहेऽस्तिदुर्लभम् ॥ ३ ॥ अयाचितव्रतंनैवतथापिविजहौद्विजः ॥ एकदातस्यपत्नीतुकृशाऽनाहारतःसती ॥ ४ ॥ वासःपरिदधानातुशतखंडंजरत्तरम् ॥ उवाचपतिमत्यर्थंपीडिताक्षुधयापुनः ॥ ५ ॥ अप्यकार्यशतंकृत्वाभर्तव्यानांतुपोषणम् ॥ कर्तव्यमिति शास्त्राज्ञांत्वत्तःश्रुतवतीह्यहम् ॥ ६ ॥ त्वमिदानींशरीरंस्वंमुंचस्यतीवदुर्बलः ॥ अनाहारात्कथंनैवजानासीत्यद्भुतंमहत् ॥ ७ ॥ इतिश्रुत्वावचस्तस्याःप्रियायाःकरुणान्वितः ॥ उवाचसत्यमेतत्त्वंभाषसेनात्रसंशयः ॥ ८ ॥ जानाम्यवश्यंतेतन्विस्वशरीरस्य चाप्यहम् ॥ परंतुनैवपश्यामियोऽपिदद्याद्धनंमम ॥ ९ ॥ अयाचितव्रतंचैवत्यक्तुंनोत्सहतेमनः ॥ इत्युक्तासापुनःप्राहपतिंप्रेमान्वितंहितम् ॥ १० ॥ एकस्मिन्दिवसेत्वंतुमामवोचःकथांतरे ॥ वसुदेवसुतःकृष्णोऽवंत्यांसांदीपनेर्गुरोः ॥ ११ ॥ यदापाठीत्तदातत्रसहपाठीवसेस्मह ॥ ससर्वेभ्योऽधिकोजातोविद्ययाचबलेनच ॥ १२ ॥ आनीयाब्धौमृतंपुत्रंगुरवेदक्षिणामदात् ॥ इदानींद्वारका

यांचराजाजातोमहाधनः ॥ १३ ॥ दीनानाथगणेभ्यस्तुददातिधनमीप्सितम् ॥ इतित्वन्मुखतोनाथश्रुतमस्तिमयापुरा ॥ १४ ॥
तस्मात्तत्रैवगच्छत्वंसतेदास्यतिपुष्कलम् ॥ इतितस्यावचःश्रुत्वासुदामाप्राहतांप्रियाम् ॥१५॥ सत्यमुक्तंत्वयाभद्रेयामितत्रनसंशयः॥
परंतुसतथैश्वर्यंप्राप्यद्रक्ष्यतिमांकिमु ॥ १६ ॥ अथापियामिकिंतस्मैदास्यामिपारितोषिकम् ॥ विचारयतुगेहेऽस्तिकिंचित्तद्वस्तुसं
प्रति ॥१७॥ इत्युक्तासातदाछिन्नशालिक्षेत्रेगतासती ॥ उंछवृत्त्याथधान्यंसाविचित्यप्रस्थकार्द्धकम् ॥ १८ ॥ आनीयपृथुकंतस्यनि
र्ममेचकरेणसा ॥ ततःकस्मिन्पटेबद्धादास्याम्येतद्विचिंत्यसा ॥ १९ ॥ परीक्ष्यहस्तमात्रस्तुयत्रासीत्स्वपटोदृढः ॥ तंगृहीत्वातु
तत्रैवबद्धातान्पृथुकान्सती ॥ २० ॥ ददौपत्येगृहीत्वेदंगच्छयत्रास्तितेसखा ॥ इत्युक्तःसगृहीत्वातंसुदामापृथुकंययौ ॥ २१ ॥ ततो
द्वारवतींतत्रक्कगच्छामीतिचिंतयन् ॥ सर्वेसमानादृश्यंतेप्रासादाःपर्वतोपमाः ॥ २२ ॥ द्वारिसर्वत्रतिष्ठंतिद्वारपालागृहेगृहे ॥ कथंगंतुंप्र
दास्यंतिइत्येवंहृदिचिंतयन् ॥ २३ ॥ गच्छन्संप्राप्यश्रीकृष्णगृहद्वारिसदैवतम् ॥ दृष्ट्वातान्द्वारपालांस्तुतेजसाप्रष्टुमक्षमः ॥ २४ ॥
तूष्णींस्थित्वासुदामातुपप्रच्छुस्तेतमादरात् ॥ दृष्ट्वादरिद्रंविकलंवस्त्रखंडावृतंकटौ ॥ २५ ॥ विचारयंतोनेदृग्वैकोऽप्यस्तिचनरः
पुरे ॥ किंपुनर्ब्राह्मणस्तस्मात्कस्मादेषसमागतः ॥ २६ ॥ संचिंत्यमनसाचैवंतमाहुर्द्वारपालकाः ॥ कोभवान्कुत आयातः
किंवात्रास्तिप्रयोजनम् ॥ २७ ॥ इतिशुश्रूषवोविप्रवयंविज्ञापयामहे ॥ इतिश्रुत्वावचस्तेषांविनयेनसमन्वितः ॥ २८ ॥ हृष्ट
स्तुतोषश्रीकृष्णोनासौधनमदान्वितः ॥ यस्यभृत्याद्वारपालाएवंविनयवादिनः ॥ २९ ॥ इत्युक्त्वामनसातेभ्यउवाचमुदितो

द्विजः ॥ अहोसुदामानाम्नाहंसखाकृष्णस्यवैद्विजः ॥ ३० ॥ द्रष्टुमिच्छामितन्मित्रमेवंमेऽत्रमनोरथः ॥ इतिश्रुत्वाचतेसर्वेमनसै
तदसंभवम् ॥ ३१ ॥ यद्वासनांतुकोवेदचेष्टितंजगतीपतेः ॥ दीनानाथजनेप्रेमतस्याऽत्यर्थंहिदृश्यते ॥ ३२ ॥ वयंविज्ञापयामस्तंत
स्याज्ञैषाहिवर्तते ॥ दीनोवादुःखितोवापिपरसंतापितोऽथवा ॥ ३३ ॥ विज्ञाप्यस्तत्क्षणादेवनोपेक्ष्यःसमयोऽत्रभोः ॥ इतिनिश्चित्य
मनसातेषांमध्येजरत्तरः ॥ ३४ ॥ गत्वांतःपुरमध्येतुगृहाद्वाह्येस्थितोऽब्रवीत् ॥ जयशब्दंसमुच्चार्य्यनमस्कृत्यकृतांजलिः ॥ ३५ ॥
देवदेवागतोद्वारिद्विजोदीनोऽतिनिर्द्धनः ॥ उक्तवानस्तिमित्रंमेश्रीकृष्णंमेप्रदर्शय ॥ ३६ ॥ नाम्नासुदामेत्येवंतुश्रुत्वावैतत्क्षणात्प्रभुः ॥
पद्मयालालितपदः पर्यंकशयनेस्थितः ॥ ३७ ॥ अर्द्धनिमीलिताक्षस्तुतदाससुखनिद्रया ॥ श्रुत्वातस्यवचस्तूर्णंक्वसुदामासखामम
॥ ३८ ॥ वदन्नेवंमुहुर्द्वारिसमायातोद्रुतंहरिः ॥ दृष्ट्वातंससमाश्लिष्यगृहीत्वापाणिनाकरम् ॥ ३९ ॥ निनायांतःपुरेतत्रनिवेश्यस्वा
सनोत्तमे ॥ पद्मामाहानयजलंपादौप्रक्षालयाम्यहम् ॥ ४० ॥ इतिश्रुत्वामहालक्ष्मीरुक्मिणीरूपधारिणी ॥ आनीयस्वर्णभृंगारंपादौ
धृत्वाप्रणम्यसा ॥ ४१ ॥ क्षालयामासकृष्णस्तुभृंगारेणददौजलम् ॥ विपादिकाभिः खिन्नाभ्यांकुंचिकाभ्यांचरुक्मिणी ॥ ४२ ॥
कोमलाभ्यांकराभ्यांसापादौप्रक्षाल्ययत्नतः ॥ स्वांचलैःपादसंलग्नंजलंसंप्रोक्ष्यमूर्द्धनि ॥ ४३ ॥ सिषेवेतत्पादजलंभक्त्याकृष्ण
स्तुतेद्विजम् ॥ उपवेश्यस्वपर्य्यंकेसुदामानमुवाचह ॥ ४४ ॥ अहोददौमदर्थंयत्स्नेहेनाथप्रजावती ॥ तद्देहिमेसखेपूर्वंपश्चाद्दाताभवि
ष्यति ॥ ४५ ॥ इत्युक्तःसोऽतिसंकोचात्पृथुकान्नंनिगृह्यच ॥ स्थितस्तदाहरिर्हस्ताद्बलेनस्वयमाददे ॥ ४६ ॥ चीरेबद्धंतुनिष्कास्य

प्रशशंससमुहुर्मुहुः ॥ मुष्टिमेकंमुखेदत्त्वाबुभुजेभगवान्स्वयम् ॥ ४७ ॥ पुनर्ग्रहीतुमुद्युक्तोरुक्मिणीतंन्यवारयत् ॥ सुदामानमथो
वाचवृत्तांतंसुरुवेश्मनः ॥ ४८ ॥ स्मरसित्वंसखेतत्रचेंधनार्थंगतावयम् ॥ इंधनानिगृहीत्वातावागतौचयदापथि ॥ ४९ ॥ समाग
तातिवृष्टिर्वैज्ञात्वानौवनगौगुरुः ॥ कृपयास्वयमायातःपथ्यावांद्रष्टुकामुकः ॥ ५० ॥ समागत्यस्थितश्चासौदृष्ट्वासमुमुदेगुरुः ॥ गृही
त्वानौततोगत्वागृहेसप्रत्यषेधत ॥ ५१ ॥ अद्यारभ्यनगंतव्यंभवद्भ्यामिंधनायभोः ॥ इत्यादीनिविचित्राणिसुखान्यासन्गुरोःकुले
॥ ५२ ॥ एवंसंस्मृत्यसंभाष्यभोजयित्वाविसर्जितः ॥ सुदामाहरिणाचाथद्वारवत्याःसनिर्गतः ॥ ५३ ॥ चिंतयामासमार्गेसश्रीकृ
ष्णचरितंसुधीः ॥ अहोएवंमहाह्लादंकृत्वायन्नददौधनम् ॥ ५४ ॥ तन्मेधनमदश्चेत्स्याज्ज्ञात्वोपकृतवान्हरिः ॥ एवंनिश्चित्यमनसा
समागत्यनिजंपुरम् ॥ ५५ ॥ नापश्यत्स्वकुटींतत्रप्रासादंगिरिसन्निभम् ॥ ददर्शराजवेश्माभंद्वारिद्वाःस्थैःसुरक्षितम् ॥ ५६ ॥ सुव
र्णयष्टिहस्तैश्चभृत्यैश्चतस्ततःपुनः ॥शिक्ष्यंतेऽन्येचभृत्यावैदानमानसमेधिताः ॥५७॥ एवंदृष्ट्वासुदामाथप्रासादंस्वंचसर्वशः ॥ दिशोवि
भ्रामचिंतार्तोनलेभेस्वकुटिंतदा ॥ ५८ ॥ अट्टालिकायांतत्पत्नीस्थितातंसाददर्शह ॥ स्वर्णयष्टिधरान्प्राहतंद्विजंशीघ्रमानय ॥ ५९ ॥
इत्युक्तास्तेगतास्तूर्णंसुदामानंबभाषिरे ॥ समागच्छद्विजश्रेष्ठराज्ञीत्वांद्रष्टुमिच्छति ॥ ६० ॥ एवमुक्तःसुदामातुचकंपेभयविह्वलः ॥
उवाचतानहोकिंमेदर्शनेनकरिष्यति ॥ ६१ ॥ राज्ञामंतःपुरेनैवगंतव्यंविदुषासदा ॥ एवंवदंतंसाश्चर्यंनिश्चरंतंशनैःशनैः ॥ ६२ ॥
गृहीत्वाविभयाद्दूतास्तत्पत्नीनिकटेययुः ॥ दृष्ट्वातंसासमुत्थायएहिकांतेऽतिभाषिणी ॥ ६३ ॥ जग्राहतंकरेणाथस्वासनेसंनिवेश्य

तम् ॥ उवाचकृष्णचरितमेतत्सर्वंतवैवभोः ॥ ६४ ॥ अहंतवप्रियाभार्य्याश्रीकृष्णसविधेपतिम् ॥ भवंतंप्रेषितवतीगतेतत्रभवत्य
थ ॥ ६५ ॥ आगत्यकृष्णभृत्याश्चनिर्मायैतद्गृहंतव ॥ दत्त्वावासोऽन्नभोज्यानितथालंकरणानिच ॥ ६६ ॥ दासीदासांश्चशतशःको
शेवित्तंतथैवच ॥ दत्त्वाययुस्तेत्वांद्रष्टुंप्रसन्नस्तेसखाद्विज ॥ ६७ ॥ श्रुत्वैतद्वचनंतस्याःस्वस्थचित्तोऽभवत्तदा ॥ उवाचद्वारकायांय
त्कृष्णेनाह्लादितःस्वयम् ॥ ६८ ॥ पादप्रक्षालनंदेव्यारुक्मिण्याभक्तिपूर्वकम् ॥ पृथुकान्नस्यकृष्णेनभोजनंचान्यदप्यहो ॥ ६९ ॥
उक्त्वास्तुत्वापरीधायपीतांबरमनुत्तमम् ॥ पत्न्यालंकरणैःसर्वैर्भूषितःश्रीहरिंस्मरन् ॥ ७० ॥ संपूज्यतंमहाभक्त्याभोजयित्वाद्विजा
तिथीन् ॥ दीनानाथगणानार्यान्संतर्प्यबुभुजेस्वयम् ॥ ७१ ॥ यावज्जीवंतयापत्न्याकृष्णनामजपन्द्विजः॥अवाप्यपुत्रपौत्रादीन्सर्वभो
गसमन्वितः ॥ ७२ ॥ अंतेजगामसान्निध्यंकृष्णस्यपरमात्मनः ॥ इतिसंक्षेपतःप्रोक्तंसुदाम्नश्चरितंमया ॥ ७३ ॥ श्रुत्वैतद्भक्तिपूर्वंतु
निर्धनोधनमाप्नुयात् ॥ भक्तिंचलभतेकृष्णेमृतोयातिपरंपदम् ॥ ७४ ॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्येसुदाम्नश्चरितंनामैका
दशःसर्गः ॥ ११ ॥ ॥ छ ॥ ॥ चन्द्रहासकथांवक्ष्येमहाश्चर्यप्रदायिनीम् ॥ यांश्रुत्वामनुजोभक्तिंश्रीकृष्णेलभतेदृढाम् ॥१॥ आसी
त्पुरामहीपालोधृष्टद्युम्नइतिश्रुतः ॥ तस्यराज्यसमीपेतुग्रामाधीशस्ततोनृपः ॥ २ ॥ तस्यैकतनयोजातश्चंद्रहासेतिनामतः ॥ तस्य
वैपंचमेवर्षेशत्रुणानिहतःपिता ॥ ३ ॥ गृहीतंग्राममानीयपत्नीतस्यशुचिव्रता ॥ चन्द्रहासंसुतंनीत्वाप्राणत्राणपरायणा ॥ ४ ॥ धृष्ट
द्युम्नपुरंप्राप्यगतासचिववेश्मनि ॥ सचिवस्तांतुसंमान्यविवासार्थंददौगृहम् ॥५॥ सातस्मिन्भवनेनित्यंचन्द्रहासेनसंयुता ॥ वसन्ती

पतिशोकार्तासस्मारहरिमीश्वरम् ॥६॥ चन्द्रहासः सुतस्तस्याः पुत्रेणसचिवस्यतु ॥ चिक्रीडेऽहर्निशंतस्मैचन्द्रहासायवैष्णवः ॥७॥ कोऽप्या
गत्यददौस्वल्पांशालग्रामशिलांशुभाम् ॥ तांशिलांसशिशुर्भक्त्यागृहीत्वास्वमुखेन्यधात् ॥ ८ ॥ अन्यत्रचौरशंकातोनविश्वासो
बभूवह ॥ भोजनेऽन्नंसमर्प्यार्थपरिधानीयवाससि ॥ ९ ॥ बद्ध्वासंस्थाप्यबुभुजेसर्वदैवंव्रतंशिशोः ॥ एकदाक्रीडयायुक्तश्चन्द्रहासः शिशु
र्मुदा ॥ १० ॥ मंत्रिपुत्रेणसाकंतुगतवान्राजसन्निधौ ॥ तत्रवेदविदोविप्राःसामुद्रिकविचक्षणाः ॥ ११ ॥ निमंत्रिताः समायाताधृष्टद्युम्ने
नवैतदा ॥ अब्रुवन्भूपतिंसर्वेचन्द्रहासंनिरीक्ष्यते ॥ १२ ॥ अहोऽयंबालकोराजन्भविष्यतिपराक्रमी ॥ जामातातुतवैवायंभविष्यतिन
संशयः ॥ १३ ॥ भाग्यवान्धनसंपन्नोराजाभवितुमर्हति ॥ इतिश्रुत्वावचस्तेषांविप्राणांसचभूपतिः ॥ १४ ॥ तूष्णींस्थितोभोज
यित्वाब्राह्मणान्विससर्जच ॥ ततश्चिंतापरोराजाविप्रवाक्यमनुस्मरन् ॥ १५ ॥ मनसातस्यहननेनिश्चयंकृतवान्नृपः ॥ चंडालं
तुसमाहूयप्राहैकांतगतोनृपः ॥ १६ ॥ इत्युक्तोधृष्टद्युम्नेनचंडालस्तमथद्रुतम् ॥ प्रतार्य्यवनमध्येतुनिन्येमारयितुंशिशुम् ॥ १७ ॥
चन्द्रहासंतुतंबालंनीत्वावैकाननांतरे ॥ जहिशीघ्रंप्रत्ययार्थंतस्यकिंचित्प्रदर्शय ॥ १८ ॥ शालग्रामशिलाभक्तमाहात्म्याद्भगवान्हरिः ॥
चांडालायददौबुद्धिंसात्त्विकींशिशुरक्षणे ॥ १९ ॥ अहोऽयंबालकोऽनाथोमातास्यशरणागता ॥ मृतेपत्यौधृष्टद्युम्नः सकथंहंतुमिच्छ
ति ॥ २० ॥ अहंतुनैवहन्म्येनंबालकंशुभदर्शनम् ॥ परंत्वस्यांगुलीमेकांप्रत्ययायनृपस्यच ॥ २१ ॥ छित्त्वानेष्यामिनगरेदर्शयि
ष्यामितंनृपम् ॥ इतिसंचिंत्यमनसापाणौषष्ठींस्थितांगुलिम् ॥ २२ ॥ छित्त्वादायागतोराज्ञेचण्डालस्तामदर्शयत् ॥ दृष्ट्वाराजा

गुलिंचित्तेमृतोऽयमित्यमन्यत ॥ २३ ॥ अथतंबालकंदीनंरुदंतंगहनेवने ॥ हिरण्यपक्षिणश्चैवररक्षुःसमुपेत्यतम् ॥२४॥ अथांतरेनृपः
कश्चित्तत्रैवमृगयांचरन् ॥ आगत्यदृष्टवान्बालंरुदंतंगहनेवने ॥ २५ ॥ दृष्ट्वापप्रच्छकोऽसित्वंकथमत्रागतःशिशुः ॥ श्रुत्वातद्राजवचनं
बालःप्रोवाचभूपतिम् ॥ २६ ॥ नजानेकस्यपुत्रोऽहंधृष्टद्युम्नस्यमंत्रिणः॥गृहेवसन्निहानीतः केनापिरिपुणावने ॥ २७ ॥ षष्ठींकरांगुलिंछि
त्वासगतः कुत्रचिन्नृप॥जानाम्येतदहंराजन्नान्यज्जानामिकिंचन ॥२८॥ इतिश्रुत्वावचस्तस्यबालस्यसमहीपतिः॥मनसाप्राहबालोऽयंस
म्यग्वदतिनिर्भयः ॥ २९॥ अतोऽयंकस्यचिद्राज्ञःपुत्रोनास्त्यत्रसंशयः॥अहमेनंनयाम्यद्यपुत्रवत्पालयामिच॥३०॥नमेऽस्तिपुत्रोबालो
ऽयंपुत्रोभवितुमर्हति। निश्चित्यैवंतुमनसातंबालंलालयन्मुदा ॥ ३१॥ आरोप्यशिबिकायांतुनिनायस्वगृहंनृपः॥तत्रपत्न्यैददौबालंपुत्रो
यंप्रतिपाल्यताम् ॥ ३२ ॥ इतिश्रुत्वावचोराज्ञीदृष्ट्वाबालंमुमोदसा॥ पालयामाससततंभोजनाच्छादनादिभिः ॥३३ ॥ अथकालेनतत्रै
वचन्द्रहासोयुवाभवत्॥सर्वांगसुन्दरःशूरः साक्षात्कामइवापरः ॥३४॥ धृष्टद्युम्नश्चश्रुत्वातंतस्यराज्ञोनिवेशने ॥ सचिवंप्रेष्यतेनाथकृत्वा
संधिंचततसुतम् ॥ ३५ ॥ चंद्रहासंसमानाय्यदृष्ट्वाराजातिचिंतितः ॥ अथैनंछलतोहन्मीत्येवंकृत्वातुनिश्चितम् ॥३६॥ चंद्रहासायपत्रं
तुलिखित्वाप्रददौस्वयम् ॥ धृष्टद्युम्नः स्थितोऽन्यत्रस्वगृहाद्राजकार्यतः॥ ३७ ॥ मदनायस्वपुत्रायपत्रंस्वयमलीलिखत् ॥ स्वस्तिश्री
त्यादिसंलिख्यवृत्तांतंतदनंतरम् ॥ ३८ ॥ विषमस्मैप्रदातव्यंदर्शनादेवतत्क्षणात् ॥ इत्येवमलिखद्राजामुद्रयित्वाततः पुनः ॥ ३९ ॥ ॥ २०
ददौसचंद्रहासायत्वंगच्छममवेश्मनि ॥ मदनायसुतायैतत्पत्रंदेहिपुरांतिके ॥ ४० ॥ पत्रंदृष्ट्वासतेऽभीष्टंकरिष्यत्यविचारयन् ॥ इति

श्रुत्वावचस्तस्यधृष्टद्युम्नस्यसद्रुतम् ॥ ४१ ॥ जगामराजनगरेमध्याह्नात्परतोदिने॥तावत्तुमदनोभुक्त्वासुष्वापांतःपुरेगतः ॥ ४२ ॥
चंद्रहासोनृपद्वारिज्ञात्वाससुप्तवानिति ॥ तावत्सुपुष्पुरुर्व्यांतुविशश्रामश्रमातुरः ॥ ४३ ॥ तस्यविश्राम्यतस्तस्यनिद्रासीदथवाटि
काम् ॥ द्रष्टुंसमागताराज्ञःकन्यासाविषयाभिधा ॥ ४४ ॥ सखीभिःसहिताचैत्यसमाभासितयौवना ॥ साददर्शशयानंतंचंद्रहासंतरो
स्तले ॥ ४५ ॥ सशंकासासखीमध्येकोऽयंपुरुषभूषणः ॥ स्वपित्यत्रसमागत्यज्ञातव्यइतिमेमतिः ॥ ४६ ॥ परंत्वस्यतुपत्रैकंदृश्यते
शिरसिस्थितम् ॥ तदेवप्रथमंसख्यःसमानयतयत्नतः ॥ ४७ ॥ यथायंजागृयान्नैवतथागच्छतयत्नतः ॥ इतिश्रुत्वावचस्तस्यास्तासा
मेकाययौशनैः ॥ ४८ ॥ गत्वातन्मस्तकात्पत्रंकौशलाज्जगृहेद्रुतम् ॥ आनीयविषयायैसाददौपत्रंततस्तुसा ॥ ४९ ॥ उद्घाट्यपत्रं
सापाठीत्पितुराज्ञांविषार्प्पणे ॥ बुद्ध्वासाचिंतिताबालागर्हयंतीपितुर्मनः ॥ ५० ॥ कथंकंदर्पसंकाशमिमंपुरुषभूषणम् ॥ हंतुमि
च्छतितातोमेतस्माद्दुष्टंहितन्मनः ॥ ५१ ॥ अहंतुपतिमेनंवैकरिष्यामिनसंशयः ॥ इतिसंचिंत्यमनसागत्वैकान्तेमनास्विनी ॥ ५२ ॥
विषमस्मैप्रदातव्यमित्यत्रकुशलालिखत् ॥ विषयास्मैप्रदातव्येत्येतत्पूर्वाक्षरोपरि ॥ ५३ ॥ ततःसंछिद्यतत्पत्रंसखीनांनिकटेगता ॥
किमत्रास्तीतिताभिःसाविषयासस्मितावदत् ॥ ५४ ॥ गृहवृत्तंकिमप्यस्तिपितामेमदनायभोः ॥ अलिखद्देहितस्यैवमस्तकेपत्रमुत्त
मम् ॥ ५५ ॥ इत्युक्त्वातुददौपत्रंविषयातत्सखीकरे ॥ सापिगत्वाशनैस्तत्रपत्रंतन्मस्तकेन्यधात् ॥ ५६ ॥ अथसाविषयाशीघ्रंनि
जवेश्मसमागता ॥ चंद्रहासोऽपिचोत्थायययौनृपतिमंदिरम् ॥ ५७ ॥ मदनायददौपत्रंदृष्ट्वातन्मदनोमुदा ॥ चंद्रहासायवेश्मादा

न्निवासायातिशोभनम् ॥ ५८ ॥ भृत्यानाज्ञापयामासचंद्रहासस्यसेवने ॥ अंगरागंतथावस्त्रं पानपात्रादिकंददौ ॥ ५९ ॥
ततःपुरोहितंविप्रमानाय्यमदनस्त्वरन् ॥ उद्योगंकारयामासस्वसुर्वैवाहिकस्यसः ॥ ६० ॥ अलंचक्रुश्चनगरंराजवेश्मद्रुतं
नराः ॥ आगत्यसपुरोधास्तुसर्वंसंपाद्यमब्रवीत् ॥ ६१ ॥ संपन्नासर्वसामग्रीविवाहेयाह्यपेक्षिता ॥ श्रुत्वातन्मदनस्तूर्णंमहोत्सव
विधानतः ॥ ६२ ॥ विषयांप्रददौतस्मैचंद्रहासायहर्षितः ॥ अथरात्रौगतोत्साहोमदनः प्रातरेवहि ॥ ६३ ॥ समु
त्थायलिलेखाथपत्रंपित्रेऽतिभक्तिमान् ॥ भवदाज्ञांपुरस्कृत्यस्वसारंविषयामहम् ॥ ६४ ॥ तस्मिन्नेवदिनेप्रादांचन्द्रहासाय
भक्तितः ॥ महोत्साहविधानेनविवाहःसमभूत्तयोः ॥ ६५ ॥ इतिश्रुत्वाततोराजामहाचिंताकुलोऽभवत् ॥ किंचित्रंसमभूत्किंचि
त्कथंतुलिखितंमया ॥ ६६ ॥ इतिसंदिग्धहृदयःप्रतस्थेतत्क्षणान्नृपः ॥ अथागत्यनिजंवेश्ममदनंप्राहभूपतिः ॥ ६७ ॥ विषयाया
विवाहार्थंयत्पत्रंप्रेषितंमया ॥ तदानयाहंपश्यामिइत्युक्तोमदनोमुदा ॥ ६८ ॥ तत्पत्रंदर्शयामासराजादृष्ट्वातिविस्मितः ॥ अहो
ममाक्षराण्येवपत्रेऽस्मिन्नात्रसंशयः ॥६९॥ कथमेतन्मयाऽलेखिविषयास्मैप्रदीयताम् ॥ इतिसंचिंत्यमनसापुनश्चापायचिंतनम् ॥७०॥
निश्चित्यतूष्णींतस्थौसपापबुद्धिर्नृपाधमः ॥ जातोविवाहःकिंतेनछलात्तंविनिहन्म्यहम् ॥७१॥ अन्यथाराज्यमेवैषहरिष्यतिनसंशयः ॥
विषयाविधवाभूत्वा निवत्स्यतिममालये ॥ ७२ ॥ तत्सोढव्यंनचायंतुयद्ग्रहीष्यतिमेप्रियम् ॥ इतिसंचिंत्यमनसापुत्रादीन्स
नृपोऽब्रवीत् ॥ ७३ ॥ अहोऽत्रग्रामेयादेवीसातुनःकुलदेवता ॥ तांपूजितुंसमायातुचंद्रहासोबुधोनिशि ॥ ७४ ॥ इत्युक्त्वातुतथैकांते

चंडालायाब्रवीन्नृपः ॥ देवींपूजयितुंगच्छेच्चंद्रहासोयदानिशि ॥ ७५ ॥ तदात्वंमठमध्यस्थःखड्गेनजहितंद्रुतम् ॥ तावन्मठेनकोऽप्यन्यो
गमिष्यतिममाज्ञया ॥७६॥ इत्युक्त्वांततदान्येभ्यउवाचनृपतिःस्वयम् ॥ सायमारभ्ययावत्तांचंद्रहासःप्रपूजयेत् ॥ ७७ ॥ तावन्मठेन
गंतव्यंकेनापीतिममाज्ञया ॥ इत्युक्त्वाविररामाथराजान्येनागराजनाः ॥७८॥ चंद्रहासंपुरस्कृत्यनिशिपूजार्थमागताः ॥ अथांतरेतुम
दनश्चंद्रहासेनसंयुतः ॥ ७९ ॥ ततोविस्मृत्यराजाज्ञांप्रथमंगिरिजामठे॥जगामदेवीपूजार्थंस्नेहेनतद्वशंगतः ॥८०॥ जगाममदनःस्नेहा
न्मठेऽस्मिन्निर्जनेनिशि ॥ अथोशीघ्रंतुचण्डालोमदनस्यशिरोऽसिना ॥८१॥ चिच्छेदचंद्रहासोयमितिमत्वानिरीक्ष्यतम्॥चंद्रहासोनि
ववृतेगंतुंतत्रस्वयंसुधीः ॥८२॥ बबंधतंतुचण्डालंबद्ध्वाकस्मैचिदार्पयत् ॥ अथकोलाहलोजातस्तुमुलोलोमहर्षणः ॥ ८३ ॥ श्रुत्वारा
जापिचहतंमदनंदैवयोगतः ॥ रुरोदार्त्तस्वरेणाथशिरःसंताडयन्मुहुः ॥ ८४ ॥ स्वयंतत्रगतोराजायत्रश्रीमदनोहतः ॥ विललापातिशो
केनदृष्ट्वातंविनिपातितम् ॥८५॥ अतिशोकेनराजासपाषाणेनशिरः स्वयम् । प्रस्फोट्यविजहौप्राणांश्चंद्रहासस्ततःपरम् ॥८६॥ चित्ते
विचारयामासमद्विवाहादभूदिदम्॥राजातुपुत्रशोकेनममारजरयान्वितः ॥ ८७ ॥ तत्पुत्रोमदनश्चासौमदर्थेत्यक्तजीवितः ॥ ततोमांधि
ग्यदिद्वेनंत्यक्त्वायामिगृहंप्रति ॥८८॥ तस्मादेनंहरिंप्राथ्यर्देवीमेतत्कुलार्चिताम् ॥ आराध्यजीवयित्वातुसहयास्यामिमंदिरम्॥८९॥
नोचेच्छित्त्वाशिरःस्वंतुमरिष्येनात्रसंशयः ॥ इत्युक्त्वामदनस्यात्रमठेसंयोज्यमस्तकम्॥९०॥वपुषातत्कपाटंतुदत्त्वाबहिरुपस्थितः ॥
स्थापयित्वामठद्वारिशालग्रामशिलांनिजाम् ॥ ९१ ॥ निमीलिताक्षोमनसातुष्टावजगदीश्वरम् ॥ देवीमेकाग्रचित्तेनमरणेकृत

निश्चयः ॥ ९२ ॥ ततोरात्रिर्गतासर्वाप्रभातेसमुपस्थिते ॥ जिजीवमदनोदेवीमंदिरादाजुहावच ॥ ९३ ॥ कोप्यस्तिद्वारिबाह्येतुकपा
टोद्दत्तशृंखलः ॥ उद्घाटयतामयंशीघ्रमागमिष्याम्यहंबहिः ॥ ९४ ॥ इतिश्रुत्वाचंद्रहासःसमुद्घाटयकपाटकम् ॥ दृष्ट्वातुमदनंहृष्टःप्रण
नामहरिंशिवाम् ॥ ९५ ॥ अथागतंबहिस्तंतुमदनंनागराजनाः ॥ दृष्ट्वातिपरमाश्चर्यमापुस्तेजीवनादहो ॥ ९६ ॥ अथतंमदनोदृष्ट्वापि
तरंगतजीवितम् ॥ किंजातमिदमित्युक्तश्चंद्रहासोऽब्रवीच्चतम् ॥ ९७ ॥ अयंत्वांनिहतंश्रुत्वासमागत्यात्रवैशिरः ॥ ममारस्वयमास्फो
ट्यपाषाणेनमहाशुचा ॥ ९८ ॥श्रुत्वैतन्मदनःप्राहकेनाहंनिहतःकथम् ॥ श्रुत्वैतच्चंद्रहासस्तुबद्धंचंडालमाह्वयत् ॥ ९९ ॥ आग
त्यसतुचंडालःसचिवस्याग्रतोऽब्रवीत् ॥ अहोयंचंद्रहासस्तुशिशुर्मात्रासहस्थितः ॥ १०० ॥ तदामांनृपतिःप्राहचंद्रहासंमहावने ॥
जहिनीत्वाप्रत्ययार्थंतदंगंमेप्रदर्शय ॥ १ ॥ इत्युक्तोऽहमिमंबालंप्रतार्यनीतवान्वने ॥ हंतुंसमुद्यतश्चाहं दयातीवाभवत्तदा ॥ २ ॥
अस्यैकामंगुलिंषष्ठींछित्त्वाराज्ञेह्यदर्शयम् ॥ उक्तवानथभोराजन्निहतःसतुकानने ॥ ३ ॥ इतिपूर्वंप्रजानामिपूर्ववृत्तंयदभूच्छृणु ॥
राजामांप्राहरहसिचंद्रहासोमठेयदा ॥ ४ ॥ देवींपूजयितुंगच्छेत्खड्गेनजहितंद्रुतम् ॥ तावदन्योमठेनैवकोऽपिगच्छेन्ममाज्ञया ॥
॥ ५ ॥ त्वमेवमठमध्येतुतावद्गत्वास्थिरोभव ॥ इत्युक्तोऽहंसमायातोगृहीत्वाखड्गमुत्तमम् ॥ ६ ॥ देवीपूजार्थमेतस्मिन्नागते
प्रथमंतदा ॥ मदनःप्रविशन्नेवचंद्रहासधियाहतः ॥ ७ ॥ अहमेतत्प्रजानामियथेच्छसितथाकुरु ॥ श्रुत्वैतद्वचनंतस्यमदनंसचिवो
ऽब्रवीत् ॥ ८ ॥ सत्यमेतन्नसंदेहोराज्ञोबुद्धिस्तुतादृशी ॥ विषयाविधवागेहेनिवत्स्यतिनिहन्म्यसुम् ॥९॥ इतिप्रतिज्ञातस्यासीदभाग्या

नृपतेरहो॥मृतेत्वयिसमागत्यराज्ञिचापिमृतेसति ॥ ११० ॥ प्रतिजज्ञेचंद्रहासोनजीवामिविनाऽमुना ॥ ततोदेवींहरिंभक्त्यास्तुत्वात्वां
सत्वजीवयत् ॥ ११ ॥ एतावत्तेऽत्रकथितमज्ञातंतेनृपात्मज ॥ अद्यापिजननीत्वस्यचंद्रहासस्यदुर्बला ॥ १२ ॥ रुदंतीपुत्रशोकार्ता
वसंतीचममालये ॥ अतःपरंराजपुत्रयथेच्छसितथाकुरु ॥ १३ ॥ इतिश्रुत्वातुमदनःप्रीतोऽहंसचिवंवचः ॥ यदभूत्तदभून्मंत्रिन्नतच्छ
क्यंनिवर्तितुम् ॥ १४ ॥ अतःपरंतुकोऽप्यन्यश्चंद्रहाससमोनहि ॥ राज्यार्द्धमस्यमेत्वर्द्धंसत्यमेतद्ब्रवीम्यहम् ॥ १५ ॥ अतः
परंतुकर्तव्यंनृपतेरौर्ध्वदैहिकम् ॥ इत्युक्त्वासचिवैःसार्द्धंसचकारपितुःक्रियाः ॥ १६ ॥ ततोवेश्मसमागत्यदत्त्वादानान्यनेकशः ॥
अर्द्धंविभज्यबुभुजेराज्यंसमदनोनृपः ॥ १७ ॥ अर्द्धंतुचन्द्रहासायददौसोऽपिमुदान्वितः ॥ आनयित्वास्वजननीमुवासभवनेस्वके ॥
॥ १८ ॥ राजपुत्रोविषययासहरेमेमहामतिः ॥ अथांतरेतुयेनासौवनान्नीतोऽथरक्षितः ॥ १९ ॥ तंसस्त्रीकंपितृमातृतुल्यंमत्वाह्यपू
जयत्॥ददौतदीयंसकलंकृत्वाराज्यमकंटकम् ॥ १२० ॥ येनासौलुंठितोबालःपितायेनचमारितः ॥ तंगत्वासैन्यसंयुक्तोलुंठयित्वा
वधीद्द्रुतम् ॥ २१ ॥ एवंसचन्द्रहासस्तुशालिग्रामस्यभक्तितः ॥घोरामहापदस्तीर्त्वाप्राप्यराज्यमकंटकम् ॥ २२ ॥ तस्माद्भ
क्तिसमंकिंचिन्नैवापद्विनिवारकम् ॥ इतिज्ञात्वासुखाकांक्षीभक्तिंकुर्य्यान्निरंतरम् ॥ २३ ॥ यत्प्रसादादिहामुत्रमनः सुखमवाप्नुयात ॥
॥ १२४ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येचंद्रहासचरितंनामद्वादशः सर्गः ॥ १२ ॥ शिबेर्नृपस्यभक्तेस्तुमाहात्म्यंकीर्त्यतेऽधुना ॥
सर्वपापहरंपुण्यंदृढभक्तिप्रदायकम् ॥ १ ॥ शिबिर्नाम्नामहानासीद्राजाभून्मंडलेश्वरः ॥ दातावदान्योधर्मात्माकृष्णभक्तिपरा

यणः ॥ २ ॥ श्रीकृष्णप्रीतयेनित्यंददातिकनकादिकम् ॥ योमेवित्तादिकंलोकेयाँकिंचिदभिकांक्षते ॥ ३ ॥ श्रीकृष्णप्रीतयेतस्मै
तत्तद्दास्याम्यसंशयम् ॥ इतिप्रतिज्ञांचक्रेसराजादानपरायणः ॥ ४ ॥ शशासराज्यंनिर्वैरंश्रीकृष्णस्यप्रसादतः ॥ एकदासमहारा
जःस्नात्वासंपूज्यकेशवम् ॥ ५ ॥ भोजयित्वातिथीन्सर्वान्स्वयंभोक्तुमथोत्थितः ॥ एतस्मिन्नंतरेराज्ञोहस्तेचातिभयातुरः ॥ ६ ॥
कपोतःसमुपागत्यतस्थौराजभयंत्यजन् ॥ त्राहिराजन्महाबाहोश्येनोमांखादितुंबलात् ॥ ७ ॥ पृष्ठतोऽयंसमायातस्तस्मात्त्वांशर
णागतः ॥ इतिश्रुत्वावचस्तस्यकपोतस्यसभूपतिः ॥ ८ ॥ तस्मिन्नेवासनेभूपउपविष्टोबभूवह ॥ तंकपोतंकरस्थंतुवहञ्छ्येनंददर्श
ह ॥ ९ ॥ समायांतंसवेगेनकपोतंभोक्तुमुद्यतम् ॥ दृष्ट्वातंवारयामासशिबिर्नाम्नामहीपतिः ॥ १० ॥ अथश्येनोनिवृत्तस्तुराजा
ग्रेसमुपाविशत् ॥ क्षुधितःप्राहराजानंश्येनोधृष्टइवाब्रवीत् ॥ ११ ॥ शिबिभूपमहाराजन्धर्मात्मात्वंश्रुतोमया ॥ कथमेतमधर्म्मंभोः
कर्तुमिच्छसिभूपते ॥ १२ ॥ अयंमेकल्पितोभक्ष्योधात्रैवात्रनसंशयः ॥ भोक्तुंतमहमायातोमांनिवारयसिस्वयम् ॥ १३ ॥ क्षुधि
तोऽहंबहुदिनादैवाद्यः प्रनिरीक्षितः ॥ सत्वयारक्ष्यतेऽहंतुमरिष्यामिक्षुधातुरः ॥ १४ ॥ इतिश्रुत्वावचस्तस्यराजाश्येनंवचोऽब्रवीत् ॥
सत्यंधात्राकृतोभक्ष्यस्तथापिशरणागतः ॥ १५ ॥ कथमेनंप्रदास्यामिजानन्धर्मंविशेषतः ॥ राज्यं जह्याच्छिरोजह्यात्पुत्रदारधनानि
च ॥ १६ ॥ आत्मानमपिधर्मात्मानत्यजेच्छरणागतम् ॥ इमंधर्ममनुस्मृत्यरक्ष्योमेनात्रसंशयः ॥ १७ ॥ त्वंतुसत्यंक्षुधार्तोऽसि
तुभ्यंदास्यामिभोजनम् ॥ मृगयायांहतानांतुमृगाणांमांसमस्तिमे ॥ १८ ॥ तत्स्वादक्षुन्निवृत्त्यर्थंजह्येनंशरणागतम् ॥ इतिश्रुत्वावचस्त

स्यश्येनः प्राहातिनिष्ठुरम् ॥ १९ ॥ नाहंभोक्ष्येऽन्यमांसंतुत्वंचेदेतत्समंस्वयम् ॥ स्वशरीरस्यमांसंतुदेहितद्भक्षयाम्यहम् ॥ २० ॥
इतिश्रुत्वावचस्तस्यराजाचातीवहर्षितः ॥ अहोसम्यगिदंचोक्त्वास्वशरीरंचकर्तह ॥ २१ ॥ कपोतान्नाधिकंजातंतुलायांतत्पयवर्त
यत् ॥ श्येनः पूर्णमिदंराजन्निवर्तस्वमहामते ॥२२॥ आवांजानीहिचेंद्राग्नीत्वत्परीक्षार्थमागतौ ॥ सत्यंत्वंदृढभक्तोऽसिददावोऽभिमतं
तव ॥ २३ ॥ इत्युक्त्वासुरराट्श्येनःकपोतोऽग्निरभूत्क्षणात् ॥ राजानंप्राहसंतुष्टोवरंब्रूहिमहामते ॥ २४ ॥ इत्युक्तः शिबिभूपस्तु
तौप्राहविहितांजलिः ॥ अहोश्रीकृष्णभक्तिर्मेदृढाजन्मनिजन्मनि॥ २५ ॥ भूयादेतद्वरंयाचेनान्यदिच्छामिकिंचन ॥ इतिश्रुत्वातदें
द्राग्नीतस्मैदत्त्वावरंगतौ ॥ २६ ॥ प्रशंसंतौमहाराजंजग्मतुः स्वंस्वमालयम् ॥ इत्येतत्कथितंकिंचिदौशीनरविचेष्टितम् ॥ २७ ॥
विस्तरस्तुपुराणेषुप्रसिद्धोव्यासभाषितः ॥ श्रुत्वैतत्परमाश्चर्यंशिबिभूपस्यचेष्टितम् ॥ २८ ॥ श्रीकृष्णेलभतेभक्तिंमृतोयात्युत्तमांग
तिम् ॥ इहलोके सुखं प्राप्य धनपुत्रादिजं नरः ॥ २९ ॥ इति श्रीभगवद्भक्तिमाहात्म्येशिबिदेवचरितंनामत्रयोदशः
सर्गः ॥ १३ ॥ ॥ ॥ छ ॥ पांचाल्याभक्तिमाहात्म्यंकथयामियथाश्रुतम् ॥ महाभक्तिप्रदंनॄणांभारतेयत्प्रकीर्तितम् ॥
॥ १ ॥ एकदाधर्मराजस्तुभाविनोऽर्थस्यगौरवात् ॥ द्यूतक्रीडांसमासक्तश्चक्रेद्रुपदजापणम् ॥ २ ॥ अधर्मेणजितास्सर्वेकुरुभिः
सयुधिष्ठिराः ॥ तदादुःशासनोगत्वापांचालींसकचग्रहम् ॥ ३ ॥ गृहीत्वाचानयामाससभायांपश्यतांनृणाम् ॥ एकवस्त्रां
मुक्तकेशींस्त्रीधर्माधिगतांसतीम् ॥ ४ ॥ इमामवस्थामापन्नांदृष्ट्वाद्रुपदजांजनाः ॥ नेत्रेपिधायतस्थुर्वै हाहाकृत्वाशनैःशनैः ॥

॥ ५ ॥ सभासदः स्थितास्तत्र भीष्मोद्रोणः कृपस्तथा ॥ अश्वत्थामाविकर्णश्चतथाऽन्येवैमहारथाः ॥ ६ ॥ धृतराष्ट्रश्चशकुनिः
कर्णोदुर्योधनस्तथा ॥ युधिष्ठिरोभीमसेनोऽर्जुनोमाद्रीसुतौतथा ॥ ७ ॥ सर्वेदृष्ट्वाद्रुपदजामवस्थांतादृशींगताम् ॥ स्नेहात्क्रो
धाद्धर्मतोऽपिनोचुः किंचिदधोमुखाः ॥ ८ ॥ तस्थुरेतन्महाश्चर्य्यंभाविनोऽर्थस्यवैबलात् ॥ अथदुःशासनस्तस्याः सक्रोधंचा
ञ्चलांबरम् ॥ ९ ॥ चकर्षाथतदादेवीसस्मारगरुडध्वजम् ॥ शंखचक्रगदापद्मपाणिंपीतांबरंहरिम् ॥ १० ॥ अहोनारायणतातगोविं
दगरुडध्वज ॥ इमामवस्थामापन्नांत्राहिकृष्णजनार्दन ॥ ११ ॥ दामोदरजगन्नाथहृषीकेशगदाधर ॥ पाहिपाहिकृपासिंधोमामत्रगरुड
ध्वज ॥ १२ ॥ इमेभीष्मादयःसर्वेतूष्णींतिष्ठन्त्यधोमुखाः ॥ अतःकंयामिशरणंत्रायस्वकमलेक्षण ॥ १३ ॥ इतिशुश्रावभगवान्द्वारका
यांजनार्दनः ॥ पटोऽयंवर्द्धतामस्याअस्तुनोद्घाटितंवपुः ॥ १४ ॥ एवमाहततोवस्त्रंशरीरस्थंनचाचलत् ॥ दुःशासनकरस्थंतद्वर्द्ध
र्द्धतिकेवलम् ॥ १५ ॥ अथदुःशासनोदुष्टःकर्षणान्नन्यवर्तत ॥ तदग्रेसमभूत्तत्रमहान्वैवस्त्रपर्वतः ॥ १६ ॥ अथापिचासौदुष्टात्मान
न्यवर्ततकर्षणात् ॥ अमन्यतमहालाभंवाससांसोऽतिदुर्जनः ॥ १७ ॥ उत्थाप्योत्थाप्यवासांसिकोशागारेषुसर्वशः ॥ स्थापयामाससभृ
त्यैःस्वैरसौदुष्टचतुष्टयी ॥ १८ ॥ दुर्योधनश्चकर्णश्चशकुनिर्दुष्टशासनः ॥ ततस्त्वन्यैर्द्धनैःसार्धंतद्वस्त्रनिचयंपुनः ॥ १९ ॥ बलोब
भूवसहसाकोशोभूदतिनिर्द्धनः ॥ अथतत्रागतःकृष्णोभगवान्देवकीसुतः ॥ २० ॥ तंदृष्ट्वाप्राहपांचालीगोविंदागतवानसि ॥ इत्युक्त्वा
श्रुमुखीदीनारुरोदार्तस्वरेणसा ॥ २१ ॥ ततश्चुकोपभगवान्रुदंतींतांनिरीक्ष्यसः ॥ कुरून्संहर्तुमुद्युक्तआरक्तकमलेक्षणः ॥ २२ ॥

ददौपीतांबरंस्वंतुपांचाल्याउपरिप्रभुः ॥ यदिपीतांबरंचैतदाकर्षेन्ममपश्यतः ॥ २३ ॥ तदासर्वान्हनिष्यामिकुरून्द्यवनान्यथा ॥इति
ज्ञात्वातुकृष्णस्यमतंभीष्मादयस्तदा ॥ २४ ॥ न्यवारयंततद्वस्त्रकर्षणाद्दुष्टशासनम् ॥ अहोकिमुत्थितंवस्त्रंशरीरेऽस्यास्तुतादृशम् ॥
॥ २५ ॥ तदासीत्पुनरेतावाञ्ज्ञातोऽसौवस्त्रपर्वतः ॥ तथापिनत्वयाज्ञातंपीतांबरमतःपरम् ॥ २६ ॥ यदिकर्षसिचेन्मोहाद्द्यैवैतत्कुलं
महत् ॥ विनंक्ष्यतिकुरूणांवैतस्मात्साधुह्युपारम ॥२७॥ इत्युक्त्वाविररामाथकर्षणात्सोऽपिदुर्जनः ॥ एवंदृष्ट्वासुभक्तायाःपांचाल्यादु
र्गतिंहरिः ॥२८॥ भस्मसादकरोद्वंशंकुरूणांभगवान्हरिः ॥ एवंसंकष्टसमयेस्मृतोरक्षतिमाधवः ॥२९॥ पुराणेबहुधाज्ञातमिदमद्यापिव
र्तते ॥ तस्माद्भक्त्यास्मृतोदेवःकरुणामृतवारिधिः ॥ ३० ॥ तत्क्षणात्समुपागत्यभक्त्यनुग्रहविग्रहः ॥ पालयत्येवसर्वांस्तुनात्रकार्याvि
चारणा ॥ ३१ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येद्रौपदीचरितंनामचतुर्दशःसर्गः ॥१४॥ अथापरंप्रवक्ष्यामिद्रौपद्याश्चरितंशुभम् ॥ यस्य
श्रवणमात्रेणमुच्यतेसकलापदः ॥१॥ दुर्योधनस्यगेहेतुकदाचिदृषिसत्तमः ॥ युतःशिष्यसहस्रेणदुर्वासाःसमुपागतः ॥२॥ दृष्ट्वातंमुनि
शार्दूलंज्वलंतमिवपावकम् ॥ दुर्योधनःसमुत्थायपूजयामासभक्तितः ॥ ३ ॥ स्वगेहेवासयामासदिनानिसुबहूनिसः ॥ समानभक्त्यानृ
पतेःसंतुतोषमुनीश्वरः ॥४॥ वरंदत्त्वाजिगमिषुराहदुर्योधनंमुनिः ॥ संतुष्टःसेवयातेऽहंवरंब्रूहिनृपात्मज ॥५॥ श्रुत्वातद्वचनंतस्यविचा
र्यमनसासतु ॥ दुर्योधनोमुनिंप्राहप्रतिजानीहिचेद्वरम् ॥ ६ ॥ याचेऽहंतद्वचःश्रुत्वाप्रतिज्ञामकरोन्मुनिः ॥ विहितंवाप्यविहितंयत्त्व
मत्तोऽभिवाञ्छसि ॥७॥ तद्ददामिनसंदेहःप्रतिज्ञैषाकृतामया ॥ ततोदुर्योधनःप्राहमुनयेपांडुनंदनाः ॥ ८ ॥ वनेवसंतितत्रत्वमेका

दश्यामुपोषितः ॥ वृतःशिष्यसहस्रेणद्वादश्यामपराह्णके ॥ ९ ॥ पांचाल्यांभुक्तवत्यां तु भोक्तुंतत्रव्रजातिथिः ॥ इतिश्रुत्वामुनिस्त
त्रचुक्रोधनिजमानसे ॥ १० ॥ उवाचनीतिंपौराणींनिंदन्नात्मानमात्मना ॥ ननीचवशगोभूयात्प्राणैःकंठगतैरपि ॥ ११ ॥ वशीकृत्या
त्ममार्गंयदधर्मेरमयत्यसौ ॥ तथाप्युक्तंहिकर्तव्यंप्रतिज्ञांस्मरतामया ॥ १२ ॥ विचार्य्यैवंमुनिःप्राहदुर्योधनमिदंवचः ॥ याम्येषतव
नोवाक्यंकरिष्यामिनसंशयः ॥ १३ ॥ इत्युक्त्वाप्रययौतत्रयत्रधर्मादयःस्थिताः ॥ वनेऽपराह्णद्रौपद्यांभुक्तवत्यांमहामुनिः ॥१४॥
वृतःशिष्यसहस्रेणक्षुधार्तःसमुपोषितः ॥ दृष्ट्वातमागतंविप्रमतिथिंसमयांतरे ॥ १५ ॥ दुर्वाससंक्रोधमूर्तिंब्रह्माग्निमिवरूपिणम् ॥
युधिष्ठिरःसमुत्थायपाद्यार्घ्याद्यैरपूजयत् ॥ १६ ॥ सर्वांस्तदनुशिष्यांश्चमुनिभक्तिपरायणः ॥ पूजितःप्राहदुर्वासाधर्मराजातिथि
स्तव ॥ १७ ॥ वृतःशिष्यसहस्रेणसमायातोबुभुक्षितः ॥ भोजनंदेहिनस्तावत्स्नात्वायामस्तवांतिके ॥ १८ ॥ इतिश्रुत्वाधर्मराजो
भद्रमित्यब्रवीद्वचः ॥ द्रौपदींपरिप्रपच्छकिंभविष्यत्यतःपरम् ॥ १९ ॥ साक्षादग्निर्हिदुर्वासावृतःशिष्यगणैर्यदि ॥ भोजनंनलभेतासौ
भस्मीकुर्यान्नसंशयः ॥ २० ॥ श्रुत्वैतद्द्रौपदीसाध्वीधर्मराजमुवाचह ॥ सत्यमेतन्नसंदेहःप्रकारोऽन्योनवर्तते ॥ २१ ॥ श्रीकृष्णस्म
रणात्स्वामिन्सब्रह्माग्नेर्विमोक्ष्यति ॥ इत्युक्त्वासाद्रुपदजासस्मारपुरुषोत्तमम् ॥ २२ ॥ चक्रायुधघनश्यामपुण्डरीकाक्षमाधव ॥
विप्रक्रोधानलात्त्वंनस्त्रातुमर्हसिकेशव ॥ २३ ॥ लाक्षागृहागतानस्मान्यथागोप्सीःपुराभवान् ॥ तथेदानींद्विजक्रोधात्पाहिनःशरणा
गतान् ॥ २४ ॥ एवंवदंतीसादीनाशुष्ककंठौष्ठतालुका ॥ ददर्शायांतमग्रेतंश्रीकृष्णंपादचारिणम् ॥२५॥ द्वारकायांतदाकृष्णःशया

नःपद्मयासह ॥ शुश्रावकरुणंतस्यावचःपद्भ्यामुपाद्रवत् ॥ २६ ॥ नास्माषींद्गरुडंचक्रंस्खलत्पीतांबरःस्वयम् ॥ दृष्ट्वातंनिजनाथंसाह
र्षेणाश्रुमुखीसती ॥ २७ ॥ आगच्छबन्धोपीठेऽस्मिन्निवसक्षालयाम्यहम् ॥ पादावितिवचःश्रुत्वाश्रीकृष्णस्तामभाषत ॥ २८ ॥ बुभु
क्षितोऽहमत्यर्थंनान्यन्नोपविशाम्यहम् ॥ अभुक्त्वातःसमुत्थायदेहिमेभोजनंद्रुतम् ॥२९॥ इतिश्रुत्वाद्रुपदजाकृष्णंप्राहातिविस्मिता ॥
अहोऽपराह्णेसंजातेभुक्तायांमयिभोजनम् ॥ ३० ॥ नास्तीतिजानन्किंचैतत्कदर्थयसिनःप्रभो ॥ इत्युक्तःप्राहकृष्णस्तामस्तित्वं
तुमहानसे ॥ ३१ ॥ गत्वाप्रदेहिमेभक्ष्यमतिक्षुत्पीडितोह्यहम् ॥ इत्युक्ताद्रौपदीगत्वामहानसमनिंदिता ॥ ३२ ॥ अधोमुखेपानपा
त्रेपश्यंतीशाकमप्यथ ॥ अत्यल्पंशाकमात्रंतुलब्ध्वासाप्राहकेशवम् ॥ ३३ ॥ इदमेतावदत्रास्तिशाकमात्रंजनार्दन ॥ कथंदास्या
मिभवतेकिमनेनभविष्यति ॥ ३४ ॥ इत्युक्तःप्राहभगवान्पर्य्याप्तमिदमेवमे ॥ देहिशीघ्रंक्षुधार्तोऽहंमाविचारयकिंचन ॥ ३५ ॥
इत्युक्ताद्रौपदीशाकंश्रीकृष्णस्यकरेददौ ॥ अनेनशाकमात्रेणश्रीविष्णुस्तृप्यतामयम् ॥ ३६ ॥ इतिसंकल्प्यमनसाकृष्णस्तंबुभु
जेमुदा ॥ संकल्पसिद्धिस्तेभूयादित्युक्त्वोत्थायवारिणा ॥ ३७ ॥ प्रक्षाल्यपाणीपादौसउपविष्टः सुखासने ॥ उवाचधर्मराजानंसंप्रे
षैकंमुनिंप्रति ॥ ३८ ॥ आयातुकिंविलंबेनभोक्तुंचमुनिसत्तमः ॥ ततःसंप्रेषयामासद्विजंदुर्वाससंप्रति ॥ ३९ ॥ दुर्वाससःसशि
ष्यस्यतदाजीर्णोमहानभूत् ॥ त्यक्ताह्निकोऽक्षमोगन्तुंतथापिचलितोऽन्यतः ॥ ४० ॥ तत्रगत्वाद्विजःप्राहभुक्त्वागच्छमहामते ॥
भवदागमनव्यग्रोधर्मराजः प्रतीक्षते ॥ ४१ ॥ श्रुत्वैतद्वचनंतस्यदुर्वासाःप्राहतंद्विजम् ॥ गच्छविप्रनमेभोक्तुंक्षुधाजीर्णोह्यभून्मम ॥४२॥

स्वस्त्यस्तु धर्मराजायेत्येववदमदीरितम् ॥ वृथाहमागतोदुष्टदुर्योधनवशीकृतः ॥ ४३ ॥ अथसर्वाण्यलंगच्छत्वंयामोवयमप्यथ ॥ इत्युक्त्वासगतस्तूर्णंदुर्वासालज्जितोमुनिः ॥ ४४ ॥ विप्रस्ततः समागत्यधर्मराजमुवाचतत् ॥ श्रुत्वातद्धर्म्मराजोऽपिश्रीकृष्णानुग्रहोह्ययम् ॥ ४५ ॥ इतिमत्वाभगवताचक्रेपौराणिकींकथाम् ॥ एवंपांचालजाभक्त्याश्रीकृष्णोभगवान्स्वयम् ॥ ४६ ॥ द्वारकातःसमागत्यपालयामासपांडवान् ॥ तस्मादेकेनमनसास्मृत्वाकृष्णंमहापदि ॥ ४७ ॥ मुच्यतेसर्वसंकष्टात्सत्यंसत्यंनसंशयः ॥ इत्येतद्द्रौपदीभक्तिमाहात्म्यंकथितंमया ॥ ४८ ॥ यःशृणोतिनरोभक्त्यासंकटैर्नसपीड्यते ॥ इतिश्रीभगवद्भक्तिमाहात्म्येद्रौपदीचरितंनामपंचदशः सर्गः ॥ १५ ॥ ॥ छ ॥ वाल्मीकिमुनिमाहात्म्यंकथयामियथाश्रुतम् ॥ पुराकश्चिद्द्विजोजातःकुटुंबीनिर्द्धनोमहान् ॥ १ ॥ कुटुंबभरणार्थंतुभिक्षांपूर्वंचकारसः ॥ नतथालभतान्नानिततोऽधर्म्मरतोऽभवत् ॥ २ ॥ वनेवसन्प्रातरादिसायांतंपाथिकाञ्जनान् ॥ लुंठयित्वाधनैस्तांस्तुस्वजनान्ह्यपुषद्द्विजः ॥ ३ ॥ एवंलुंठाकवृत्तौसानिरतोनिर्जनेवने ॥ जघानापिबहूंस्तत्रपाथिकान्धनलिप्सया ॥ ॥ ४ ॥ एवंगतेषुकालेषुवासिष्ठश्चैकदाततः ॥ तस्मिन्नरण्येतंदृष्ट्वावासिष्ठंसद्विजोऽब्रवीत् ॥५॥ अहोवस्त्रादिकंसर्वंशीघ्रंदेहिनचेदहम् ॥ घातयामिप्रयच्छाशुयदिजीवितुमिच्छसि ॥६॥ इत्युक्तःसवासिष्ठस्तुतंद्विजंप्राहसस्मितम् ॥ अहोस्वर्थमिदंकर्म्मकरोष्यन्योऽस्तितेगृहे ॥७॥ इत्युक्तःसद्विजःप्राहसंतिमेबांधवागृहे ॥ पुत्रादाराःस्वजननीतेषांगतिरहंमुने ॥८॥ इत्युक्तवंतंतंविप्रंवासिष्ठःप्राहसस्मितम् ॥ अहोयदर्थमेतत्त्वंघोरंकर्मकरोषिभोः ॥ ९ ॥ तान्गच्छपृच्छयत्पापंकृत्वाधनमुपार्ज्यते ॥ तत्किममैवतत्पापंस्यादथोभवतामपि ॥ १० ॥ तेयद्वक्ष्यंतिंतत

च्छ्रुत्वात्वमाख्याहिममाग्रतः ॥ तावदत्रैवतिष्ठामिसत्यमेतन्नसंशयः ॥ ११ ॥ इतिश्रुत्वाद्विजः सोऽथमुनेर्दर्शनतोहृदि ॥ जग्राह
वचनंतस्यसमायातोनिजंग्रहम् ॥ १२ ॥ आगत्यपृष्टवान्सर्वान्सर्वैरुत्तरितंसमम् ॥ ममपापंनपुण्यंवातत्सर्वंतुतवैवहि ॥ १३ ॥
भोक्तुंददासिभोक्ष्यामिनजानेकस्यतद्धनम् ॥ सर्वान्सपृष्ट्वाभार्यायैपप्रच्छातिप्रयत्नतः ॥ १४ ॥ सापितद्वदुवाचाथकृत्वासपुनराग
तः ॥ वसिष्ठनिकटेगत्वामनसाचातिदुःखितः ॥ १५ ॥ वसिष्ठंसउवाचाहोसर्वैरुत्तरितंसमम् ॥ पुण्यंपापंनजानीमस्तत्सर्वंतवके
वलम् ॥ १६ ॥ त्वद्दत्तान्नानिभुंजानाविप्रनैवकृताकृतम् ॥ इतिश्रुत्वावसिष्ठस्तंप्रोवाचकृपयाप्रभुः ॥ १७ ॥ अहोभवान्महा
मूर्खोजातोब्रह्मकुलेस्वयम् ॥ त्यक्त्वाधर्म्ममधर्म्मंतुयदर्थंकुरुषेद्विज ॥ १८ ॥ तेषामुक्तिरियंत्वंतुवृथापापंकरोषिभोः ॥ एकाकी
जन्मसंप्राप्यभुंजानःकर्मणांफलम् ॥१९॥ आयुषोऽन्तेव्रजत्येकोधर्माधर्मसहायवान् ॥ नकोऽप्युपकरोत्यस्यजंतोरंतेसुखेरतः ॥ २० ॥
स्वकृतान्येवकर्माणिसुखयंत्यर्दयंतिच ॥ यस्मिञ्जीवतियास्नेहात्स्वमित्यालिंगयद्वपुः ॥ २१ ॥ दृष्टातदेवसात्यर्थंबिभ्यतीद्रष्टुमक्ष
मा ॥ यःसुतोजनितःस्नेहात्पालितोवर्धितःसतु ॥ २२ ॥ मृतेपितरिप्रेतंतंमन्यमानोबिभेतिवै ॥ तस्मान्नपत्नीकार्यार्थीकिंचित्कर्तु
मिहार्हसि ॥ २३ ॥ एवंसंचिंत्यमनसायथारुचिकुरुद्विज ॥ इतिश्रुत्वावचस्तस्यवसिष्ठस्यमहात्मनः ॥ २४ ॥ भाग्यात्तत्संगतो
विप्रःप्रबोधमगमत्तदा ॥ उवाचप्रांजलिर्भूत्वासत्यमेतन्महामुने ॥ २५ ॥ त्यक्त्वासर्वंप्रपन्नोऽस्मित्वामहंशरणंमुने ॥ मह्यंप्रदेहिमंत्रंभोः
शिष्यस्तेऽहंगुरुर्भवान् ॥ २६ ॥ इत्युक्तःसवसिष्ठस्तुज्ञात्वातंपापकारिणम् ॥ उवाचाहंतुगच्छामित्वरितस्त्वंगृहंव्रज ॥ २७ ॥ तत्रै

वान्यस्यशिष्यस्त्वंग्रामेभवितुमर्हसि ॥ इत्युक्तःसद्विजःप्राहनिष्फलंकुरुषेयदि ॥ २८ ॥ तदात्वांघातयित्वाद्यकरिष्येऽहंनसंशयः ॥
इत्युक्त्वाजगृहेपादौबलात्तस्यमहामुनेः ॥ २९ ॥ ततःसकृपयाविष्टोभीतोब्रह्मवधादपि ॥ विचार्य्यमनसामंत्रंददौतस्मैद्विजातये॥३०॥
मंत्राणामधिकारस्तुनास्यातःसर्वतारकम् ॥ रामेत्येतन्मरेत्येवंविपरीतंददौमुनिः ॥ ३१ ॥ ततस्तच्चरणौत्यक्त्वाप्रणनाममहामुनिम्॥
वसिष्ठोऽपिद्विजंप्राहमंत्रमत्रजपन्वस ॥ ३२ ॥ भविष्यसिमहानेवसर्वेभ्योनात्रसंशयः ॥ इत्युक्त्वासजगामाथद्विजस्तत्रैवतस्थिवान्
॥ ३३ ॥ जपन्मरेतिमंत्रंसत्यक्त्वान्नमुदकंद्विजः ॥ एकासनोपविष्टस्यतस्यकालोमहानगात् ॥ ३४ ॥ शरीरेतस्यवल्मीकोमहा
नासीद्द्विजन्मनः ॥ सएवायमितिज्ञात्वासस्मारसपुनर्विधिम् ॥ ३५ ॥ वसिष्ठस्मरणात्तूर्णंसमायातोविधिस्तदा ॥ तंवसिष्ठःप्रणम्या
हवरोह्यस्मैप्रदीयताम् ॥ ३६ ॥ अनेनतुमहत्तप्तंतपःपरमदुश्चरम् ॥ इत्युक्तःसविधिःप्राहसत्यमेतन्नसंशयः ॥ ३७ ॥ दातुमिच्छ
न्नहमपिवरमत्रस्मृतस्त्वया ॥ समागतोऽस्मिह्यस्याद्यददामिवरमुत्तमम् ॥ ३८ ॥ इत्युक्त्वामृत्तिकांभित्त्वाऽकरोत्स्पर्शंकरेणतम् ॥
विधेःकरस्पर्शवशात्समुत्तस्थौद्विजोत्तमः ॥ ३९ ॥ दृष्ट्वावसिष्ठंब्रह्माणंदंडवत्पतितोभुवि ॥ ततोब्रह्मासमुत्थाप्यब्रह्मर्षित्वंददौमुदा
॥ ४० ॥ नामचास्याकरोत्तत्रवाल्मीकिरितिविस्तृतम् ॥ ईजेवाल्मीकियज्ञेषुपुनःसद्विजसत्तमः ॥ ४१ ॥ सांगोपांगास्ततोवेदाः शा
स्त्राणिसकलान्यथ ॥ आचारःक्रतवोधर्म्मःश्रीर्ह्रीःकीर्तिस्तथाधृतिः ॥ ४२ ॥ लज्जाक्षमादयाशांतिःश्रद्धापुष्टिःस्मृतिर्मतिः ॥ एतान्य
न्यानिवाल्मीकेर्मूर्तिमंत्यागतानिवै ॥ ४३ ॥ विधेराज्ञावशात्तस्यतपोमाहात्म्यतोऽपिच ॥ ऊचुर्वाल्मीकिमासाद्यजातोब्रह्मर्षिस

त्तमः ॥ ४४ ॥ अथांतरेगतोधातावसिष्ठःस्वगृहंवशी ॥ वाल्मीकिरपिसंप्राप्यवरंपूर्णमनोरथः ॥ ४५ ॥ ऋषिभिर्वंद्यमानःसंश्च
चारतपउत्तमम् ॥ एवंप्रभावोनाम्नोवैभक्तेश्चापिश्रुतोमया ॥ ४६ ॥ यथातथात्रलिखितोमाहात्म्यंतस्यकः पुनः ॥ वक्तुंशक्नोतिलोकेऽ
स्मिन्विशेषेणतमादृतः ॥ ४७ ॥ रामावतारतःपूर्वंरामायणमनुत्तमम् ॥ चक्रेविख्यापितोलोकेछंदोबद्धासरस्वती ॥ ४८ ॥ अद्यापि
यस्तुवाल्मीकेर्नामसंकीर्तयेन्नुसः ॥ महाजाड्यंविनिर्धूयशास्त्रज्ञोभवतिद्विजः ॥ ४९ ॥ इतिवाल्मीकिभक्तेस्तुमाहात्म्यंकथितंमया ॥
श्रुत्वैतत्सर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ ५० ॥ इतिश्रीभगवद्भक्तिमाहात्म्येवाल्मीकिचरितंनामषोडशः सर्गः ॥ १६ ॥ ॥ छ ॥
रुक्मांगदकथांवक्ष्येसद्योभक्तिप्रदायिनीम् ॥ यांश्रुत्वामनुजःकृष्णेदृढांभक्तिंलभेतवै ॥१॥ आसीद्रुक्मांगदोराजाचतुरंगबलान्वितः ॥
धर्माधर्मविजानन्सप्रजापालनतत्परः ॥ २ ॥ निष्कंटकंराज्यभोगंबुभुजेबहुवासरान् ॥ तस्यैकानगरोपांतेपुष्पवाट्यतिशोभ
ना ॥ ३ ॥ नित्यंसर्वर्तुकुसुमामणिसोपानवाटिका ॥ नानापुष्पसमोपेतानानावल्लिभिरावृता ॥ ४ ॥ तस्याःपुष्पाणि
रात्रौतुसमागत्याप्सरोगणाः ॥ जगृहुस्तन्नृपः क्रुद्धोमालाकारमुवाचह ॥ ५ ॥ कोगृहीत्वानिशायांवैपुष्पाणिप्रतिवासरम् ॥
यातितंवदनोचेत्त्वांसकुटुंबंनिहन्म्यहम् ॥६॥ इतिसंचिंत्यतत्रैकःस्थितःकश्चिद्द्विजोत्तमः ॥ वृद्धःशास्त्रपुराणज्ञोधर्मशास्त्ररतः सदा
॥ ७ ॥ तमुक्त्वासर्ववृत्तांतंमालाकारोऽपतत्पदोः ॥ त्रायस्वसकुटुंबंमामुपदेशप्रदानतः ॥ ८ ॥ जानीयांकथमेतद्वैकःसमायाति
वाटिकाम् ॥ इतिश्रुत्वाद्विजश्चित्यंचिन्तयामासबुद्धिमान् ॥ ९ ॥ अहोमनुष्योनायातिराजदंडभयाद्ध्रुवम् ॥ देवोवाराक्ष

सोऽत्राधियक्षोगंधर्वकिन्नराः ॥ १० ॥ समागत्यविचिन्वंतिपुष्पाण्यस्यांनसंशयः ॥ तत्रोपायंवदिष्यामियथाज्ञास्यसितस्करम् ॥
॥ ११ ॥ निर्माल्यंदेवतानांतुवाटिकायांविकीर्य्यच ॥ रात्रौतिष्ठततःप्रातश्चौरःस्थास्यतिबद्धवत् ॥ १२ ॥ इतिश्रुत्वा
तथाचक्रेमालाकारोऽतिहर्षतः ॥ प्रातर्जगामवाट्यांतुददर्शैकांस्त्रियंशुभाम् ॥ १३ ॥ तत्राप्सरोगणारात्रौसमायांतिमहानिशि ॥ सर्वे
जग्मुर्दिवंप्रातरेकानिर्माल्यलंघनात् ॥ १४ ॥ तस्थौतत्रैवतस्यास्तुगतिर्दिव्याहताभवत् ॥ मालाकारस्ततःशीघ्रंगत्वाराजानम
ब्रवीत् ॥ १५ ॥ राजंश्चौरोधृतोवाट्यांकाचित्कमललोचना ॥ सर्वांगसुंदरीरामाद्योतयंतीदिशोदश ॥ १६ ॥ नमानुषीयंसत्यंतक
थयामीतिमेमतिः ॥ इतिश्रुत्वाततोराजास्वयमुत्थायचाययौ ॥ १७ ॥ पुष्पवाट्यांददर्शाथसत्यंनेयंतुमानुषी ॥ इत्यमन्यततांप्राह
कासिकस्मादिहागता ॥ १८ ॥ स्थित्वाकिमर्थमत्रैवतापसत्वंसमागता ॥ तत्सर्वंब्रूहिसर्वंमेमाभयंकुरुसुव्रते ॥ १९ ॥ इत्युक्तासाप्युवा
चाथराजानंचाप्सरोवरा॥राजन्नप्सरसांमध्येकाप्यहंस्वर्गवासिनी ॥ २० ॥ पुष्पवाट्यांतवात्राहंसखीभिःसहितानिशि ॥ विहारार्थंस
मायातागतासख्योदिवंमम ॥ २१ ॥ अहंतुदेवनिर्माल्यलंघनाद्गंतुमक्षमा ॥ स्वर्गतिर्विहतामेऽद्यनिर्माल्योल्लंघनात्ततः॥२२॥इतिश्रुत्वा
ततोराजाप्राहतामप्सरोवराम्॥उपायःकोऽपिचेदस्तिपुनर्येनगतिर्भवेत् ॥२३॥ तंब्रूहिप्रकरोम्येतत्ततस्त्वंतुदिवंव्रज ॥ इत्युक्तासाथराजा
नमुवाचमुदितासती ॥ २४ ॥ राजन्नेकादशीपुण्यंयदिकस्यापिवर्तते । तद्दद्याद्यदिमेतस्माद्गतिःस्वर्गेपुनर्भवेत्॥२५॥ इतिश्रुत्वानृपोग्रा ॥ २८ ॥
मेगत्वासर्वांनुवाचह॥एकादशीव्रतंकेनकृतमायातुसद्रुतम् ॥२६॥ तदादूतगणाग्रामेराज्येगत्वाययुर्द्रुतम् ॥ राजन्ग्रामेनराज्येवाकश्चिदे

कादशीव्रती ॥२७॥ एकात्रवणिजोदासीव्यभिचारंचकारसा ॥ वणिक्तांताडयामाससातत्रैकादशीदिने ॥२८॥अहोरात्रंनिराहारानिर्ज
लाशोकतःपुनः॥ लेभेननिद्रांरात्रौसातस्याएवमभूद्व्रतम् ॥ २९ ॥ इतिश्रुत्वाशुसाप्राहसैवागत्यददातुमे ॥एकादशीव्रतफलंतेनयास्या
म्यहंदिवि॥ ३०॥ इत्युक्तोनृपतिस्तांतंवैश्यदासीमुदाह्वयत् । दापयामासतत्पुण्यंतत्कालेसाययौदिवम्॥३१॥दृष्ट्वातत्परमाश्चर्य्यंराज्ञो
भक्तिरभूद्दृढा । चक्रेसपरिवारःसस्वयमेकादशीव्रतम् ॥ ३२ ॥संपूर्णेनिजराज्येससर्वाण्येवमशिक्षयत्॥नभोक्तव्यंनभोक्तव्यंपशुपक्षिगणै
रपि ॥३३॥ एकादश्यांनभोक्तव्यंजंतुमात्रेणकेनचित्॥भुंजीतयदिवामोहात्समेदंड्योनसंशयः ॥३४॥ इत्याज्ञांनृपतेः सर्वेगृहीत्वाशिर
साजनाः ॥ विज्ञायापितदाश्चर्य्यंचक्रुरेकादशीव्रतम् ॥३५॥ एवंरुक्मांगदोराजाकुर्वन्नेकादशीव्रतम् ॥ शशासराज्यंधर्मेणजातःसर्वस
मृद्धिमान् ॥३६॥ एकदातस्यजामाताएकादश्यांसमागतः॥अन्यराजैकतनयोवयसाप्यतिकोमलः ॥ ३७ ॥ राजाज्ञयाततोभर्त्रेनददौ
भोजनंसती ॥ राजपुत्रीतुकिंकुर्य्यात्पितृमातृवशंगता ॥ ३८ ॥ जामाताप्राहप्रत्येकंश्वशुरादीन्विनीतवान् ॥ अद्यावधिसमासीनोनि
शायामप्युपोषणम् ॥३९॥ अतोनैवोपवासंवाकर्तुंशक्नोम्यहंनृप ।श्रुत्वैतद्वचनंतस्यजामातुः सहिभूपतिः ॥४०॥ नददौभोजनंतस्मैजा
मात्रेऽपिदृढव्रतः ॥ ततोरात्रेःपरार्धेतुजामातासक्षुधार्दितः ॥ ४१ ॥ ममारसनृपोज्ञात्वाराज्ञीवातत्सुताथवा ॥ एतावदेवचायुष्यमि
त्युक्त्वादग्धुमुद्यताः ॥ ४२ ॥ अथांतरेसुताराज्ञः सहगंतुंसमुद्यता ॥ द्वादश्यांप्रातरेवाथसंभारान्प्रददौनृपः ॥ ४३ ॥ सापिराजसु
तागत्वाश्मशानेबंधुभिः सह ॥ चितायांपतिमारोप्यवह्निंदातुंसमुद्यता ॥ ४४ ॥ अत्रांतरेसभगवान्द्विजवेषधरोहरिः ॥ मालासुद्रा

वहंस्तत्रसमायातोन्यवारयत् ॥ ४५ ॥ मादृहेथामृतोनायंक्षुधयाचातिमूर्च्छितः ॥ अहमेनंजीवयामिदत्त्वान्नंवदनेऽस्यभोः ॥ ४६ ॥
शीघ्रमन्नंकिमप्यत्रसमानयममाग्रतः ॥ ततोदूतोद्रुतंगत्वापृथुकान्नंसमानयत् ॥ ४७ ॥ गृहीत्वातंजलंसम्यक्संमर्द्यादाज्जलंद्विजः ॥
ददौजामातृवदनेनिर्गीर्यंसतदाद्दशौ ॥ ४८ ॥ उद्घाटयतान्समालोक्यपप्रच्छकिमिदंत्विह ॥ ततः प्रोचुस्तदासर्वेतंतस्यमरणादिक
म् ॥ ४९ ॥ श्रुत्वासोऽप्याहसत्यंमोक्षुधयैवमृतोह्यहम् ॥ अतः परमनेनाद्यजीवितोऽहंनसंशयः ॥ ५० ॥ इत्युक्तवंतंतंसर्वेराजाचपुर
वासिनः ॥ शिबिकायामथारोप्यनिन्युर्नृपतिमंदिरम् ॥५१॥ सवैष्णवोद्विजः सर्वैः सम्यग्गच्छन्महोत्सवैः ॥ अंतर्दधेजगामाथनज्ञा
तंकेनचित्तुतत् ॥ ५२ ॥ राजागृहंसमागत्यक्वास्तेसद्विजसत्तमः ॥ येनायंजीवितोबालस्तमानयसमर्चये ॥ ५३ ॥ तदासर्वेगृहेग्रा
मेमार्गेसम्यग्विचित्यतम् ॥ नैवापश्यंस्तदाराज्ञप्रोचूराजन्गतः सतु ॥ ५४ ॥ सहैवतुसमागच्छन्कदाचांतर्दधेद्विजः ॥ नजानातिज
नः कोऽपिमहोत्साहेनभूपतेः ॥ ५५ ॥ इतिश्रुत्वावचस्तेषांराजात्यर्थशुशोचह ॥ अहोनसद्विजः किंतुभगवान्भक्तवत्सलः ॥ ५६ ॥
आगत्यजीवयामासतंबालंनात्रसंशयः ॥ इत्युक्त्वास्नानपूजादिकृत्वादत्त्वाधनानिच ॥ ५७ ॥ भोजयित्वाद्विजान्सर्वान्बुभुजेऽन्नंस्व
यंतदा॥ इत्येतत्कथितंसर्वंरुक्मांगदविचेष्टितम् ॥ ५८ ॥श्रुत्वैतत्सर्वपापेभ्योमुच्यतेमनुजोध्रुवम् ॥ ५९ ॥ इतिश्रीभगवद्भक्तिमाहात्म्ये
रुक्मांगदचरितंनामसप्तदशः सर्गः ॥ १७ ॥ ॥छ॥मयूरध्वजभक्तिंतुवक्ष्याम्याश्चर्यदायिनीम् ॥ श्रुत्वायांमनुजः सद्योमुच्यतेऽज्ञानबं ॥ ३९ ॥
धनात् ॥ १॥ एकदार्जुनचित्तेतुमहान्गर्वोबभूवह ॥नमेसमोऽस्तिभक्तोवैश्रीकृष्णस्यचराचरे ॥ २ ॥इतिज्ञात्वातुभगवानर्जुनंप्राहविस्मि

तम् ॥ एह्यागच्छमयासार्द्धंगच्छामिक्कचिदर्जुन ॥ ३ ॥ इत्युक्त्वाद्वारकायास्तुनिर्जगामबहिर्यदा ॥ तदार्जुनंपुनः प्राहत्वंभूत्वाद्वादशा
ब्दिकः ॥ ४ ॥ आगच्छवृद्धोभूत्वाहंगच्छामिनृपमंदिरम् ॥ मयूरध्वजनामास्तिराजासोऽतीवमेप्रियः ॥ ५ ॥ तंद्रष्टुंयाम्यहंतत्त्वस
मागच्छमयासह ॥ इत्युक्त्वासव्रजन्मार्गेव्याघ्रमेकंददर्शह ॥ ६ ॥ व्यादितास्यंमहाघोरंहंतुमुद्यतमर्जुनम् ॥ तंदृष्ट्वाप्राहभगवानहो
बालंविहायमाम् ॥ ७ ॥ भोक्तुमर्हसिशार्दूल बालोऽतीवममप्रियः ॥ एवमुक्तोऽब्रवीद्व्याघ्रोनत्वांभोक्ष्येजरंनरम् ॥ ८ ॥ उपायमेकंवक्ष्या
मिबालस्यास्यतुरक्षणे ॥ मयूरध्वजनामासौराजाचातिप्रियस्तव ॥ ९ ॥तस्यार्द्धंदक्षिणांगंचदारयामस्तकादितः ॥ द्विधाकृत्वाथतत्प
त्नीपुत्राभ्यांदीयतेयदि ॥१० ॥ तत्रापिशोकोनस्याच्चेद्राज्ञः पत्न्याःसुतस्यवा ॥ तदाहंतद्ग्रसिष्यामित्यक्ष्याम्येनंतवार्भकम् ॥११ ॥
नोचेद्दद्यात्सनृपतिस्तदेमंमेप्रदास्यसि ॥ इतिप्रतिज्ञांकृत्वातंगच्छतत्रद्विजोत्तम ॥ १२ ॥ श्रुत्वैतद्वचनंतस्यव्याघ्रस्यभगवान्द्विजः ॥
कृत्वाप्रतिज्ञांभगवान्मयूरध्वजसन्निधिम्॥ १३॥मध्याह्नेऽतिथिवेलायांभोक्तुंराजासमुद्यतः ॥ अथद्वारेसमागत्यश्रावयामासतन्नृपम्॥
॥ १४ ॥ नृपः श्रुत्वासमागत्यद्वारितंप्रणिपत्यच ॥ प्राहतंनरशार्दूलःकिंकरोमिवदात्रमाम् ॥ १५ ॥ इत्युक्तःप्राहवृद्धस्तंश्रीकृष्णप्री
तयेह्यहम् ॥याचेयंतत्प्रदद्याश्चेत्तदासत्यंकुरुष्वभोः ॥ १६ ॥ तदाहंकथयिष्यामिवांछितार्थंनसंशयः ॥इतिश्रुत्वावचस्तस्यराजोवाच
प्रसन्नधीः ॥ १७ ॥ अहोऽन्यदर्थयःकश्चिन्मत्तोऽभीप्सतितद्ददे ॥ श्रीकृष्णप्रीतिकामस्तुदद्यामात्मानमप्यहम् ॥ १८ ॥ पुत्रान्दारा
न्धनंसर्वमात्मानमपिचद्विज ॥ श्रीकृष्णप्रीतयेदद्यांसत्यमेतत्करोमिभोः ॥ १९ ॥ इतिश्रुत्वावचस्तस्यराज्ञोवृद्धोद्विजोऽब्रवीत्॥ राजं

स्त्वद्दर्शनार्थायसमागच्छन्पथिह्यहम् ॥ २० ॥ अपश्यंव्याघ्रमेकंतुव्यादितास्यंभयंकरम् ॥ सहसाखादितुंबालमिमंसचमयार्थितः
॥ २१ ॥ अहोमांभक्षयत्वंभोत्यजबालंममप्रियम् ॥ इत्युक्तःसोऽब्रवीद्व्याघ्रोनत्वांभोक्ष्येजरंनरम् ॥ २२ ॥ उपायमेकंवक्ष्यामिबालकस्या
स्यजीवने ॥ मयूरध्वजनामास्तिराजाचेन्निजमस्तकात् ॥ २३ ॥ आरयासुतपत्नीभ्यांद्विधाकृत्वाददातिचेत् ॥ नशोचततदाको
ऽपिराजापत्नीसुतोऽथवा ॥ २४ ॥ तद्दहिभोजनंमह्यंतदाबालंत्यजाम्यहम् ॥ नोचेदिमंसमादायसमागत्यप्रदेहिमे ॥२५॥ इतिसत्यं
प्रतिज्ञायगच्छतत्रद्विजोत्तम ॥ तदाप्रतिज्ञांकृत्वाहंसमायातस्तवांतिकम् ॥ २६ ॥ अतःपरंकुरुष्वत्वंयथारुचिमहीपते ॥
श्रुत्वातद्वचनंराजामुदाब्राह्मणमब्रवीत् ॥ २७ ॥ अहोभाग्यंमहन्मेऽद्यश्रीकृष्णप्रीतयेतुयत् ॥ शरीरंप्रतिगृह्णातिब्राह्मणो
वैभवादृशः ॥ २८ ॥ इत्युक्त्वातनयंपत्नीमाजुहावनृपोत्तमः ॥ आरामादायताभ्यांतुदत्त्वाप्रोवाचसुंदरीम् ॥ २९ ॥ अनया
चारयामेऽत्रशिरआरभ्यवैमुदा ॥ द्विधाकृत्वादक्षिणार्द्धंश्रीकृष्णप्रीतयेद्रुतम् ॥ ३० ॥ द्विजायास्मैप्रमुदितौयुवामर्प्पयतांतदा ॥ पत्नी
पुत्रश्चमुदितावूचतुस्तौमुहुर्नृपम् ॥ ३१ ॥ममैवार्द्धंदेहिराजन्विप्रायास्मैप्रतिग्रहम् ॥ त्वयिजीवतिपुत्राश्चभविष्यंतितथास्त्रियः ॥३२॥
इतिश्रुत्वातयोर्वाक्यंविप्रस्तौप्रत्यपेधत ॥ नाहंगृह्णामियुवयोःशरीरार्द्धंनसंशयः ॥ ३३ ॥ राजाचैतद्ददात्यर्द्धंतदागृह्णामिनान्य
था ॥ इतिश्रुत्वानिवृत्तौतौमातृपुत्रौनिजार्प्पणे ॥ ३४ ॥ राजाज्ञयागृहीत्वारांनिधायनृपमूर्द्धनि ॥ आचकर्षतुरन्योन्यंतौमातृतनया 
वुभौ ॥ ३५ ॥ अशोकौनृपतेर्नाशान्मुखाववधियदागता ॥ आरातदातुनृपतेर्वामाक्षादश्रुचापतत् ॥ ३६ ॥ तद्दृष्ट्वाब्राह्मणःप्राहनाहंगृ

ह्यामितेवपुः ॥ त्वंरोदिषिमहाराजवामाक्षादश्रुचापतत् ॥३७॥ श्रुत्वैतद्विप्रवाक्यंतुनाहंरोदिमिभोद्विज ॥ इदंवामंशरीरार्द्धंरोदित्येतद्वि
चार्य्यभोः ॥ ३८ ॥ सहैवावांसमुद्भूतौसहसंवर्द्धितौपुनः ॥ दक्षिणार्द्धस्यतद्भाग्यंयत्कृष्णार्थंव्रजत्यहो ॥ ३९ ॥ ममैवजन्मसंजातंनि
रर्थकमितिद्विज ॥ एवंशोकभरेणेदंवामंरौतिनसंशयः ॥ ४० ॥ एवंताभ्यांविद्यमानःसस्मितंप्राहभूपतिः ॥ दृष्ट्वातन्महदाश्चर्य्य
माकाशात्पुष्पवृष्टयः ॥ ४१ ॥ अपतन्साध्वितितदावागभूत्त्रिदिवौकसाम् ॥ भगवानपितंकालंसमुत्थायात्मरूपधृक् ॥ ४२ ॥
पीतांबरोघनश्यामःशंखचक्रगदादिभृत् ॥ हस्ताभ्यांमातृसुतयोर्धृत्वाहस्तौन्यवारयत् ॥ ४३ ॥ मयूरध्वजमूर्द्धानंपस्पर्शकृपया
हरिः ॥ तत्करस्पर्शमात्रेणराजाभूदक्षतस्तथा ॥ ४४ ॥ उवाचभगवान्भूपंप्रसन्नोऽस्मिमहीपते ॥ वरंब्रूहिप्रयच्छामिनादेयंकिमपि
त्वयि ॥ ४५ ॥ इतिश्रुत्वावचस्तस्यराजावचनमब्रवीत् ॥ अहोकृतार्थोधन्योऽहंकंवरंप्रार्थयाम्यहम् ॥ ४६ ॥ यस्तुसाक्षाद्देवता
नांनबभूवकदाचन ॥ तंभवंतंचतुर्बाहुंप्रपश्यामिनृचक्षुषा ॥ ४७ ॥ तथापिचेद्वरंदातुंचिकीर्षसिकृपांमयि ॥ नैवंपरीक्षाकस्यापिक
र्तव्यैवंप्रदेहिमे ॥ ४८ ॥ श्रुत्वातद्राजवचनंसंतुष्टोहरिरब्रवीत् ॥ एवमस्त्वितिभूपायपुनर्वरमदात्प्रभुः ॥ ॥ ४९ ॥ स्वेच्छयागतशो
कस्त्वंकुरुराज्यमकंटकम् ॥ इच्छयाचसपत्नीकस्त्वमेष्यसिममांतिकम् ॥ ५० ॥ यावन्मन्नामलोकेस्मिंस्तावत्त्वत्संततिर्नृप ॥ स्था
स्यत्यवनिमध्येतुदुःखशोकविवर्जिता ॥ ५१ ॥ इत्येवंतुवरंदत्त्वाकृष्णोब्राह्मणरूपधृक् ॥ निर्ययौद्वारकांरम्यामर्जुनेनसमन्वितः ॥५२॥
ततोऽर्जुनोऽपिमनसादृष्ट्वातत्परमाद्भुतम् ॥ अतिभक्तोऽहमित्येतांमुमोचाहंकृतिंनिजाम् ॥५३॥ एवंभक्तिवशाल्लोकेतृणीकृत्यात्मजीव

नम् ॥ प्रीणयंतिजनाःकृष्णंधन्याःसंतिमहीतले ॥ ५४ ॥ तस्मादनित्यंधनपुत्रमित्रकलत्रराज्यादिसुखंविहाय ॥ तथात्मनास्वस्य
हितायविद्वान्कृष्णंशरण्यंशरणंप्रयातु ॥ ५५ ॥ इति श्रीभगवद्भक्तिमाहात्म्येमयूरध्वजचरितंनामाष्टादशःसर्गः ॥ १८ ॥ ॥
प्रह्लादचरितंशास्त्रेलोकेयद्यपिविश्रुतम् ॥ तथापिवक्ष्येसंक्षेपाच्छृण्वतांपापनाशनम् ॥ १ ॥ आसीद्धिरण्यकशिपुःपुरादैत्याधिपो
बली ॥ सचोग्रतपआस्थायतोषयित्वाऽसुरोविधिम् ॥२॥ अजयःस्यामितिवरंलब्ध्वाऽजेयोबभूवसः ॥ जित्वालोकत्रयंदैत्यःपीडया
मासदेवताः ॥ ३ ॥ एवंगतेषुकालेषुबभूवुस्तस्यवैसुताः ॥ प्रह्लादाद्यामहावीर्य्याःपितृतुल्यपराक्रमाः ॥ ४ ॥ तेषांज्येष्ठस्तुप्र
ह्लादःसजातोवैष्णवोत्तमः ॥ हिरण्यकशिपुस्तंतुशुक्राचार्यायचार्प्पयत् ॥ ५ ॥ इमंपाठयबालंमेयथास्यात्पण्डितोयुधि ॥ इत्युक्त
स्तंगृहीत्वाथशुक्राचार्यःस्ववेश्मनि ॥ ६ ॥ पाठयामाससगुरुरथविद्यांप्रयत्नतः ॥ सतुकृष्णेतिरामेतिवैकुंठादीनिचप्रभोः ॥ ७ ॥
नामानिप्रजपन्नित्यमन्यान्दैत्यसुतानपि ॥ पाठयामासधर्मात्मातदाशंकागतागुरोः ॥ ८ ॥ अहंतुपाठयाम्यन्यदयमन्यद्वदत्यहो ॥
इतिसंचिंत्यतंप्राहप्रह्लादंभार्गवोरुषा ॥९॥ अरेत्वहंपाठयेकिंपठसित्वंकिमन्यथा ॥ ततस्त्वांदैत्यराजःसताडयिष्यत्यसंशयम् ॥१०॥
इत्युक्तःसोऽब्रवीद्वाक्यंगुरुंतंभृगुनन्दनम् ॥ त्वंगुरुर्नात्रसन्देहःपाठयस्वाथमांहितम् ॥ ११ ॥ परंतुसर्वशास्त्राणिकृष्णनाम्निस्थिता
न्यहो ॥ इतिनैवविजानातिराजावाथभवानपि ॥ १२ ॥ तस्माल्लाघवतोऽहंतुपठामिनामकेवलम् ॥ अत्रश्रमोमहान्नैवसारभूतंपरंत्वि
दम् ॥ १३ ॥ येनेदंसकलंविश्वंकृत्वासंपाल्यलीलया ॥ संह्रियतेक्षणार्द्धेनतन्नाम्नोऽन्यत्किमस्तिभोः ॥ १४ ॥ तस्मात्पिताभवा

न्वापियद्वातद्वाकरोतुवै ॥ नामसंकीर्तनंविष्णोर्नत्यक्ष्यामिकदाचन ॥ १५ ॥ इतिश्रुत्वावचस्तस्यप्रह्लादस्यतदागुरुः ॥ शंकितोदै
त्यराजेनशत्रुपक्षाश्रितःशिशुः ॥ १६ ॥ कृतोऽनेनैवगुरुणेत्यवंतस्यभवेद्यदि ॥ तदानर्थोमहान्मेस्यात्ततोनाध्यापयाम्यहम् ॥ १७ ॥
गृहीत्वाबालमेनंतुयास्यामिराजसंनिधिम् ॥ कथयिष्यामिसर्वंतंसकरिष्यतियद्धितम् ॥ १८ ॥ एवंविचारयत्यस्मिन्राजाप्रह्लादमा
ह्वयत् ॥ श्रुत्वाह्वानंगतस्तत्रलालयित्वापितापितम् ॥ १९ ॥ आरोप्यांकेऽथपप्रच्छसमापाठीस्तुयद्गुरोः ॥ श्रुत्वापितुर्वचस्तूर्णं
प्रह्लादश्चातिहर्षितः ॥ पपाठपितुरंकस्थःसुस्वरंमधुराक्षरम् ॥ २० ॥ श्रीरामनारायणवासुदेवगोपालगोविन्दमुकुन्दकृष्ण ॥ पठामि
चाहंकिलसर्वसारंगुरुस्तुमामन्यदुवाचकिंचित् ॥ २१ ॥ इतिश्रुत्वाततोदैत्यःकर्णशूलमिवक्रुधा ॥ २२ ॥ स्वांकाच्चपातयामासप्रह्लादं
बालकंज्वलन् ॥ उवाचरेममकुलेभूत्वात्रैलोक्यपूजिते ॥ २३ ॥ शत्रुनामजपन्मूर्खोयशोगायसितस्यवै ॥ योमेसदाकुलद्वेषीहंतुमिच्छ
तिनःसदा ॥ २४ ॥ तत्किंतस्माद्विभेषित्वंकिंतेसतुकरिष्यति ॥ मयिजीवतिकाभीतिस्तस्यवान्यस्यपुत्रक ॥ २५ ॥ तस्मात्त्यजारि
पक्षंत्वंशास्त्रेषुनिरतोभव ॥ इतिश्रुत्वापितुर्वाक्यंप्रह्लादस्तमुवाचह ॥ २६ ॥ पितःस्वशास्त्रमेतन्मेयत्पठामितवाग्रतः ॥ समंमेसदाकु
लद्वेषीत्येवंयद्भाषतेभवान् ॥ २७ ॥ एतदप्यविचार्यैवंनमेशत्रुर्नमेसुहृत् ॥ अस्माञ्जिघांसतीत्येतद्यदुक्तंतुतदप्यसत् ॥ २८ ॥ सएव
सर्वभूतेषुस्थितःसर्वमयोयतः ॥ततःकःकंजिघांसेद्वैभ्रमएवनसंशयः ॥ २९॥ भीतोऽहंतंप्रपन्नोऽस्मीत्येतत्सत्यंवचस्तव ॥ परंत्वयातुसं
सारेपारावारपरंगतः ॥ ३० ॥ नहितस्मात्समुद्धर्तुमन्योवैभुवनत्रये ॥ तस्मात्त्वंममदैत्येंद्रविरोधंत्यक्तुमर्हसि ॥ ३१ ॥ इतिब्रुवंतंप्र

ह्लादं हिरण्यकशिपुः क्रुधा ॥ निरैक्षतातिक्रोधेननेत्राभ्यांनिर्दहन्निव ॥ ३२ ॥ अत्रांतरेसमायातोभार्गवोभयविह्वलः ॥ जयेतिशब्दमुच्चा
र्य्यदत्त्वाशीर्वादमाहतम् ॥ ३३ ॥ दैत्यराजमहानेषस्वतंत्रोनैवमामपि ॥ गणयत्यात्मनाध्यात्मसिद्धांतमधिगच्छति ॥ ३४ ॥ अ
न्यानपीहबालान्वैशिक्षयत्येवदुर्मतिः ॥ इतिश्रुत्वाथदैत्येंद्रोऽसंतोषीपुनरब्रवीत् ॥ ३५ ॥ पुनस्तदेवसंप्राहप्रह्लादोनिर्भयःशिशुः ॥
एवंप्रार्थ्यशिक्ष्यमाणोनस्वीचक्रेतदीरितम् ॥ ३६ ॥ दैत्यराजःसुतंतंतुहंतुंचक्रेमनस्तदा ॥ बद्ध्वातंदृढपाशेनचंडालायसमर्पयत् ॥
॥ ३७ ॥ इमंवैभूधराच्छृङ्गान्निपातयमहीतले ॥ पतितोम्रियतामेषइत्याज्ञांकुरुमेद्रुतम् ॥ ३८ ॥ ततस्तंससमानीयपर्वताग्रादपा
तयत् ॥ प्रह्लादस्तुह्रदाकृष्णंचिंतयञ्जगतीपतिम् ॥ ३९ ॥ पतितोऽप्यथपर्यङ्केशयानइवचाभवत् ॥ दृष्ट्वापिपरमाश्चर्य्यंतमोगुणव
शोऽसुरः ॥ ४० ॥ नामन्यतहरेरेतत्तत्क्षणाद्भक्तिजंफलम् ॥ ततआहूयसर्पांस्तुतक्षकादीन्विषोल्बणान् ॥ ४१ ॥ येषांफूत्कारमात्रेण
भस्मसाद्भवेद्गिरिः ॥ उवाचयूयंप्रह्लादंसंदश्ययमसादनम् ॥ ४२ ॥ प्रापयध्वंममाज्ञेयंनविचारयतात्रभोः ॥ इतिश्रुत्वावचस्तस्य
दैत्येंद्रस्यवशानुगाः ॥ ४३ ॥ गत्वाप्रह्लादमदशंस्तंफूत्कृत्यमहाविषाः ॥ प्रह्लादस्तुहसन्कृष्णंसस्मारगरुडध्वजम् ॥ ४४ ॥ अथ
कृष्णप्रसादेनप्रह्लादःपूर्ववत्स्थितः ॥ सर्पाणामधरोष्ठानिचूर्णान्यासंस्त्वचोऽपिच ॥४५॥ विदीर्णादशनाभग्नावैमूलात्पाटिताकृतिः ॥
ततःपरावृत्तिगताःसर्पादैत्येशसन्निधिम् ॥४६॥ दर्शयंतोह्यवस्थांस्वामूचुःप्राञ्जलयोऽभवन् ॥ अहोदंताविशीर्णानःस्फुटितामणयोऽपि
च ॥४७॥ त्वचोजीर्णानयास्यामश्चूर्णितानिमुखानिच ॥ प्रह्लादंदशतांपश्यतस्माद्विज्ञापयामहे ॥४८॥ शाधिकार्यान्तरंनोऽद्यनास्मि

न्कार्य्येनियोजय ॥ इतिश्रुत्वाततस्तूष्णींस्थित्वादैत्यपतिःक्रुधा ॥ ४९ ॥ आनाय्यहस्तिनंमत्तंतत्पादेतंन्यवेशयत् ॥ अत्रांतरे
ससस्मारकृष्णस्यचरितंतुतत् ॥ ५० ॥ हस्तीकुवलयापीडोयथातेननिपातितः ॥ ततस्तस्योपरिष्टन्तुहस्तीपादंदधारसः ॥ ५१ ॥ अ
थकृष्णप्रसादेनप्रह्लादांगसमुत्थितः ॥ तेजोऽग्निर्भस्मसात्कृत्वाहस्तिपादमधस्तलात् ॥ ५२ ॥ ततश्चीत्कृत्यसगजःपपातधरणीतले ॥
पतितोमूर्छितोहस्तीममाराश्चर्य्यमित्यहो ॥५३॥ दृष्ट्वातंपतितंभूमौहस्तिनंक्रोधमूर्छितः ॥ पुनराज्ञापयामासबद्धागाधेमहाह्रदे ॥५४॥
निपातयैनंतत्रैवमग्नःप्राणान्प्रहास्यति ॥ दैत्येश्वरवचःश्रुत्वाप्रह्लादंराक्षसाद्रुतम् ॥ ५५ ॥ निन्युर्जलेमहागाधेबद्ध्वातत्राप्यसौहरिम् ॥
सस्मारकमलाकांतंजलशायिनमच्युतम् ॥५६॥ अथागत्यजलेविष्णुःसंस्तभ्यसलिलंततः ॥ बंधनान्मोचयामाससोऽप्यस्तौषीद्ध
रिंमुदा ॥ ५७ ॥ ततःकालेनकियताप्रह्लादःशुष्कविग्रहः ॥ निर्बन्धनःसमायातोदृष्ट्वातंदितिजेश्वरः ॥ ५८ ॥ अहोसमागतोऽयंमो
नमृतोह्यमरोयथा ॥ तस्मादेनंमहारिष्टंवह्नौसंस्थापयाम्यतः ॥ ५९ ॥ वह्निनाभस्मसाद्भूतोभविष्यतिनसंशयः ॥ इतिसंचिं
त्यमनसाकुंभकारमथाह्वयत् ॥ ६० ॥ अपाकेसंनिवेश्यैनंपश्चाद्दीपयपावकम् ॥ यथात्वयंहिप्रह्लादोभवेद्भस्मतथाकुरु ॥ ६१ ॥
इत्युक्तस्तंगृहीत्वाथबद्ध्वापावकमध्यतः ॥ निवेश्याच्छादयित्वातंदीपयामासपावकम् ॥ ६२ ॥ अथसस्मारकृष्णंससृजंतंमुख
तोऽनलम् ॥ पंचभूतस्यकर्तारंसर्वसंकटनाशनम् ॥ ६३ ॥ ततःसमागत्यहरिरतिशीतोऽनलोऽस्तुते ॥ इत्युक्त्वाबंधनान्मुक्त्वाज
गामनिजधर्म्मतः ॥ ६४ ॥ ततःपावकमध्येतुस्थितःसोऽतीवहर्षितः ॥ तत्संसर्गात्समीपस्थोनपक्वोभांडसंचयः ॥ ६५ ॥ अथप्र

५

मातेदैत्यास्तेसमाजग्मुर्नृपाज्ञया ॥ निर्वापितेऽग्नौभांडानिकुंभकारोऽग्रहीत्ततः ॥ ६६ ॥ मध्येददर्शप्रह्लादंमुदितंपूर्ववत्स्थितम् ॥
तत्संसर्गवशाद्भांडान्यपक्वान्येवकानिचित् ॥ ६७ ॥ इत्येतत्परमाश्चर्य्यंदर्शयामासकुंभकृत् ॥ दृष्ट्वातत्परमाश्चर्य्यंराक्षसाराजस
न्निधिम् ॥ ६८ ॥ गत्वाब्रुवन्महाराजप्रह्लादोनिर्भयःसुखी ॥ निर्वंधनः स्थितस्तत्रसमायात्येषपश्यतम् ॥ ६९ ॥ इतिश्रुत्वाथतंदृ
ष्ट्वाप्रह्लादंदितिजेश्वरः ॥ अहोनायंमृतःपापोबहुभिश्चाप्युपद्रवैः ॥ ७० ॥ अरिष्टोऽयंमहानेषममजातोनसंशयः ॥ इत्येवंक्रोधतः
सत्यंबभाषेदनुजेश्वरः ॥ कालपाशवशोमर्त्योनजानातिहिताहितम् ॥ ७१ ॥ इति श्रीभगवद्भक्तिमाहात्म्येप्रह्लादचरितंनामैकोन
विंशः सर्गः ॥ १९ ॥ ॥ छ ॥ अथकालवशोराजातंहन्मिस्वयमेवहि ॥ इतिनिश्चित्यमनसासभायामाययौज्वलन् ॥ १ ॥ आना
य्यतंनिजंबालंप्रह्लादंवैष्णवोत्तमम् ॥ पप्रच्छचित्तेकिंतेऽस्तिनकरोषिमदीरितम् ॥ २ ॥ इतिश्रुत्वाततःप्राहप्रह्लादःपितरंमुदा ॥
करोमिभवतामेवकथितंनात्रसंशयः ॥ ३ ॥ अविचिंत्यात्ममरणंभवदुक्तंकरोम्यहम् ॥ सर्पाणांदंशनंमत्तगजपादतलेस्थितम् ॥ ४ ॥
धराधराग्रात्पतनमपाकाग्नौनिवेशनम् ॥ जलनिर्मथनादीनिप्राणहारीणियद्यपि ॥ ५ ॥ कर्माणितातभवतोवाक्यादेवकृतानिभोः ॥
किमात्थैवंमहाराजकिंवृथामयिकुप्यसि ॥ ६ ॥ इतिश्रुत्वामहाकोपाद्धिरण्यकशिपुःसुतम् ॥ प्राहसाक्षेपवचनंयद्बलात्प्राहकोपवान् ॥ ७ ॥
तपश्यामिकथंत्वांतुसरक्षतिममाग्रतः ॥ इत्युक्त्वाखड्गमादायदुर्निरीक्ष्यंसुरासुरैः ॥ ८ ॥ वामहस्तेनतंबालंगृहीत्वाप्राहको
पवान् ॥ हिरण्यकशिपुः प्राहकुत्रास्तेसहरिस्तव ॥ ९ ॥ दर्शयाद्यनचेत्त्वांतुपातयामिनसंशयः ॥ इतिश्रुत्वावचस्तस्य

दैत्येंद्रस्यसभासदः ॥ १० ॥ भयात्तूष्णींस्थितास्तत्रददृशुर्महदद्भुतम् ॥ प्रादुर्भवतियस्मिन्वैमृत्युमाप्नोतिभूपतिः ॥ ११ ॥ चचा
लवसुधाभीतासशैलवनकानना ॥ नवभावपिमध्याह्नेगगनेरविमण्डलम् ॥ १२ ॥ हिरण्यकशिपोर्वेश्मशिवागृध्रैस्थावृतम् ॥ एवंज्ञा
त्वामहोत्पातंततोवृद्धाययुर्गृहम् ॥ १३ ॥ हिरण्यकशिपुस्तंतुप्रह्लादंप्राहकोपनः ॥ अरेदर्शयमेयस्यनाम्नाचास्तिबलंतव ॥ १४ ॥
नचेदनेनखड्गेननिहन्मित्वांनसंशयः ॥ इतिश्रुत्वापितुर्वाक्यंप्रह्लादोवाक्यमब्रवीत् ॥ १५ ॥ अहोमांतुभवानाहतंदर्शयममाद्यभोः ॥
इतिसंगच्छतेनैवसर्वात्मनिस्थितेहरौ ॥१६॥ यतश्चक्वः स्थितोऽन्यत्रनस्यात्तंतत्रदर्शयेत्॥सदासर्वत्रतिष्ठंतंसदासर्वस्वरूपिणम् ॥१७॥
दर्शयिष्यकुतोहंतंसर्वंपश्यहरिंप्रभो ॥ ग्रामेगृहेसभायांचसभास्थेषुभवत्ययम् ॥ १८ ॥ मयिस्तंभेऽथखड्गेचहरिः सर्वत्रतिष्ठति ॥
इतिश्रुत्वावचस्तस्यप्रह्लादस्यमहात्मनः ॥ १९ ॥ उवाचप्रहसन्नेवविक्षिप्तोऽभून्नसंशयः ॥ स्तंभेऽस्मिन्नास्तिसहरिरित्येतत्सप्रज
ल्पति ॥२० ॥ इत्युक्त्वातंपुनःप्राहहिरण्यकशिपुर्हसन् ॥ अरेस्तंभेचसहरिस्तिष्ठतिसर्वदा ॥ २१ ॥ इत्युक्तःप्राहपितरंप्रह्ला
दश्चातिहर्षितः ॥ अहोसत्यंमहाराजस्तंभेऽस्मिन्नास्तिमेप्रभुः ॥ २२ ॥ इतिश्रुत्वावचस्तस्यत्यक्त्वातंबालकंरुषा ॥ वामेनपाणिना
स्तंभंजघानातीवरोषतः ॥ २३ ॥ समायातुतमप्येषहन्मिनास्त्यत्रसंशयः ॥ इत्युक्तवतिदैत्येंद्रेबालंहंतुमथोद्यत ॥ २४ ॥ स्तंभंभि
त्वाप्रादुरासीन्नरसिंहोमहाबलः ॥ अर्द्धंकृत्वातुवपुषासिंहस्यार्धंनरस्यतु ॥ २५ ॥ लेलिहानोमहाजिह्वोवक्त्राधिकमहानखः ॥ दं
ष्ट्रादुष्प्रेक्ष्यपंचास्यसटानिर्भिन्नवारिदः ॥ २६ ॥ उत्प्लुत्यनरसिंहस्तंहिरण्यकशिपुंरुषा॥निपात्यभूमौहृत्कोष्ठंनखैस्तत्रव्यदारयत् ॥

॥ २७ ॥ विदीर्णवक्षादैत्येंद्रोनेत्रेजिह्वांप्रसार्यच ॥ ममारात्यद्भुतंदृष्ट्वासर्वेहाहेतिवादिनः ॥ २८ ॥ नरसिंहभयाद्दैत्यादिशोदशपलायिताः ॥ अथजाज्वल्यमानस्सनृसिंहस्तत्समास्थितः ॥ २९ ॥ दुर्निरीक्ष्यस्तुजंतूनांनिर्दहन्निवतेजसा ॥ ज्ञात्वावतारंनृहरेर्निहतंसुरकंटकम् ॥ ३० ॥ ब्रह्माणंपुरतःकृत्वाजग्मुरिंद्रादयःसुराः ॥ तत्रागत्यनतेद्रष्टुंशेकुस्तंनृहरिंप्रभुम् ॥ ३१ ॥ अतिदुर्दर्शतेजोभिर्नम्रग्रीवाअथामराः ॥ प्रह्लादंतुपुरस्कृत्यतुष्टुवुर्हृष्टमानसाः ॥ ३२ ॥ नमोविष्णवेदुष्टदैत्यांतकायप्रपन्नार्तिहंत्रेधराभारहंत्रे ॥ जगद्भूतिरक्षाविरामैर्विहर्त्रेसदाभक्तकार्य्यायरूपाणिधर्त्रे ॥ ३३ ॥ वरेण्यायविद्याविधात्रेविवस्वद्विधूद्भासिनेत्रायपीतांबराय ॥ चतुर्वेदवेद्यायवेदांतकर्त्रेविधात्रेविरूपाक्षरूपायतुभ्यम् ॥ ३४ ॥ नमोमत्स्यवाराहकूर्मस्वरूपैर्धरित्रींसदाबिभ्रतेवामनाय ॥ नमःकल्किनेरामकृष्णात्मनेतेनमोरामचंद्रायरामायतुभ्यम् ॥ ३५ ॥ एवंस्तुत्वासुरगणास्तस्थुस्तूष्णींदिवौकसः ॥ नृसिंहोऽपिचप्रह्लादंजिघ्रन्सौम्योऽब्रवीत्सुरान् ॥ ३६ ॥ अहोदेवाभवंतोवैव्रजंतुस्वस्वमंदिरम् ॥ विधेराज्ञांपुरस्कृत्यस्वेस्वेवर्त्मनिसंस्थिताः ॥ ३७ ॥ विहरध्वंयथाकामंमोदध्वंविगतज्वराः ॥ अयंत्वतीवमेभक्तःप्रह्लादोदैत्यसत्तमः ॥ ३८ ॥ एतदर्थमभूवंवैकृत्वाभीष्टंप्रयत्नतः ॥ एवमुक्त्वासदेवांस्तुप्रह्लादायवरंददौ ॥ ३९ ॥ पुनर्देवानुवाचाथभगवान्भक्तवत्सलः ॥ शृणुताहोऽमरगणाःसमेभक्तःसमेप्रियः ॥ ४० ॥ आत्मापिचततोयोमेभक्तंद्रुह्यात्समेरिपुः ॥ इत्युक्त्वानरसिंहस्तुजगामचोत्तरांदिशम् ॥ ४१ ॥ देवाअपिहरिंनत्वाजग्मुस्तेस्वस्वमालयम् ॥ प्रह्लादोऽपिततश्चक्रेभक्त्यातस्योर्ध्वदैहिकम् ॥ ४२ ॥ एवंभक्तिवशःकृष्णोभक्तंरक्षतिसर्वदा ॥ नवासुदेवभक्तानामशुभंविद्यतेक्वचित् ॥

॥ ४३ ॥ इत्यादिव्यासवचनात्प्रह्लादचिरजीवनात् ॥ सत्यमेवनसंदेहःस्वानुभूतमिदंमम ॥ ४४ ॥ यदिदंशृणुयाद्भक्त्याप्रह्लादच
रितंशुभम् ॥ संकष्टंनैवजायेतश्रीकृष्णस्यप्रसादतः ॥ ४५ ॥ इति श्रीभगवद्भक्तिमाहात्म्येप्रह्लादचरितंनामविंशतितमःसर्गः
॥ २० ॥ छ ॥ अथवक्ष्येपुराणेषुयेनोक्ताभगवत्प्रियाः ॥ तेषांभक्तेस्तुमाहात्म्यंपारंपर्याद्यथाश्रुतम् ॥ १ ॥ कलेर्गतेषुकतिषु
वत्सरेष्वभवंस्तुये ॥ भविष्येव्यासदेवेननोक्ताविस्तारकारणात् ॥ २ ॥ किंचानन्याअपितथाइदानीमपिभूरिशः ॥ भवंतिभगवद्भक्ता
भविष्यंतितथापरे ॥ ३ ॥ परंतुभक्तिःसर्वेषांभवसागरतारिणी ॥ इत्याहभगवान्व्यासःशबरीगजकीर्तनात् ॥ ४ ॥ वर्णाश्रमाश्रितानां
तुनराणांभक्तिमात्रतः ॥ उद्धारोजायतेभक्तिमाहात्म्यान्नात्रसंशयः ॥ ५ ॥ स्वधर्मनिरतानांतुस्वधर्मःकल्पपादपः ॥ नकदाचित्तुतंज
ह्यात्प्राणैःकंठगतैरपि ॥ ६ ॥ स्वधर्मेनिधनंश्रेयःपरधर्मोभयावहः ॥ श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितात् ॥ ७ ॥ इत्यादिभगव
द्वाक्यात्स्वधर्मंपालयेत्सदा ॥ स्वधर्म्मस्यचभक्तेश्चनविरोधःकदाचन ॥ ८ ॥ नारदाद्याःस्वधर्मेषुस्थिताभक्तिंप्रकुर्वते ॥ तथाराजर्षयोऽ
न्येतुजनकाद्याःस्थिताभुवि ॥ ९ ॥ राजानोऽन्येऽपिबहवःचंद्रहासादयस्तथा ॥ येस्वधर्माश्रितास्तेषांभक्तितोऽन्यन्नतारकम् ॥ १० ॥ स्वध
र्म्मनिरतानांतुभक्तिःस्यादेवतद्बलात् ॥ यथाकाशीपुरीनृणांसर्वेषांतारिणीभुवि ॥ ११ ॥ पुण्यात्मनांपापनाशात्तथाभक्तिर्हितारिणी ॥
बंधनंपापपुण्याख्यंभित्त्वाजीवन्विमुच्यति ॥ १२ ॥ तेषांभक्तिःस्वतोनैवनलब्धोयस्तथागुरुः ॥ तेषांभक्तिकथैवेयंभक्तिदात्रीनसंशयः
॥ १३ ॥ तस्माच्छास्त्रीयभक्तानांप्रथमंकथिताःकथाः ॥ अतःपरंत्वनुक्तानांपुराणचरितंब्रुवे ॥ १४ ॥ आसन्सिद्धांतकर्तारश्चत्वा

रोवैष्णवाद्विजाः ॥ यैरयंपृथिवीमध्येभक्तिमार्गोदृढीकृतः ॥ १५ ॥ विष्णुस्वामीप्रथमतोनिंबादित्योद्वितीयकः ॥ मध्वाचार्य्यस्तृ
तीयस्तुतुर्योरामानुजःस्मृतः ॥ १६ ॥ कृष्णदासेतिनाम्नाभूच्छिष्योवैविष्णुशर्मणः ॥ कृष्णदासस्यशिष्याणांनामानिकथयाम्य
हम् ॥ १७ ॥ कील्हाग्रदेवहेमाख्यगंगाकल्याणकंधराः ॥ विष्णुदासस्तथारंगावामनेत्यादयोमताः ॥ १८ ॥ अत्रैववल्लभाचार्य्योवि
ष्णुस्वामिकुलेऽभवत् ॥ रामानुजस्यशिष्यस्तुदेवाचार्योमहामतिः ॥ १९ ॥ हर्यानंदेतिविख्यातोमहामहिषएवच ॥ राघवानंदइ
त्येषशिष्योवैष्णवसत्तमः ॥ २० ॥ राघवानंदशिष्याणांनामानिकथयाम्यहम् ॥ अनंतानंदइत्येषोभावानन्दस्ततःपरम् ॥ २१ ॥
सुखासुरःसुरापद्मावतीनरहरिस्तथा ॥ पीपाश्चरविदासश्चकंबीरसदनस्तथा ॥ २२ ॥ धन्वासुरसुरश्चैवतथाधनहरिःस्मृतः ॥ एतेचा
न्येचबहवोरामानुजकुलोद्भवाः ॥ २३ ॥ वैष्णवास्तस्यशिष्यायेशिष्यैर्व्याप्तमिदंजगत् ॥ एतेषांतुकथामग्रेकथयिष्यामिविस्त
रात् ॥ २४ ॥ निंबादित्यकथांवक्ष्येमहाश्चर्य्यप्रदायिनीम् ॥ निंबादित्येतिनाम्नाभूद्यथातस्यवदामितत् ॥ २५ ॥ एकदासमहाभक्तः
शुश्रावग्रामआगतम् ॥ दंडिनंतंस्वयंनत्वाभोजनायन्यमंत्रयत् ॥ २६ ॥ अथागत्याब्रवीत्कंचिच्छिष्यंपाकंकुरुद्रुतम् ॥ श्रुत्वागु
रोर्वचःशिष्यःसामग्रींकर्तुमुद्यतः ॥२७॥ कृत्वाकथंचित्सामग्रींपपाचातिप्रयत्नतः ॥तदासायमभूद्दृष्ट्वाभिक्षुराचार्य्यमब्रवीत् ॥ २८ ॥
अतःपरंनभोक्तव्यंमयारात्रिरुपस्थिता ॥ निशायांभोजनंनैवविहितंममवर्तते ॥२९॥ इतिश्रुत्वावचस्तस्यानिंबादित्योऽतिचिंतितः ॥
कृष्णंसस्मारमनसाचक्रायुधमनन्यधीः ॥ ३० ॥ ततःसभगवांश्चक्रंप्राहतत्रव्रजद्रुतम् ॥ मद्भक्तवचनात्पश्चादादित्यामिवतिष्ठभोः ॥

॥ ३१ ॥ भुंजीतयावद्भिक्षुर्वैपुनरायाहिसत्वरम् ॥ इतिश्रुत्वाप्रभोर्वाक्यंचक्रेतदतिसत्वरम ॥ ३२ ॥ आगत्याचार्य्यभवना
त्पश्चिमायांस्थितंह्यभूत् ॥ आचार्य्यस्तुततोनिंबवृक्षसंमुखतोरविम् ॥ ३३ ॥ दृष्ट्वातंदर्शयामासभिक्षुकंपरयामुदा ॥ पश्यादित्य
स्यबिंबंभोस्त्यजशंकांनिजांप्रभो ॥ ३४ ॥ इत्युक्तस्तेनभिक्षुस्सस्वयंदृष्ट्वार्कमण्डलम् ॥ बुभुजेऽथसमुत्थायहस्तप्रक्षालनोत्तरम् ॥३५॥
आचम्यमुखसंशुद्धिंगृहीत्वापुनरैक्षत ॥ महांधकारंमार्गेसगंतुमप्यक्षमोऽभवत् ॥ ३६ ॥ भिक्षुःप्राहतदाचार्य्यंकिमेतद्वदभोद्विज ॥
आचार्य्यःप्राहतंभिक्षुंभक्तिगद्गदयागिरा ॥ ३७ ॥ भवानेवहिजानातिभवानेवब्रवीतुनः ॥ इतिश्रुत्वावचस्तस्यभिक्षुःप्राहातिहर्षितः
॥३८॥अहोरात्रिरभूत्सत्यंपरंतुभगवान्हरिः ॥ त्वद्धर्मरक्षणार्थायचक्रंतत्रनियुक्तवान् ॥ ३९ ॥ तेनतावद्दिनमभूच्चक्रेतत्रस्थितेसति ॥ म
मापिपापंनाभूद्वैरात्रिभोजनजंत्विह ॥४०॥ मद्भोजनार्थमेतावान्प्रयासोहरिणाकृतः ॥ तस्मिन्कृतेक्वपापानियच्चिकीर्षतिमाधवः ॥४१॥
इत्युक्तःसपुनःप्राहतमाचार्य्यंवचोयतिः ॥ यन्निंबेदर्शयित्वाहमादित्यंभोजितोनिशि ॥ ४२ ॥ निंबादित्यइतिख्यातंतवनामभविष्य
ति ॥ इत्युक्त्वासगतोभिक्षुःक्वचित्सुष्वापतांनिशाम् ॥ ४३ ॥ निंबादित्योऽपिबुभुजेसहशिष्यैर्हरिंस्मरन् ॥ एवंभक्तप्ररक्षार्थंभगवा
न्भक्तवत्सलः ॥ ४४ ॥ उपायंकुरुतेऽत्यर्थंस्मृतमात्रस्तुतत्क्षणात् ॥ परंतुकृत्वाविश्वासंयदितंशरणंव्रजेत् ॥ ४५ ॥ ॥ इति
श्रीभगवद्भक्तिमाहात्म्येनिंबादित्यचरितंनामैकविंशःसर्गः ॥ २१ ॥ ॥ जामातइतिविख्यातःशिष्योरामानुजस्यहि ॥ सोऽपि
भक्तोबभूवास्यकथांवच्मिमनोहराम् ॥ १ ॥ सतुरामंभजन्प्रेम्णावैष्णवानांतुदासवत् ॥ चकारपरिचर्य्यांवैकर्मणामनसागिरा ॥ २ ॥

एकदासतुजामातःपुष्पंनेतुंव्रजन्पथि ॥ ददर्शपतितंग्रामाद्बाह्येकंचिन्मृतंनरम् ॥ ३ ॥ गोपीचन्दनलिप्तांगंसर्वांगेतुलसीस्रजम् ॥ दृष्ट्वा
तंवैष्णवंमोहाद्बालंमत्वान्यवर्तत ॥ ४ ॥ तमुत्थायशवंमूर्ध्निधृत्वाभारातुरोऽपिसन् ॥ गत्वाश्मशानभूमौसतंददाहसुतोयथा ॥५॥
दृष्ट्वैतदन्येयेतत्रस्थितावैवैष्णवाजनाः ॥ तेसर्वेगर्हयांचक्रुर्विक्षितोज्यमभूत्किल ॥ ६ ॥ कस्येदंमृतकंमूर्ध्नानीयायंसंस्करोतिभोः ॥
अतस्त्वंनहिस्प्रष्टव्योभवपंक्तेस्तुबाह्यतः ॥ ७ ॥ इतिसंमंत्र्यमिलितास्तत्यजुस्तस्यवेश्मतं ॥ जामातस्तुततःशोकादागत्यनिजमंदिर
म् ॥ ८॥ त्यक्त्वाशनोदकेरात्रौसुष्वापश्रीहरिंस्मरन् ॥ अथप्रातःसमुत्थायस्नात्वाभुक्त्वासमुत्थितः ॥ ९ ॥ चतुर्थेदिवसेसाधुभो
जनायसमुत्सुकः ॥ गृहेयत्किंचिदासीद्धैधनंतेनाकरोत्स्वयम् ॥ १० ॥ साधूनांभोज्यवस्तूनितृतीयेदिवसेनिशि ॥ गत्वासर्वस्य
गेहेसवैष्णवानांनिमंत्रणम् ॥ ११ ॥ ददौततःपरंतेतुवैष्णवास्तंकदक्षरम् ॥ ऊचुःकस्त्वंस्थितोजात्याचांडालोऽन्योऽपिवापुनः ॥
॥ १२ ॥ दग्ध्वातंपितृवद्यस्त्रोनिमंत्रयितुमागतः ॥ अतःपरंतुतेशाकंनभोक्ष्यंतीहवैष्णवाः ॥ १३ ॥ किंपुनस्त्वद्गृहेऽन्नानितस्मा
द्गच्छयथारुचि ॥ एवंसर्वैस्तुतत्रत्यैःप्रत्याख्यातः सवैष्णवः ॥ १४ ॥ जामातःससमागत्यनिजगेहेस्थितोऽभवत् ॥ चिंतयापरया
विष्टःसस्मारजगदीश्वरम् ॥ १५ ॥ भगवानथतंस्वप्नेरात्रौसर्वमुवाचह ॥ अहोशोकंत्यजाशुत्वंप्रातःकालेतुवैष्णवाः ॥ १६ ॥
आगमिष्यंतित्वद्वेश्मभोक्तुंमत्प्रेरिताःशुभाः ॥ भुक्त्वायदातेयास्यंतितदैवग्रामवासिनः ॥ १७ ॥ स्वयंत्वांप्रार्थयिष्यंतिभोक्तुं
देहीतिवैमुहुः ॥ एवंदृष्ट्वातिसुस्वप्नंजामातश्चारुणोदये ॥ १८ ॥ जाग्रदुत्थायहर्षेणगृहसंमार्जनादिकम् ॥ कृत्वास्नानंहरिं

भक्त्यापूजयित्वासमुत्थितः ॥ १९ ॥ पत्रावलीनांशतशोगृहेचैवांगणेतथा ॥ स्थापयित्वाततोवारिपूर्णपात्राण्यनेकशः ॥ २० ॥
तत्रसंस्थापयामासपादप्रक्षालनस्थले ॥ एवंदृष्ट्वातुतेसर्वेअहोऽयंकिंकरोतिवै ॥ २१ ॥ भोक्तुंनचागतः कोऽपिकथमेवंकरोत्ययम् ॥
कथयत्स्वथतेष्वेवंशंखध्वनिरभून्महान् ॥ २२ ॥ श्रुत्वाजहर्षजामातस्तेसर्वेविस्मयंगताः ॥ ततआगत्यभक्तास्तेविष्णुनाप्रेरिताः
स्वयम् ॥ २३॥ जामातस्यगृहेगत्वाबुभुजुस्तेऽपिभक्तितः ॥ ततस्तान्वैष्णवांस्तेतुग्रामीणावैष्णवाःपराः ॥ २४ ॥ पप्रच्छुस्तेभुक्तव
तःकेयूयंवदतेतिनः ॥ तेषांमध्येततश्चैकःप्रहसन्नब्रवीत्तदा ॥ २५ ॥ अहंहिवैविष्णुभक्तद्विषः किंसंवदामिवः ॥इत्युक्तातेनभोमार्गगताः
परमवैष्णवाः ॥ २६ ॥ तेऽपिग्रामस्थिताःसर्वेजामातंप्रणिपत्यतम् ॥ भोजनंयाचयामासुर्जामातस्तानथाब्रवीत् ॥ २७ ॥ अहोतद्भुक्त
शेषंतुगृहेयन्ममवर्तते ॥ तत्सर्वंभवतामेवभक्षयध्वंनसंशयः ॥ २८ ॥ इत्युक्तास्तेसमायाताःसर्वेतेग्रामवासिनः ॥ पुनस्तान्भोजयामास
तावतैवचवस्तुना ॥ २९ ॥ जामातःसंस्मरन्कृष्णंतत्प्रसादाद्व्यवर्द्धत ॥ सर्वापिभोज्यसामग्रीतैर्भुक्त्वातुयथापुरा ॥ ३० ॥ एवंभ
क्तस्तुमाहात्म्यंज्ञात्वातेग्रामवैष्णवाः ॥ जामातभक्तिंकुर्वन्तोजातास्तेऽपिचवैष्णवाः ॥ ३१ ॥ इति श्रीभगवद्भक्तिमाहात्म्येजामातभ
क्तिचरितंनामद्वाविंशःसर्गः ॥ २२ ॥ छ ॥ अथापरंप्रवक्ष्यामिमाहात्म्यंपरमाद्भुतम् ॥ श्रीमार्गस्यसशिष्यस्यगुरुभक्तिप्रसंगतः ॥१॥
आसीद्भागीरथीतीरे श्रीमार्गोवैष्णवोत्तमः ॥ धनपुत्रादिमोहंसत्यक्त्वाभक्तिपरायणः ॥ २ ॥ श्रीकृष्णसेवानिरतोजपंस्तन्नामकेवलम्॥
तस्यासीदतिभक्तोवैशिष्यःपुत्रादपिप्रियः ॥ ३ ॥ एकदातंसमाहूयश्रीमार्गःसमवोचत ॥ अहोवत्सम्यानैवजगन्नाथोनिरीक्षितः ॥४॥

तदर्थंयामिचात्रत्वंतावत्तिष्ठस्ववेश्मनि ॥ अर्हदृष्ट्वाजगन्नाथंशीघ्रमेष्याम्यसंशयम् ॥ ५ ॥ इयंगंगाजगद्धात्रीदेवीभागीरथीपरा ॥
तारणीसर्वभूतानांपूज्यतेत्रिदशैरपि ॥ ६ ॥ इयंत्वयाभक्तिपूर्वंपूजनीयाविशेषतः ॥ यथाहंपूजितोनित्यंतथेमामपिपूजय ॥
॥ ७ ॥ सुखंवसात्रमामेनांविद्धिगंगांनसंशयः ॥ इत्युक्त्वाप्रययौशिष्यंश्रीमार्गःसाधुसत्तमः ॥ ८ ॥ जगन्नाथपुरींशिष्योभ
क्त्यावैतद्दिनादितः ॥ गंगायांनददौपादंगुरुरेवेतिनिश्चितः ॥ ९ ॥ अन्यत्रकृत्वास्नानादिभिक्षित्वान्नादिकंपुनः ॥ कृत्वानै
वेद्यमन्नंचनीत्वागंगातटेस्थितः ॥ १० ॥ संपूज्यजाह्नवींदेवींगुरुवत्प्रणिपत्यच ॥ अन्नंनिवेद्यगंगायैस्वयंसबुभुजेसदा ॥ ११ ॥
एवंतस्याह्निकंकर्मनित्यंगुर्वागमावधि ॥ रात्रिभोजनमप्यस्यैगंगायैतन्न्यवेदयत् ॥ १२ ॥ गुरुवत्तामहोरात्रंपश्यन्निन्येतुवत्स
रम् ॥ अथागतोगुरुःसायंकालेश्रीमार्गवैष्णवः ॥ १३ ॥ दृष्ट्वातमागतंशिष्यःप्रणिपत्यसमर्चयत् ॥ सेवांचकारभक्त्यासपादसं
वाहनादिभिः ॥ १४ ॥ अथतत्रस्थितायेचगंगातीरनिवासिनः ॥ श्रीमार्गंतेऽब्रुवन्क्रोधादेषशिष्योऽतिदुष्टधीः ॥ १५ ॥
गतेत्वयितदारभ्यअद्यावधिनिरंतरम् ॥ गंगायांचैवनस्नानंकृतमेतेनपापिना ॥ १६ ॥ अस्माभिर्भर्त्सितोऽप्येषनोवाचोत्तरमप्यसौ ॥
इतिश्रुत्वागुरुःप्राहअहोस्नास्यत्यतः परम् ॥ १७ ॥ इतिश्रुत्वातुसुष्वापप्रातरुत्थाययत्नतः ॥ गत्वातीरेसमुत्तस्थौगुरुस्तुगतवाञ्ज
ले ॥ १८ ॥ आकंठवारिणिस्थित्वाप्राहशिष्यंगुरुस्तदा ॥ अंगप्रोक्षणकंवस्त्रमत्रागत्यप्रदेहिमे ॥ १९ ॥ इत्युक्तः समहाकष्टंप्रापशि
ष्योऽतिभक्तितः ॥ गतोदातुंचतद्वस्त्रमेतस्मिन्नंतरेजले ॥ २० ॥ प्रादुर्बभूवुः पद्मानिमहांतिसुदृढानिच ॥ जलाद्वितस्तिमात्रंतुप्रोत्थि

तानितुतीरतः ॥ २१ ॥ गुरोः समीपपर्यंतंदृष्ट्वाशिष्यस्तुतानिवै॥हर्षात्तत्रैवपादौतुतद्गृहीत्वांतिकेगुरोः ॥ २२ ॥ समागत्यददौवस्त्रं
दृष्ट्वासर्वेचदुर्जनाः ॥ प्राहुराश्चर्यमेतद्धोहीत्युक्त्वातत्रचागताः ॥ २३ ॥ स्नात्वाबहिरथागत्यगुरुः शिष्यमुवाचतम् ॥ किमेतन्महदा
श्चर्यंत्वत्पादस्थलहेतवे ॥ २४ ॥ पद्मपत्राणिचैतानिप्रादुर्भूतानिकिंतुभोः ॥ इत्युक्तस्तंगुरुंनत्वाशिष्यः प्रांजलिरब्रवीत् ॥ २५ ॥
नजानाम्यहमन्यद्वैतवभक्तिंविनाप्रभो ॥ त्वंगंगाहमितिप्रोच्यजगन्नाथंनिरीक्षितुम् ॥ २६ ॥ गतस्तदादिगंगायांस्नानंनकृतवानहम् ॥
गंगांत्वामेवजानन्वैकथंपादतलेनताम् ॥ २७ ॥ स्पृशामीतिविचार्याहंनपीतमपितत्पयः ॥ परंतुकेवलंभक्त्यापूजांकृत्वानिरंतरम् ॥
॥ २८ ॥ स्थितोऽद्यावधिवस्त्राणिदेहीत्येवंभवान्यदा ॥ समवोचत्तदाकष्टंममासीदतुलंविभो ॥ २९ ॥ कथंदास्यामिगुरवेवस्त्रंतत्रग
तोऽधुना ॥ गंगांस्पृशामिपादाभ्यांकथमेतद्विचारणात् ॥ ३० ॥ तावदेतानिपद्मानिप्रादुर्भूतानिदृष्टवान् ॥ निधायतत्रचरणौवस्त्रं
तुभ्यंददाम्यहम् ॥ ३१ ॥ भवत्प्रसादान्मेधर्मरक्षणायेहजाह्नवी ॥ पत्राण्युद्भावयामासभवतामपरातनुः ॥ ३२ ॥ एतज्जानाम्यहंना
थत्वत्प्रसादादतः परम् ॥ नजानेतद्भवानेवसर्वंजानातिकेवलम् ॥ ३३ ॥ इत्युक्त्वासंस्थितस्तूष्णींगुरुस्तस्मैशुभाशिषम् ॥ दत्त्वा
मुमोदमनसासत्पुत्रेणयथागृही ॥३४॥ तेऽपितत्रस्थितायेवैनिंदंतस्तंतुदुर्जनाः ॥ चक्रुस्तस्यमहाभक्तिंशिष्यस्यचगुरोरपि ॥ ३५ ॥
इत्येतदुक्तंचरितंश्रीमार्गगुरुशिष्ययोः ॥ शृण्वन्भक्त्यामनुष्यस्तुगुरुमाहात्म्यमुत्तमम् ॥ ३६ ॥ लभतेमहतींभक्तिंमूर्खोविद्यामवा
प्नुयात् ॥ ३७ ॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्येश्रीमार्गगुरुशिष्ययोश्चरितंनामत्रयोविंशः सर्गः ॥ २३ ॥ ॥ छ ॥ रामानुज

कथांवक्ष्येमहाश्चर्यप्रदायिनीम् ॥ यांश्रुत्वानिजधर्मेणभक्तिंप्राप्यहरिंव्रजेत् ॥ १ ॥ रामानुजोद्विजः श्रेष्ठःशास्त्रज्ञोवेदवित्तमः ॥
आसीत्सदाक्षिणात्येषुमहाचाररतःसदा ॥ २ ॥ सएकदातुजग्राहमंत्रंगुरुमुखाद्विजः ॥ गुरुणाचैवमुक्तस्तुमंत्रोऽयंसिद्धिदो
द्रुतम् ॥ ३ ॥ ततःसभगवद्रूपमपश्यत्तत्क्षणाद्धृदि ॥ अथागत्यस्वगेहेषुसुप्तेलोकेमहानिशि ॥ ४ ॥ उच्चैःस्वरेणतन्मंत्रमुच्चस्था
नात्पपाठह ॥ अन्येऽपिश्रुत्वागृह्णंतुमंत्रमेनंततोहरिम् ॥ ५ ॥ प्राप्नुवंत्वितिबुद्ध्यावैततस्तद्ग्रामवासिनः ॥ येप्रबुद्धाः स्थितारात्रौते
सर्वेजगृहुर्मनुम् ॥६॥ सर्वेतेज्ञानसंपन्नाः सिद्धानारायणंययुः ॥ ततोरामानुजःस्वामीभक्ताचार्योबभूवह ॥ ७ ॥ एकदातुसहस्रे
णशिष्येणसहितोययौ ॥ नीलाचलेजगन्नाथंद्रष्टुं श्रीपुरुषोत्तमम् ॥ ८ ॥ गत्वातत्रनमस्कृत्यसददर्शार्थपूजकान् ॥ अनाचाररता
नन्यान्सर्वानेकत्रभोजिनः ॥ ९ ॥ अहोकिमेतद्यत्सर्वेवर्णाएकत्रभुंजते ॥ तस्माद्व्यवस्थांकुर्वेऽहंयथाचारः प्रवर्त्तताम् ॥ १० ॥ इति
संचिंत्यमनसापूजकांस्तान्बलेनसः ॥ वृतः शिष्यसहस्रेणबहिश्चक्रेसपूजनैः ॥११॥ स्वयमेवजगन्नाथंपूजयामासभक्तितः ॥ महाचा
रेणनैवेद्यंसंपाद्यहरयेपुनः ॥ १२ ॥ उवाचाहोह्यनाचारोऽस्त्याग्रहोवर्त्ततेमम ॥ आचारेणयथाभक्त्यायोमेयद्यत्प्रयच्छति ॥ १३ ॥
ततस्तुल्यमहंमन्येकिंचिद्भक्त्याविशिष्यते ॥ तस्मान्मत्पूजकान्भक्तान्स्नात्वानयममार्चने ॥ १४ ॥ निजांजहित्वमप्यत्रत्यजाचा
रकथामिह ॥ इतिरामानुजःस्वामीस्वप्नंदृष्ट्वातदानिशि ॥ १५ ॥ नतत्याजस्वमाचारंस्मृतिवाक्यमनुस्मरन् ॥ अहोअत्रहरेःकोप
मनाचाराग्रहोमहान् ॥ १६ ॥ आश्रमांश्चतुरोवर्णान्यत्सहैवाशयत्ययम् ॥ अहंतुनसदाचारंत्यक्ष्यामिजीवितावधि ॥ १७ ॥

इत्युक्त्वानसतत्याजस्वामीस्वाचारमुत्तमम् ॥ ततस्तुभगवान्प्राहगरुडंभक्तवत्सलः ॥ १८ ॥ गच्छरामानुजंब्रूहिनात्राचारःप्रशस्यते ॥
अतस्तेपूजकाएवकुर्वंतुममपूजनम् ॥ १९ ॥ भवानाचारभक्तिभ्यांप्रियस्तत्रनसंशयः ॥ परंत्वन्मंत्रवशतःसुलभोऽहंसतांतव ॥ २० ॥
पूजकानांतुचात्रैवममभक्तिर्दृढास्तिभोः ॥ ममापिचैतत्कर्तव्यमनाचारोऽत्रसाधनः ॥ २१ ॥ तस्मात्स्वदेशंगत्वात्वंसदाचारेणमांभ
ज ॥ अहंतेऽभिमतंसर्वंस्मृतोदास्याम्यसंशयम् ॥ २२ ॥ इत्युक्तोयदिमन्येततदातन्मोहयस्वयम् ॥ प्रापयस्वनिजंस्थानंसशि
ष्यंनिद्रयान्वितम् ॥ २३ ॥ इत्युक्तोगरुडस्तेनजगन्नाथेनवैतदा ॥ रामानुजसमीपेसगत्वास्वप्नेऽब्रवीद्वचः ॥ २४ ॥ सर्वंश्रीकृष्णक
थितंश्रुत्वास्वामीजहर्षच ॥ अहोयदर्थमायातस्तत्संपन्नंमयाधुना ॥ २५ ॥ यदिप्रसन्नोभगवान्स्मृतोमेदास्यतीप्सितम् ॥ तदिदं
वागृहंवापितुल्यमेवनसंशयः ॥ २६ ॥ गच्छाम्यहमवश्यंभोइतिब्रह्मस्वरूपिणम् ॥ गरुडंप्राहचस्वामीसुष्वापशिष्यसंवृतः ॥ २७ ॥
अथांतरेतंगरुडःसशिष्यंयत्नमात्रतः ॥ निजदेशेस्थापयित्वानीलाचलमथागमत् ॥ २८ ॥ ततःप्रातस्तुतत्रत्यैर्ज्ञातःस्वामीग
तोनिशि ॥ ततःपूजाकरान्सर्वानानयित्वानृपःस्वयम् ॥ २९ ॥ पूजयामासदेवेशंजगन्नाथंमुदान्वितः ॥ स्वामीतुप्रातरुत्थायदृष्ट्वानि
जगृहंस्मरन् ॥ ३० ॥ रात्रौस्वप्नंयथादृष्टंतत्सत्यमकरोद्धरिः ॥ अहोभक्तेस्तुमाहात्म्यंसर्वाधिकतमंपरम् ॥ ३१ ॥ इत्युक्त्वामनसाशिष्यैर्यु
तोभक्तिंसमाचरन् ॥ स्थापयामासपंथानंहरिभक्तेरनुत्तमम् ॥ ३२ ॥ इतिश्रीभग०मा०रामानुजचरितंनामचतुर्विंशःसर्गः ॥ २४ ॥
अथश्रीरङ्गभक्तस्यमाहात्म्यंकथयाम्यहम् ॥ पुष्करात्पश्चिमेग्रामेधौसानाम्नातिविश्रुते ॥ १ ॥ तत्रश्रीरंगनामासीद्वैश्यो

जैनपथेस्थितः ॥ तस्यदासोमृतोजातोयमदूतःसएकदा ॥ २ ॥ वणिग्द्वारिसमागत्यदर्शयित्वात्मनोवपुः ॥ उवाचवणिजंपापाधम
दूतोभवंवणिक् ॥ ३ ॥ हरिभक्तिंविनासर्वेसदानरकभागिनः ॥ इदानींपश्यप्रत्यक्षंयोऽसौवैश्यवृषोमहान् ॥ ४ ॥ तस्यशृंगेगतश्चाहं
स्वर्णकारमिमंपुनः ॥ परदाररतंदुष्टंहत्वानेष्येयमालयम् ॥ ५ ॥ इत्युक्त्वांतर्दधेदूतस्तत्कालेतत्रसंस्थितम् ॥ स्वर्णकारंसतुवृ
षःशृंगाभ्यांनिजघानह ॥ ६ ॥ इतिदृष्ट्वामहाश्चर्यंश्रीरंगःस्वमतंतदा ॥ त्यक्त्वाकस्यापिशिष्योऽभूद्वैष्णवस्यातिभक्तितः ॥ ७ ॥
हरिपूजारतोनित्यंहरिनामपरायणः ॥ ददावन्नंचपानीयंक्षुत्पिपासातुरायसः ॥ ८ ॥ स्वर्णकारस्तुदूतेननीतोगत्वायमालयम् ॥ पुन
रागत्यस्वग्रामेजातःप्रेतोऽतिहिंसकः ॥ ९ ॥ बहून्संतापयामासहरिभक्तिविवर्जितान् ॥ एकदास्वर्णकारःसप्रेतःस्वतनयंरुषा
॥ १० ॥ दर्शयामासचात्मानंततोभीतस्तुतत्सुतः ॥ नकिंचिन्मन्यतेसाधुस्मरन्प्रेतंसमुत्कटम् ॥ ११ ॥ प्रत्यहंचिंतयामास
राजन्शुष्कोबभूवसः ॥ एकदानिशितंपुत्रंहंतुंसपुनरागतः ॥ १२ ॥ ततउत्थायतत्पत्नीप्रार्थयंतीसमागता ॥ किमर्थंहंसिभोपु
त्रंवदाभीष्टंकरोमितत् ॥ १३ ॥ इतिश्रुत्वावचस्तस्याःपत्न्याःसंपश्यतोरहः ॥ प्रेतःप्रोवाचयेनस्यात्सद्गतिस्तत्कुरुष्वभोः ॥ १४ ॥
इतिश्रुत्वातुसाप्राहकथंतेसद्गतिर्भवेत् ॥ तदाहप्रेतोऽहंत्वस्यशरीरेप्रविशाम्यथ ॥ १५ ॥ त्वंतुश्रीरंगपूजायाभगवच्चरणामृतम् ॥
आनीयदेहिमेशीघ्रंतदास्वर्गंव्रजाम्यहम् ॥ १६ ॥ इत्युक्त्वासाकरोत्सर्वंतदासप्रेतबंधनात् ॥ मुक्तोबभूवतत्पुत्रःस्वस्थोजातस्तदैव
हि ॥ १७ ॥ एवंश्रीरंगभक्तेस्तुमाहात्म्यंकथितंमया ॥ यःशृणोतिनरोभक्त्यालभतेभक्तिमुत्तमाम् ॥ १८ ॥ ॥ इति

श्रीभगवद्भक्तिमाहात्म्येश्रीरंगचरितंनामपंचविंशः सर्गः ॥ २५ ॥ छ ॥ ॥ विष्णुस्वामिप्रियःशिष्यःकृष्णदासोबभूवह ॥ कथां
तस्यप्रवक्ष्यामिभक्तिमाहात्म्यसूचिताम् ॥ १ ॥ कृष्णदासस्यशिष्योऽभूदूर्ध्वरेतामहामनाः ॥ यंयंतुकृपयाशिष्यंचक्रेसोऽतीवभक्ति
मान् ॥ २ ॥ भुक्त्वेहविविधान्भोगान्ययावंतेहरेःपदम् ॥ मानसिंहोमहाराजस्तन्मंत्रग्रहणादभूत् ॥ ३ ॥ यस्याश्ववाहाअश्वैस्तु
तीर्त्वाब्रह्मनदंपुनः ॥ परात्परात्करंजह्रुःकृष्णदासप्रसादतः ॥ ४ ॥ मानसिंहोनिवासार्थंददौस्थानमनुत्तमम् ॥ गालवस्यऋषेःपूर्वं
स्थानमासीदनुत्तमम् ॥ ५ ॥ तदेवगलतेत्येतद्विश्रुतोह्यधुनाभुवि ॥ बहुधाकृष्णदासस्तुराजभक्तिवशीकृतः ॥ ६ ॥ तत्रैवमवसद्भूपः
स्वेच्छयापर्य्यटन्नपि ॥ एकदाकुह्लदेशस्यराजापुत्रविवर्जितः ॥ ७ ॥ राजकार्य्येऽप्युदासीनोदत्त्वाभारंतुमंत्रिणे ॥ सपत्नीकोगतोरा
जाकस्मिंश्चित्पर्वतोत्तमे ॥ ८ ॥ प्रसन्नःकृष्णदासंतुक्वचित्तरुतलेस्थितम् ॥ हृष्टःप्रसादयामासकृष्णदासंनृपोत्तमः ॥ ९ ॥ प्रसन्नः
कृष्णदासस्तुतस्मैमंत्रंददौस्वयम् ॥ राजातुकृतकृत्योऽभून्मंत्रंप्राप्यगुरोस्ततः ॥ १० ॥ एकदातस्यभुक्त्यर्थंराज्ञीमेवाहभूपतिः ॥
मिष्टान्नंवर्ततेगेहेस्वामिनोभोजनायहि ॥ ११ ॥ समानयेतिसाश्रुत्वाययौगेहंस्वयंसती ॥ नीत्वामिष्टान्नमायातिनिम्नोन्नतपथिश्र
मात् ॥ १२ ॥ पपातहस्तान्मिष्टान्नंस्थालीतःकिंचिदल्पशः ॥ उत्थायभुक्त्वातद्राज्ञीनत्वन्यत्सा ययौपुनः ॥ १३ ॥ दृष्ट्वातस्मा
त्तुभुंजानांराज्ञींचुक्रोधभूपतिः ॥ खड्गमादायतांहंतुमुद्युक्तोगुरुणाततः ॥ १४ ॥ निवारितोनचैयंभोसापराधातिसुव्रता ॥ इत्युक्त्वा
तत्करान्नीत्वामिष्टान्नंकृपयागुरुः ॥ १५ ॥ विभज्यभागमेकंतुददौराज्ञेस्वयंपुनः ॥ गृहीत्वाचैकमेवंतुराज्ञ्यैभागद्वयंददौ ॥ १६ ॥

सहृष्टोनृपतिःप्राहकिमिदंकुरुषेप्रभो ॥ श्रुत्वैतद्वचनंराज्ञःकृष्णदासोऽब्रवीद्गुरुः ॥ १७ ॥ एषागर्भवतीराजन्पुत्रस्तेभविताध्रुवम् ॥ त
स्मैद्वितीयभागंतुददाम्येतन्नसंशयः ॥ १८ ॥ भविष्यतिसुतोयस्तेमहाभागवतोत्तमः ॥ इतिलब्ध्वावरंतस्मात्कृष्णदासाद्गुरोर्नृपः ॥
॥ १९ ॥मेनेकृतार्थमात्मानंसपत्नीकोननामतम् ॥ अथराजासगुरुणाकृष्णदासेननोदितः ॥२०॥ जगामस्वगृहंराजाकृष्णदासोनि
जालयम् ॥ अथसासुषुवेराज्ञीसुमुहूर्तेसुतंसती ॥ २१ ॥ महाभागवतः सोऽभूच्चक्रेराज्यमकंटकम् ॥ एवंहिभगवद्भक्तिप्रसादात्किंतुदु
र्लभम् ॥ २२ ॥ पुत्रदारधनंलोकेयदिच्छेल्लभतेसतत ॥ श्रीकृष्णस्यप्रसादेनसत्यंसत्यंनसंशयः ॥ २३ ॥ ॥ इतिश्रीभगवद्भक्ति
माहात्म्येकृष्णदासचरितंनामषड्विंशः सर्गः ॥ २६ ॥ ॥ छ ॥ अस्यवैशिष्यौकील्हाग्रौकथयामितयोःकथाम् ॥ तयोर्ज्येष्ठस्तुकी
ल्होऽभून्महायोगीजितेंद्रियः ॥ १ ॥ बहुधामथुरायांसतस्थौकृष्णमनुस्मरन् ॥ एकदामानसिंहस्तुगतस्तंद्रष्टुमुत्सुकः ॥ २ ॥
गत्वाददर्शकील्हंतंप्रणम्योवाससन्निधौ ॥ तृतीयेप्रहरेयातेदिवसस्यतदातुसः ॥ ३ ॥ आकाशमवलोक्याहअहोसम्यगहोइति ॥
श्रुत्वैतन्मानसिंहस्तुपप्रच्छविनयान्वितः ॥ ४ ॥ किमेतदब्रवीर्नाथअहोसम्यगहोइति ॥ कील्होऽब्रवीत्तुतंश्रुत्वागुर्ज्जरस्याधि
पोनृपः ॥ ५ ॥ मृतस्त्विदानींसस्वर्गविमानेनप्रयातितम् ॥ दृष्ट्वाब्रुवंतमत्रत्यःसोऽतिभक्तोममप्रियः ६ ॥ नाम्नासुमेरुदेवे
तिविख्यातोयशसानृपः ॥ इतिश्रुत्वातुतद्वाक्यंमानसिंहोनृपोत्तमः ॥ ७ ॥ दूतंशीघ्रगतिंतस्मात्स्थानादुत्थायप्रैरयत ॥
सत्यंवाऽसत्यमेतत्तुज्ञातुंतस्यमहात्मनः ॥ ८ ॥ गत्वागुर्जरदेशंतुनीत्वापत्रंत्वरान्वितः ॥ प्रददेमानसिंहायतस्मिन्पत्रेतदैवसः ॥

॥ ९ ॥ तस्मिन्दिनेऽपराह्णेतुमृतोराजानसंशयः ॥ इतिदृष्ट्वातुतत्पत्रंनिश्चिकायतदानृपः ॥ १० ॥ अथकील्हेनतज्ज्ञातंराज्ञः संदेहकर्मतत् ॥ नचुकोपदयार्द्रत्वात्पुनःकालांतरेगुरुः ॥ ११ ॥ मंजूषायांधृतांमालांराज्ञीपश्यतिचात्मनः ॥ तदैवघटिका द्वित्रिमध्येकील्होऽब्रवीन्नृपम् ॥ १२ ॥ मंजूषायास्तुनिष्कास्यमालांमेदेहिभूपते ॥ इतिश्रुत्वाततोराज्ञामंजूषोद्घाटितास्वयम् ॥ ॥ १३ ॥ ददर्शतत्रसर्पंतुस्फुरंतमतिकोपनम् ॥ ततोराजाभयात्तस्यामुखमाच्छाद्यतंगुरुम् ॥ १४ ॥ प्राहात्रसर्पोऽतिमहान्नमालादृश्यते गुरो ॥ ततस्तुकील्हदासोऽपिराज्ञीपश्यतितत्क्षणात् ॥ १५ ॥ मालांततोविनिष्कास्यपुनस्तत्रैवतांन्यधात् ॥ पुनराहनृपंदेहीत्युक्तः सपुनरेवाहि ॥ १६ ॥ उद्घाटितेमुखेतस्याःसर्पमेवददर्शसः ॥ एवंवारत्रयंतस्मैदर्शयित्वाद्भुतंमहत् ॥ १७ ॥ तूष्णींतस्थौगुरुःसो ऽपिराजात्मानंविगर्हयन् ॥ तत्कथायांचसंदेहंत्यक्त्वातद्भक्तिमानभूत् ॥ १८ ॥ अस्यभ्राताकनिष्ठोभूदग्रदासइतिश्रुतः ॥ वक्ष्येत द्भक्तिमाहात्म्यंपरमाश्चर्यकारकम् ॥ १९ ॥ एकदाचाग्रदासंतंद्रष्टुंराजासमागतः ॥ स्वसैन्यंद्वारतोबाह्येधृत्वाराजाततोगृहम् ॥ २० ॥ अग्रदासस्तदागेहात्पुष्पवाट्यांजगामह ॥ तत्रशुष्काणिपर्णानिसंमार्ज्यबहिरत्यजत् ॥ २१ ॥ राजागत्वासतस्याग्रेस्वासनस्थंददर्श तम् ॥ दर्शनीयंविधायाग्रेप्रणनामातिदासवत् ॥२२॥ अथपप्रच्छकुशलमग्रदासोनृपंमुदा ॥ सोऽपितंप्रणिपत्याहकथमन्यांनिजेप्सि ताम् ॥ २३ ॥ अथाग्रदासःसंमार्ज्यपुष्पवाटीमुपागतः ॥ गृहद्वारिनवैगंतुंतस्मैतेराजकिंकराः ॥ २४ ॥ ददुस्तत्रैवतिष्ठत्वंराजातत्रग तोऽधुना ॥ इतिब्रुवंतस्तद्वाक्यंश्रुत्वातत्रैवसंस्थितः ॥ २५ ॥ द्वारिसंचिंत्यतन्नामहृदिदंभविवर्जितः ॥ अथांतरेसमायातोनाभादासः

क्वचिद्गतः ॥ २६ ॥ ददर्शगुरुमासीनमग्रदासंधरातले ॥ अहोकिमेतदित्युक्त्वाअग्रनामाततस्तुतम् ॥ २७ ॥ प्राहाग्र
दासोराज्ञोवैभृत्यैरेतैर्निवारितः ॥ तिष्ठाम्यत्रैवकिंतेनयथातत्त्वादृशंत्विदम् ॥ २८ ॥ ॥ इतिश्रुत्वासतान्भृत्यान्संनिवर्त्यगुरुं
ततः ॥ पुरस्कृत्यगतस्तत्रयत्रासीन्नृपतिःस्थितः ॥ २९ ॥ तंदृष्ट्वातेसमुत्तस्थूराजापिपरमादरात् ॥ दंडवन्निपपाताथरा
जातस्मिन्क्षणेपुनः ॥ ३० ॥ आसनस्थोऽग्रदासस्तुतत्रैवांतर्दधेस्वयम् ॥ दृष्ट्वैतत्परमाश्चर्यंततउत्थायभूपतिः ॥ ३१ ॥
नामाख्यंपृष्टवान्सर्वंनाभादासस्तमब्रवीत् ॥ तवभक्त्यानृपगुरुःकार्य्यांतरमकल्पयत् ॥ ३२ ॥ ततःस्वयंसमायातस्तत्तिरोभावय
न्वपुः ॥ नचैवाश्चर्यमेतद्धिराजन्नेषांमहात्मनाम् ॥ ३३ ॥ नचात्रविस्मयःकार्योमहदाचरिताद्भुतम् ॥ ततआगत्यराजातुमानसिं
होऽतिभक्तिमान् ॥ ३४ ॥ अग्रदासंतुतुष्टावस्वापराधंक्षमापयन् ॥ अग्रदासोदितंप्राहसंतुष्टोऽहंनराधिप ॥ ३५ ॥ अज्ञानद्भिस्तुतेभृ
त्यैर्द्वारेऽहंरोधितोनृप ॥ नतत्रतवदोषोऽस्तिनचतेषामपिध्रुवम् ॥ ३६ ॥ इतिश्रुत्वावचोराजातुतोषप्रणिपत्यतम् ॥ आजगामस्व
नगरंतद्भक्तिहृदिचिन्तयन् ॥ ३७ ॥ इत्युक्तमग्रदासस्यभक्तिमाहात्म्यमुत्तमम् ॥ श्रुत्वैतत्परमाख्यानंविष्णुभक्तिंलभेन्नरः ॥ ३८ ॥
इति श्रीभगवद्भक्तिमाहात्म्येकील्हाग्रदासचरितंनामसप्तविंशः सर्गः ॥ २७ ॥ ॥ छ ॥ ॥ छ ॥ शंकराचार्यमाहात्म्यंकथयामि
महाद्भुतम् ॥ यस्यश्रवणमात्रेणसद्भक्तिंलभतेनरः ॥ १ ॥ देशेतुद्राविडेपुण्येतुंगाभद्रेतिनामतः ॥ नद्यौपापविनाशिन्यौपुण्यदःसंगम
स्तयोः ॥ २ ॥ शृंगेरीइतिविख्यातस्तत्रग्रामोऽतिपुण्यवान् ॥ तत्रासन्ब्राह्मणाःपुण्यावेदवेदांगपारगाः ॥ ३ ॥ अध्यापयंतोवेदांश्चसर्वे

यज्ञविशारदाः ॥ दयाधर्म्मरताःसर्वेनिजदाररताःसदा ॥ ४ ॥ ब्रह्मलोकइवाभातिपृथिव्यांनगरंतुतत् ॥ तत्रब्रह्मकुलेसाधावतीर्णोम
हेश्वरः ॥ ५ ॥ शंकरःशंकरेत्येतन्नाम्नासंप्रार्थितःसुरैः ॥ घोरेकलियुगेप्राप्तेलुप्तेयज्ञादिकर्म्मणि ॥६॥ सर्वेजनमतैर्मुग्धानास्तिका
धर्म्मनिंदकाः ॥ दानश्रद्धाव्रतादीनांद्वेषिणोजातिवर्जिताः ॥७॥ वर्णाश्रमच्युताः सर्वेहव्यकव्यबहिष्कृताः ॥ असच्छास्त्रप्रवक्तारःसच्छा
स्त्रत्यागिनोनराः ॥ ८ ॥ ततःस्वभागमप्राप्यदेवाइंद्रपुरोगमाः ॥ ब्रह्माणंशरणंसर्वेहव्यकव्यबहिष्कृताः ॥९॥ जानाम्यहंभवंतस्तुय
दर्थमिहचागताः ॥ तस्योपायंकरिष्यामियूयमायातपृष्ठतः ॥ १० ॥ इत्युक्त्वाप्रययौधातायत्रासौगिरिजापतिः ॥ तत्रासीनंददर्शाथ
विष्णुनासहशंकरम् ॥ ११ ॥ तत्रोपविश्यधाताताबुवाचहरिशंकरौ ॥युवयोर्बलमाश्रित्यमयासृष्टमिदंजगत् ॥ १२ ॥ तदिदानींकर्म्म
भूमौजैनाचाररतानराः ॥ तत्यजुर्वेदशास्त्राणियज्ञदानतपःक्रियाः ॥१३॥ ततोऽमीदेवगंधर्वयक्षकिन्नरपन्नगाः ॥ अप्राप्यबलिभागंतेदी
नाःप्राणावशेषिताः ॥१४॥ युवांशरणमायाताःकुरुतंतत्प्रतिक्रियाम् ॥ इत्युक्ताप्राहभगवानेतदर्थमहंपुरा ॥१५॥ युष्मदागमनंज्ञात्वा
समायातोऽत्रशंकरः ॥यद्वदिष्यतिलोकानांहितंकुर्मोवयंहितत् ॥ १६ ॥ इतिश्रुत्वावचस्तस्यतदाप्रोवाचशंकरः॥अहोयथाभवेत्स्वस्ति
प्रजानांगरुडध्वज ॥१७॥ तद्विचार्यवदस्वत्वंवचनंकरवाण्यहम् ॥ इतिश्रुत्वावचस्तस्यशंकरस्यतथाविधिः ॥१८॥ प्रोवाचाहंप्रवक्ष्या
मियथास्यात्स्वस्तिमज्जगत् ॥ अहोभवश्चविष्णुश्चसर्वेवयमतःपरम् ॥१९॥ गत्वापृथिव्यामंशेनप्रादुर्भूयद्विजालये ॥ वेदाञ्छास्त्राणिय
ज्ञादीन्संस्थाप्यजैनशासनम् ॥ २० ॥ तिरस्कृत्यागमिष्यामस्ततःक्षेमंभविष्यति ॥ इत्युक्तोवेधसातौतुस्वीचक्रातेहराच्युतौ ॥२१॥

ययौस्वधामसविधिर्विसर्ज्यैंद्रादिकान्सुरान् ॥ विचिंत्यमिथिलायांसप्रजापतिरवातरत् ॥ २२ ॥ श्रीमंडनविमिश्रोहिनामद्विजकुलेवि
धिः ॥ भगवानपितत्रैवमिथिलायांजनार्दनः ॥२३॥ श्रीमदुदयनाचार्य्यरूपेणावततारह ॥ महादेवोऽपिद्रविडदेशेब्रह्मकुलेप्रभुः ॥२४॥
शंकराचार्यनाम्नावैसंजातोद्विजमंदिरे ॥ कथामस्यप्रवक्ष्यामिपूर्वंपश्चात्तयोरपि ॥ २५ ॥ सतुविप्रकुलेजातःसाक्षाद्देवसदाशिवः ॥
अनायासेनवेदांश्चशास्त्राण्यध्यैष्टसर्वशः ॥ २६ ॥ कृत्वासब्रह्मचर्यंतुगार्हस्थ्यारण्यवर्जितम् ॥ दंडंजग्राहविधिनासंन्यस्तोऽभून्महामतिः
॥ २७ ॥ धर्मंसर्वत्रसंस्थाप्यपश्चिमायांतुकश्चन ॥ राजासीज्जैनशिष्यस्तुमहामूर्खोऽतिनास्तिकः ॥ २८ ॥ तस्यराज्येजनाःसर्वे
नास्तिकाएवकेवलम् ॥ नतेश्रद्दधिरेमूर्खाःशंकराचार्य्यभाषितम् ॥ २९ ॥ तथापिनास्तिकग्रंथखंडकंपुस्तकंनिजम् ॥
श्रावयामासराजानंसराजादैवयोगतः ॥ ३० ॥ ममारश्रुत्वातंस्वामीशिष्यान्प्राहात्रमेवपुः ॥ रहःसंस्थाप्यरक्षंतुतैलद्रोण्यांनिरं
तरम् ॥ ३१ ॥ षण्मासांतेपुनरहमायास्यामिवपुष्यथ ॥ तथारुचिंकरिष्यामिततोऽहंदुष्टशासनम् ॥ ३२ ॥ अहंराज्ञःशरीरेतुगत्वा
तत्रनिजंमतम् ॥ निर्मायराज्येसंस्थाप्यवेदान्नेष्याम्यसंशयम् ॥ ३३ ॥ इत्युक्त्वासगतःस्वामीराज्ञोवपुषितत्क्षणात् ॥ पर
कायप्रवेशादिसिद्धिभिःसेवितोयतिः ॥ ३४ ॥ ततोराजगृहेराजाजिजीवेत्यब्रुवञ्जनाः ॥ सर्वेमुमुदिरेतत्रमहोत्साहंप्रचक्रिरे ॥ ३५ ॥
अथराजासमुत्थायसचिवानिदमब्रवीत् ॥ अहोमृतोगतोऽहंतुधर्मराजसमीपतः ॥ ३६ ॥ तत्रदृष्ट्वासमाहूययमोदूतानवोचत ॥ अरेऽ
स्यवर्ततेचायुर्नेदानींमत्प्रशासनम् ॥ ३७ ॥ अर्हत्ययंततोयूयमेनंनयतस्वंवपुः ॥ इतिश्रुत्वाअर्हतैस्तुनीतोऽस्मिस्वशरीरके ॥ ३८ ॥

तत्रयावत्स्थितोऽहंतुदृष्टवान्परमाद्भुतम् ॥ सत्यंवेदाश्चयज्ञाश्चधर्मशास्त्रव्रतंतपः ॥ ३९ ॥ एतन्मार्गरतायेवैवेदशास्त्रपरायणाः ॥ तान्दृष्ट्वासौम्यरूपःसचतुर्बाहुर्हसन्मुखः ॥ ४० ॥ प्रणम्यपूजयित्वातान्प्रस्थापयतिवैदिवम् ॥ येत्वभक्तावेदशास्त्रेयज्ञकर्म्मविनिंदकाः ॥ ४१ ॥ अनीश्वरपथारूढानास्तिकाःश्रांतचेतसः ॥ तान्दृष्ट्वासहसोत्थायवापीसद्दशलोचनः ॥ ४२ ॥ महोग्रदीर्घदंष्ट्राभिर्भयंकरमुखःस्वयम् ॥ दंडमादायकोपेनमहादीर्घवपुर्द्धरः ॥ ४३ ॥ हत्वादंडेनतान्सर्वान्स्थापयत्यतिदुःखदे ॥ कुंडेकुंडेपूयकृमिविडंगारास्रसंकुले ॥ ४४॥ एवंसाक्षादहंदृष्ट्वासमायातोऽस्मितत्क्षणात् ॥ तस्मान्मतमिदंसर्वंनिर्मूलंनात्रसंशयः ॥ ४५ ॥ अस्तिस्वर्गश्चनरकोवेदाःशास्त्राणिसंतिभो ॥ देवायज्ञश्चधर्म्मश्चसत्यंतेनात्रसंशयः ॥४६॥ अतोयाततदेवाहंमतमंगीकरोमिच ॥ यूयमन्येचयेकेचिन्ममराज्यनिवासिनः ॥ ४७ ॥ वेदमार्गेणगच्छंतुत्यक्त्वातन्नास्तिकंमतम् ॥ इमामाज्ञांसमुल्लंघ्यप्रस्थास्यतिनराधमः ॥ ४८ ॥ तंतुहन्मिनसन्देहःसत्यमेतद्ब्रवीम्यहम् ॥ आनयध्वमतोगाश्चरत्नानिकनकानिच ॥ ४९ ॥ ब्राह्मणावेदशास्त्रज्ञास्तेभ्योदास्याम्यहंधनम् ॥ पूजोपकरणंसर्वंदेवताप्रतिमास्तथा ॥ ५० ॥ शालग्रामशिलाराज्येस्थाप्यतांप्रतिमन्दिरम् ॥ इत्याज्ञांनृपतेःसर्वेपुरस्कृत्ययथोक्तवत् ॥ ५१ ॥ चक्रुस्तेसचिवाअन्यैःकारयामासुरादरात् ॥ अथराजापिसुस्नातःसंपूज्यमनसाहरिम् ॥ ५२ ॥ दत्त्वाधनानिविप्रेभ्योराजकार्य्यपरोऽभवत् ॥ ५३ ॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्येशंकराचार्यचरितंनामाष्टाविंशःसर्गः ॥ २८ ॥ अथतेसचिवास्तंतुराजानंप्राहुरानताः ॥ राजन्वेदानसंत्यत्रशास्त्राण्यपिनकानिचित् ॥ १ ॥ यज्ञंतपोवादानंवानजानातीहकश्चन ॥ ततः

किंनुकरिष्यामस्तद्वदात्रमहीपते ॥ २ ॥ इतितेषांवचःश्रुत्वाराजाप्राहाथमंत्रिणम् ॥ अत्रागतोऽभून्मेस्वामीशंकराचार्य्यनामतः ॥
॥ ३ ॥ सशिष्योयदिवात्रस्थःशिष्यावायदिसंतिचेत् ॥ तद्द्वारावेदशास्त्राणिप्रकटानिकरोम्यहम् ॥४॥ तमानयध्वंवैचात्रशिष्यान्वा
ममसन्निधिम् ॥ इत्युक्ताःसचिवास्तेतुशिष्यान्नीत्वानृपांतिकम् ॥ ५ ॥ आनयित्वाददौराज्ञेराजातानब्रवीत्स्वयम् ॥ भवंतोवेद
शास्त्राणियज्ञव्रततपांसिच ॥ ६ ॥ शिक्षयंतुजनान्सर्वान्ममाग्रेऽपिचकेचन ॥ समेत्यशास्त्रंगृह्णंतुमयायद्यत्प्रदीयते ॥ ७ ॥ इत्युक्त्वा
तान्सशिष्यान्सराजासर्वस्वयंपुनः ॥ शास्त्रमध्यापयामासवेदान्यज्ञादिकाःक्रियाः ॥ ८ ॥ ततस्तेराज्यवासिभ्योविद्यांशिष्याददु
र्मुदा ॥ एवंसंपूर्णराज्येतुवेदशास्त्रव्यवस्थितिः ॥ ९ ॥ संपन्नोनृपतिस्सोऽपिददौदानमनेकशः ॥ तदाराज्येस्थितायेवैनास्तिकास्ते
दिशोदश ॥ १० ॥ प्रपलाय्यगतास्तूर्णमात्मरक्षणतत्पराः ॥ अथजातेतुषण्मासेस्वामीराजशरीरगः ॥ ११ ॥ नाजगामनिजेदेहे
शिष्योगत्वारहोब्रवीत ॥ स्वामिन्व्यतीताःषण्मासास्तैलेदेहोऽस्तियःपुनः ॥ १२ ॥ तस्यकिंवाकरिष्यामितदाज्ञापयमांविभो ॥
इतिश्रुत्वासशिष्यस्यवचनंप्राहतंपुनः ॥ १३ ॥ स्वामीराजाथसंरक्ष्यंप्रातरेष्याम्यसंशयम् ॥ ततउत्थायराजातुसचिवानाजुहावच ॥
॥ १४ ॥ आगतांस्तानुवाचेदंसचिवान्समहीपतिः ॥ अहोरात्रौमयास्वप्नोदृष्टःप्राणहरोनृणाम् ॥ १५ ॥ इदानीमपिनासाग्रंनपश्या
मितथापुनः ॥ नशृणोमिप्रयत्नेनप्राणघोषानपिस्वयम् ॥ १६ ॥ अतोऽहंतनयंज्येष्ठमभिषिंचामिसत्कृतम् ॥ राज्येयूयंमंत्रिणस्तु
यथातस्यहितंभवेत् ॥ १७ ॥ तथातथातुकर्तव्यंयुष्माभिर्धर्म्मतत्परैः ॥ इदानीमेवसामग्रींसंपादयतमाचिरम् ॥ १८ ॥

इतिश्रुत्वावचस्तस्यराज्ञस्तेसचिवाद्भुतम् ॥ संपाद्यसर्वसामग्रींशोकार्ताअब्रुवन्नृपम् ॥ १९ ॥ ततोराजासुतंज्येष्ठमभ्यषिं
चत्स्वमंत्रिभिः ॥ धर्म्मकार्य्यंतथाराजाऽकरोत्सर्वानुवाचह ॥ २० ॥ यथायोग्यमथैवन्तुनिनायतदहर्नृपः ॥ प्रातःकालेसमुत्थाय
स्नात्वासंपूज्यकेशवम् ॥ २१ ॥ दत्त्वादानंद्विजातिभ्योसंस्थाप्यनृषुवैष्णवीम् ॥ भक्तिममारनृपतिर्नारायणपदंवदन् ॥ २२ ॥
अथागत्यनिजेदेहेतैलादुत्थायचस्वयम् ॥ पूर्ववत्सहशिष्यैस्तुशंकराचार्यआस्थितः ॥ २३ ॥ ततःश्रुत्वातुतान्स्वा
मीनास्तिकान्मरुदेशगान् ॥ तत्रापिराजाबौद्धस्यशिष्याःसर्वेऽतिनास्तिकाः ॥ २४ ॥ तैःसाकंबहुधातस्यविवादःसमजायत ॥ परा
जिताअपितथानामन्यतपराजयम् ॥ २५ ॥ अथैकदातुनृपतीररामग्रामबाह्यतः ॥ पंचभूमौप्रसादेचस्थितस्तत्रगतावुभौ ॥२६॥ शंक
राचार्य्यस्वामीतुजैनाचार्य्यस्तथापरः ॥ तत्रैववादंकुर्वन्तौनैकोऽपिचपराजितः ॥ २७ ॥ ततोजैनमताचार्य्योराजानमिदमब्रवीत् ॥
राजन्निदानीमत्रैवमहाश्चर्य्यंभविष्यति ॥ २८ ॥ तत्पश्यपूर्वमेवाहंजानामिनिजशक्तितः ॥ अत्राकस्माद्धरांभित्त्वाजलंप्रादुर्भ
विष्यति ॥ २९ ॥ तज्जलंवर्द्धमानंतुसर्वमेतद्गृहंतव ॥ मज्जयिष्यतिनौरेकातस्मिन्नायातिसास्वयम् ॥ ३० ॥ तत्रारूढस्तरेद्वारिनोचे
न्मग्नोभविष्यसि ॥ इत्युक्त्वामाययासर्वंचकारनास्तिकोत्तमः ॥ ३१ ॥ स्वामीज्ञात्वातुतत्सर्वंतन्मायांविललापसः ॥ स्वप्नंतथाक
रोत्सर्वंतत्रैवनास्तिकःसतु ॥ ३२ ॥ विश्वस्तोनिजमायायामागतेवारिसंचये ॥ राजानमाहपश्येदंवारिराजन्समागतम् ॥३३ ॥ अतः
परंकथंह्यत्रतिष्ठामोवारिराशिषु ॥ नौरेषायासमायातातस्यांस्थित्वातयावयम् ॥ ३४ ॥ तरिष्यामोनसंदेहःश्रुत्वैतद्वचनंद्रुतम् ॥ अ

ब्रवीच्छंकराचार्य्योराजन्गच्छत्वयंपुरा ॥ ३५ ॥ ततोभवांस्ततोऽहंतुनावियास्यामिचस्वयम् ॥ इतिश्रुत्वाततोराजातंनास्तिकमुवा
चह ॥ ३६ ॥ गच्छत्वंप्रथमंशीघ्रंनौकायांतदनंतरम् ॥ यास्येऽहमेषस्वामीतुपश्चात्तत्रागमिष्यति ॥ ३७ ॥ इत्युक्त्वाजैनसिद्धांतीस्वा
मीमायेतिनिश्वसन् ॥ आरुरोहचतांनौकांनृपोऽपिचलितोऽभवत् ॥ ३८ ॥ हस्तंगृहीत्वातंस्वामीन्यवारयतवैबलात् ॥ अथासौनौक
यारूढोराज्ञएवमभून्मतिः ॥ ३९ ॥ सतुतत्रगतोऽत्युच्चैराकाशात्पतितोभुवि ॥ हस्तौपादौतदैकत्रशिरश्चैकत्रतस्यह ॥ ४० ॥ पपा
ततत्क्षणान्नौकाजलंचादृश्यतांययौ ॥ इतिदृष्ट्वाद्भुतंराजाशंकराचार्य्यमब्रवीत् ॥ ४१ ॥ किमिदंकथयस्वामिन्महाश्चर्य्यमभूदिदम् ॥
श्रुत्वैतद्वचनंराज्ञःस्वामीवचनमब्रवीत् ॥ ४२ ॥ राजन्नेषमहादुष्टोनास्तिकोनिजमायया ॥ मिथ्याजलंतथानौकांदर्शयित्वाथदुर्जनः
॥ ४३ ॥ मांनिहंतुंसमुद्युक्तस्तत्रसंस्थाप्यचेत्यहम् ॥ ज्ञात्वामायांनिजांकृत्वातन्मायानाशितामया ॥ ४४ ॥ तत्तुनावेत्सदुष्टात्मास्वमा
येतिचनिःश्वसन् ॥ भवद्वाक्याच्चनौकायांगतोनिपतितोभुवि ॥ ४५ ॥ सर्वंमिथ्येतिज्ञात्वाहंभयात्त्वांप्रत्यषेधयम् ॥ एनंपश्यमृतंभूमौ
स्वकर्मवशतःखलम् ॥ ४६ ॥ धर्म्मंचैवतुत्वंत्यक्त्वाकौलीनंराजसत्तम ॥ ननास्तिकपथेघोरेगंतुमर्हसिभूपते ॥ ४७ ॥ इत्युक्तोभूपतिः
प्राहशंकराचार्य्यमानतः ॥ अहोस्वामिन्मयाप्येतज्ज्ञातंसर्वंनसंशयः ॥ ४८ ॥ मिथ्यैवनास्तिकमतंत्यक्तमेतन्मयापिभोः ॥ अतःप
रंभवानेवमंत्रंमेदातुमर्हति ॥ ४९ ॥ ॥ ततःस्वामीहरेर्मंत्रंददौराज्ञेऽतिभक्तिदम् ॥ राजागृहीत्वामंत्रंतुस्वराज्येसचिवादिकान् ॥ ५० ॥
आज्ञापयामासतदात्यक्त्वावैजैनशासनम् ॥ वेदशास्त्ररताःसर्वेभवंतःप्रभवंतुभोः ॥ ५१ ॥ एवमाज्ञांपुरस्कृत्यसचिवाद्यास्ततःपरम् ॥

वेदशास्त्रोक्तमार्गेणबभूवुरतिवैष्णवाः ॥ ५२ ॥ एवंतत्रापिसंस्थाप्यवेदशास्त्राणिचप्रभुः ॥ पर्यटन्पृथिवीमेतांमिथिलायामुपागतः ॥
॥ ५३ ॥ ददर्शमिथिलांरम्यांब्राह्मणैरतिसंकुलाम् ॥ मीमांसान्यायवेदांतसांख्यसिद्धांतमंडिताम् ॥ ५४ ॥ सांगोपांगंयजुर्वेदंपठ
द्भिर्ब्राह्मणैर्युताम् ॥ प्रतिग्रामद्विजगणैर्नमस्कृत्यसुपूजितः ॥ ५५ ॥ एवंदृष्ट्वासमिथिलांस्वामीसम्यक्तुतोषह ॥ ५६ ॥ इति
श्रीभगवद्भक्तिमाहात्म्येशंकराचार्य्यचरितंनामैकोनत्रिंशःसर्गः ॥ २९ ॥ मिथिलायांततःस्वामीजनकस्यगृहस्थलम् ॥ गत्वाप्रथ
मतस्तत्रधनुःखंडंददर्शह ॥ १ ॥ यद्भंजरघुश्रेष्ठःसीतापाणिग्रहोद्यमे ॥ ततोऽविदूरेगिरिजांविदेहकुलदेवताम् ॥ २ ॥ ददर्शाथ
ततोमत्वाव्याघ्रतीर्थमनुत्तमम् ॥ शरविंदुह्रदेतत्रस्नात्वादृष्ट्वामहेश्वरम् ॥ ३ ॥ शिलानाथंततोगत्वाश्रीमन्मंडनशर्म्मणः ॥
गृहंजगाममध्याह्नेशिष्यैःसर्वैःसमन्वितः ॥ ४ ॥ तंदृष्ट्वादंडिनंमिश्रःसमुत्थायाग्रतोययौ ॥ नमस्कृत्यस्वयंतंतुपाद्यार्घ्याद्यैरपूजय
त ॥ ५ ॥ ततोऽन्नंभोजयामासस्वामिनंबहुभक्तितः ॥ ततःस्वयंसशिष्यस्तुभुक्त्वामंडनमिश्रकः ॥ ६ ॥ स्वामिन्विज्ञातुमि
च्छामियदिकोपोनतेभवेत् ॥ त्वंहिनारायणःसाक्षादतःपूर्वंक्षमापये ॥ ७ ॥ आगत्याचार्य्यनिकटेददौतस्मैसुखास्तरम् ॥ तस्मि
न्स्वामीविशश्राममतंमिश्रः पुनरब्रवीत् ॥८॥ इत्युक्तः शंकराचार्य्यस्तमुवाचाथसस्मितम् ॥ माभयंकुरुमत्तस्त्वंनाहंक्रोधवशंगतः ॥९॥
अधः पततिसत्यंहिक्रोधलोभवशोयतिः ॥ तस्मात्त्वंनिर्भयंपृच्छयद्योग्यंतद्ददाम्यहम् ॥ १० ॥ एवंमंडनमिश्रस्तुश्रुत्वास्वामिन
मब्रवीत् ॥ अहोकलौनिषिद्धोऽपिसंन्यासोयद्यपिप्रभो ॥ ११ ॥ बलात्त्वयागृहीतश्चेद्धाभोऽस्माकंमहानयम् ॥ यत्पुस्तकेभिक्षुधर्म्माः

स्वरूपंच श्रुतंमुहुः ॥ १२ ॥ दृष्ट्वेदानींभवंतंतत्साक्षात्पश्यामिचक्षुषा ॥ अद्यावधिनकेनापिकृतः कुत्रापिवैप्रभो ॥ १३ ॥ इतिमिश्रव
चः श्रुत्वास्वामीप्राहातिहृष्टवत् ॥ अहोभवान्कथमिदंब्रूतेचित्रंममाग्रतः ॥१४॥ विज्ञायसर्वशास्त्राणिसंन्यासोवर्जितः कलौ ॥ कलाव
पिविधिंमत्तः संन्यासस्यनिशामय ॥ १५ ॥ इत्युक्त्वाधर्मशास्त्राणांवचनान्यब्रवीत्ततः ॥ ततोमिश्रोऽपितत्पक्षखंडनायाब्रवीद्वचः ॥
॥ १६ ॥ एवंतयोरभूत्तत्रविचारःकतिवासरान् ॥ नकोऽप्याप्नोतिविजयंनकोऽपिचपराजयम् ॥ १७ ॥ ततएकदिनेस्वामीप्राहमंडनमि
श्रकम् ॥ अहोभवानपिब्रूतेतथाहमपितद्वयम् ॥ १८ ॥ मध्यस्थेनविनाचेत्थंनसिद्धांतोभविष्यति ॥ तस्मात्तवेयंयापत्नीसैवदेवी
सरस्वती ॥ १९ ॥ तामाभाष्यावयोर्ज्ञानेविचारेसाधुनस्तुयत् ॥ कथयिष्यतिमांत्वांतुससिद्धांतोनसंशयः ॥ २० ॥ इतिश्रुत्वावच
स्तस्यमिश्रोऽप्यंगीचकारतत् ॥ ततोमिश्रस्त्रियंस्वामीप्राहत्वमसिभारती ॥२१॥ आवयोः शास्त्रकलहेसिद्धांतंवदनौहितम् ॥ इत्युक्ता
सामिश्रपत्नीप्राहाहंयुवयोर्वचः ॥ २२ ॥ श्रुतवत्यस्मिचाद्यापिशृण्वंतीगृहकर्मच ॥ कुर्वाणानोवदिष्यामिसिद्धांतंनात्रसंशयः ॥ २३॥
इत्युक्त्वासातुसंपाद्यस्वयंपाकंशुचिव्रता ॥ तयोरंतिकमागत्यवाग्भिर्विवदमानयोः ॥ २४ ॥ पतिंप्राहातिविनयात्पश्यतांविदुषांनृणाम् ॥
विवादादातुरोजातः स्वाम्यभिज्ञांचराधुना ॥ २५ ॥ इतितस्यावचः श्रुत्वामिश्रस्तूष्णींबभूवह ॥ स्वामीतुतांमिश्रपत्नीमाशीर्भिरभ्य
वर्द्धयत् ॥२६॥ तदान्येपंडिताः सर्वेस्थितायेतुसभासदः ॥ अबुध्यंताशेषवाक्यमाचार्यमतमुत्तमम् ॥२७॥ परंत्वातुरसंन्यासोनसर्वेषा
मितिस्फुटम् ॥ इतिज्ञात्वापुनर्मिश्रः स्वामिनंप्राहसस्मितम् ॥ २८ ॥ अहोऽनयायदुक्तंतेआतुरोजातइत्यपि ॥ तस्मादातुरसंन्यासस्वी

करोमिकलावपि ॥ २९॥ नत्वाश्रमश्चतुर्थोऽयंसिद्ध्यत्यस्मिन्पुरोनृणाम्॥त्वादृशः पुरुषश्चस्याद्विधयानियमेनच ॥३०॥ जितारिवर्गो निर्द्वंद्वोतदान्यस्तोभवेद्विजः ॥ इति मंडनमिश्रस्यश्रुत्वास्वामीवचोऽब्रवीत् ॥३१॥ अहोसत्यमिदंब्रूषेसर्वसिद्धांतसम्मतम्॥मतमेतन्नसंदेहः सिद्धांतोऽयंनसंशयः ॥३२॥ अतःपरंसमुत्तिष्ठजातःपाकोऽस्तिमंदिरे॥दत्त्वास्मभ्यंस्वयंभुंक्ष्वकथापश्चाद्भविष्यति ॥३३॥ इत्युक्तः संस्थितोमिश्रोदत्त्वातेभ्यस्तुभोजनम् ॥ स्वयंतुबुभुजेशिष्यरागतैः पंडितैःसह ॥३४॥ उत्थायचततः स्वामीप्रहृष्टेनांतरात्मना॥न्यायमीमांसयोर्व्याख्यांमिश्रेणचकृतांपुनः ॥ ३५ ॥ गृहीत्वाशिष्यसहितःप्रतस्थेमिथिलांपुरीम् ॥ एवंश्रीशंकराचार्यश्रीमन्मंडनमिश्रयोः ॥ ३६ ॥ संवादोवर्णितोभक्तेः प्रसिद्धोधरणीतले ॥ इतिश्रीभगवद्भक्तिमाहात्म्ये श्रीशंकराचार्यमंडनमिश्रचरितंनामत्रिंशः सर्गः ॥ ३० ॥ छ ॥ अथवक्ष्येतृतीयस्यहरेरंशस्यधीमतः ॥ उदयनाचार्यनाम्नस्तुमाहात्म्यंलोमहर्षणम्॥ १ ॥ भूत्वासमिथिलायांतु शास्त्राण्यध्यैष्टसर्वशः ॥ विशेषतोन्यायशास्त्रेसाक्षाद्वैगौतमोमुनिः ॥ २ ॥ बौद्धसिद्धांतमुग्धांतःसुखायहितकारिणीम् ॥ वितेनेविदुषांप्रीत्यैविमलांकिरणावलीम् ॥३॥ एकदाबौद्धसिद्धान्तान्प्रकटीकर्तुमागतः ॥ बौद्धाचार्योऽतीवभक्तोनृपग्रामंसमागतः ॥४॥ स्वशिष्यैः स्वीयशास्त्रस्यपुस्तकैर्बहुभिर्वृतः ॥ राजानंप्रेषयामासदूतंदर्पवशादसौ ॥ ५ ॥ किंचिच्छिवंगच्छशिष्यमिथिलेशंवदाधुना ॥ मद्वाक्याद्वेदशास्त्राभ्यांमुधा भ्रांतोऽसिभूपते ॥ ६ ॥ निरीक्ष्यममशास्त्राणिप्रत्यक्षानुगतोभव ॥ अस्तिचेत्तवदेशेऽस्मिन्वेदस्थापनकृत्पुमान् ॥ ७॥ तमानयमयासार्द्धंविचारंप्रकरोतुसः ॥ तदाराजातुश्रुत्वैतद्वचनंवेदभाषितम् ॥ ८ ॥ उवाचदूतंगच्छत्वंस्वगुरुं

ब्रूहिमेवचः ॥ अहंभ्रांतःसचेद्भ्रांतइत्येवंनिश्चयोमहान् ॥ ९ ॥ आगच्छसदसिप्रातःसतेव्यक्तीभविष्यति ॥ इत्युक्तःसगतोदूतः प्राह सर्वंनृपोदितम् ॥ १० ॥ गुरवेसतुशृण्वन्वैजहासातिमुदान्वितः ॥ अथराजातत्क्षणात्तुदेशस्थान्पंडितान्बहून् ॥ ११ ॥ श्रीमदु दयनाचार्य्यमुख्यांस्तानपिचोक्तवान् ॥ अहोऽयंनास्तिकोग्रामेसमायातोऽतिपंडितः ॥ १२ ॥ अनेनविवदध्वंवैयूयंयदिसचेज्जयेत् ॥ तदाहंचभवंतश्चसर्वेतन्मतगामिनः ॥१३॥ भविष्यामोनसंदेहोभवतांचेज्जयोभवेत्॥तदाहंभवतांदास्यंकरिष्यामिनसंशयः ॥ १४ ॥ इत्युक्तास्तेतुविद्वांसःसर्वेतूष्णींस्थिताअथ ॥ श्रीमदुदयनाचार्य्यस्तेषांमध्येऽब्रवीन्नृपम् ॥ १५ ॥ सत्यमात्थमहाराजशृणुकिंचिन्मयो दितम्॥जयःपराजयोवापिश्रीहरेरिच्छयानृणाम् ॥ १६ ॥ यथाशक्तिविवादंतुकरिष्यामिनसंशयः ॥ त्वंतुचिंतांपरित्यज्यपश्यास्मा कंपराक्रमम् ॥ १७ ॥ इत्युक्त्वानृपतिंग्रामेतस्थुःसर्वेऽथपंडिताः॥द्वितीयेदिवसेप्रातेराजासंसदिचागतः ॥ १८ ॥ आहूयपंडितान्सर्वा स्तंचापिजिनशास्त्रिणम् ॥ उवाचह्युभयोरस्तुविचारःपश्यतोमम ॥ १९ ॥ इतिराजवचःश्रुत्वानास्तिकःपूर्वमब्रवीत्॥अहोविचारउभ योःसतोर्भवितुमर्हति ॥२०॥ तसर्वेसत्पथारूढाःकिंवदिष्यंतिमामिह । इतिश्रुत्वावचस्तस्यनास्तिकस्यदुरात्मनः ॥२१॥ उवाचोदय नाचार्य्योमतंतन्मतखंडनम्॥एवंबहुदिनान्यासीद्विवादःसुमहांस्तयोः ॥ २२ ॥ तदाबौद्धोहृदामत्वाचार्य्यान्निजपराजयम् ॥ मायां विस्तारयामाससमहाश्चर्य्यप्रदायिनीम् ॥ २३ ॥ उवाचनृपतिंराजन्सर्वेऽमीमद्विरोधिनः ॥ नकोऽपिमद्धितंब्रूतेतदाहोकंवदाम्यहम् ॥२४॥ शालग्रामशिलायांतुसह्यमीषांस्थितोहरिः ॥ तामानयाशुस्वमतैःखंडयामिशिलामहम् ॥ २५ ॥ यदिसाजलवद्भूत्वातस्मादस्य

शिलापुनः ॥ तदायदुक्तंसत्यंस्यादद्यचेत्तांपुनःसतु ॥ २६ ॥ आचार्य्योजलवत्कृत्वाशिलांव्यक्तीकरिष्यति॥तदास्यापिमतंसत्यं
मन्येऽहंनात्रसंशयः ॥ २७ ॥ इत्युक्तःसनृपस्तेनबौद्धेनाथमहीपतिः ॥ ददर्शोदयनाचार्य्यंकिंवदत्येषनास्तिकः ॥ २८ ॥इत्युक्तोभू
मिपतिनाप्राहाचार्योऽतिहृष्टवान्॥ इदंतुमायाचरितंतथापिस्वीकरोम्यहम् ॥ २९ ॥ मायामपिचजानामिपरंत्वेकंब्रवीम्यहम् ॥ जाता
यांचपुनस्तस्यांशिलायांतन्मतद्वयम् ॥ ३० ॥ सत्यंवेतिवदिष्यंतिभ्रांत्यासर्वेसभासदः ॥ तस्मादेकमहंवक्ष्येसत्यमिथ्याविचारणे॥
॥ ३१ ॥ तत्करिष्यत्ययंचेद्वैकरिष्याम्युक्तमप्यहम् ॥ इतिश्रुत्वाततोराजाजैनाचार्यंददर्शह ॥ ३२ ॥ ततोजैनोनृपंप्राहकरिष्या
म्यस्यभाषितम् ॥ इतिश्रुत्वाततोराजाशालग्रामशिलांदृढाम् ॥ ३३ ॥ आनाय्यस्थापयामासस्वर्णस्थाल्यांशुचौभुवि ॥ ततो
बौद्धोऽब्रवीत्स्वीयंमतंदृष्ट्वातुतांशिलाम् ॥३४॥ अथक्षणेनसासर्वाशिलाजलमभूत्तदा॥ ततोऽर्द्धक्षणतस्तद्वैजलमंतर्बभूवह ॥ ३५ ॥ प
श्यतांसर्वलोकानांमहाश्चर्यमभूदिदम् ॥ ततस्तूदयनाचार्योबौद्धसिद्धांतखंडनम् ॥ ३६ ॥ स्वमतंप्राहतूर्णंतज्जलंप्रादुर्बभूवह ॥
ततःक्षणेनतद्वारिसाशिलासमपद्यत ॥ ३७ ॥ ततोराजादयःसर्वेसाधुसाध्वितिवादिनः ॥ प्रशशंसुश्चतंभक्त्योदयनाचार्य्यमादरा
त् ॥ ३८ ॥ आचार्य्यस्तुततःप्राहकथमेषास्तुतिर्मम ॥ स्थितएवमतेह्यस्यतस्मात्कुरुमदीरितम् ॥ ३९ ॥ इत्युक्त्वानास्ति
कंप्राहमायाकारतवेरितम् ॥ अतः परंमतंकस्यसत्यंमिथ्येतिनिश्चितम् ॥ ४० ॥ मयायदुच्यतेतेनप्रकारेणनृपाग्रतः ॥ एषता
लद्रुमोद्धारितिष्ठत्यतिमहानहो ॥ ४१ ॥ तमारुह्यपतिष्यामोयःस्थास्यतिससत्यभाक् ॥ वेदाः प्रमाणमित्युक्त्वानिपतिष्याम्यहं

मुवि ॥ ४२ ॥ त्वंतुवेदाअप्रमाणमित्युक्त्वानिपताधुना ॥ युगपत्पतितोवृक्षाज्जीविष्यतियआवयोः ॥ ४३ ॥ ससत्यवाङ्मतं
तस्यसत्यंलोकस्तुतंभजेत् ॥ एवमाचार्य्यवचनंश्रुत्वासोऽपिजहर्षच ॥ ४४ ॥ स्वीचकारततोराजाताबुभावब्रवीद्वचः ॥ अहोप्रा
णांतकीचेयंपरीक्षानैवशोभना ॥ ४५ ॥ तस्माद्विरमतामत्रयुवामेतद्विचारतः ॥ इतिराजवचःश्रुत्वोदयनाचार्य्यआहतम् ॥ ४६ ॥
तवनास्त्यत्रकिंचिद्वैदोदूषणंनैवपातकम् ॥ स्वशास्त्रभक्तितश्चावांकरिष्यामोयथारुचि ॥ ४७ ॥ त्वमेकस्मिन्मृतेचास्मिन्मयिवानृपस
त्तम ॥ तन्मतंचपरित्यज्यजीवन्मतपरोभव ॥ ४८ ॥ किंचयावंतितेराज्येपुस्तकानिचतानिवै ॥ जलेप्रक्षेपयेश्चैतच्छास्त्रो
पासनकारकाः ॥ ४९ ॥ तान्दंडयित्वायोजीवेदावयोस्तन्मतानुगान् ॥ कुरुष्वेत्यस्ययुक्त्यावैप्रतिज्ञांकुरुभूपते ॥ ५० ॥
इत्युक्तोनृपतिर्जैनाचार्य्यस्यमुखमैक्षत ॥ एवमेषोऽब्रवीत्सोऽपिप्रतिपक्षनृपस्तदा ॥ ५१ ॥ ततउत्थायतेसर्वेआगतास्तालस
न्निधौ ॥ वंशादिनाथतौद्वौतुचारुह्योच्चैर्महातरुम् ॥ ५२ ॥ वेदाःप्रमाणमित्युक्त्वाआचार्योन्यपतद्भुवि ॥ बौद्धोवेदाअप्रमाण
मित्युक्त्वानिपपातह ॥ ५३ ॥ आचार्य्योन्यपतद्भूमौवेदैःसंरक्षितःसुखम् ॥ मंदंमंदंसमागत्यतस्थौचेमंहरिंस्मरन् ॥ ५४ ॥ जैनाचा
र्य्यःपतन्मार्गेभ्राम्यमाणउपर्य्यधः ॥ परिवर्तितशीर्षांघ्रिःपपातधरणीतले ॥ ५५ ॥ व्यस्तमस्तकबाह्वंघ्रिर्निष्प्राणोन्यपतत्खलः ॥
इतिदृष्ट्वामहाश्चर्य्यंसर्वेराजादयोजनाः ॥ ५६ ॥ आचार्य्यंप्रशशंसुस्तेनमस्कृत्यमुहुर्मुहुः ॥ ततोराजावेदशास्त्रंसत्यंमत्वातिभक्तितः
॥ ५७ ॥ स्वराज्येस्थापयामासतदाचारपरःस्वयम् ॥ भूत्वाचकारराज्यंससर्वधर्म्मसमन्वितः ॥ ५८ ॥ नास्तिकस्यतुयान्यासन्

शास्त्राणिपृथिवीतले ॥ तानिसर्वाणिचिक्षेपजलेयेतदुपासकाः ॥ ५९ ॥ तान्सर्वान्दंडयामासचक्रान्नास्तिकसंमतात् ॥ श्रीमदुदयना
चार्य्यंचक्रेराज्यगुरुंनृपः ॥ ६० ॥ जीविकार्थंददौग्रामान्स्वयमाज्ञापरोऽभवत् ॥ एकदोदयनाचार्य्योजगन्नाथदिदृक्षया ॥ ६१ ॥
पुरुषोत्तमपुरेगत्वास्नात्वातत्तीर्थवारिणा ॥ मार्कंडेयोदपानेनमंदिरद्वारमागतः ॥ ६२ ॥ देवंदृष्टुंमंदिरांतःप्रवेष्टुंचलितोयदा ॥ तदा
कपाटःसंलग्नःस्वयमेवनिरीक्ष्यसः ॥ ६३ ॥ द्वारांतरमुपायातस्तत्राप्येवंबभूवह ॥ अथोतृतीयद्वारेतुसंप्राप्तःसयदाद्विजः ॥ ६४ ॥
तत्राप्यसौकपाटस्तुस्वयंलग्नःपुनश्चसः ॥ चतुर्थद्वारमागत्यमंदिरंगंतुमुद्यतः ॥ ६५ ॥ तमप्यपश्यत्संलग्नंकपाटंस्वयमेवहि ॥ इति
कौतुकमेतत्तुपश्यंतस्तेजनाःस्थिताः ॥ ६६ ॥ तदातूदयनाचार्य्यःसस्मितंवाक्यमब्रवीत् ॥ जगन्नाथंसुरश्रेष्ठंभक्त्याहंकारपूर्व
कम् ॥ ६७ ॥ ऐश्वर्य्यमदमत्तोऽसिमामवज्ञायवर्तसे ॥ उपस्थितेषुबौद्धेषुमदधीनातवस्थितिः ॥ ६८ ॥ इत्येवमुक्तेश्लोकेतुसहसोद्घा
टिताःस्वयम् ॥ कपाटास्तत्क्षणादेवनृणांचित्रंतुपश्यताम् ॥ ६९ ॥ तत्रतत्रस्थितायेतुजगन्नाथस्यपूजकाः ॥ तेसर्वेविनयात्तंतुगृही
त्वाचार्य्यमादृताः ॥ ७० ॥ नीत्वाथमंदिरेदेवंदर्शयंतिस्महर्षिताः ॥ सोऽपिदृष्ट्वाजगन्नाथंसंपूज्यस्तुतिभिर्मुहुः ॥ ७१ ॥ स्तुत्वानत्वा
समभ्येत्यबहिर्दत्त्वाधनानिच ॥ उषित्वाकतिचिद्रात्रीःसमायातुमथोद्यतः ॥ ७२ ॥ अथस्वप्नेजगन्नाथःसंपूज्यब्राह्मणान्स्वयम् ॥उवा
चममयच्चास्तिपीतांबरमनुत्तमम् ॥७३॥ तद्देयमुदयनाचार्येविद्वान्सोऽतीवमेप्रियः॥ममैवांशोनसंदेहस्तेनैवस्थापितोऽस्म्यहम् ॥७४॥
तिरस्कृतोमहामूढबौद्धसिद्धांतवादिभिः ॥ इतिदृष्ट्वातुतेस्वप्नंपूजकाःप्रातरुत्थिताः ॥ ७५ ॥ परस्परंस्वप्नमध्येमंत्रयित्वातुभक्तितः ॥

पीतांबरंसमानीयजगन्नाथाज्ञयादृदुः ॥७६॥ आचार्य्यायततःसोऽपिधृत्वातन्निजमस्तके ॥ प्रणनामसुहुर्देवंजगन्नाथंतदाद्विजः ॥७७॥
एवंततोजगन्नाथप्रसादंप्राप्यसद्विजः ॥ मिथिलामाजगामाशुनिजमंदिरमुत्तमम् ॥ ७८ ॥ तत्रशिष्योपशिष्यैश्चसेवितःपरमादरात् ॥
अध्यापयामाससुहुःसर्वशास्त्राणियत्नतः ॥ ७९ ॥ अधीत्यतस्मादाचार्य्याद्विदशास्त्राणिसर्वशः ॥ धर्मसंस्थापयामासुर्देशेदेशेऽपिप
ण्डिताः ॥८० ॥ अद्यापिमिथिलायांतुतदन्वयभवाद्विजाः ॥विद्वांसःशास्त्रसंपन्नाःपाठयंतिगृहेगृहे ॥८१॥ सतुकालेनमहतावृद्धोभूत्वा
जरातुरः ॥ काशीमागत्यकतिचित्स्थित्वातत्रदिनानिच ॥ ८२ ॥ मणिकर्ण्यांब्रह्मनालेप्राणांस्तत्याजलीलया ॥ प्राप्तःपुरातनं
देहंवैष्णवंसुरदुर्लभम् ॥ ८३ ॥ एवंतूदयनाचार्य्योबभूवपृथिवीतले ॥ धर्म्मसंस्थापनार्थायनास्तिकानांनिवृत्तये ॥ ८४ ॥ शृण्व
न्वदन्मतंह्येतन्नरोबुद्ध्यानहीयते ॥ ८५ ॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्येउदयनाचार्य्यचरितंनामैकत्रिंशःसर्गः ॥ ३१ ॥ दक्षिण
स्यांतुविख्याताभीमानाम्नीनदीशुभा ॥ तत्तीरेग्रामआसीद्वैवेदविद्विप्रसंकुलः ॥ १ ॥ तत्रैकःपुंडरीकेतिनाम्नासीद्ब्राह्मणःशुचिः ॥
दाक्षिणात्यकुलेजातोमहाराष्ट्रेतिविश्रुतः ॥ २ ॥ नातिविद्योनधर्म्मज्ञोविप्रोभातिबहुश्रुतः ॥ मातापितृभ्यांसहितःपत्नीप्रेमवशःसदा ॥
॥ ३ ॥ भिक्षान्नजीविकास्सर्वेनिर्धनालोभवर्जिताः ॥ एकदापुंडरीकस्यपत्नीभिक्षाटनेगता ॥ ४ ॥ शुश्रावकाशीमाहात्म्यंपुराणंद्वि
जवक्रतः ॥ जहर्षश्रुत्वासातत्रनिश्चयंमनसाकरोत् ॥ ५ ॥ काशीमवश्यंयास्यामियदिदेवकृपाभवेत् ॥ इतिसंकल्प्यमनसासमाग
त्यनिजंगृहम् ॥ ६ ॥ भर्तारंप्राहसादीनानाथैकंयाचयाम्यहम् ॥ यदिदास्यसिचेत्सत्यंकुरुवक्ष्याम्यहंततः ॥ ७ ॥ पुण्डरीकउवा

चार्थकिंजातन्त्वद्यमेप्रिये॥त्वद्याचितंनदास्यामीत्येवंमनसितेकथम् ॥ ८ ॥ शपेऽहंदेविसत्येनदास्यामितवयाचितम् ॥ इत्युक्त्वासा
मतिंप्राहकाशिकायाअहंद्विज ॥ ९ ॥ श्रुत्वामाहात्म्यमतुलंमनस्तत्रैवतिष्ठति ॥ त्वयासहगमिष्यामिकाशींह्यतद्द्रुतंकुरु ॥ १० ॥
वृद्धावेतौचपितरौतयोर्यात्राभविष्यति ॥ इतिश्रुत्वावचस्तस्याःप्रियायाःसद्विजोत्तमः ॥ ११ ॥ अहोऽवश्यंगमिष्यामिममाप्येष
मनोरथः ॥ परन्तुकतिचिद्दस्रैर्गंतारःसंतिवैद्विजाः ॥ १२ ॥ तैरेवसाकंयास्यामितावद्याचेधनंजनान् ॥ पथिनिर्वाहसिद्ध्यर्थमेतावान्नि
श्चयोमम ॥ १३ ॥ इत्युक्त्वासगतोविप्रोयाचितुंधनिनोधनम् ॥ याचित्वाथततोह्यश्वंविक्रीयचसवैद्विजः ॥ १४ ॥ पत्नींप्रेम्णा
श्वमारोप्यपितृभ्यांसहितःस्वयम् ॥ चलितःपादचारेणग्रामीणैःसहकाशिकाम् ॥ १५ ॥ भृत्यवत्तांपरिचरन्पत्नींस्नेहेनचद्विजः ॥
वृद्धावपिस्वपितरौपादचारश्रमाकुलौ ॥ १६ ॥ शुश्रूषतिस्मनोकिंचिदन्नमात्रंददौतयोः ॥ एवमेवगतःकाशींभीमचण्डीसमीपतः ॥
॥ १७ ॥ तत्रस्नात्वाददर्शाथदेवींसंपूज्यभक्तितः ॥ पुराणंतत्रशुश्रावबाच्यमानंद्विजेनव ॥ १८ ॥ पितृसेवनमाहात्म्यंमातृसेवनजं
तथा ॥ पिताब्रह्मापिताविष्णुःपितासाक्षात्सदाशिवः ॥ १९ ॥ पितासन्तोषितोयेनतेनदेवाःसुतोषिताः ॥ रुष्टेपितरिदेवाश्चनतुष्यं
तिकदाचन ॥ २० ॥ स्नानंसंध्याजपोहोमोदानंयागोव्रतानिच ॥ पितुःक्रोधान्नृणांसर्वंनिष्फलंजायतेध्रुवम् ॥ २१ ॥ पित
रंपूजयित्वातुतत्पादस्नानवारिणा ॥ अभिषिंचंतिमूर्धानंतेषांतीर्थफलंध्रुवम् ॥ २२ ॥ जीवतोवाक्यकरणात्क्षयाहेभूरिभोजनात् ॥
गयायांपिंडदानेनत्रिभिःपुत्रस्यपुत्रता ॥ २३ ॥ पितुराज्ञाकराःपुत्राःप्रवर्द्धंतेदिनेदिने ॥ उल्लंघयंतियेतेषांनसुखंनचसंततिः ॥ २४ ॥

७

यस्यांतसमयेमातापितावाभाषतेवचः ॥ तत्सर्वंसत्यमेवस्यादाशीर्वादायएववा ॥ २५ ॥ पितुर्दशगुणामातासाक्षान्नारायणःपरः ॥
याधृत्वादशमासांस्तुगर्भेबालंप्रसूयच ॥ २६ ॥ पुष्णातिस्तनपानाद्यःप्राणोपेतेनिरंतरम् ॥ मरणेकृतसंकल्पापुत्रेरोगार्दितेसति ॥
॥ २७ ॥ एवंमातृसमालोकेनान्यावैविद्यतेगतिः ॥ सर्वेषामुपकाराणामस्तिलोकेप्रतिक्रिया ॥ २८ ॥ मात्राकृतोपकारस्यसानैवा
स्तिकथंचन ॥ एवंविप्रमुखात्तत्रभीमचंडीसमीपतः ॥ २९ ॥ श्रुत्वापुराणंविप्रस्तुपुंडरीकोऽतिदुःखितः ॥ मनसाचतदात्मानंजगर्ह
निजकर्मणा ॥ ३० ॥ निवृत्तायांकथायांतुसमुत्थायसवैद्विजः ॥ पित्रोःसमीपमागत्यतावुभावतिविस्मितौ ॥३१॥ पितरावितएवा
हंयुवांनीत्वातुभक्तितः ॥ स्वग्रामंप्रतियास्यामिनकाश्यांमेप्रयोजनम् ॥ ३२ ॥ युवयोःसेवनादेवकाशीवासफलंभवेत् ॥ अद्यावधि
कृतंनैवयुवयोः सेवनंमया ॥ ३३ ॥ अजानतातिमूढेनतत्क्षंतव्यंसुतस्यमे ॥ नमेकाशीनमेगंगानमेविष्णुर्नमेशिवः ॥ ३४ ॥ युवामे
वहिजानामियुवांसर्वंनसंशयः ॥ इतिपुत्रवचःश्रुत्वापितरावाहतुःसुतम् ॥ ३५ ॥ वत्सक्षमावहेसर्वमावांनैवात्रसंशयः ॥ वृद्धयोरोगि
णोःपित्रोःपुत्रएवसदागतिः ॥ ३६ ॥ नपुत्रसदृशंमित्रंत्रिषुलोकेषुविद्यते ॥ नयावांयत्रवांछातेकिंतुमद्वचनंशृणु ॥ ३७ ॥ काशीमा
गत्यविश्वेशमद्भ्वामणिकर्णिकाम् ॥ अस्नात्वातत्रगंतुंस्वंगृहंनोजायतेमनः ॥ ३८ ॥ अतएतैःसमंतत्रगत्वास्नात्वायथाविधि ॥ विश्वे
श्वरंनमस्कृत्यगच्छावइतिमेमतिः ॥ ३९ ॥ ततःपितृभ्यांयुक्तः सपुंडरीकोद्विजोत्तमः ॥ तदाज्ञांशिरसाधृत्वागत्वांतर्गृहमध्यतः ॥४०॥ ॥ ४९
स्नानदानादिकंपित्रोःकारयित्वायथाविधि ॥ उषित्वाहानिकतिचित्पित्रोःसेवापरायणः ॥ ४१ ॥ स्वयंययौनविश्वेशंद्रष्टुंताभ्यांविना

द्विजः ॥ एवंपित्रोःससेवायांनिरतोऽभूद्द्विजोत्तमः ॥४२॥ अथसंपाद्ययात्रांतुकाश्यांतैर्ब्राह्मणैस्सह॥आजगामद्विजःसोऽपिपितृभ्यांसहि
तोगृहम् ॥ ४३ ॥ समागत्यगृहेप्रातरुत्थायपितरंस्वयम्॥दंतधावनमारभ्यभोजनांतंचयत्नतः ॥४४॥ कारयित्वाततोऽन्यद्वैचकारतदनु
ज्ञया ॥ एवंगतेषुकालेषुभगवानेकदाहरिः ॥४५॥ तद्भक्त्यापरितुष्टोऽभूदायातोद्विजरूपधृक् ॥ द्विभुजःश्यामलोनातिह्रस्वःकमललोच
नः ॥ ४६ ॥ पादचारीसमायातःपुंडरीकंद्विजोत्तम॥समागतोऽहमतिथिर्नमांसंभाषसेकुतः ॥४७॥ इतिश्रुतंवचोमात्रंनददर्शचतंपुनः ॥
इष्टकैकास्थितातस्यपुंडरीकस्यसन्निधौ ॥४८॥ तांगृहीत्वातिथेरग्रेचिक्षेपत्वरयान्वितः॥उवाचचात्रतिष्ठत्वंयावत्सेवांकरोम्यहम् ॥४९॥
इत्युक्त्वासपितुःसेवामाचरद्द्विजपुंगवः ॥ भगवानपितद्भक्तिंदृष्ट्वातस्यवशंगतः ॥ ५० ॥ तस्थौतदिष्टकायांतुद्वौपादौविनिवेश्यच ॥
पुंडरीकस्तुपितरौभोजयित्वायथाविधि ॥ ५१ ॥ स्वापयित्वातुशय्यायांदत्त्वातांबूलकंद्विजः ॥ बहिरागत्यपाद्यन्तुगृहीत्वाऽ
तिथिसन्निधिम् ॥ ५२ ॥ अहोगृहाणपाद्यंभोःस्नानमाचरसुव्रत ॥ इत्युक्तवान्मुहुर्विप्रोनोवाचसोऽतिथिर्यदा ॥ ५३ ॥ तदासपुंड
रीकस्तुप्रार्थयामासभूरिशः ॥ अहोक्षमस्वमेसर्वमपराधंद्विजोत्तम ॥ ५४ ॥ पितृसेवावशान्नाहंयत्पूर्वंनासिसत्कृतः ॥ एषमेनि
श्चयोब्रह्मञ्जह्यांप्राणानपिध्रुवम् ॥ ५५ ॥ पितृसेवांजातुनैवतस्मादेतत्क्षमस्वभोः ॥ इत्युक्त्वापादयोस्तस्यपतित्वापुनरुत्थितः ॥५६॥
हस्तेनहस्तंजगृहेसमागच्छेत्यकर्षयत् ॥ ततःशिलामयीमूर्तिरभूत्तत्रातिथिर्हरिः ॥ ५७ ॥ नचचालततस्तत्रमहाश्चर्य्यमभूदहो ॥
श्रुत्वासर्वेसमायाताःशिष्टाविद्वांसएवच ॥ ५८ ॥ अन्येऽपिबालवृद्धाश्चमहाश्चर्यंदिदृक्षवः ॥ कोऽयंकस्मादिहायातःकथमेवंबभू

वह् ॥ ५९ ॥ विद्वद्भिरेवपृष्टस्तुपुंडरीकउवाचतान् ॥ पितृशुश्रूषणंस्वीयंतदागमनमेवच ॥ ६० ॥ अतिथेर्वचनंपश्चादिष्टकादा
नमेवच ॥ पितरौस्वापयित्वातुस्वस्यागमनमेवच ॥ ६१ ॥ पाद्यादिदानमतिथेःप्रार्थनादिकमेवच ॥ उवाचपुंडरीकस्तांछ्रुत्वा
तेऽप्यतिविस्मिताः ॥ ६२ ॥ किमिदंवेत्तिविज्ञातुंनशशाकमहानपि ॥ किंचित्कालंचिंतयंतःस्थिताजग्मुःस्वमालयम् ॥ ६३ ॥ त
स्थुस्तत्रैवकेचित्तुपुंडरीकालयेद्विजाः ॥ पुंडरीकस्तुकृत्वावैनित्यकर्माखिलंपुनः ॥ ६४ ॥ पपौवार्य्यपिनोविप्रोभोजनस्यतुकाक
था ॥ अतिथावागतेतस्मिन्नभुक्तेभोजनंकथम् ॥ ६५ ॥ कुर्य्यामितिविनिश्चित्यसोपवासपरोऽभवत् ॥ तत्पत्नीचापिपितरौसर्वेचिं
तासमन्विताः ॥ ६६ ॥ अन्येऽपितद्गृहेकेचिदात्मीयास्तस्यचागताः ॥ तेऽपिनैवाददुःकिंचिदुदकंचान्नमेवच ॥ ६७ ॥ इत्थंदिनंगतं
सर्वंसंध्याकालउपागते ॥ आगतावृद्धविद्वांसःपुंडरीकनिकेतनम् ॥ ६८ ॥ ऊचुःसर्वेमं यित्वापुंडरीकशृणुष्वनः ॥ यंकंचि
दतिथिंचेन्मांस्नापयित्वांमसापुनः ॥ ६९ ॥ अभ्यर्च्यगंधमालाद्यैरन्नमग्रेनिवेद्यच ॥ भक्षयंतुभवतोऽपिनैवंधर्मस्तुहीयते ॥ ७० ॥
इत्युक्तः पंडरीकस्तुस्वीकृत्यसचकारतत् ॥ सर्वैःपरंतुबुभुजेस्वयंनैवहिकिंचन ॥ ७१ ॥ यावदेषोऽतिथिर्नैवभक्षेदन्नमिहाश्रमे ॥ ताव
न्नाहंतुभोक्ष्यामिसत्यमेतन्नसंशयः ॥ ७२ ॥ तावत्प्राणास्तुतिष्ठंतुयांतुकिंवाकरोम्यहम् ॥ इतिकृत्वापुंडरीकोनिश्चयंनिजमानसे॥७३॥
नकिंचिद्बुभुजेरात्रौपितृसेवापरायणः॥सुष्वापपितरौसम्यक्स्थापयित्वासुखास्तरे ॥७४॥ अथरात्रौहरिःसाक्षात्सर्वेषांपुरवासिनाम् ॥
पुडरीकस्यचस्वप्नंददौतद्भक्तियंत्रितः ॥ ७५ ॥ पुंडरीकद्विजश्रेष्ठतुष्टोऽहंतवभक्तितः ॥ अनेनैवतुरूपेणवसाम्यत्रैवसर्वदा ॥७६॥ त्वांप

श्यन्नहितृप्यामिपितृसेवापरायणम् ॥ द्वारकायाः समानीयरुक्मिणीमपियत्नतः ॥ ७७ ॥अत्रांशेनस्थितोभूत्वाभक्ताभीष्टंददाम्यहम्॥
येमांप्रेम्णात्रपश्यंतिसमाश्लिष्यंतिमानवाः ॥७८॥ तुलसीपत्रमात्रेणपूजयंतिप्रयत्नतः॥तेऽतीववल्लभालोकेभविष्यंतिनसंशयः ॥७९॥
अत्रमांपूजयंतस्तुकलावपिनराध्रुवम् ॥ ममभक्ताभविष्यंतिमत्प्रसादान्नसंशयः ॥ ८० ॥ तस्मात्त्वंद्विजशार्दूलनचिंतांकर्तुमर्हसि ॥
प्रातरुत्थायपितरौपरिचर्य्ययथाविधि ॥ ८१ ॥ भुंक्ष्वान्नमहमत्रैवनिवसामिभवद्गृहे ॥ इतिस्वप्नंददौतस्मैपुंडरीकायवैहरिः ॥ ८२ ॥
अन्येभ्योग्रामवासिभ्योपश्चात्तद्देशभूपतिम् ॥ तस्मैस्वप्नेहरिःसाक्षात्कथामेतामुवाचह ॥ ८३ ॥ अथप्रभातेयेसर्वेग्रामीणाःसचभू
पतिः ॥ उत्थायपुंडरीकस्यवेश्मजग्मुर्मुदान्विताः ॥ ८४ ॥ ऊचुःपरस्परंसर्वेपुंडरीकस्तुमूकवत् ॥ अर्च्चयित्वातुपितरौतस्थौते
षांपुरस्तदा ॥ ८५ ॥ तमाहुः पुंडरीकंतुराजाद्याःपुरवासिनः ॥ धन्योऽसित्वंद्विजश्रेष्ठधन्यंतेपितृसेवनम् ॥ ८६ ॥ यत्प्रसादाद्धरिः
साक्षात्समागत्यात्रतिष्ठति ॥ इत्युक्त्वातंपुरस्कृत्यपुंडरीकंद्विजोत्तमम् ॥ ८७ ॥ पूजांचक्रुर्महाभक्त्यातस्यश्रीरुक्मिणीपतेः ॥
विशस्थलेऽस्मिन्नित्युक्तः पुंडरीकेणयत्प्रभुः ॥ ८८ ॥ ततोविठ्ठलनामासौ विख्यातोऽस्तिहरिः स्वयम् ॥ पुंडरीकपुरंसाक्षात्सिद्धिक्षे
त्रंकलौयुगे ॥ ८९ ॥ विशेषेणनृणांमुक्तिर्भुक्तिस्तद्दर्शनादपि ॥ महाविष्णोर्निवासेनसर्वेसेंद्रादयः सुराः ॥ ९० ॥ समागत्यचतत्रै
वक्षेत्रेतिष्ठंतिसर्वदा ॥ शिवोऽपिस्वगणैः सार्द्धंगणेशेनचसंयुतः ॥ ९१ ॥ तिष्ठत्यहर्निशंभक्तरक्षणायनिजांशतः ॥ देव्योऽपिविष्णु
भक्तानांपालनायनिरंतरम् ॥ ९२ ॥ तिष्ठंतिपुंडरीकस्यपुरेपुण्यतमेशुभे ॥ पुण्डरीकपुरस्यास्यमाहात्म्यंचातिविस्तरम् ॥ ९३ ॥

नाहंजानामिसंक्षेपाद्यथाश्रुतमुदाहृतम् ॥ अथापिहृश्यतेतत्रनामसंकीर्तनादपि ॥ १४ ॥ महापातकसंघातैर्मुच्यतेनात्रसंशयः ॥
तत्रैवागत्यनिवसन्विठ्ठलेऽहमहर्निशम् ॥ स्मरन्नवाप्यसकलान्भोगानंतेगतोदिवम् ॥ १५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येविठ्ठ
लपुंडरीकचरितंनामद्वात्रिंशःसर्गः ॥ ३२ ॥ पुंडरीकपुरेत्येतन्नाम्नाग्रामोबभूवसः ॥ सएवपण्ढरपुरमितिख्यातोऽस्तिसांप्रतम् ॥ १ ॥
अत्रैवनामदेवोऽभून्महाभागवतः सतु ॥ तस्योत्पत्तिंचकीर्तिंचवक्ष्याम्याश्चर्य्यमुत्तमम् ॥ २ ॥ बभूवपण्ढरपुरेवामदेवेतिनामतः ॥
जात्याशिंपीतिविख्यातः शूद्रः सत्कर्मवर्जितः ॥ ३ ॥ धनवाञ्ज्ञातिसंपन्नोभ्रातृभिः परिवारितः ॥ सोऽनपत्योबभूवाथवयसावृद्ध
तांगतः ॥ ४ ॥ तथापिनिजकर्मासौनतत्याजधनाशया ॥ एकदातत्प्रियाप्राहकिमर्थंखिद्यतेवृथा ॥ ५ ॥ अनपत्योऽसिनाथत्वं
कोभोक्ताऽस्यधनस्यये॥ इमे तेभ्रातरः सर्वेमनसाचिंतयंतिह॥ ६ ॥ इमावपत्यरहितौमृतयोरेतयोर्धनम् ॥ भोक्ष्यामोवयमेवेतिकथयं
तिमुहुर्मुहुः ॥ ७ ॥ इतिश्रुत्वावचस्तस्यवामदेवोमहामतिः ॥ उवाचवचनंतस्याः परितोषकरंहितम् ॥ ८ ॥ शृणुप्रियेप्रवक्ष्यामिनिश्च
येनमतंमम ॥ नत्यक्ष्यामिनिजंकर्म्मयथाशक्तिनसंशयः ॥ ९ ॥ कस्यवित्तस्यकोभोक्तानैवंजानातिकश्चन ॥ इमेसंवर्द्धितावित्तैर्ममैवं
कथयंतिमाम् ॥ १० ॥ अतःकृतघ्नाएवैतेभ्रातरोममवल्लभे ॥ तमुपायंप्रवक्ष्यामियेनैषांनिष्फलंवचः ॥ ११ ॥ भविष्यतिनसं
देहोविधेहिममशासनम् ॥ कुरुष्वसुकृतंनित्यंयेनसंततिमाप्नुयाम् ॥ १२ ॥ जातायांसंततावेतेचिंतयिष्यंतिनेदृशम् ॥ इतिश्रुत्वा
प्रियाप्राहसुकृतंकेनकर्मणा ॥ १३ ॥ कर्तव्यमितिमेब्रूहियत्करोम्यहमादरात् ॥ प्रियायावचनंश्रुत्वावामदेवोऽब्रवीत्पुनः ॥ १४ ॥

नजानासिकिमप्यन्यत्सुकृतंसाधुवादिनि ॥ गुरुणैवोपदिष्टोऽहंसाधुसेवापरोभव ॥ १५ ॥ मंत्रंदत्त्वोक्तवानेवंतन्मंत्रंविस्मृतंमया ॥
उपदेशः स्मृतोमेऽद्यतस्मात्सैवैवकेवलम् ॥ १६ ॥ जानीहिसुकृतंतन्वितेनसाधयवांछितम् ॥ अतोऽद्यारभ्ययःकश्चित्सायंकालेगृहेम
म ॥ १७ ॥ आगमिष्यतिवामार्गेभीमातीरेऽथवापुनः ॥ तत्रगत्वाधनैः कामैस्तेषांसेवाविधीयताम् ॥ १८ ॥ अहमाज्ञापयामित्वां
व्ययेशंकांत्यजस्वमे ॥ अहंतुप्रत्यहंभीमातीरेसायंसमागतान् ॥ १९ ॥ प्रणामधनवस्त्राद्यैस्तोषयिष्याम्यसंशयम् ॥ एवंसत्सेवनेस
क्तावशक्तौवृद्धदंपती ॥ २० ॥ लेभातेसंततिंकन्यांसाधुसेवाप्रभावतः ॥ जातायांकन्यकायांतौसुमुदातेतुदंपती ॥ २१ ॥ ऊचतुर्हं
ष्टमनसौफलितंसाधुसेवनम् ॥ सुमतिश्चेतिनाम्नासापित्राप्रख्यापिताशुभा ॥ २२ ॥ तदारभ्यातिभक्त्यातौपूजनंचक्रतुःसताम् ॥
सापिकन्याचिरेणैववबृधेपितृलालिता ॥ २३ ॥ कदाचित्सुदिनंज्ञात्वाकंचिदानायबालकम् ॥ विवाहंकारयामाससमहोत्सवविधा
नतः ॥ २४ ॥ पुत्रवद्वामदेवस्यजामातान्यवसद्गृहे ॥ मुमुदातेसुतंवीक्ष्यजामातरमथापिवा ॥ २५ ॥ हर्षेणमहताविष्टौतदातौवृद्धदं
पती ॥ एवंगतेषुकालेषुजामाताज्वरपीडितः ॥ २६ ॥ षोडशाब्देममारासौवामदेवस्यपश्यतः ॥ तदातिकष्टितौद्वौतुहाहाकारंप्रच
क्रतुः ॥ २७ ॥ दृष्टौपुरजनैःसर्वैःशांतितौवृद्धदंपती ॥ कष्टमेवंगतौचापिसाधुसेवांप्रचक्रतुः ॥ २८ ॥ वामदेवसुताचैषातत्पत्नीचेति
वैत्रयः ॥ एकदातनयायास्तुपुनर्वैवाहिकंविधिम् ॥ २९ ॥ वामदेवोऽब्रवीत्पत्नींसाचैवाप्यन्वमोदत ॥ तच्छ्रुत्वासुमतिः कन्यारुरो
दभृशदुःखिता ॥ ३० ॥ नाहमिच्छामिभर्तारंमृतपत्यौतपस्विनी ॥ कुलदोषानचैवाहंभविष्यामिकदाचन ॥ ३१ ॥ युवयोःसेवने

नाहंजानामिसंक्षेपाद्यथाश्रुतमुदाहृतम् ॥ अथापिदृश्यतेतत्रनामसंकीर्तनादपि ॥ १४ ॥ महापातकसंघातैर्मुच्यतेनात्रसंशयः ॥
तत्रैवागत्यनिवसन्विठ्ठलेऽहमहर्निशम् ॥ स्मरन्नवाप्यसकलान्भोगानंतेगतोदिवम् ॥ १५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येविठ्ठ
लपुंडरीकचरितंनामद्वात्रिंशःसर्गः ॥ ३२ ॥ पुंडरीकपुरेत्येतन्नाम्नाग्रामोबभूवसः ॥ सएवपण्ढरपुरमितिख्यातोऽस्तिसांप्रतम् ॥ १ ॥
अत्रैवनामदेवोऽभून्महाभागवतः सतु ॥ तस्योत्पत्तिंचकीर्तिंचवक्ष्याम्याश्चर्य्यमुत्तमम् ॥ २ ॥ बभूवपण्ढरपुरेवामदेवेतिनामतः ॥
जात्याशिंपीतिविख्यातः शूद्रः सत्कर्मवर्जितः ॥ ३ ॥ धनवाञ्ज्ञातिसंपन्नोभ्रातृभिः परिवारितः ॥ सोऽनपत्योबभूवाथवयसावृद्ध
तांगतः ॥ ४ ॥ तथापिनिजकर्मासौनतत्याजधनाशया ॥ एकदातत्प्रियाप्राहकिमर्थंखिद्यतेवृथा ॥ ५ ॥ अनपत्योऽसिनाथत्वं
कोभोक्ताऽस्यधनस्यये॥ इमे तेभ्रातरः सर्वेमनसाचिंतयंतिह॥ ६ ॥ इमावपत्यरहितौमृतयोरेतयोर्धनम् ॥ भोक्ष्यामोवयमेवेतिकथयं
तिमुहुर्मुहुः ॥ ७ ॥ इतिश्रुत्वावचस्तस्यवामदेवोमहामतिः ॥ उवाचवचनंतस्याः परितोषकरंहितम् ॥ ८ ॥ शृणुप्रियेप्रवक्ष्यामिनिश्च
येनमतंमम ॥ नत्यक्ष्यामिनिजंकर्मयथाशक्तिनसंशयः ॥ ९ ॥ कस्यवित्तस्यकोभोक्तानैवंजानातिकश्चन ॥ इमेसंवर्द्धितावित्तैर्ममैवं
कथयंतिमाम् ॥ १० ॥ अतःकृतघ्नाएवैतेभ्रातरोममवल्लभे ॥ तमुपायंप्रवक्ष्यामियेनैषांनिष्फलंवचः ॥ ११ ॥ भविष्यतिनसं
देहोविधेहिममशासनम् ॥ कुरुष्वसुकृतंनित्यंयेनसंततिमाप्नुयाम् ॥ १२ ॥ जातायांसंततावेतेचिंतयिष्यंतिनेदृशम् ॥ इतिश्रुत्वा
प्रियाप्राहसुकृतंकेनकर्मणा ॥ १३ ॥ कर्तव्यमितिमेब्रूहियत्करोम्यहमादरात् ॥ प्रियायावचनंश्रुत्वावामदेवोऽब्रवीत्पुनः ॥ १४ ॥

नजानासिकिमप्यन्यत्सुकृतंसाधुवादिनि ॥ गुरुणैवोपदिष्टोऽहंसाधुसेवापरोभव ॥ १५ ॥ मंत्रंदत्त्वोक्तवानेवंतन्मंत्रंविस्मृतंमया ॥
उपदेशः स्मृतोमेऽद्यतस्मात्सैवैवकेवलम् ॥ १६ ॥ जानीहिसुकृतंतन्वितेनसाधयवांछितम् ॥ अतोऽद्यारभ्ययःकश्चित्सायंकालेगृहेम
म ॥ १७ ॥ आगमिष्यतिवामार्गेभीमातीरेऽथवापुनः ॥ तत्रगत्वाधनैः कामैस्तेषांसेवाविधीयताम् ॥ १८ ॥ अहमाज्ञापयामित्वां
व्ययेशंकांत्यजस्वमे ॥ अहंतुप्रत्यहंभीमातीरेसायंसमागतान् ॥ १९ ॥ प्रणामधनवस्त्राद्यैस्तोषयिष्याम्यसंशयम् ॥ एवंसत्सेवनेस
क्तावशक्तौवृद्धदंपती ॥ २० ॥ लेभातेसंततिंकन्यांसाधुसेवाप्रभावतः ॥ जातायांकन्यकायांतौसुमुदातेतुदंपती ॥ २१ ॥ ऊचतुर्हृ
ष्टमनसौफलितंसाधुसेवनम् ॥ सुमतिश्चेतिनाम्नासापित्राप्रख्यापिताशुभा ॥ २२ ॥ तदारभ्यातिभक्त्यातौपूजनंचक्रतुःसताम् ॥
सापिकन्याचिरेणैववबृधेपितृलालिता ॥ २३ ॥ कदाचित्सुदिनंज्ञात्वाकंचिदानायबालकम् ॥ विवाहंकारयामाससमहोत्सवविधा
नतः ॥ २४ ॥ पुत्रवद्वामदेवस्यजामातान्यवसद्गृहे ॥ मुमुदातेसुतंवीक्ष्यजामातरमथापिवा ॥ २५ ॥ हर्षेणमहताविष्टौतदातौवृद्धदं
पती ॥ एवंगतेषुकालेषुजामाताज्वरपीडितः ॥ २६ ॥ षोडशाब्देममारासौवामदेवस्यपश्यतः ॥ तदातिकष्टितौदीतुहाहाकारंप्रच
क्रतुः ॥ २७ ॥ दृष्टौपुरजनैःसर्वैःशांतितौवृद्धदंपती ॥ कष्टमेवंगतौचापिसाधुसेवांप्रचक्रतुः ॥ २८ ॥ वामदेवसुताचैषातत्पत्नीचेति
वैत्रयः ॥ एकदातनयायास्तुपुनर्वैवाहिकंविधिम् ॥ २९ ॥ वामदेवोऽब्रवीत्पत्नींसाचैवाप्यन्वमोदत ॥ तच्छ्रुत्वासुमतिः कन्यारुरो
दभृशदुःखिता ॥ ३० ॥ नाहमिच्छामिभर्तारंमृतपत्यौतपस्विनी ॥ कुलदोषानचैवाहंभविष्यामिकदाचन ॥ ३१ ॥ युवयोःसेवने

सक्तासाधुसेवापरायणा ॥ दासीवनित्यंतेमातर्गृहेवत्स्यामिसुव्रता ॥ ३२ ॥ इतितस्यावचःश्रुत्वाजननीप्राहतांसुताम् ॥ यदिनस्वी
करोषित्वमेवंमेवचनंसुते ॥ ३३ ॥ बलेनतेपितापुत्रिविवाहंकारयिष्यति ॥ श्रुत्वैवंसुमतिःप्राहमातरंनिष्ठुरंवचः ॥ ३४ ॥ यद्येवंतर्हिभी
मायांनिमज्ज्याद्यैवजीवितम् ॥ त्यक्ष्याम्यहंनसंदेहःशपामितवपादयोः ॥ ३५ ॥ इतिश्रुत्वासुतावाक्यं भीतास्नेहेनविह्वला ॥ प्रत्य
षेधत्पतिंसापिसुतापाणिग्रहंप्रति ॥ ३६ ॥ निवृत्तोवामदेवोऽपिप्रियावचनयंत्रितः ॥ ततःसातनयादीनापितृमातृपरायणा ॥ ३७ ॥
साधुसेवारतानित्यंब्राह्मणीवव्रतेस्थिता ॥ एकदामाघमासेतुपर्जन्येऽपिचवर्षति ॥ ३८ ॥ रात्रौजलार्थिनीकुंभंगृहीत्वासुमतिर्गता ॥
भीमायांजलमाहर्तुंतत्रसाददृशेपथि ॥ ३९ ॥इतस्ततोभ्राम्यमाणंदीनंवर्षाम्बुताडितम् ॥ अंधंदंडधरंविप्रंविष्णुभक्तिपरायणम् ॥ ४० ॥
त्राहिकृष्णेतिभाषंतमर्द्धप्राणंतपस्विनम् ॥ तत्रगत्वाथसुमतिःप्राहप्रांजलिरानता ॥ ४१ ॥ एहिविप्रसमागच्छममगेहेमयासह ॥
शूद्रीचाहंममपितातवभक्तोधृतव्रतः ॥ ४२ ॥ पूजयिष्यतिसोऽपित्वामाज्ञापयनमोऽस्तुते ॥ इतिश्रुत्वातिशीतार्तोद्विजः प्रोवाचवे
पितः ॥ ४३ ॥ नयमांजीवदानंमेकुरुभद्रेप्रियंमम ॥ इत्युक्तवंतंतंविप्रंस्थापयित्वाशिरस्यथ ॥ ४४ ॥ निनायस्वगृहंतन्वीतत्र
वह्निंप्रदीप्यच ॥ तापयित्वाथतंविप्रंफलमूलादिनापुनः ॥ ४५ ॥ भोजयित्वासुखास्तीर्णेस्थापयित्वाशुचिव्रता ॥ सुमतिर्मातृभ
वनंगत्वासुष्वापतांनिशाम् ॥ ४६ ॥ अथप्रभातेविमलेनिवृत्तेकालवर्षणे ॥ उत्थायविप्रःसुमतिंपुत्रीमितिसमाह्वयत् ॥ ४७ ॥ अये
वत्सेसमागच्छवामदेवःपिताक्वते ॥ आयातुतंसमाभाष्यगमिष्यामियदृच्छया ॥ ४८ ॥ इतिश्रुत्वाथसुमतिःपित्रासहसमागता ॥

नमस्कृत्वाब्रवीद्वाक्यंकिंकरोमिप्रसीदमे ॥ ४९ ॥ तच्छ्रुत्वावचनंतस्याविप्रस्तद्भक्तिविह्वलः ॥ उवाचवचनंवत्सेत्वयाहंरक्षितोनिशि
॥ ५० ॥ अतःप्रसन्नस्तेदद्मिवरंत्वांपुत्रिणीभव ॥ इतिविप्रवचःश्रुत्वावामदेवोऽतिदुःखितः ॥ ५१ ॥ प्रणम्याहवचोविप्रनाथयु
क्तंनतेवचः ॥ इयंहिविधवानैवकरिष्यतिपतिंपुनः ॥ ५२ ॥ अतोऽस्याःपुत्रिणीत्वेतद्वाक्यंतवकथंभवेत् ॥ इतिश्रुत्वांधदृष्टिःस
विप्रोऽभूद्बहुदुःखितः ॥ ५३ ॥ वामदेवमुवाचाथनाशीवार्दोवृथामम ॥ अद्यावधिश्रीगोविन्दप्रसादादभवत्क्वचित् ॥५४॥ अतोऽहंभी
मातीरेऽत्रगत्वास्याःपुत्रकारणात् ॥ पूजयिष्यामिगोविन्दंमदुक्तंसकरिष्यति ॥५५॥ इत्युक्त्वासौगतोविप्रोभीमातीरेदृढासनः ॥ अहोरा
त्रैश्चबहुभिस्तुष्टावजगदीश्वरम् ॥ ५६ ॥ निराहारोदकोविप्रःक्षुत्पिपासार्दितोऽभवत् ॥ मरणेकृतसंकल्पःकामसिद्धिमृतेद्विजः ॥ ५७ ॥
एकदातिकृशोदीनोनिद्रांचैवसमागतः ॥ तत्रपश्यतिवैविप्रःस्वप्नेशुक्लांबरस्रजम् ॥ ५८ ॥ तुलसीजामदामोदैस्तर्पयंतंदि
शोदश ॥ स्वप्नेतंप्राहविप्रंसकिमर्थंखिद्यसेद्विज ॥ ५९ ॥ इतिश्रुत्वाद्विजःप्राहनिजकाममशेषतः ॥ श्रुत्वातद्वचनंविप्रःशुक्लांबर
धरोऽब्रवीत् ॥ ६० ॥ उत्तिष्ठविप्रभद्रंतेभविष्यतितवेप्सितम् ॥ अचिरेणैवकालेनप्रत्ययोदृश्यतेमया ॥ ६१ ॥ यदिप्रभातएवैतं
चक्षुषीतवसुव्रत ॥ भविष्यतस्तदातस्याःपुत्रंमाकुरुसंशयम् ॥ ६२ ॥ स्वप्नेस्वपतिरूपेणकृष्णेनसंगतासती ॥ जनयिष्यतिपुत्रं
साविष्णुभक्तंनसंशयः ॥ ६३ ॥ पापिष्ठांतांसुतेजातेकथयिष्यंतियेनराः ॥ अंधास्तेकुष्ठरोगार्ताभविष्यंतिनसंशयः ॥ ६४ ॥ इत्यु
क्त्वासगतोविप्रःसोऽपिस्वप्नात्प्रबोधितः ॥ चिंतयन्हृदिहर्षेणविस्मयेनसमाकुलः ॥ ६५ ॥ निन्येतांशेषरजनींप्रातःकालंसमर्चयत् ॥

अथप्रभातेपश्यन्सगृहवस्तूनिसर्वशः ॥ ६६ ॥ मुमुदेक्षुत्पिपासार्तिंजहौविप्रोऽतिहर्षितः ॥ जगामत्वरितंवामदेवस्यभवनंप्रति ॥
॥ ६७ ॥ आहूयतंसमाचष्टस्वप्नेदृष्टमशेषतः ॥ प्रादुर्भावश्चक्षुषोश्चप्रत्ययोदर्शितस्तथा ॥ ६८ ॥ समाभाष्यगतोविप्रःस्वैरचारीयदृ
च्छया ॥ वामदेवोऽपितच्छ्रुत्वाहृष्टोभीतश्चलोकतः ॥ ६९ ॥ गोविंदप्रतिमांगेहेसंस्थाप्यार्चनतत्परः ॥ पयोमात्रंनियमतोनिवेद्य
बुभुजेस्वयम् ॥ ७० ॥ एवंगतेषुकालेषुस्वप्नेसासुमतिःपतिम् ॥ ददर्शतेनगर्भंसाधारयामाससुव्रता ॥ ७१ ॥ उत्थितासानिशा
यांतेशोकेनमहताकुला ॥ किंजातमितिचित्तेनभाषमाणानतानना ॥ ७२ ॥ तांदृष्ट्वासुमतिंमाताप्राहोत्तिष्ठकिमित्यहो ॥ निष्कार
णोमनस्तापोदृश्यतेकथमद्यते ॥ ७३ ॥ इतिमातृवचःश्रुत्वास्वप्नंप्राहमनस्विनी ॥ तच्छ्रुत्वावचनंपुत्र्याहृष्टामाताह्युवाचताम् ॥
॥ ७४ ॥ विप्रस्यवरदानादिश्रुतंयत्पतिवक्त्रतः ॥ श्रुत्वैतत्सापिविश्वस्तागृहकर्मपराभवत् ॥ ७५ ॥ गोविंदार्चापराःसर्वेसाधुसेवापराय
णाः ॥ निन्युस्तेदशमासान्वैवामदेवादयस्त्रयः ॥ ७६ ॥ अथैकदानिशाभागेसुमुहूर्तेमनस्विनी ॥ असूततनयंगेहेसुखेनैवशुचिव्र
ता ॥ ७७ ॥ श्रुत्वैतद्वामदेवोऽपिवरदानमनुस्मरन् ॥ हृष्टःप्राहप्रियांनाम्नानामदेवोऽभवत्स्वयम् ॥ ७८ ॥ पुत्रिकातनयोलोकेपुत्र
एवनसंशयः ॥ इतिश्रुतंविप्रमुखादावयोरप्ययंसुतः ॥ ७९ ॥ इत्युक्त्वाप्रातरासाद्यययौब्राह्मणमंदिरम् ॥ पुरोहितंसमाहूयदानं
दातुमवोचत ॥८०॥ पुरोहितोजगर्हाथनामदेवंसभासदः ॥येस्थितास्तेऽपिजहसुर्याहियाहीतिचापरे ॥८१॥ ऊचुर्मित्रगणास्तत्रमत्वा
तांव्यभिचारिणीम् ॥ समेत्यभवनंसर्वेवामदेवस्यतस्यवै ॥८२॥ उत्सवंपरमंचक्रुर्दानगानादिभिर्जनैः॥वामदेवोऽपिविप्रेभ्योज्ञातिभ्यो

ऽपियथार्हतः ॥ ८३ ॥ दत्त्वाधनंचगोविंदंसंपूज्याभ्यर्च्यसज्जनान् ॥मेनेकृतार्थमात्मानंपत्न्यासहमहामतिः ॥ ८४ ॥ तदारभ्यदृढांभ
क्तिंगोविंदेसचकारह ॥ ८५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येनामदेवोत्पत्तिचरितंनामत्रयस्त्रिंशःसर्गः ॥ ३३ ॥ सजातोवर्द्धमानस्तु
केलिधूलिपरोऽभवत् ॥ तत्रापिबालकैःसार्द्धंनिर्माय्यरजसाहरिम् ॥ १ ॥ पूजयन्प्रत्यहंपूजामनुकुर्वन्निवार्भकः ॥ एवंगतेषुकाले
षुसजातस्सप्तहायनः ॥ २ ॥ मातामहेनसार्द्धंसःचिक्रीडाहर्निशंसुखी ॥ एकदाकार्य्ययोगेनवामदेवः क्वचिद्गतः ॥ ३ ॥ उक्त्वेदं
नामदेवायवत्सयामिदिनत्रयम् ॥ कार्य्यमस्तिततस्त्वंतुप्रातरुत्थायनित्यशः ॥ ४ ॥ गांदुग्ध्वाथशुचिर्भूत्वागोविंदंपाययिष्यसि ॥
पयस्तदात्वंभुंजीथाइत्येवंतुव्रतंमम ॥५॥ तथेत्युक्त्वागतोवामदेवोग्रामांतरंतदा ॥ नामदेवोऽपिगोदुग्धंवटपत्रेविधायच ॥६॥ नीत्वा
गोविंदभवनेप्रातः प्रांजलिरब्रवीत् ॥ पिबदुग्धंमहाराजमातामहनिदेशतः ॥ ७ ॥ मयैवोपाहृतंचाथसतुग्रामांतरंगतः ॥ जल्पन्नेवंना
मदेवोगोविंदप्रतिमाग्रतः ॥ ८ ॥ पिबतिस्मयदानैवतदासपुनरेवहि ॥ उत्थायोत्थायदुग्धंतुगृहीत्वाप्रणिपत्यच ॥ ९ ॥ चिंतयामास
मनसासितानास्मिन्समाहृता ॥ अतोयंनैवपिबतितांदत्त्वादद्मितेपयः ॥ १० ॥ इत्युक्त्वासितयायुक्तंकृत्वादुग्धंकरेसच ॥ गृहीत्वा
पुनरुत्थायप्रार्थयामासभूरिशः ॥ ११ ॥ नपपौप्रतिदुग्धंतुमनस्येवमचिंतयत् ॥ मांनजानास्यतोनैवपिबस्येतत्पयोमम ॥ १२ ॥
अहंतुवामदेवस्यसुतापुत्रोनसंशयः ॥ तिष्ठाम्यत्रैवभवनेजानेत्वांत्वंनवेत्सिमाम् ॥ १३ ॥ इत्युक्त्वादुग्धमादायपुनरुत्थाययत्नतः ॥
प्रसीदमेपिबपयोमुहुरेवमुवाचतम् ॥ १४ ॥ एवंप्रार्थयमानस्यसंपूर्णंदिनमत्यगात् ॥ नपपौप्रतिमादुग्धंततश्चिंतापरोऽभवत् ॥ १५ ॥

किंचाहमशुचिःकिंवापात्रमेतत्पयोऽशुचि ॥ अतःप्रातःसमुत्थायस्नात्वाप्रक्षाल्यभाजनम् ॥१६॥ दास्यामिसप्तसितंदेवंततः पास्यति
निश्चितम्॥कथमन्नमहंभोक्ष्यगोविंदेऽस्मिन्बुभुक्षिते ॥ १७ ॥ इतिनिश्चित्यशिष्योऽसौरात्रौत्यक्ताशनोदकः॥मात्रानिशंप्रार्थ्यमानोबुभु
जेनैवकिंचन ॥ १८ ॥ अथप्रभातेचोत्थायस्नात्वासंमार्ज्यमंदिरम् ॥ पयोदुग्ध्वाप्रतिष्ठाप्यपुनःस्नात्वासमाहितः ॥ १९ ॥ ससि
तंदुग्धमादायपिबेतिमुहुरब्रवीत् ॥ नपपौप्रतिमातत्रमनस्येवमचिंतयत् ॥ २० ॥ नस्नानंकृतमेतेननकृतंदंतधावनम् ॥ स्नापयि
त्वांभसावस्त्रंपरिधाय्याग्रतःस्थितः ॥ २१ ॥ पयोगृहीत्वापाणिभ्यामुवाचप्रणयान्वितः ॥ मयापिनैवमुक्तंभोदिनमेकंसमभ्यगात् ॥
॥ २२ ॥ अतःपिबमहाराजपइत्यब्रवीन्मुहुः ॥ नपपौप्रतिमादुग्धंज्ञात्वैतत्सरुरोदह ॥ २३ ॥ अथतत्रतुगोविंदप्रतिमानेत्र
युग्मतः ॥ अपश्यच्चाश्रुधारांवैदृष्ट्वाबालोऽन्वभाषत ॥ २४ ॥ किंरोदिषिपिबस्यैतन्नोचेदत्रैवजीवितम् ॥ त्यक्ष्यामिपश्यतस्तेऽद्यसत्य
मेतन्नसंशयः ॥ २५ ॥ इत्युक्त्वातन्मुखेदुग्धंयोजयामासहृष्टवत् ॥ प्रतिमाप्यपिबद्दुग्धमित्याश्चर्यंतरंमहत् ॥ २६ ॥ पिबंतीं
तांपुनःप्राहनामदेवोऽतिहर्षितः ॥ सर्वंपिबसिगोविंदमदर्थंनैवरक्षसि ॥ २७ ॥ तवपीतावशिष्टंतुमातामहसमर्पितम् ॥ बहुचार्पितम
स्माभिरतोविज्ञापयाम्यहम् ॥ २८ ॥ इतिश्रुत्वाथसामूर्तिःसस्मितादुग्धमत्यजत् ॥ गृहीत्वातत्करेदृष्ट्वानामदेवोबुभुक्षितः ॥ २९ ॥
बुभुजेमातृदत्तंयद्गृहेभोज्यादिकस्थितम् ॥ केचिदाश्चर्यमेवंहिश्रुत्वाश्रद्दधिरेनहि ॥ ३० ॥ केचिद्वदंतिसत्यंस्याद्भगवान्भक्तवत्स
लः ॥ केचिदागत्यसुमतिंपप्रच्छुरिदमादरात् ॥ ३१ ॥ इत्येतद्भक्तिमाहात्म्यंनामदेवस्यकीर्तितम् ॥ भूयएवप्रवक्ष्यामितस्यमा

हात्म्यमद्भुतम् ॥ ३२ ॥ इति श्रीभगवद्भक्तिमाहात्म्येप्रतिमादुग्धपानाख्यनामदेवचरितंनामचतुस्त्रिंशःसर्गः ॥ ३४ ॥ ॥ छ ॥
॥ ॥ अथकालेनकियतावामदेवोममारह ॥ भीमातीरेऽथतत्पत्नीबभूवसहगामिनी ॥ १ ॥ वह्निंचितायां प्रज्वाल्यप्रविवेशातिह
र्षिता ॥ नामदेवोऽपिदुःखार्तः कृत्वातस्यौर्द्ध्वदैहिकम् ॥ २ ॥ ब्राह्मणेभ्योधनंदत्त्वाभोजयित्वात्मबांधवान् ॥ साधून्संतर्प्यविविधैरन्नै
श्चबुभुजेस्वयम् ॥ ३ ॥ ततःसाधून्समभ्यर्च्यततोगोविंदपूजने ॥ समासक्तोनामदेवोनिजवृत्तिंनचस्मरन् ॥ ४ ॥ मातामहार्जितंवित्तं
साधुभ्यःप्रत्यहंददत् ॥ स्वयंतुबुभुजेकिंचिज्जनन्यासहवेश्मनि ॥ ५ ॥ निवसन्विष्णुरेवैतइतिसाधूनमन्यत ॥ एकदामहदाश्चर्य
मेकादश्यामभूदहो ॥ ६ ॥ तत्रभीमानदीतीरेविष्णुमंदिरमुत्तमम् ॥ वैष्णवास्तत्रतिष्ठंतिविष्णुसेवापरायणाः ॥ ७ ॥ उपोषण
परास्तत्रकदाचिद्धरिवासरम् ॥ कुर्वंतोजागरंरात्रौनृत्यगीतादिनाजनाः ॥८॥ तोषयंतिजगन्नाथंमंदिरेविष्णुतत्पराः ॥ श्रुत्वातेषांगीत
नादंनामदेवोऽतिहर्षितः ॥ ९ ॥ अर्द्धरात्रेगतेकालेजगामहरिमंदिरम् ॥ उपवासरतःशांतोविष्णुभक्तिपरायणः ॥ १० ॥ द्वारएवस्थि
तोदेवंप्रणम्योपानहौपुनः ॥ निबध्यवस्त्रेचौरस्यशंकयानात्यजद्बहिः ॥११॥ ततोंऽतःप्रविवेशासौगीतनृत्यपरायणः ॥ वस्त्रेणाच्छादि
तेतत्रदृष्टेकेनाप्युपानहौ ॥ १२ ॥ अरेमूर्खकिमेतत्तयद्धृतोपानहौपुनः ॥ मठप्रविष्टोदेवस्यधिग्धिग्गच्छेतिताडितः ॥ १३ ॥ केन
चित्तुगलेहस्तंदत्त्वानिष्कासितोबहिः ॥ बहिरागत्यसतदानामदेवोऽतिहर्षितः ॥१४॥ अहोसम्यक्कृतंचैतैःसाधुभिर्ममशासनम् ॥ यद
हंसुदुराचारोलोभादेवमठेगतः ॥ १५ ॥ इत्येवमुक्त्वामनसामठस्यपश्चात्प्रदेशेकिलनामदेवः ॥ गत्वार्चयामासहरिंस्वभक्त्याहर्षा

श्रुणागद्गदनादगीतैः ॥ १६ ॥ ततश्चकंपेमठभूमिरुच्चैर्घूर्णितन्मंदिरमेवसर्वम् ॥ भूकंपइत्यूचुरथाशुमंदिरात्पलायितामंदिरपातभी
त्या ॥१७॥ ततःक्षणेनस्थिरतामुपागतोमठस्तुसर्वैर्विपरीतवक्त्रः ॥ दृष्टोऽथतत्संमुखएवनामदेवः स्थितःप्रांजलिरत्युदारः ॥१८॥दृष्ट्वैत
त्परमाश्चर्य्यंसर्वेविस्मयमागताः ॥ नामदेवंसमासाद्यप्रशशंसुश्चतेजनाः ॥ १९ ॥ महाश्चर्यमितिप्रोचुर्भक्तिमाचरतोऽपिते ॥ गरीयसींम
न्यमानास्तथागानंप्रचक्रिरे ॥ २० ॥ इति श्रीभगवद्भक्तिमाहात्म्येनामदेवभक्तितोमंदिरप्रचलनंनामपंचत्रिंशःसर्गः ॥ ३५ ॥ ॥ छ॥
पुनरेवंप्रवक्ष्यामिनामदेवस्यचेष्टितम् ॥ महदाश्चर्य्यभूतंहिविष्णुभक्तिप्रवर्द्धनम् ॥ १ ॥ तत्रासीन्म्लेच्छनृपतिस्तत्रगत्वातिदुर्जनाः ॥
ऊचुरार्य्याःपरास्सर्वेराजानंदुष्टमानसाः ॥ २ ॥ दंभाचाररतोनित्यंनामदेवोऽतिदुर्जनः ॥ अमानंपूजयत्येषग्रामेऽस्माकंतुपश्यताम्॥
॥ ३ ॥ अतस्त्वंशासनैरुग्रैस्तत्परीक्षांकुरुप्रभो ॥ तथावयंयतिष्यामस्त्वत्सहायेनभूपते ॥४॥ यथापराभवंप्राप्तोऽसौभविष्यतिदुःखितः॥
किंकरिष्यत्ययंपश्चादितिज्ञात्वास्यपूजनम् ॥ ५ ॥ शासनंवाकरिष्यामस्त्वयासहनसंशयः ॥ इत्युक्तोनृपतिर्दुष्टैर्यथारुचिकुरुष्वि
ति ॥ ६ ॥ साहाय्यंवःकरिष्यामियथावदथमांपुनः ॥ इत्युक्तास्तेनृपतिनातैस्त्वेकत्रसभाकृता ॥ ७ ॥ तत्रतेचिंतयामासुःकथंकुर्म्मो
ऽस्यशासनम् ॥ एवंचिंतयमानास्तेगामेकांददृशुर्मृताम् ॥ ८ ॥ तेषामेकोऽब्रवीदेतांमृतांगांद्वारितस्यवै ॥ कपाटेस्थापयामोवैलोके
सुप्तेमहानिशि ॥ ९ ॥ उषस्येववयंतत्रस्थास्यामःसपुनर्गृहात् ॥ कपाटंबहिरागंतुमुत्थायोद्घाटयिष्यति ॥ १० ॥ पतिष्यतिमृतेवेयं
तदाकोलाहलंवयम् ॥ करिष्यामोमहांतंवैअहोगौर्निहतामुना ॥ ११ ॥ धिगित्येवंगर्हयित्वागत्वाराजसमीपतः ॥ उक्तागौर्निहतासा

क्रमनेनातिदुरात्मना ॥ १२ ॥ जीवयत्वद्यगामेतांभोभोम्लेच्छोभवस्वयम् ॥ इत्येवंशासनंराज्ञोगृहीत्वातस्यदुर्दशाम् ॥ १३ ॥
पदातीनपिसंगृह्यगमिष्यामोवयंपुनः ॥ किंवदिष्यतिनस्तत्रतदायंनष्टचेतनः ॥ १४ ॥ इत्येवंकल्पनांकृत्वाप्रशशंसुःपरस्परम् ॥
सर्वेतेमुदितारात्रौतदाचक्रुर्महानिशि ॥१५॥ प्रातरुत्थायसर्वेतेनिरीक्षणपरायणाः ॥ तस्थुरस्मिन्मुहूर्तंतुगोविंदंमनसास्मरन् ॥ १६ ॥
गोविंदप्रतिमांनत्वाद्वारदेशेसमागतः ॥ नामदेवःकपाटंतुसमुद्घाटितवान्स्वयम् ॥ १७ ॥ उद्घाटितेकपाटेतुगोशवःपतितोभुवि ॥
तद्दृष्ट्वामहदाश्चर्य्यंनामदेवोऽतिविस्मितः ॥ १८ ॥ किंजातमितिशोकेनतस्थौस्थाणुरिवाचलः ॥ ततस्तेदुर्जनास्सर्वेदृष्ट्वातंनिश्चलं
स्थितम् ॥ १९ ॥ ऊचुराक्रोशवचनैर्निंदंतस्तंपरस्परम् ॥ धिक्त्वामहोवृथाधूर्तोमालामुद्रादिकंत्विह ॥ २० ॥ प्रतारयसिनःसर्वाने
वंतेक्रोधचेष्टितम् ॥ किंभुक्तमनयातेऽद्ययदियंघातितात्वया ॥ २१ ॥ तिष्ठतिद्वारिशीतार्तारात्रौत्वांशरणैषिणी ॥ अथैकस्तत्रतन्म
ध्येगौर्मदीयेतिचासकृत् ॥ २२ ॥ उक्त्वारुरोदहाहेतिकुर्वन्क्रोधाज्जगर्हतम् ॥ ततस्तंचाग्रतःकृत्वायेनोक्तंगौर्ममेतिच ॥ २३ ॥
राजवेश्मगताःसर्वेतंपुरस्कृत्यचाब्रुवन् ॥ राजन्गौर्नामदेवेनदंडेनाद्यैवघातिता ॥ २४ ॥ पश्यतांसर्वलोकानांमृतातद्वारितिष्ठति ॥
तस्मादेवदुराचारीदंडनीयोनसंशयः ॥ २५ ॥ इतिश्रुत्वावचस्तेषांराजाक्रोधसमन्वितः ॥ उवाचवचनंभृत्यानत्युग्रान्वैतुरुष्कका
न् ॥ २६ ॥ भवंतोयांतुभवनंनामदेवस्यदुर्मतेः ॥ हतवानसिगामस्यकस्मादित्याहभूपतिः ॥२७॥ अतःपरंप्रयच्छास्मैजीवोपे
तांचगामिमाम् ॥ तदातेकुशलंनोचेन्म्लेच्छोभवमयासह ॥ २८ ॥ नांगीकरोषिम्लेच्छत्वंतदात्वांघातयिष्यति ॥ इत्याज्ञानृप

तेरत्रयथारुचिकुरुष्वभोः ॥ २९ ॥ तावत्त्वयानगंतव्यमितोवैममशासनात्॥इतितेषांवचः श्रुत्वासुमतिर्भयविह्वला ॥ ३० ॥ नामदे
वस्यजननीशोकगद्गदयागिरा ॥ मोहेनाश्रुमुखीदीनानामदेवमुवाचतम् ॥ ३१ ॥ पुत्रोग्रदंडोराजायंघातयिष्यत्यसंशयम् ॥ अत
स्तंशरणंगच्छराजानंचान्यभृत्यवत् ॥३२॥ विहायजातिधर्म्मंचप्राणान्संत्रातुमर्हसि ॥ इतिमातृवचःश्रुत्वानामदेवोऽतिदुःखितः ॥
॥ ३३ ॥ मातुर्दुःखेनमहतामातरंप्राहहृष्टवत् ॥ मातर्ननिहताचैषामयागौर्नात्रसंशयः ॥ ३४॥ वृथामांप्रवदंत्येतेत्यजशोकंममाधुना॥
गोविंदंशरणंयामिसकल्याणंकरिष्यति ॥३५॥महाभयेमहोत्पातेदुष्टव्याघ्रादिजेभये॥ भक्तानुग्रहकर्तासौगोविंदःशरणंमम ॥ ३६ ॥
एवंविश्वासमासाद्यत्यजचिंतांभजस्वतम् ॥ इत्युक्त्वातत्रवैरात्रौस्थितावेश्मनिसाधवः ॥ ३७ ॥ तैःसहाच्छाद्यगांतत्रमृदंगतुतुरादि
भिः ॥ श्रीकृष्णंमनसाध्यायज्ञगौगीतमनन्यधीः ॥ ३८ ॥ जयजयमाधवमंगलकारणशरणागतजनविपदुद्धारक ॥ मीनवरा
हकमठरघुनायकरामरामयदुवरसुखदायक ॥ ३९ ॥ नरमृगराजनिगमयदुवामनसदयहृदयनिर्दयअतिपावन ॥ साधुशरणअति
दीनकृपामयअभयपाहिमामिहदरमपनय ॥ ४० ॥ नमोनमोनारायणभगवतेकेशवकृष्णकेशिकंसारे ॥ निजजनवैरिकपटवत्तदवते
जलजवनजभूसुरभूपतिवपुसदयविदयवपुषाजगदवते ॥ ४१ ॥ अशरणशरणचरणपंकजयुगचिंतनपुरजनभयहरते ॥ चक्रायुधगो
पालचतुर्भुजवितरकृपादृशमिहपदनिरते ॥ ४२ ॥ गायत्येवंनामदेवेमध्याह्नः समुपागतः ॥ तदागांजीवयामासकृष्णोभक्तानुकंप
नः ॥ ४३ ॥ पश्यतांसर्वलोकानांगौरुत्थायनिरैक्षत ॥ नामदेवोऽप्युवाचाथहर्षेणाश्रुपरिप्लुतः ॥ ४४ ॥ अहोगृहाणगा

मेतांप्रसीदत्वांनमाम्यहम् ॥ इतिश्रुत्वावचोधेनुस्तेदुष्टमहनद्रुषा ॥ ४५ ॥ शृंगाभ्यामतितीक्ष्णाभ्यांमूर्च्छितःपतितोभुवि ॥
तंदृष्ट्वापतितंभूमौममगौरितिवादिनम् ॥ ४६ ॥ अन्येदुष्टगणाः सर्वेदिशोदशपलायिताः ॥ नामदेवस्तुतंदुष्टंपतितंमूर्च्छितंभुवि
॥ ४७ ॥ हाहाकृत्वांतिकेगत्वास्वांकेतंविनिवेश्यच ॥ पाययित्वाजलंतांतुगांपुनःप्राहकिंकृतम् ॥ ४८ निजवत्संविचिन्वंतींहं
भारावेणगांतदा ॥ वत्सस्तस्याःसमायातोमेशब्दंविनदन्मुहुः ॥ ४९ ॥ हुंकृत्यपाययंतीतुजिह्वयालेहितंस्मसा ॥ एवंदृष्ट्वामहा
श्चर्यंराजभृत्याद्रुतंययुः ॥ ५० ॥ राजानंप्राहुराश्चर्यंश्रुत्वाराजापिसत्वरम् ॥ तत्रागत्यतथादृष्ट्वाहृष्टस्तंसमुवाचह ॥ ५१ ॥
अहोसत्यंसाधुरसिनामदेवनसंशयः ॥ गृहाणमत्तोयत्किंचिदभिवांछसिसुव्रत ॥ ५२ ॥ इतिश्रुत्वावचस्तस्यनामदेवःकृतांज
लिः ॥ किंमेधनेनराजेंद्रगोविंदोममभोजनम् ॥ ५३ ॥ ददात्येतावतैवाहंकृतार्थोऽस्मिनमोस्तुते ॥ तच्छ्रुत्वानामदेवस्यवाक्यंराजा
तियत्नतः ॥ ५४ ॥ शय्यांददौगृहाणेमामवश्यंप्रीतयेमम ॥ इत्युक्तोजगृहेशय्यांराजापिस्वगृहंगतः ॥ ५५ ॥ नामदेवस्तुतां
शय्यांप्राक्षिपद्वारिणिक्वचित ॥ साधून्संभोज्यबुभुजेसंध्यायामतिहर्षितः ॥ ५६ ॥ ततःकतिपयेकालेगतेराजासशुश्रुवे ॥ साश
य्यावारिणाक्षितातेनैतत्कस्यचिन्मुखात् ॥ ५७ ॥ अयाचतसमानाय्यनामदेवंसभूपतिः ॥ तांमेचिरंतनींशय्यांदेहिमेऽहंतुते
पुनः ॥ ५८ ॥ ददामिनूतनांसाधोनात्रकार्याविचारणा ॥ इतिश्रुत्वावचोराज्ञोराजानंप्रत्युवाचह ॥ ५९ ॥ आगच्छराजन्काते
ऽस्ति निश्चित्यसातिगृह्यताम् ॥ इत्युक्त्वातन्नदीतीरेगत्वाराज्ञामहात्मना ॥ ६० ॥ जलान्निष्कास्यराजाग्रेनानाशय्याधृतास्तथा ॥

कावैममेतिसंदिह्यराजादृष्ट्वाकृतांजलिः ॥ ६१ ॥ नामदेवंनमस्कृत्यक्षमस्वेत्यब्रवीन्मुहुः ॥ दर्शयित्वैतदाश्चर्य्यंनामदेवोगृहंगतः ॥
॥ ६२ ॥ राजापिस्वगृहंगत्वाग्रामेसर्वानजिज्ञपत् ॥ अद्यारभ्यममाज्ञेयंनामदेवोममप्रियः ॥ ६३ ॥ यस्तंद्वेष्टिसमेशत्रुस्तंहनिष्याम्य
हंपुनः ॥ तथाज्ञांशिरसासर्वेस्वीचक्रुःपुरवासिनः ॥ ६४ ॥ एवंहिभगवान्नित्यंभक्तरक्षापरायणः ॥ अद्यापिवततलोकेप्रत्यक्षोनात्रसं
शयः ॥ ६५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येनामदेवचरितेगोजीवनशय्याप्रत्यक्षकरणंनामषट्त्रिंशःसर्गः ॥ ३६ ॥ ॥ छ ॥
अपरंनामदेवस्यमाहात्म्यंकीर्त्यतेऽधुना ॥ यदाकर्ण्यभवेद्भक्तिःश्रीकृष्णेपरमात्मनि ॥ १ ॥ एकदानामदेवस्यगृहेलग्नोमहानलः ॥
कस्यचिद्वेश्मसंलग्नोवायुनातन्नसंशयः ॥२॥ निर्वापयितुमायाताजनास्तान्प्रतिषिध्यसः ॥ नामदेवोऽथगोविंदंगृहीत्वाबहिरागतः ॥
॥ ३ ॥ हर्षेणमहतासर्वंसिद्धंतेगृह्यतांप्रभो ॥ गोविंदाद्यमहाभाग्यमित्युक्त्वाप्रतिमाग्रतः ॥ ४ ॥ स्थित्वावाद्यंसमादायगायन्भ
त्त्यानन्नर्तह ॥ अथसर्वंगृहंवह्निर्भस्मसादकरोत्क्षणात् ॥ ५ ॥ निर्वापितःस्वयंतत्रभस्मप्रोत्सार्य्यवावसत् ॥ मात्रासहचगोविंदंपुनः
संस्थाप्यभक्तितः ॥ ६ ॥ एवंतत्रैववसतोदिनानिकतिचिद्ययुः ॥ अथमातुर्निदेशेनगृहकर्म्मसमारभत् ॥ ७ ॥ कुतश्चित्काष्ठरज्ज्वा
दिसमानीयाकरोद्गृहम् ॥ छादनार्थीतृणान्वेषीग्रामांतान्नाप्तवांस्तृणम् ॥ ८ ॥ ततोमाताब्रवीद्वाक्यंवत्सनाच्छादितंगृहम् ॥ कथ
मस्मिन्निवत्स्यामिशीतातपसमाकुला ॥ ९ ॥ इतिमातृवचःश्रुत्वादूरंग्रामांतरंययौ ॥ तृणपुंजंसमाबध्यधृत्वाशिरसियत्नतः ॥१०॥
आनयन्पथिभारार्तोवासस्तरोस्तले ॥ सुष्वापतत्रभारार्तोभगवान्भक्तवत्सलः॥ ११ ॥ आगत्यनामदेवस्यरूपंकृत्वानिजंहरिः ॥

गृहीत्वातृणपुजंसशिरसाभगवान्प्रभुः ॥ १२ ॥ नामदेवस्यभवनेसमायातोऽतिहर्षितः ॥ तदेवाच्छादयामाससमात्रासपुनरर्थितः ॥
॥ १३ ॥ भुक्त्वाच्छादयवेश्मेदंक्षुत्पिपासाकुलोऽसियत् ॥ इतितस्यावचःश्रुत्वाभक्तरूपधरोहरिः ॥१४॥ प्रातःक्षणेनवेश्मेदंछादया
म्यविलंबितम् ॥ ततःस्नानंकरिष्यामितावत्त्वंपाकमाचर ॥१५॥ इत्युक्त्वातद्गृहंशीघ्रंछादयामासकेशवः ॥ संच्छाद्यतद्गृहंतूर्णंर
ज्जुदात्रादिकंपुनः ॥ १६ ॥ गृहाणेदंगृहेरक्षमातः स्नातुंव्रजाम्यहम् ॥ इत्युक्त्वासगतोदेवोभगवान्भक्तवत्सलः ॥ १७ ॥ नामदेवस्त
तोनिद्रांजहौमायाविमोहितः ॥ अदृष्ट्वातृणपुंजंसनीतंकेनाप्यमन्यत ॥ १८ ॥ ततउत्थायशीघ्रंसआजगामस्वमंदिरम् ॥ उवाच
मातरंमार्गेगृहीत्वातृणसंचयम् ॥ १९ ॥ गृहीतंतत्तुकेनापिएवमेवाहमागतः ॥ नामदेववचःश्रुत्वामाताप्राहाऽतिविस्मिता ॥ २० ॥
किमिदंभाषसेपुत्रकोऽयंतेमतिविभ्रमः ॥ इदानींछादयित्वात्वंरज्जुदात्रादिकंपुनः ॥ २१ ॥ मयिदत्त्वागतःस्नातुंपुनरेवब्रवीषिकिम् ॥
इतिमातृवचःश्रुत्वानामदेवोऽतिविस्मितः ॥२२॥ प्रणम्यमातरंभूयोजगर्हात्मानमात्मना ॥ धिङ्मांयदर्थंभगवान्पथिशुश्रावकेशवः ॥
॥ २३ ॥ इत्येवंविलपन्भूयोमात्राभोक्तुंसमार्थितः ॥ स्नात्वासंपूज्यगोविंदंबुभुजेऽन्नंहरिंस्मरन् ॥ २४ ॥ इत्येवंनामदेवस्यमाहात्म्यं
वर्णितंमया ॥ पुनर्वक्ष्यामितस्यैवभक्तिमाहात्म्यमुत्तमम् ॥ २५ ॥ एकदाऽतिथिवेलायांमालामुद्राविभूषितः ॥ साधुःसमागतस्त
स्यनामदेवस्यमंदिरे ॥ २६ ॥ उवाचनामदेवंससाधोऽहंतुबुभुक्षितः ॥ शीघ्रंभोजयमामन्नंक्षुधामांपरिबाधते ॥ २७ ॥ इतिश्रुत्वा
वचस्तस्यनामदेवउवाचतम् ॥ एकादशीव्रतंत्वद्यकथमन्नंबुभुक्षसि ॥ २८ ॥ आमान्नंगृह्यतांमत्तः पक्त्वाभुंक्ष्वयथारुचि ॥ इत्येवंव

चनंश्रुत्वाअतिथिः प्राहतंपुनः ॥ २९ ॥ पक्त्वाहंनैवभोक्ष्यामिममायंनियमोमहान् ॥ यद्गृहंयामितस्यैवपाकान्नेननसंशयः ॥ ३० ॥
अहंभोक्ष्याम्यतस्त्वंतुभुंक्ष्वभुंक्ष्वमयासह ॥ दिनत्रयमहोरात्रंनिराहारंगतंमम ॥ ३१ ॥ अतस्त्वांप्रार्थयाम्येषप्रयच्छान्नंप्रसीदमे ॥ इति
तस्यवचः श्रुत्वानामदेवोऽतिविस्मितः ॥ ३२ ॥ उवाचशांतयन्भिक्षुंक्षमस्वभगवन्निति ॥ हरिवासरएवैतत्प्राणभ्योऽपिप्रियंमम ॥ ३३ ॥
त्यक्ष्यामिजीवनंचाहंनतुचैकादशीव्रतम् ॥ अतस्त्वांप्रार्थयाम्येतत्त्यजैवंनियमंमयि ॥ ३४ ॥ एवंमुहुः प्रार्थ्यमानोनस्वीचक्रेऽथसो
ऽतिथिः ॥ चिंतयापरयाविष्टोनामदेवोन्यवर्तत ॥ ३५ ॥ अतिथिस्तद्गृहद्वारिसुखायातिक्षुधार्दितः ॥ एवदिनंगतंतस्यसंध्याकालउप
स्थिते ॥ ३६ ॥ पुनस्तंप्रार्थयामासनामदेवः कृतांजलिः ॥ नस्वीचकारतद्वाक्यमतिथिर्हठमाश्रितः ॥ ३७ ॥ सनिवर्त्यततो
गेहेरात्रिंजागरणादिना ॥ नियतः प्रातरेवासावागतोभिक्षुमंदिरे ॥ ३८ ॥ उत्तिष्ठभिक्षोभद्रंतेप्रातःकालोऽयमागतः ॥ स्नात्वा
भुंक्ष्वमयासार्द्धंप्रतिज्ञासफलास्तुते ॥ ३९ ॥ मुहुरेवंसमाभाष्यतत्समीपमुपागतः ॥ मुखाद्वस्त्रंसमाकृष्यगतासुमिवमन्यते
॥ ४० ॥ उत्थापयेत्स्वहस्ताभ्यांनोत्तस्थौसमृतोपमः ॥ ततोरुरोददुःखार्तोनामदेवोऽतिविस्मितः ॥ ४१ ॥ श्रुत्वातुरुदितंसर्वे
आगताःपुरवासिनः ॥ सर्वेविस्मयमापन्नाःकिंकुर्मइतिवादिनः ॥ ४२ ॥ तानाहनामदेवोऽथशृणुध्वंवचनंमम ॥ अयंमृतोऽतिथिर्गेहे
क्षुधयानात्रसंशयः ॥ ४३ ॥ नदत्तमन्नंभोक्तुंयत्क्षुधार्तस्यापिवैमया ॥ अतोऽस्यहत्यासंप्राप्तामम नास्त्यत्रसंशयः ॥ ४४ ॥
तस्मादस्यचितायांतुसहानेनाहमप्यहो ॥ प्रविश्यवह्नौत्यक्ष्यामिजीवनंनात्रसंशयः ॥ ४५ ॥ तस्मादस्यचितायांवैसहानेनाह

मप्यहो ॥ अन्यथानापिवक्तव्यंभवतांशपथोहरेः ॥ ४६ ॥ इतितस्यवचः श्रुत्वासर्वेचिंतांपरांययुः ॥ नामदेवस्यजननीरुदती
भृशदुःखिता ॥४७॥ निवारयामासमुहुः पुत्रोनासौन्यवर्तत ॥ततः सर्वेमृतंभिक्षुमुत्थाप्यपुरवासिनः ॥४८ ॥ श्मशानेप्रापयामासुर्ना
मदेवस्तमन्वगात् ॥ अथतत्रचितांकृत्वाशवंसंस्थाप्यतत्रच ॥ ४९ ॥ स्वयंप्रविश्यवह्निंतुगृहीत्वातन्मुखंययौ ॥ दातुंव्यवस्थितस्त
त्रस्मितंकृत्वाब्रवीन्मृतः ॥ ५० ॥ मामादीपयमोवह्निमुखेमेनमृतोह्यहम् ॥ तवसत्यपरीक्षार्थमेवमेवंकृतंमया ॥ ५१ ॥ तुष्टोऽहंवरदोब्रू
हियदिच्छसिददामितत्॥इति श्रुत्वावचस्तस्यनामदेवोऽब्रवीत्पुनः ॥ ५२ ॥ कस्त्वंकुतःसमायातइतिसत्यंब्रवीहिमे ॥श्रुत्वाभिक्षुरब्रवी
त्तमनिकेतोह्यनामकः ॥५३ ॥ वर्णाश्रमबहिर्भूतः पर्यटामियदृच्छया ॥ तवसत्येनसंतुष्टोब्रूहिकिंकरवाणिते ॥ ५४ ॥ नामदेवउवाचा
थयोऽसिसोऽसिनमोस्तुते ॥ हरिभक्तिर्दृढामेस्तुत्वंमुक्त्वाव्रजमेगृहात् ॥ ५५ ॥ एवमस्त्वितिचोक्त्वासनामदेवगृहंययौ ॥ तमन्वयुर्हृष्ट
चित्तानामदेवपुरःसराः ॥५६॥ नामदेवस्ततःस्नात्वागोविंदंपरिपूज्यच ॥भिक्षुंसंभोज्यबुभुजेजनन्यासहसुव्रतः ॥ ५७ ॥ प्रशशंसनाम
देवंभिक्षुःस्वर्गंपुनर्ययौ ॥ एतद्दृष्ट्वातुचरितंनामदेवस्यवैजनाः ॥५८॥ लेभिरेपरमाश्चर्यंप्रशशंसुः परस्परम् ॥ एवंहरिःसमागत्यभक्तानु
ग्रहविग्रहः ॥ ५९ ॥ कौतुकंकुरुतेऽद्यापिभक्तभक्तिवशीकृतः ॥ नजातिर्नैवचाचारोनमन्त्रोनचपूजनम् ॥ ६० ॥ प्रसादयतिगोविंदंयथा
भक्तिः कलौयुगे ॥ दुर्लभासानृणांयस्यवर्ततेधन्यएवसः ॥ ६१ ॥ भगवानपितद्भक्तिंकुरुतेभक्तियंत्रितः ॥ ६२ ॥ ॥ इतिश्रीभग
वद्भक्तिमाहात्म्येनामदेवचरितंनामसप्तत्रिंशःसर्गः ॥ ३७ ॥ छ ॥ ॥ एकदानाममाहात्म्यंनामदेवेनभक्तितः ॥ कथाव्यक्तीकृता

लोकेतदाश्चर्यंनिशामय ॥१॥ महाधनोवणिक्कश्चिद्दिदृक्षुर्विठ्ठलंप्रभुम् ॥ समायातोऽतिभक्त्यावैधनान्यादायभूरिशः ॥ २ ॥ स्नात्वाभी
मासरित्तोयेदृष्ट्वातंविठ्ठलंहरिम् ॥ संपूज्यविधिवद्भक्त्यारत्नालंकारणादिभिः ॥ ३ ॥ तुलादानंचकारासौहिरण्यस्ययथाविधि ॥ तैर्द्र
व्यैस्तोषयामासयथायोग्यंद्विजान्मुदा ॥ ४ ॥ अन्यैरपिधनैस्तत्रविठ्ठलप्रीतयेवणिक् ॥ दीनानाथांस्तुसंतोष्यप्राहकोप्यस्त्वनागतः॥
॥ ५ ॥ नयमानंधनंतस्मैदास्यामितवचेप्सितम् ॥ इतितस्यवचःश्रुत्वासर्वेतेग्रामवासिनः ॥ ६ ॥ ऊचुःसादरमास्तेवैनामदेवोऽतिवै
ष्णवः ॥ अयाचीनियताहारीसदागोविंदपूजकः ॥ ७ ॥ नयातिसक्वचिद्भक्तःसंतुष्टोयेनकेनचित् ॥ इतिश्रुत्वावचस्तेषांवणिगाहनि
जात्मजम् ॥ ८ ॥ गच्छत्वंतत्रयत्रास्तेनामदेवोहरिप्रियः ॥ प्रणिपत्यविनीतात्मातंप्राहाद्यानयेहभोः ॥ ९ ॥ इत्थंपितुर्वचःश्रुत्वागतः
पुत्रोऽतिहर्षितः ॥ प्रणम्यनामदेवंतंप्राहमेजनकःप्रभो ॥ १० ॥ त्वांदिदृक्षतिधर्म्मात्मातत्रत्वंकृपयाचल ॥ श्रुत्वैतद्वचनंतस्यनामदे
वोऽब्रवीद्वचः ॥ ११ ॥ प्रायोनयामिकुत्रापिकोऽहंयन्मांदिदृक्षति ॥ सदाताधर्मशीलोऽद्यमेकिंचिद्दातुमिच्छति ॥१२॥ नजानामिन
मेवांछाधनेवान्यत्रकुत्रचित् ॥ प्राणधारणमाहारंददातिविठ्ठलःप्रभुः ॥ १३ ॥ इतिपित्रेप्रवक्तव्यंगच्छवत्सविचारयन् ॥ ततःस
वैश्यपुत्रस्तुपितुरंतिकमागतः ॥ १४ ॥ उवाचनामदेवस्यवचःसचपुनर्वणिक् ॥ प्राहपुत्रंपुनर्गच्छप्रसाद्यानयतंसुत ॥ १५ ॥ ततः
सग्रामवृद्धैस्तुसाकंतत्रपुनर्गतः ॥ उवाचप्रांजलिर्भूत्वातथाहंपुनरागतः ॥ १६ ॥ शृणुमेपितृवचनंयावत्त्वंनैषिमेगृहम् ॥ तावदन्नं
चपानीयंनग्रहीष्याम्यहंध्रुवम् ॥ १७ ॥ इतिप्रतिज्ञांज्ञात्वासमरणेकृतनिश्चयः ॥ उत्कंठितोभवंतंवैद्रष्टुंनास्त्यत्रसंशयः ॥ १८ ॥

भवंतंभगवद्भक्तंजानातिभक्तवत्सलम् ॥ नायातःस्वमेवात्रत्वदागमननिश्चयात् ॥ १९ ॥ अथैवंवचनंतेषांवृद्धानांतत्सुतस्यच ॥
श्रुत्वासनामदेवोऽपिसमुत्तस्थौप्रहृष्टवत्॥ २० ॥ जगामवणिजोगेहेयत्रदानंकरोतिसः ॥ वैश्योदृष्ट्वानामदेवंसमुत्थायातिहर्षितः॥२१॥
पाद्याद्यैःपूजयित्वातंप्रोवाचविहितांजलिः ॥ प्रसीदतुभवानद्ययद्ददामिगृहाणतत् ॥ २२ ॥ तद्वैवैश्यवचःश्रुत्वानामदेवोऽप्यभाष
त ॥ अहोतदर्थंनायातोनमेवांछाधनादिषु ॥ २३ ॥ इतिजानंत्यमीसर्वेतस्मादेतत्क्षमस्वभोः ॥ इतिश्रुत्वातुसवणिक्तत्पादौप्रतिगृ
ह्यच ॥ २४ ॥ नतत्याजसतत्पादौनामदेवोऽब्रवीत्तदा ॥ देहिमेऽभिहितंद्रव्यंत्वत्प्रीत्यास्वीकरोम्यहम् ॥ २५ ॥ इत्युक्त्वातुलसीप
त्रमेकमादायतत्रह ॥ रामेत्यस्यार्द्धमलिखत्प्राहतंवणिजंपुनः ॥ २६ ॥ एतत्परिमितंद्रव्यंदेहिमेयदिदास्यसि ॥ इतिश्रुत्वावचस्त
स्यप्राहतंसवणिक्पुनः ॥ २७ ॥ उपहासोनयोग्यस्तेममभक्तस्यसुव्रत ॥ गृहाणयद्ददामीहस्वेच्छयाहंप्रसीदभोः ॥ २८ ॥ श्रुत्वै
तद्वचनंतस्यनामदेवोऽब्रवीत्पुनः ॥ नोपहासंकरोम्यद्यतावत्सर्वाधिकंभवेत् ॥ २९ ॥ सत्यमेतन्नसंदेहोनार्किंचित्तत्समंभुवि ॥ इति
श्रुत्वासवैश्यस्तुसुवर्णंतुलितांतुलाम् ॥ ३० ॥ ॥ समादायतुतत्पत्रंरामनामार्द्धसंयुतम् ॥ एकतःस्थापयामासहिरण्यमपिचैकतः ॥
॥ ३१ ॥ नसमंतुलसीपत्रेणासीत्तत्कनकंपुनः ॥ सुवर्णानिसमादायपूरयामासयत्नतः ॥ ३२ ॥ नययौतत्रसाम्यंतत्पुनरन्यांतुलांद
धे ॥ तत्रापिनययौसाम्यंनामार्द्धस्यतुतद्धनम् ॥ ३३ ॥ पुनर्निर्मायमहतींतुलांसंस्थाप्यसर्वशः ॥ धनानितोलयामासनययुःसमतां
पुनः ॥ ३४ ॥ ततस्तंवणिजंप्राहनामदेवोऽतिविस्मितम् ॥ अहोयावंतिदानानिव्रतानिचमहीतले ॥ ३५ ॥ तीर्थानिचोपवा

साश्वतेषांयत्फलमस्तिवै ॥ संकल्प्यतज्जलंतत्रदत्त्वातोलयपश्यभोः ॥ ३६ ॥ इतिश्रुत्वावणिक्तीर्थव्रतादीनांफलानितु ॥
संकल्प्यप्रददौतत्रनसाम्यंजग्मुरण्वपि ॥ ३७ ॥ ततस्तुपरमाश्चर्य्यंदृष्ट्वासर्वेऽतिविस्मिताः ॥ उवाचनामदेवस्तानेतन्मेपरमंध
नम् ॥ ३८ ॥ नैतादृशंधनंलोकेकस्याप्यस्तीत्यतोमया ॥ नयाच्यतेजनःकोऽपिमत्तःसर्वेहिनिर्धनाः ॥ ३९ ॥
इतितस्यवचःश्रुत्वासाधुसाध्वितिवादिनः ॥ दृष्ट्वातंप्रत्ययंचित्तेजगृहुर्नामचिंतनम् ॥ ४० ॥ एवंवैनाममाहात्म्यंपुराणेपरिकीर्ति
तम् ॥ नामोच्चारणमात्रेणगजोमुक्तोबभूवह ॥ ४१ ॥ गणिकाचदिवंयातारामनामप्रभावतः॥अजामिलोऽतिपापिष्ठोनारायणसुत
स्यते ॥ ४२ ॥ जगामपरमंधामतस्मान्नामैवतारकम् ॥ कृष्णेतिमंगलंनामयस्यवाचिप्रवर्तते ॥ ४३ ॥ भस्मीभवन्तिराजेंद्रमहापात
ककोटयः ॥ इतिस्मृतिरतिव्यक्तामन्यतेऋषिभिःसदा ॥ ४४ ॥ तस्मान्नामसमोनास्तितपोयोगोव्रतंचवा ॥ अन्यानिपुण्यकर्माणिन
शुचिःकर्तुमर्हति ॥ ४५ ॥ तत्रनामस्मृतिर्विष्णोःसर्वशौचोत्तमोत्तमम् ॥ काम्यानांकर्मणांसिद्धौयदन्यत्तद्वृथास्मृतम् ॥४६॥ तत्रांगवै
गुण्यकृतोदोषोऽनर्थंकरोतिवै ॥ नामस्मृतौनचांगानिनचवैगुण्यमस्तिवै ॥ ४७ ॥ तस्मान्नामस्मृतिर्लोकेसर्वेभ्योऽपिगरीयसी ॥ नामैव
तावदेवेतिनिर्णीतोमुनिभिःपुरा ॥४८॥ अश्वमेधादियज्ञेषुनाम्नादत्ताहुतीःसुराः ॥ गृहीत्वावितरंतीष्टमथाप्येतन्नसंशयः ॥४९॥ वेदेऋ
गर्थस्त्वन्योवैयन्नामाक्षरमत्यसौ ॥ तदेवतावकाऋक्प्रातपातेयजतेसुधीः ॥ ५० ॥ तस्मान्नाम्नस्तुमाहात्म्यंनकोऽपिवक्तुमर्हति ॥
यस्यनामस्मृतौभक्तिस्तस्यभक्तिर्हरौदृढा ॥ ५१ ॥ येनैवनाममाहात्म्यमनुभूतयथापुरा ॥ तथाग्रे कथयिष्यामिग्रन्थांतेविस्तराच्चत

म् ॥ ५२ ॥ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येनामदेवचरितेनाममाहात्म्यंनामाष्टत्रिंशःसर्गः ॥ ३८ ॥ छ ॥ ॥ पुनरग्रेप्रवक्ष्यामि भक्तिमाहात्म्यमुत्तमम् ॥ यच्छ्रुत्वाजायतेभक्तिर्वासुदेवेमहात्मनि ॥ १ ॥ जगन्नाथपुरीप्रांतेदेशेवैचोत्कलाभिधे ॥ बिंदुबिल्वइतिख्या तोग्रामोब्राह्मणसंकुलः ॥ २ ॥ तत्रोत्कलेद्विजोजातोजयदेवइतिश्रुतः ॥ विद्याभ्यासरतःशांतःपुरुषोत्तमपूजकः ॥ ३ ॥ अथतत्रैवविप्रो ऽन्योदेवशर्मेतिविश्रुतः ॥ अनपत्योबभूवासौजगन्नाथमुपागतः ॥ ४ ॥ नमस्कृत्यहरिंमूर्ध्नास्वीचकारकृतांजलिः ॥ यदिमेसन्ततिर्नाथ त्वत्प्रसादाद्भविष्यति ॥ ५ ॥ अपत्यंप्रथमंतुभ्यमर्पयिष्याम्यसंशयम् ॥ प्रतिश्रुत्यमनस्येवंसयातोनिजमंदिरम् ॥ ६ ॥ तत्रकालेनकि यताकन्यैकाप्रथमाजनि ॥ ततःपुत्रानलभतसाधुवृत्तान्मनोहरान् ॥ ७ ॥ ततःसमनसास्मृत्वासपत्नीकोद्विजोत्तमः ॥ कन्यांगृहीत्वाह र्षेणजगन्नाथमुपागतः ॥ ८ ॥ नमस्कृत्यजगन्नाथंदेवशर्माब्रवीद्वचः ॥ देवदेवजगन्नाथप्रसादःफलितोमम ॥ ९ ॥ प्रथमातनयाजाता पुत्रास्तुतदनन्तरम् ॥ अतःप्रतिश्रुतांकन्यांददामिप्रतिगृह्यताम् ॥ १० ॥ इत्युक्त्वातांकरेणासौगृहीत्वातांप्रदर्श्यच ॥ पूजके भ्योऽथवृत्तांतमादितोव्याजहारसः ॥ ११ ॥ ततोबहिःसमागत्यसोऽवतस्थेक्वचिद्द्विजः ॥ रात्रौतस्यचविप्रस्यपूजकस्यजगत्प्रभुः ॥ ॥ १२ ॥स्वप्नेतंकथयामासजगन्नाथोद्भुतवचः ॥ देवशर्म्मन्प्रसन्नोऽस्मिस्वीकृतातेसुतामया ॥ १३ ॥ परंतुजयदेवायदीयतांमत्प्रियो ह्यसौ ॥ अहमेवसविज्ञेयोनात्रकार्याविचारणा ॥ १४॥ पूजकोऽप्येवमेवाथस्वप्नंदृष्ट्वाप्रबोधितः ॥ देवशर्म्माणमागत्यस्वप्नंप्रोवाचह र्षितः ॥ १५ ॥ श्रुत्वैवंदेवशर्म्मापिस्वप्नंसत्यममन्यत ॥ पूजकंतंनमस्कृत्यगृहीत्वातनयांनिजाम् ॥ १६ ॥ जगामजयदेव

स्यसन्निधौह्रष्टमानसः ॥ तंतुपर्णकुटीमध्येग्रामाद्बहिरवैक्षत ॥ १७ ॥ दरिद्रंनिरपेक्षंचशास्त्रंपश्यंतमादरात् ॥ मनसातुजगन्नाथं
ध्यायंतंमुदिताननम् ॥ १८ ॥ प्रणम्यजयदेवंतंदेवशर्म्माब्रवीद्वचः ॥ इयंमेतनयाब्रह्मञ्जगन्नाथाज्ञयामया ॥ १९ ॥ नाम्नापद्माव
तीतुभ्यंदीयतेऽनुगृह्यणताम् ॥ इत्युक्तोजयदेवस्तमुवाचमधुरंवचः ॥ २० ॥ अहंनकन्यादानस्यापात्रंदीनोऽनिकेतनः ॥ ममापिनजिघृ
क्षास्तिकिमिदंभाषसेवृथा ॥ २१ ॥ जगन्नाथाज्ञयेत्युक्त्वायन्मांवंचयसिस्फुटम् ॥ कुतएवंमतिभ्रंशोगच्छगच्छयथासुखम् ॥ २२ ॥
आनाय्यपूजकंतत्तुदेवशर्मातियत्नतः ॥निवेदयामाससुहुस्तांचनस्वीचकारसः ॥ २३ ॥ततःस्वतनयांतत्रस्थापयित्वाद्विजोऽब्रवीत् ॥
अयंतुतेपतिःपुत्रित्वयापूज्यश्चसर्वदा ॥ २४ ॥ पतिसेवापरानारीसुखमक्षय्यमश्नुते ॥ इत्युक्त्वातौदेवशर्म्माययौपत्न्यासहाश्रमम् ॥
॥ २५ ॥ सापिकन्यास्थितातत्रजयदेवस्यसन्निधौ ॥ जयदेवस्तुतांप्राहगतौतौपितरौतव ॥ २६ ॥ त्वांविहायत्वमप्येकाकथंस्थास्य
सिकानने ॥ अथपद्मावतीप्राहभगवन्किंब्रवीषिभोः ॥ २७ ॥ स्वमातृपितृदयाविसमांतुभ्यंददौपिता ॥ अतस्तवाहंत्वंचेन्मामतिभ
क्तामनागसम् ॥ २८ ॥ त्यक्ष्यसीत्यत्रकिंकुर्य्यांनाहमेकात्वयिस्थिते ॥ पद्मावतीवचः श्रुत्वाजयदेवोऽप्यचिंतयत् ॥२९॥ अनयासत्य
मुक्तंहित्यागेदोषोमहान्मम ॥ तस्मादस्याःपितुर्गेहंगत्वाहमनयासह ॥ ३० ॥ इमांप्रतिग्रहीष्यामिविधिनानात्रसंशयः ॥ इतिनिश्चि
त्यमनसाजयदेवउवाचताम् ॥ ३१ ॥ एह्यागच्छमयासार्द्धंगच्छामित्वत्पितुर्गृहम् ॥ विधिनातत्रतेपाणिंग्रहीष्यामिनसंशयः॥ ३२ ॥
इत्येवंवचनंश्रुत्वाप्राहपद्मावतीपुनः ॥ त्वदाज्ञाकरणंधर्म्मइत्येवंमांपिताब्रवीत् ॥ ३३ ॥ अतोमहाप्रसादोऽयमित्युक्त्वाग्रेस्थिताभ

वत् ॥ जयदेवस्तयासार्धंदेवशर्म्मगृहंगतः ॥ ३४ ॥ तमुक्त्वागद्गदंसर्वंप्रतिगृह्ययथाविधि ॥ पद्मावत्यातयासार्धमाजगामनिजंगृह
म् ॥ ३५ ॥ उभौतौदंपतीतत्रएकप्राणौबभूवतुः ॥ नृत्यंतौचापिगायंतौश्रीकृष्णार्च्चनतत्परौ ॥ ३६ ॥ एकदाजयदेवस्तुमनस्ये
वमचिंतयत ॥ स्वयंकृतेनगीतेनतोषयिष्याम्यहंहरिम् ॥ ३७ ॥ इतिनिश्चित्यनिर्मायगीतगोविंदनामकम्॥गायंस्तुदेवदेवाग्रेप
त्न्यासहननर्तह ॥ ३८ ॥ एवंनित्यव्रतंतस्यतत्रैकस्मिन्दिनेपुनः ॥ निबन्धरासचरितंकृष्णोक्तोराधिकांप्रति ॥ ३९ ॥
शिरस्याधेहिमेपादमित्यर्थंचकरंहृदि ॥ समायातंनतदातुंशशाकेश्वरतांस्मरन् ॥ ४० ॥ अन्यदन्वेषमाणोऽपिनलेभेताद्दशं
पदम् ॥ संस्थाप्यपुस्तकंस्नातुंजगामान्यद्विचिंतयन् ॥ ४१ ॥ तावज्जयदेवरूपःकृष्णस्तत्रसमागतः ॥ पद्मावतीमुवा
चाथपुस्तकंदेहिमेप्रिये ॥ ४२ ॥ पद्मावतीसमानीयददौतत्पुस्तकंद्रुतम् ॥ गृहीत्वापुस्तकंतत्रजयदेवेनयत्कृतम् ॥
॥ ४३ ॥ मनसातल्लिलेखासौजयदेवस्वरूपधृक् ॥ पुनरुत्थायसस्नातुंजगामातित्वरान्वितः ॥ ४४ ॥ कश्चित्कालमती
त्याथजयदेवःसमागतः ॥ देवानभ्यर्च्यभुक्त्वाचगृहीत्वापुस्तकंपुनः ॥ ४५ ॥ मनसाकल्पितंपद्यंलिखितुंतुसमुद्यतः ॥ ददर्श
तत्रतत्पद्यंनालिखद्यदयंपुरा ॥ ४६ ॥ अन्येनलिखितंज्ञात्वाप्राहपद्मावतींप्रियाम् ॥ अयेकेनेदमालेखितंजानासिशुचिस्मिते ॥
॥४७॥ नाहमेतत्पदंपूर्वमलिखंनाक्षरंमम ॥ इतिश्रुत्वावचस्तस्यप्राहपद्मावतीप्रिया ॥४८॥ नाथकोऽयंभ्रमस्तेऽद्यजयदेववचोऽब्रवीत्॥
स्नातुंगतस्तुतत्कालेपुनरागत्यसत्वरम् ॥ ४९ ॥ गृहीत्वापुस्तकंमत्तोलिखित्वात्वंपुनर्गतः ॥ स्नातुमेवंतुजानामिकोऽन्यस्त्वत्तो

ऽत्रलेखकः ॥ ५० ॥ इतिश्रुत्वाप्रियावाक्यंजयदेवोऽतिविस्मितः ॥ अहर्निशंतमेवार्थंचिंतयन्नालभत्सुखम् ॥ ५१ ॥ तस्मिन्दि
नेरात्रिशेषेस्वप्नेश्रीपुरुषोत्तमः ॥ उवाचजयदेवंतुसुस्वप्नंमुमुदेभृशम् ॥ ५२ ॥ स्वपत्नींसुभगांमेनेपुरुषोत्तमदर्शनात् ॥ तदा
रभ्यातिभक्त्यावैपत्न्यासहहरिंभजन् ॥५३॥गायन्वैगीतगोविंदंतोषयामासकेशवम् ॥ निर्मायगीतगोविंदपुस्तकंपुरुषोत्तमे ॥ ५४ ॥
निवेद्यकृतकृत्योऽभूज्जयदेवोमहामनाः ॥ ५५ ॥ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येजयदेवचरितंनामैकोनचत्वारिंशःसर्गः ॥ ३९ ॥
पुनर्वक्ष्यामितस्यैवचरितंपरमाद्भुतम् ॥ जयदेवस्यविप्रस्यगीतगोविंदसंभवम् ॥ १ ॥ एकदागीतगोविंदंश्रुत्वाराजातिहर्षितः॥
निजाग्रेस्थापयित्वातत्काव्यंतादृशमेवच ॥ २ ॥ स्वयंनिर्मायविद्वद्भ्योददावाज्ञांनृपःपुनः ॥ अद्यारभ्यममैतद्वैगीतगोविंदना
मकम् ॥३॥ पठ्यतां गीयतां सर्वैरन्यथादंडभाग्भवेत् ॥ इत्याज्ञाप्यद्वितीयतद्गीतगोविंदनामकम् ॥ ४ ॥ प्रख्यापयामासनृपः
काव्यंस्वकृतमेवतु ॥ जयदेवकृतंकोऽपिनजगौनृपशासनात् ॥ ५ ॥ अथैकस्मिन्दिनेराजाद्रष्टुंश्रीपुरुषोत्तमम् ॥ आगतस्तत्रदेवा
ग्रेजग[illegible]काव्यंगायन्तंनृपआहतम् ॥ अहोम यिकाव्यंत्वंकुतोनस्वीकरोषिभोः ॥ ७ ॥ श्रुत्वैवंजय
[illegible]राजानंप्राहभीतवत् ॥ स्वीकृतंभवदीयंतुकाव्यंराजन्नसंशयः ॥ ८ ॥ परन्तुमत्कृतेनायंयथातुष्यतिकेशवः ॥ नतथात्व
त्कृतेनेतिपरीक्षाक्रियतामिह ॥ ९ ॥ एतच्छ्रुत्वातुवचनंजयदेवकृतंस्वकम् ॥ उभयंस्थापयामासजगन्नाथाग्रतः स्वयम् ॥ १० ॥
उवाचदेवंभोस्वामिन्किंतवातिप्रियंद्वयोः ॥ तत्स्थापयोपरिष्टात्त्वयामः सर्वेबहिर्गृहात् ॥ ११ ॥ इत्युक्त्वातेबहिर्यातद्वारेदत्त्वाक

पाटकम् ॥ राजाचजयदेवश्चयेचान्येतत्रवैद्विजाः ॥ १२ ॥ अग्रेस्थित्वाक्षणंतत्रोद्धाटितंस्वयमेवहि ॥ कपाटमंदिरेयाताः सर्वेराजपु
रस्सराः ॥ १३ ॥ ददृशुस्तत्रतेसर्वेजयदेवेननिर्मितम् ॥ उपरिष्टात्स्थापितंतुतदधोराजनिर्मितम् ॥ १४ ॥ दृष्ट्वातत्परमाश्चर्य्यंरा
जाशोकसमन्वितः ॥ तत्याजान्नंचपानीयंरात्रौतत्रैवतस्थिवान् ॥ १५ ॥ नृपः स्वप्नेददर्शाथपुरुषोत्तमरूपधृक् ॥ कश्चित्समागतोब्रू
तेकिमर्थंशोचसेवृथा ॥ १६ ॥ गीतगोविंदसदृशंनान्यत्काव्यंप्रियमम ॥ त्वत्कृतेनापितुष्यामिभक्तस्त्वंनात्रसंशयः ॥ १७ ॥
परंतुगीतगोविंदंस्वीकरोतुभवानपि ॥ प्रख्यापयतुलोकेऽस्मिन्ममप्रीतिविवर्धनम् ॥१८॥ एवंपश्यन्नृपःस्वप्नेजहौनिद्रांमुदान्वितः ॥
कृष्णंननाम मनसास्वापराधंक्षमापयन्॥१९॥तदारभ्यनृपोजातोजयदेवेतिभक्तिमान् ॥स्वयंतुगीतगोविंदंप्रपठन्भक्तिपूर्वकम् ॥२०॥
प्रख्यापयामासपुनर्देशेदेशेनृपोत्तमः ॥ अथापरंप्रवक्ष्यामितस्यैवचरितंशुभम् ॥ २१ ॥ एकदातूत्कलेदेशेपुरुषोत्त
मसन्निधौ ॥ कस्मिंश्चिन्नगरेकाचिच्छाकविक्रयिणीमुदा ॥ २२ ॥ शरत्कालेनिशीथिन्यांचंद्रिकांचितदिग्दशा ॥ गायंतीगीतगोविं
दंवृंताकवनमध्यगा ॥ ॥ २३ ॥ वृंताकंचविचिन्वंतीविक्रयार्थमितस्ततः ॥ गायंतीकृष्णचरितंजयदेवविनिर्मितम् ॥ २४ ॥
श्रुत्वागानंतुभगवांस्तस्याः पश्चादितस्ततः ॥ शृण्वन्गीतंसबभ्रामव्रजंतीसायतोयतः ॥२५॥ एवंभक्तिवशः कृष्णोवृंताकविपिनेहरेः ॥
वृंताककंटकैश्छिन्नंपरिधानीयमंबरम् ॥ २६ ॥ वृंताकानिगृहीत्वासामंदिरंस्वंययौयदा ॥ तदास्वधामसंप्राप्तोनिशिश्रीपुरुषोत्तमः ॥
॥ २७ ॥ प्रभातेतत्रपूजार्थमायातःपूजकोहरेः ॥ पूजासंभारमादायद्रष्टुंराजाप्युपागतः ॥ २८ ॥ प्रोद्घाट्यसकपाटंतुगत्वादेव

स्यसन्निधौ ॥ स्नापयन्परिधानीयमपश्यत्खंडशःकृतम् ॥ २९ ॥ वृंताककंटकैर्विद्धंकिमेतदित्यचिंतयत् ॥ आहूयसतुराजानं
दर्शयामासचांबरम् ॥ ३० ॥ कथमेतदभूद्राजन्परमाश्चर्यमित्यहो ॥ मयैवागत्यचपुनः कपाटोद्घाटनंकृतम् ॥ ३१ ॥ नबालो
नापिचोन्मत्तः कश्चिदत्रागतोनिशि ॥ कथमेतद्विजानीयांकेनेदंकृतमीदृशम् ॥ ३२ ॥ इत्युक्त्वापूजयित्वातंसहराजासपूजकः ॥
विस्मितोबहिरागत्यपरांचिंतामुपागतः ॥ ३३ ॥ मुहुर्मुहुश्चिंतयानोनलेभेऽद्भुतकारणम् ॥ तदाराजापितत्रैवपूजकब्राह्मणेनवै ॥
॥ ३४ ॥ उवासरात्रौश्रीकृष्णंप्रार्थयन्मनसामुहुः ॥ केनेदमासीद्वस्त्रस्यखण्डशः करणंविभो ॥ ३५ ॥ एवंचिंतापरौतौतुत्यक्ताश
नजलावुभौ ॥ रात्रौसुषुपतुस्तत्रलेभातेनैवतौसुखम् ॥ ३६ ॥ तदानिशावशेषेतुस्वप्ने श्रीपुरुषोत्तमः ॥ ददर्शतुरुभौदेवंतत्तद्रू
पिणमागतम् ॥ ३७ ॥ राजानंब्राह्मणंचापिवदंतंमधुराक्षरम् ॥ विषीदसिकिमर्थंभोमद्वस्त्रच्छेदनादिना ॥ ३८ ॥ शृणुष्वका
रणंवासोयेनच्छिन्नमनेकधा ॥ इतोविदूरेवृंताकवाट्यांकाचिज्जगौमुदा ॥ ३९ ॥ फलविक्रयिणीगीतगोविंदंममवल्लभम् ॥ त
च्छ्रोतुमगमंचाहंवाट्यांसार्द्धंतयापुनः ॥ ४० ॥ इतस्ततोह्यधावंस्तुततोवृंताककंटकैः ॥ खण्डशःस्फुटितंवस्त्रंसत्यमेतन्नसंशयः ॥
॥ ४१ ॥ माविषादंकुरुष्वात्रनैवदोषोऽस्तिकस्यचित् ॥ इतिश्रुत्वावचःस्वप्नेभूपतिःसचपूजकः ॥ ४२ ॥ उत्थायचततोविप्रोरा
जसन्निधिमागतः ॥ राजानमुक्तवान्सर्वंस्वप्नेयद्यदवैक्षत ॥ ४३ ॥ श्रुत्वाराजाथतत्सर्वंसत्यमेतदितिब्रुवन् ॥ उवाचस्वप्ने
यद्दृष्टंराजापिस्वयमेवाहि ॥ ४४ ॥ परस्परंप्रशंसंतौशाकविक्रयिणीमुभौ ॥ जयदेवकविंचैवराजातुब्राह्मणःसच ॥ ४५ ॥ अथ

राजातुतांशूद्रींशाकविक्रयिणींतदा ॥ आनाय्यजीविकांदत्त्वावसात्रैवपुरेसदा ॥ ४६ ॥ गायंतीगीतगोविंदंनित्यंश्रीपुरुषोत्तमम् ॥
तोषयेतिनृपस्त्वाज्ञांदत्त्वासंपूज्यकेशवम् ॥ ४७ ॥ भुक्त्वाप्रसादंदेवस्यजगामभवनंनिजम् ॥ जयदेवंततोराजाभक्तराजममन्य
त ॥ ४८ ॥ मुहुस्तद्दर्शनाकांक्षीकविंवेश्मययौनृपः ॥ एवंभक्तिवशःकृष्णःकिंकिंनकुरुतेप्रभुः ॥ ४९ ॥ तस्माद्द्यापिभक्तिर्हिनृणां
सर्वार्थसाधिनी॥अथापरंप्रवक्ष्यामिपद्मावत्याविचेष्टितम् ॥ ५० ॥ जयदेवस्यचरितंमहदाश्चर्य्यमुत्तमम् ॥ एकदातत्रनृपतेर्भ्राता
कश्चित्सगोत्रजः ॥ ५१ ॥ ममारकालधर्मेणतत्पत्नीसुव्रतासती ॥ अनुगंतुंमनश्चक्रेनिश्चितंपतिदेवता ॥ ५२ ॥ ततोराजाददौसर्वं
संभारन्त्वौर्द्ध्वदेहिकम् ॥ स्वयंतत्रगतोराजापुरवासिजनैर्वृतः ॥ ५३ ॥ तस्मिन्नेवक्षणेराज्ञींद्रष्टुंपद्मावतीययौ ॥ राज्ञीप्रणम्यतांप्राह
सतींद्रष्टुंकिमेषिभोः ॥ ५४ ॥ इतिश्रुत्वावचोराज्ञ्याःप्राहपद्मावतीसती ॥ अहोपाषंडइत्येषमृतेपत्यौमनस्विनी ॥ ५५ ॥ एवंमर्तुंसमु
पायंयत्प्रसाधयसिसुव्रता ॥ अहंतुमन्येभोराज्ञिपत्युर्मरणसंश्रुतम् ॥ ५६ ॥ तत्क्षणाद्देहजवह्नौभस्मीभूतानया भवेत् ॥ काभक्तिः
काचतत्प्रीतिर्व्रतंतस्याश्चकिंपुनः ॥ ५७ ॥ इतिश्रुत्वावचस्तस्याराज्ञीविस्मयमागता ॥ किमिदंभाषसेसाध्विकथमेवंभविष्य
ति ॥ ५८ ॥ परीक्षांकारयिष्यामिकिंचित्कालंप्रतीक्ष्यच ॥ इतिश्रुत्वावचस्तस्याराज्ञीविस्मयमागता ॥ ५९ ॥ पद्मावत्यपितांरा
ज्ञींसमाभाष्यगृहंययौ ॥ अथैकस्मिन्दिनेराजाद्रष्टुंश्रीपुरुषोत्तमम् ॥ ६० ॥ जगामजयदेवंतंपुरस्कृत्यातिभक्तितः ॥ उवासतत्रतां
रात्रिंजयदेवेनसंगतः ॥ ६१ ॥ अथप्रभातेसंजातेयावद्राजानचागतः ॥ तावद्देवतुसाराज्ञीकविपत्नींसमाह्वयत् ॥ ६२ ॥ पद्मावती

समायाताराज्ञींप्राहकरोमिकिम् ॥ तांदृष्ट्वाराजपत्नीसारुरोदाहचविह्वला ॥ ६३ ॥ राज्ञासहकविस्तत्रदेवंद्रष्टुंगतःकिल ॥ तत्राकस्मा
द्दिनादुःखंपतिस्तेदेहमत्यजत् ॥ ६४ ॥ तद्दुःखवशगोराजानायातिस्वगृहंपुनः ॥ अमीसमागताभृत्याःकथयंतीदमाप्रियम् ॥ ६५ ॥
इतिश्रुत्वावचस्तस्याराज्ञ्याःपद्मावतीसती ॥ अहोकिमिदमित्युक्त्वातूष्णींतस्थौक्षणार्धतः ॥ ६६ ॥ निपपातपृथिव्यांसागतासु
रभवत्तदा ॥ अथराज्ञीसमागत्यहाहाकारंमुहुर्मुहुः ॥ ६७ ॥ कुर्वंतीस्वयमेवार्तातामुत्थाप्यपतिव्रता ॥ नोत्तस्थौतांमृतां
ज्ञात्वाराज्ञीशोकसमाकुला ॥ ६८ ॥ भयार्ताविललापाथगर्हयंतीनिजांक्रियाम् ॥ अथतत्रगताःसर्वेराजदाराःसमंततः ॥
॥ ६९ ॥ चुक्रुशुःशोकसंतप्ताःकिंजातमितिचाब्रुवन् ॥ अथराजापिकविनासमाहूतोऽतिविस्मितः ॥ ७० ॥ श्रुत्वाकोला
हलंशीघ्रंययावंतःपुरंस्वयम् ॥ जयदेवेनसार्द्धंचतत्रगत्वाददर्शह ॥ ७१ ॥ पद्मावतींमृतांभूमौराजात्वाहप्रियांप्रति ॥ किंजातमस्या
येनेयंमृताकस्मात्कविप्रिया ॥ ७२ ॥ श्रुत्वाराज्ञीनृपवचोभीताप्राहकृतांजलिः ॥ ममदुश्चरितंनाथक्षम्यतांकथयामिते ॥ ७३ ॥
तवभ्रातामृतःपूर्वंतत्पत्नीसातमन्वगात् ॥ तांदृष्ट्वाप्राहमामेषाकोऽयंपाखंडइत्यहो ॥ ७४ ॥ मृतेपत्यौतत्क्षणात्तुभस्मसादभवन्नया ॥
तस्यावृथाव्रतंप्रीतिरित्येवंममनिश्चयः ॥ ७५ ॥ इतिश्रुत्वावचस्तस्याश्चिकीर्षंतीपरीक्षणम् ॥ अवदंतेपतिःसाध्विमृतोकस्मादिति
श्रुतम् ॥ ७६ ॥ तच्छ्रुत्वैवपपातोर्व्यांमृतातत्क्षणमेवहि ॥ इदानींत्वमिहायातःकविनासहसंगतः ॥ ७७ ॥ अतःपरंयत्कर्तव्यंत
त्कुरुष्वममप्रभो ॥ इतिश्रुत्वावचस्तस्याराजाप्राहातिविस्मितः ॥ ७८ ॥ वृथेयंघातितादेवीत्वयापद्मावतीसती ॥ निवर्त्स्यतिक

थंगेहेजयदेवोऽनयाविना ॥ ७९ ॥ अतस्त्यक्ष्याम्यहमपित्वांयथेच्छंव्रजाधुना॥घातनेस्त्रीवधोमेस्यादवध्याहिस्त्रियोनृणाम् ॥ ८० ॥
इतिराजवचःश्रुत्वाजयदेवोऽब्रवीद्वचः ॥ राजन्ननपराधेयंमाहिषीतवसुव्रता ॥ ८१ ॥ नत्यागमर्हत्येषावैनैवंब्रूहिममाग्रतः ॥ कौतुके
नमृषावाक्यंभवत्यवनसंशयः ॥ ८२ ॥ वाङ्मात्रेणनतत्रास्तिपातकंकस्यचिन्नृप ॥ किंचक्षणंजगन्नाथंस्मरत्वंसुमनाभव ॥ ८३ ॥
भजेऽहमपितंदेवंकल्याणंसकरिष्यति ॥ इत्युक्त्वाजयदेवस्तुवाद्यमादायसर्वशः ॥ ८४ ॥ प्रियेचावीतियत्स्वोक्तंगीतंतत्परमानसः ॥
जगौततःक्षणादेवपद्मावत्याःकलेवरम् ॥ ८५ ॥ संचचारततःसर्वेविस्मयोत्फुल्ललोचनाः ॥ साधुसाध्वितिचप्रोचुःकंचित्कालंव्यतीत्य
सा ॥ ८६ ॥ समुत्थायजगौपत्यासार्द्धंतुपश्यतांनृणाम् ॥ ततोराजाजहर्षाथराज्ञीचापिपुनःसतीम् ॥ ८७ ॥ प्रणनामसुहुर्भक्त्याक्ष
म्यतामितिभाषिणी ॥ ततःप्रसन्नःसकविःस्नात्वाभुक्त्वानृपाज्ञया ॥ ८८ ॥ स्वगृहंप्रययौहृष्टःपद्मावत्यामहोत्सुकः ॥ एवंभगवतो
भक्तिर्मृतसंजीवनीनृणाम् ॥ ८९ ॥ अद्यापिवर्ततेलोकेनिश्चयोऽपेक्षितः किल ॥ ९० ॥ इति श्रीभगवद्भक्तिमाहात्म्येजयदेवचरितंना
मचत्वारिंशःसर्गः ॥ ४० ॥ अपरंशृणुवक्ष्यामिकवेःसुचरितंमहत् ॥ जयदेवसमःसाधुर्नभूतोनभविष्यति ॥ १ ॥ सर्वभूतसुहृ
ल्लोकेसममात्मसमंपुनः ॥ पश्चात्प्रारब्धभोगस्तुमनुतेकर्म्मबन्धनम् ॥ २ ॥ एकदासक्वचिद्ग्रामेनिमंत्रणवशाद्गतः ॥ तत्रसंमा
नितःशिष्यैर्वस्त्रालंकरणादिभिः ॥ ३ ॥ भोजयित्वासुवर्णानिदत्त्वाप्रातर्विसर्जितः ॥ आगच्छद्विपिनेमार्गेचिंतयन्पुरुषोत्त
मम् ॥ ४ ॥ ततःखड्गधरास्तत्रलुण्ठकाःसमुपागताः ॥ चत्वारोनिर्दयास्तीव्राःकालांतकयमोपमाः ॥ ५ ॥ तान्दृष्ट्वाजयदे

१

वस्तुधनलोभाज्जिघांसतः ॥ उपायमकरोत्तत्रप्राणत्राणायकेवलम् ॥ ६ ॥ तानुवाचकविःप्रेम्णावत्सायूयंक्वगच्छथ ॥ पुरुषो
त्तमपुरींयामइत्युक्तस्तैःपुनःसतु ॥ ७ ॥ उवाचतान्मधुरयावाचाभद्रमभूदिह ॥ मयापितत्रगंतव्यंभवद्भिःसाकमेवहि ॥ ८ ॥
परंतुवृद्धएकाकीगृहीत्वैतद्धनानिभोः ॥ गंतुंनशक्तोयूयंचेद्धनमेतत्प्रगृह्यच ॥ ९ ॥ गच्छताथमयासार्द्धंतदामेगमनंभवेत् ॥ इत्यु
क्त्वातानिवस्त्राणिसुवर्णानिचसर्वशः ॥ १० ॥ तेभ्योदत्त्वासुखंमेनेप्राणत्राणंमुदान्वितः ॥ शनैःशनैस्ततःपश्चात्ततःसोऽप्यगमत्क
विः ॥ ११ ॥ गृहीत्वैतानिवस्तूनिसुखंगच्छंत्वमीपुनः ॥ यास्यामिस्वगृहंदैवान्महारिष्टाद्विमोचतः ॥ १२ ॥ अन्यथाममीलोभा
द्घातयेयुर्नसंशयः ॥ इत्येवंचिंतयंतंतंजयदेवंशनैःशनैः ॥ १३ ॥ गच्छंतंपुरतश्चौरादीर्घनादैःसमाह्वयन् ॥ अहोशीघ्रंसमागच्छगृहा
णेदंनिजंधनम् ॥१४॥ त्वंतुगंतुंनशक्नोषिदूरंगंतव्यमस्तिनः ॥इतिश्रुत्वावचस्तेषांजयदेवोऽतिशंकितः ॥१५॥ किंकरिष्यत्यमीमह्यमि
त्येतच्चिन्तयन्पथि ॥ तावत्तेमंत्रयामासुरयंधूर्तोऽस्तिवैद्विजः ॥ १६ ॥ अस्माभिरेववस्तूनिप्रापयिष्यतिनःपुनः ॥ घातयिष्य
तिगत्वायंस्वग्रामेनात्रसंशयः ॥ १७ ॥ तस्मादेनंनिहत्याथगमिष्यामोनचान्यथा ॥ एवंकेनचिदुक्तेनतन्मध्येकोऽप्यभाषत॥ १८ ॥
अहोकिंमरणेनास्यबद्ध्वासंस्थाप्यतांक्वचित् ॥ इत्युक्त्वाजयदेवंतुगृहीत्वातेऽतिनिर्दयाः ॥ १९ ॥ हस्तौपादौतथैकत्रबद्ध्वाचिक्षिपुरन्य
तः ॥ पुनस्तन्मध्यतःकोऽपिमहादुष्टोऽतिनिर्दयः ॥ २० ॥ खड्गेनपाणिपादंतद्बद्धंचिच्छेदयत्नतः ॥ ततस्तेगंतुमनसश्चौराजग्मुर्यदृच्छ
या ॥२१॥ जयदेवोऽपिप्रारब्धभोगोऽयमित्यमन्यत॥ चिंतयानोजगन्नाथंतत्रारण्येक्षुधार्दितः॥ २२॥ अथतत्रैत्यनृपतिर्मृगयांपर्यटन्व

ने॥एकाकीहयमारूढोधावंतंमृगमन्वगात् ॥२३॥ राजातत्राजगामाथजयदेवसमीपगम् ॥ मृगंदृष्ट्वानविव्याधजयदेवेनशंकितः ॥२४॥
आरोप्यशिबिकायांतमानिनायनिजंपुरम् ॥ तत्रपद्मावतींसाध्वीमानाय्यनृपतिस्तदा ॥ २५॥ सेवयामाससर्वैश्चजयदेवंनृपोत्तमः ॥
ततोराजाप्रतिदिनंजयदेवंदिदृक्षया ॥२६॥ जगामतद्गृहंतस्यतदातिथ्यंचकारसः ॥ एवंगतेषुकालेषुकियत्सुचततः कविः ॥ २७ ॥
समाजग्मुस्तुतेचौरामुद्रामात्रविभूषिताः ॥ साधुवेषधरास्तेतमुपकारंदिदृक्षवः ॥ २८ ॥ आगच्छंतोभगवतोगृहमायांत्यसंशयम् ॥
पद्मावतींसमाहूयपाद्याद्यैस्तान्ह्यपूजयत् ॥ २९ ॥ ततस्तान्भोजयित्वातमाजुहावनृपंकविः ॥ राजातत्रागतस्तंचजयदेवोऽभ्यभाषत ॥
॥ ३० ॥ पुरस्कृत्यचतान्दुष्टानदुष्टेनांतरात्मना॥राजन्नेतेगुरुसमामहांतःशास्त्रपारगाः ॥ ३१ ॥ एतेभ्योदेहिवित्तानिपात्रमेतेनसं
शयः ॥ इतिश्रुत्वाततोराजारत्नानिविविधानिच ॥ ३२ ॥ वस्त्राण्याभरणादीनिददौपरमभक्तितः ॥ गृहीत्वातद्धनंतेवैयथेष्टंगंतुमुद्य
ताः ॥ ३३ ॥ तदाप्राहनृपंभूयोजयदेवोऽतिहर्षितः ॥ अहोमार्गेकियद्दूरंवनमत्यंतभीषणम् ॥ ३४ ॥ तस्यसंतरणार्थायभृत्यंतेभ्योनि
योजय ॥ वनाद्बहिरिमान्कृत्वापुनरायातुमेऽन्तिकम् ॥ ३५ ॥ इतिश्रुत्वाततोराजापदातीन्पंचतान्प्रति ॥ नियोजयामासतदातेजग्मु
स्तैःसहाद्भुतम् ॥ ३६ ॥ ततस्सर्वत्रगास्तेतुतरुच्छायासुपाश्रिताः ॥ राजभृत्याःकथाशेषेतानूचुश्चविनीतवत् ॥ ३७ ॥ अहोकवि
र्भवंतःकेतद्भूतकृपयामुदा ॥ युष्मदर्थंतुभक्त्यायद्राजानंप्रार्थयत्कविः ॥ ३८ ॥ दापयामासरत्नानिविविधानिधनानिच ॥ नैतादृ
शंकस्यचिद्वैसत्कारमकरोत्कविः ॥ ३९ ॥ इतिश्रुत्वावचस्तस्यराजभृत्यस्यतेखलाः ॥ ऊचुःप्रशस्यतेसर्वेशृणुकारणमत्रभोः ॥४०॥

कर्नाटराजनिकटंवयंभिक्षाशिनःस्थिताः ॥ तत्रायमपिचायातोधनार्थीकाव्यकृद्विजः ॥ ४१ ॥ तथैकस्यगृहेचौर्य्यंचकारायंद्विजा
धमः ॥ धनिकेनगृहीत्वाथप्रापितोराजसन्निधौ ॥ ४२ ॥ राजानंप्राहधनिकोनायंविप्रकुलोद्भवः ॥ चौरोऽयंनित्यचौर्य्येणकदापिप
तितःप्रभो ॥ ४३ ॥ इदानींमद्गृहेभृत्यैर्धृत्वानीतस्तवांतिके ॥ इतिश्रुत्वाततोराजाचांडालायसमर्पयत् ॥ ४४ ॥ गृहीत्वेमंदु
रात्मानंममराज्याद्बहिष्कुरु ॥ अन्यराज्यंतुप्रापय्यजहिखड्गेनपापिनम् ॥ ४५ ॥ इत्याज्ञांशिरसाधृत्वाचांडालस्तंप्रगृह्यच ॥
गच्छंश्चप्रार्थितोभूयोद्रव्येणापिवशीकृतः ॥ ४६ ॥ अस्माभिरुक्तोनायंभोवध्योयुष्माभिरेवच ॥ देशांतरमवश्यंतुप्रापयित्वांगुलिद्व
यम् ॥ ४७ ॥ छित्त्वायांतुनृपद्वारंप्रत्ययार्थंप्रदश्यताम् ॥ इत्येतदुक्तंस्वीकृत्यनीत्वातंराज्यतोबहिः ॥ ४८ ॥ अत्रराज्येवनेक्वापि
छित्त्वातत्पाणिपादकम् ॥ राज्ञेप्रदर्शयामासुरितियातंपुरास्मभोः ॥ ४९ ॥ ततोऽस्मान्नर्चयामासराज्ञःस्मृत्वात्मरक्षणम् ॥ इतितेषां
कथयतांतुमुलःखेऽभवद्ध्वनिः ॥ ५० ॥ संपपाताशनिर्घोरस्तेषांमूर्द्धसुतत्क्षणात् ॥ ततस्तेराजभृत्यास्तुदृष्ट्वातन्महदद्भुतम् ॥ ५१ ॥
क्षणात्तूष्णींस्थिताःसर्वेसंज्ञांसंप्राप्यतेपुनः ॥ तत्रश्रुत्वानृपंयातंजयदेवस्यमंदिरे ॥ ५२ ॥ तत्रैवतेगताःसर्वेगृहीत्वाधनसंचयम् ॥ रा
जानंप्रणिपत्योचुस्तेबद्धकरसंपुटाः ॥ ५३ ॥ राजंस्तेसाधवोऽरण्येमृतावज्रावघाततः ॥ वस्त्रादिकंगृहीत्वातुवयमेवसमागताः ॥५४॥
इतिश्रुत्वाततोराजाकिंजातमितिचाब्रवीत् ॥ ततस्तेनिजप्रश्नादिवज्रपातांतमब्रुवन् ॥ ५५ ॥ श्रुत्वातुजयदेवस्तुहाहाकृत्वामुहुर्मु
हुः ॥ रुरोदपद्भ्यांहस्ताभ्यांछिन्नाभ्यांताडयन्महीम् ॥५६॥ तत्क्षणाज्जयदेवस्यपाणिपादंतुपूर्ववत् ॥ प्रादुर्बभूवसर्वेषांपश्यतांनात्रसंश

यः ॥ ५७ ॥ असतांतादृशानांतुमृत्युंश्रुत्वातुदुःखितः ॥ रुरोदच्छन्ननातस्मात्तुतोषपुरुषोत्तमः ॥ ५८ ॥ ददौहस्तौचपादौच
किमाश्चर्य्यमिदंहरेः ॥ अथराजातिचिंतातौजयदेवंप्रणम्यच ॥ ५९ ॥ पप्रच्छकिमिदंचित्रंब्रूहिमत्कृपयाद्विज ॥ उवाचजयदेवस्तं
वृत्तांतंपूर्वतःस्वकम् ॥ ६० ॥ चौराणांचयथातत्त्वंततोराजामुमोदह ॥ तुष्टावजयदेवंतंधन्योऽसित्वत्समोनवै ॥ ६१ ॥ दृष्टःश्रुतो
वालोकेऽस्मिन्मित्रशत्रुसमःपुमान् ॥ धन्योऽहमतिनीचोऽपित्वत्संसर्गान्नसंशयः ॥ ६२ ॥ इत्यादिवचसाराजास्तुत्वागत्यस्वमंदिरम् ॥
आश्चर्यंपुत्रदारेभ्योमंत्रिभ्यःप्रोक्तवान्स्वयम् ॥ ६३ ॥ अथकालेनकियताजयदेवोजरांगतः ॥ तथापिनित्यकर्मादिनतत्याजकदा
चन ॥ ६४ ॥ गंगास्नानव्रतंतस्यनित्यसंकल्पितंपुरा ॥ एकदाकृतशौचादिश्चलितोजाह्नवीतटम् ॥ ६५ ॥ स्नानमार्गेजराक्रांतोवि
शश्रामक्वचित्क्वचित् ॥ गत्वाकथंचिद्गंगायांस्नात्वापीत्वाजलंपुनः ॥ ६६ ॥ आगच्छन्पथिवश्रामनिपपातसुमूर्च्छच ॥ ततस्तेपथिका
स्सर्वेसिषिचुस्तंचवाससा ॥ ६७ ॥ छायांचक्रुस्ततोराजास्नात्वातत्राजगामह ॥ दृष्ट्वातंजयदेवंतुतामवस्थामुपागतम् ॥ ६८ ॥ आरो
प्यशिबिकायांतुप्रापयामाससमंदिरम् ॥ स्वयमागत्यचपुनःकृतांजलिरुवाचतम् ॥ ६९ ॥ अहोजीर्णतरंचेदंशरीरंतेमहामते ॥ मयाहिं
पादचारेणस्नातुमद्यगतंपुनः ॥ ७० ॥ ददामिशिबिकांतुभ्यंकुरुष्वममभाषितम् ॥ इतिश्रुत्वातुराजानंजयदेवउवाचसः ॥ ७१ ॥ ममै
वशिबिकाराजन्रक्षस्वभवनेऽधुना ॥ पादाभ्यामेवगत्वाहंस्नास्यामीतिव्रतंमम ॥ ७२ ॥ यथाशक्तिततोयामिमाकुरुष्वाग्रहंपुनः ॥
इतिश्रुत्वाततोराजाजगामभवनंस्वकम् ॥ ७३ ॥ संपूज्यदेवतांभुक्त्वाराजकार्य्यपरोऽभवत् ॥ अथतस्यांतुरात्र्यांवैराजमान्यःपु

रोहितः ॥ ७४ ॥ राजादतामहांतोयेतत्रग्रामेद्विजाःस्थिताः ॥ तेसर्वेददृशुःस्वप्नेजयदेवोऽपिचाद्भुतम् ॥ ७५ ॥ शुक्लांबरधराकाचि
च्छुक्लामकरवाहना ॥ पद्महस्तारविंदाक्षीसमागत्याब्रवीदिदम् ॥ ७६ ॥ अहंभागीरथीदेवीप्रातरादिनिरंतरम् ॥ जयदेवस्यवा
प्यांवैनिवसिष्याम्यसंशयम् ॥ ७७ ॥ जानीहिप्रत्ययंतत्रपद्ममेतन्मयासह ॥ आविर्भविष्यतिजलेद्रष्टव्यंभवतापुनः ॥ ७८ ॥
अयंतुजयदेवोमेभक्तोऽतीवप्रियःसदा ॥ नैतस्यव्रतभंगोऽस्तिवाप्यांस्नानंकरोत्वयम् ॥ ७९ ॥ त्वयापिबोधनीयःसनान्यथाममभा
षितम् ॥ किंचान्यंप्रत्ययंतत्रप्रोच्यतेतन्निशामय ॥ ८० ॥ जयदेवेनसार्द्धंतुगलत्कुष्ठोऽपितत्रचेत् ॥ कुष्ठरोगात्प्रमुच्येतस्नातःसप्त
दिनावधि ॥ ८१ ॥ एवंस्वप्नंप्रपश्यंतःप्रबुद्धास्तेसमागताः ॥ एकाग्रेस्वप्नमूचुर्वैकथांकृत्वापरस्परम् ॥ ८२ ॥ नृपोऽमात्यैर्ग्राम
वृद्धैर्जयदेवस्यमंदिरम् ॥ समागत्याब्रवीत्सर्वंजयदेवायभूपतिः ॥ ८३ ॥ श्रुत्वातज्जयदेवस्तुनिजस्वप्नंस्मरन्हृदि ॥ नृपादीन्प्राहध
न्यावैभवंतोनात्रसंशयः ॥ ८४ ॥ यैर्दृष्टाजाह्नवीदेवीस्वप्नेश्रीरिवरूपिणी ॥ किमाश्चर्यंभवद्भिर्यद्दृष्टंस्वप्नेऽतिदुर्लभम् ॥ ८५ ॥
जगन्मान्याजगन्माताजगदुद्धारकारिणी ॥ आगमिष्यतिवाप्यांसासत्यमेतन्नसंशयः ॥ ८६ ॥ इत्युक्त्वानृपतिस्तूष्णींसामात्यः
सपुरोहितः ॥ सदारस्तत्रस्नानीयंगृहीत्वासमुपाययौ ॥ ८७ ॥ जयदेवोऽपिपूजार्थमर्घादीन्परिकल्प्यच ॥ जगामतत्रवाप्यांतुस्ना
तुंपद्मावतीयुतः ॥ ८८ ॥ तत्रवापीसमीपेतुगत्वातेतुनृपादयः ॥ जयदेवंपुरस्कृत्यसर्वेतत्रावतस्थिरे ॥ ८९ ॥ जयदेवोऽथस्ना
नीयंमंत्रंभक्त्यापठञ्जले ॥ प्रविवेशतदागंगातत्रप्रादुर्बभूवह ॥ ॥ ९० ॥ ऊर्मिंतंतज्जलंजातंदुग्धकुंदेंदुनिर्मलम् ॥ तादृशीसिकता

जातायथागंगासरित्स्थिता ॥ ११ ॥ प्रादुर्बभूवपद्मंतज्जलेदृष्ट्वातिहर्षिताः ॥ राजाचजयदेवश्चतथान्येयेसमागताः ॥ १२ ॥ तुष्टुवुस्तांजनास्तत्रगंगांत्रिपथगामिनीम् ॥ जयदेवोऽपिहर्षाश्रुपरिक्लिन्नदृगंबुजः ॥ १३ ॥ स्नात्वापाद्यादिभिश्चैवपूजयामासभक्तितः ॥ तस्मिन्सप्तदिनंतत्रदिव्यदेहीबभूवसः ॥ १४ ॥ एवमन्येऽपियेतत्रययंकृत्वामनोरथम् ॥ स्नानपूजादिकंचक्रुरापुस्तेऽखिलमीप्सितम् ॥ १५ ॥ इत्येतज्जयदेवस्यमाहात्म्यंकथितंमया ॥ यःपठेच्छृणुयादेतत्तस्यभक्तिर्दृढाभवेत् ॥ १६ ॥ कामीकामानवाप्येत जगन्नाथप्रसादतः ॥ उत्तमांगतिमाप्नोतिदुर्लभामपियोगिनाम् ॥ १७ ॥ इति श्रीभगवद्भक्तिमाहात्म्येजयदेवचरितंनामैकचत्वारिंशःसर्गः ॥ ४१ ॥ छ ॥ अथातःश्रीधरस्वामिभक्तिमाहात्म्यमुत्तमम् ॥ विष्णुभक्तिप्रदंनृणांकथयामियथाश्रुतम् ॥ १ ॥ आसीद्विप्रोमहातेजावेदवेदांगपारगः ॥ शांतोदांतोदयायुक्तःसर्वशास्त्रार्थकोविदः ॥ २ ॥ विधिनासद्विजःश्रेष्ठःकृत्वादारपरिग्रहम् ॥ अग्निमादायविधिवदग्निहोत्रपरायणः ॥ उत्पादयामाससुतानात्मतुल्यगुणानथ ॥३॥ बभूवभोगाद्विरतोवृद्धःकाशीमवाप्यसः ॥ ४ ॥ संन्यासंविधिवद्दंडीक्षांतोजग्राहसद्विजः ॥ सएवश्रीधरस्वामीत्येवंलोकेतिविश्रुतः ॥ ५ ॥ तत्राप्यध्यापनरतोविष्णुभक्तिपरायणः ॥ अयाचिताशीसंतुष्टःपश्यन्विष्णुमयंजगत् ॥ ६ ॥ श्रीमद्भागवतंस्वामीददर्शैकदिनेशुभम् ॥ दृष्ट्वातद्विष्णुमाहात्म्यमद्भुतंव्यासभाषितम् ॥ ७ ॥ सर्वशास्त्रमयंक्लिष्टंदुर्बोधंपंडितैरपि ॥ संसारसागरोत्तारपोतोऽयंदृश्यतेकिल ॥८॥ दुर्बोधत्वाच्चविद्वद्भिःसेव्यतेनयदृच्छया ॥ अतोव्याख्यांकरिष्येऽस्यप्रसीदेच्चेद्धरिर्मम ॥ ९ ॥ इत्येवंचिंतयानःसनान्यत्किंचित्प्रपश्यति ॥ तन्मनास्तद्गतप्राणोन

लेभेतुसुखंक्वचित् ॥ १० ॥ एकदारात्रिशेषेतुस्वप्नेश्रीबिंदुमाधवम् ॥ ददर्शभाषमाणंतुकुरुव्याख्यानमस्यमे ॥ ११ ॥ माहात्म्य
मस्तितत्सत्यंप्रकटीकुरुयत्नतः ॥ त्वदुक्तंनानृतंकिंचिद्भविष्यतिकदाचन ॥ १२ ॥ यावन्मन्नामलोकेस्मिंस्तावत्स्थास्यतिते
यशः ॥ दृष्ट्वासश्रीधरस्वामीप्रबुद्धोऽतिजहर्षच ॥ १३ ॥ तस्मिन्नेवक्षणेस्वामीनिबबंधचमंगलम् ॥ तदादिप्रातरारभ्यकृत्वानित्यविधिं
पुनः ॥ १४ ॥ अहर्निशंनिर्ममेतांव्याख्यांभागवतींशुभाम् ॥ निर्विघ्नमभवत्पूर्णंव्याख्यानंचास्यवैतदा ॥ १५ ॥ तदाकाशीनिवा
सिभ्योविद्वद्भ्योऽपिविलिख्यसः ॥ पुस्तकंप्रेषयामासकीदृग्जातमितिब्रुवन् ॥ १६ ॥ तेप्राशशंसुः कतिचिद्दृष्ट्वातत्पुस्तकंजनाः॥केचि
दीर्ष्यापरास्तत्रानिनिंदुर्दुर्जनाः पुनः ॥ १७ ॥ स्वयमारेभिरेटीकांकर्तुंभागवतस्यच ॥ निर्मायसकलांटीकांतेसर्वेदुष्टमानसाः ॥१८॥
प्रख्यापयंतोनिंदंतः श्रीधरस्वामिनिर्मिताम् ॥ एकस्मिन्दिवसेतत्रबिंदुमाधवसन्निधौ ॥ १९ ॥ सभायांपंडिताः सर्वेगृहीत्वास्वस्व
पुस्तकम् ॥ संस्थाप्योचुरहोसर्वेस्वस्वनिर्मितपुस्तकम् ॥ २० ॥ बिंदुमाधवपादाब्जादधस्तात्स्थाप्यतांकिल ॥ बहिरेत्यक्षणं
स्थित्वाप्रार्थयित्वाचमाधवम् ॥ २१ ॥ पुनर्गत्वाचपश्यामोयांटीकांतत्पदांबुजे ॥ संस्थापितांप्रपश्यामस्तांसत्कुर्मोनसंश
यः ॥ २२ ॥ इत्येवंमंत्रयाणास्तेश्रीधरस्वामिसन्निधौ ॥ जगामचैकस्तन्मध्येप्राहतस्मैचिकीर्षितम् ॥ २३ ॥ तच्छ्रुत्वा
श्रीधरस्वामीददौस्वकृतपुस्तकम् ॥ गृहाणेदंममकृतंनागंतव्यंमयाद्विज ॥ २४ ॥ भवतांकृतिरेवास्तुसमीचीनेतिमेम
तिः ॥ ममैवसम्यगित्येवंनाग्रहोमयिवर्तते ॥ २५ ॥ इतिश्रुत्वातदाविप्रोगृहीत्वास्वामिनिर्मिताम् ॥ टीकांसभायामायातः

प्राहस्वामिवचश्चतान् ॥ २६ ॥ ततस्तेपुस्तकंसर्वेबिंदुमाधवपादतः ॥ अधस्तात्स्थापयामासुः संप्रार्थ्यैवंपरस्परम् ॥ २७ ॥ बिन्दु
माधवदेवेशभक्तानुग्रहविग्रह ॥ एतेषांपुस्तकानांतुमध्येयत्तोप्रियंविभो ॥ २८ ॥ सद्व्याख्यानमभूत्तत्त्वंस्वपादेस्थापयप्रभो ॥ सर्वेषा
मुपरिष्टात्तुस्थापितंस्यान्नसंशयः ॥२९॥ एवंसंप्रार्थ्यपादाधोऽस्थापयन्सर्वपुस्तकम्॥बहिरेत्यक्षणंस्थित्वापुनर्गत्वाथमंदिरम् ॥ ३० ॥
ददृशुः श्रीधरस्वामिनिर्मितांतत्पदाब्जयोः ॥ उपरिस्थापितंसर्वेप्रशशंसुःपरस्परम् ॥३१॥ शिरसास्वामिरचितांटीकांनत्वाथतेजनाः ॥
स्तुवंतः स्वामिभवनंगत्वोचुः सर्वमादितः ॥ ३२ ॥ श्रुत्वास्वामीतुतद्वाक्यंमात्सर्यरहितोऽब्रवीत् ॥ यथेष्टंभवतामस्तुनाग्रहोमेऽत्रवर्त
ते ॥ ३३ ॥ इतिश्रुत्वातुतेसर्वेगत्वास्वंस्वंचमंदिरम् ॥ श्रीधरस्वामिभक्तिंतेचक्रुर्वैमनसागिरा ॥ ३४ ॥ एवंभक्तवशोऽप्यापिभगवान्भ
क्तवत्सलः ॥ प्रख्यापयतिलोकेऽस्मिन्भक्तिमाहात्म्ययंत्रितः॥३५॥अथापरंतुतस्यैव श्रीधरस्वामिनः शुभम् ॥माहात्म्यंशृणुवक्ष्यामि
महाश्चर्यंतदुत्तमम् ॥ ३६ ॥ एकदाश्रीधरस्वामीज्वररोगेणपीडितः ॥ उपवासपरोभूत्वाक्षुत्पिपासाविवर्जितः ॥ ३७ ॥ विद्याशिष्य
स्तुतस्यैकोब्राह्मणोमाधवाह्वयः॥ परिचर्यापरोनित्यंगुरुभक्तिपरायणः ॥ ३८॥ सम्यक्सेवांचकारास्यपादसंवाहनादिभिः ॥ अहोरात्रं
तुतत्रैवनिवसन्गुरुसन्निधौ ॥३९ ॥ तदाज्ञांशिरसाधृत्वाचकारसुमहात्मनः ॥ पंचरात्रंगतंतस्यनिराहारस्यस्वामिनः ॥ ४० ॥ षष्ठेऽह
निनिशाभागेमाधवस्यापिसद्विजः ॥ वृद्धोज्वरातुरः सोऽपिनिराहारः कृशस्तदा ॥४१॥ मूर्च्छामवापमहतींज्वरदाहेनदारुणाम् ॥ तंद
ष्ट्वामूर्च्छितंमातामाधवस्यतपस्विनी ॥ ४२ ॥ रुरोदोच्चैर्जुहावाथपुत्रंतंमाधवंसती ॥ श्रुत्वातज्जननीवाक्यंमाधवोऽतीवदुःखितः॥४३॥

श्रीधरस्वामिनंभक्त्याप्रणिपत्येदमब्रवीत् ॥ स्वामिन्पितामेरोगातोंमूर्च्छांप्राप्नोतिसांप्रतम् ॥ ४४ ॥मातामेरुदतीदीनामामाह्वयतिदुः
खिता॥त्वामप्येतस्यहृदयंपश्याम्यन्योऽथवाभवे ॥ ४५ ॥ स्थातुंगंतुंनशक्नोमितदाज्ञापयमेप्रभो ॥ इति श्रुत्वावचस्तस्यमाधवस्या
तिदुःखितः ॥ ४६ ॥ उवाचश्रीधरस्वामीवत्सगच्छाधुनैवभोः ॥ मदपेक्षयातिविकलः पितातेमूर्च्छितोगृहे ॥ ४७ ॥ रुदतीतवमाता
सात्वामाह्वयतिसुव्रत ॥गच्छेतिबहुधातेनप्रेषितोमाधवोययौ ॥४८॥दृष्ट्वातुपितरंगेहेमूर्च्छितंगतचेतनम् ॥ रुदन्नुपचचाराथतत्रसामा
जिकाजनाः ॥ ४९ ॥ समागत्योपचेरुस्तेजहौमूर्च्छांततोद्विजः ॥अथतत्रैवसमयेभग्नःस्वामिज्वरोमहान् ॥ ५० ॥ बुभुक्षातीवसंलग्ना
बलहानिकरीपरा ॥ शशाकगंतुंनोत्थायक्षुधयातीवपीडितः ॥ ५१ ॥ मनसाचिंतयामासलेभेपात्रंकथंत्वहम् ॥ एवंचिंतयमानस्य
स्वामिनोमंदिरेतदा ॥ ५२ ॥ माधवस्यैवरूपेणविंदुमाधवआययौ ॥ तंदृष्ट्वाश्रीधरस्वामीप्राहकोऽसीतिचासकृत् ॥ ५३ ॥
तच्छ्रुत्वास्वामिनोवाक्यंप्राहमाधवरूपधृक् ॥ शिष्यस्तेमाधवोऽहंभोअद्यतेकुशलीपिता ॥ ५४ ॥ इत्युवाचतदास्वामीसततोमा
धवोऽब्रवीत् ॥ कुशलीमेपितास्वामिंस्त्वत्प्रसादान्नसंशयः ॥ ५५ ॥ भवान्ब्रवीतुकिंचात्रकर्तव्यंप्रकरोम्यहम् ॥ श्रुत्वातुश्रीधर
स्वामीप्रोवाचाहंक्षुधातुरः ॥ ५६॥ वत्सान्नंदेहिमेनोचेत्प्राणांस्त्यक्ष्याम्यसंशयम् ॥ श्रुत्वैतत्स्वामिवचनंशीघ्रंकृत्रिममाधवः ॥ ५७ ॥
इच्छाम्यन्नंक्षुधातुल्यंसंपाद्यामलभोजनम् ॥ स्वामिसन्निधिमागत्यभोजयामासयत्नतः ॥ ५८ ॥ यथेष्टंभोजयित्वातंततोच्छिष्टादि
कंपुनः ॥ संमार्ज्यस्वामिनिकटेतस्थौकृत्रिममाधवः ॥ ५९ ॥ अथतस्मिन्क्षणेशिष्योमाधवःसमुपाययौ ॥ जपागारेतदास्वामी

नमस्कृत्यसमाधवः ॥ ६० ॥ उवाचस्वामिनंरात्रौशरीरंकीदृशंस्थितम् ॥ तच्छ्रुत्वाश्रीधरस्वामीप्राहेदंभाषसेकिमु ॥ ६१ ॥ रा
त्रावन्नादिदानेनजीवितोऽहंत्वयापुनः ॥ किमिदंप्रोच्यतेसर्वमज्ञातमिवसर्वथा ॥ ६२ ॥ इत्युक्तोमाधवःप्राहस्वामिन्नाहंत्वदंतिके ॥
रात्रावागतवानत्रसत्यमेतन्नसंशयः ॥६३ ॥इतिश्रुत्वानतः स्वामीनिश्चिकायस्वमानसे ॥बिंदुमाधवएवासौममरक्षार्थमागतः ॥ ६४ ॥
अन्यथामृतिरेवस्याद्रात्रावन्नंभवेन्नचेत् ॥ तदारभ्यततः स्वामीशरीरेणबलेचन ॥ ६५ ॥ पुपोषरोगनिर्मुक्तोविनापथ्यौषधैरपि ॥
माधवोरात्रिवृत्तांतंकाशीवासिजनेषुच॥६६ ॥ संश्राव्यस्वामिसेवायांनिरतोऽभूदहर्निशम् ॥ इत्येवंविदितंलोकेश्रीधरस्वामिचेष्टितम्
॥६७॥श्रुत्वैतत्परमाख्यानंकृष्णेभक्तिंलभेन्नरः ॥ ६८ ॥इतिश्रीभगवद्भक्तिमाहात्म्येश्रीधरस्वामिचरितंनामद्विचत्वारिंशःसर्गः ॥४२॥
अथापरंप्रवक्ष्यामिभक्तमाहात्म्यमुत्तमम् ॥ यच्छ्रुत्वासर्वपापेभ्योमुक्तोभक्तिंलभेन्नरः ॥ १ ॥ कृष्णवेणानदीतीरेदाक्षिणात्यकुलो
द्भवः ॥ धनवान्रूपसंपन्नःपित्राबाल्येऽतिलालितः ॥ २ ॥ अतोऽसौवेदविद्यायांशास्त्रेनातिकृतश्रमः ॥ पितर्य्युपरतेविप्रोयथेष्टंतद्ध
नंस्वयम् ॥ ३ ॥ नाटकिभ्योददौनित्यंगीतनृत्यरतोऽभवत् ॥ अथाचिरेणकालेनशुश्रुवेकस्यचिन्मुखात् ॥४ ॥ चिंतामणिरितिख्या
तांवेश्यांसर्वगुणान्विताम् ॥ कृष्णायास्तुपरेपारेनिवसंतींकलावती ॥ ५ ॥ जगामतद्गृहंविप्रोमर्यादांपरिहायसः ॥ निवारितोऽपि
बहुधाबंधुभिर्ज्ञातिभिस्तथा ॥ ६ ॥ ननिवृत्तोबभूवासौकामीतस्यावशंगतः ॥ चोरयित्वाप्रतिनिशंनदीमुत्तीर्य्यसर्वदा ॥ ७ ॥ जगा
मतद्गृहंविप्रोरेमेसाकंतयापुनः ॥ एवंगतेषुकालेषुबिल्वमंगलशर्म्मणः ॥ ८ ॥ पितुःक्षयाहःसंप्राप्तःस्मृत्वातामब्रवीद्द्विजः ॥ अये

प्राणप्रियेऽद्यैवपितुः श्राद्धदिनंमम॥ ९॥ अतोयामिनचाद्याहमागमिष्यामितेंऽतिकम् ॥ इतिमेसुमहद्दुःखंमरणादतिरिच्यते ॥ १० ॥
गच्छेत्युक्तस्तयाविप्रोजगामनिजमंदिरम् ॥ आमंत्र्यब्राह्मणान्विप्रश्चकारश्राद्धकर्मसः ॥ ११ ॥ भोजयित्वाद्विजान्सम्यक्शेषान्नंबु
भुजेस्वयम् ॥ चिंतामणिंस्मरन्नित्यंकथंचित्तद्दिनंद्विजः ॥ १२ ॥ संध्यामुपास्यतुंकृष्णातीरेगेहात्समागतः ॥ दृष्ट्वातद्वेश्मसस्मा
रवेश्यांचिंतामणिंद्विजः ॥ १३ ॥ हाप्रियेक्वासिनाद्याहंसस्मितंवीक्षितस्त्वया ॥ कथमेतांतरिष्यामिरात्रींवर्षशतोपमाम् ॥ १४ ॥
इत्येवंविलपन्भूयोमनसाबिल्वमंगलः ॥ प्रवृद्धांचनदींदृष्ट्वालोकाद्भीतोगृहंययौ ॥ १५ ॥ गत्वाचशयनागारेशय्यायामुपविश्यसः ॥
चिंतयानोनलेभेऽसौनिद्रांब्राह्मणपुंगवः ॥ १६ ॥ चिंतयाजाग्रतस्तस्यनिशार्द्धमगमत्तदा ॥ नशशाकमनोरोद्धुंचिंतामणिगृहंप्रति ॥
॥ १७ ॥ ततउत्थायकामार्तोनदीतीरमुपागतः ॥महानिशायांघोरायांपर्ज्जन्येऽप्यतिवर्षति ॥१८॥ पश्यन्प्रवृद्धांकृष्णांतांचिंतयानस्तटे
स्थितः ॥ ददर्शविद्युदुद्योतैःशवमेकंजलेऽतिके ॥१९॥ तरंतंवीचिभिस्तंतुपोतोऽयमित्यमन्यत ॥ मूढःकामेनतंधृत्वासमारुह्यकथंचन
...नपरपारंसाचिंतामणिगृहांतिकम् ॥ तत्रद्वारंददर्शासौकपाटपिहितंदृढम् ॥ २१ ॥ दृष्ट्वाविस्मयमापन्नःकथमंतर्व्रजा
म्यहम् ॥ एतस्मिन्नंतरेतत्रसर्प्पमेकंतुरज्जुवत् ॥ ॥ २२ ॥ बिलेमुखंसमादायभित्तौलंबंददर्शह ॥ तंदृष्ट्वालंबमानंतुसर्पंवद्धीधिया
द्विजः ॥ २३ ॥ गृहीत्वाभित्तिमारुह्यविवेशांतर्गृहंद्विजः ॥ तत्रचिंतामणिंदृष्ट्वाचिंतामणिमिवाधनः ॥ २४ ॥ जहर्षचा
गतोऽहंभोइत्युवाचांतिकंगतः ॥ दृष्ट्वासाहसिकंतंताचिंतामणिरुवाचह ॥ २५ ॥ अहोमहानिशायांवैपर्ज्जन्येऽप्यतिवर्षति ॥ प्रवृद्धायां

महानद्यांकथमुत्तीर्य्यचागतः ॥ २६ ॥ कपाटपिहितंद्वारंकेनोपायेनचालितम् ॥ इतिश्रुत्वावचस्तस्याबिल्वमंगलआहताम् ॥
॥ २७ ॥ प्रियेद्वारिमहावृक्षीभित्तौलग्नास्तितामहम् ॥ गृहीत्वात्रसमायातोनद्यांपोतोधृतोमम ॥ २८ ॥ तमारुह्यहपारंतुसमा
यातःक्षणेनवै ॥ इतिश्रुत्वावचस्तस्यप्राहचिंतामणिर्द्विजम् ॥ २९ ॥ अहोदर्शयमेवृक्षींतंपोतंयेनचागतः ॥ इत्युक्तःसतयासार्द्धं
द्वारदेशेसमागतः ॥ ३० ॥ दर्शयामासतंसर्पंप्रियेसैषातुवृक्षिका ॥ ततश्चिंतामणिःप्राहमूर्खसर्पोनवृक्षिका ॥ ३१ ॥ करता
लादिभिःसाचबहिर्निष्कास्यतंपुनः ॥ प्राहक्वतेसपोतोऽस्तितंदर्शयममाधुना ॥ ३२ ॥ ततोगृहीत्वातांकृष्णातीरेसबिल्वमंगलः ॥
तंशवंदर्शयामासपोतोऽयंयेनचागतः ॥३३॥ तंदृष्ट्वातुशवंवेश्याविप्रंप्राहातिकोपना ॥ नायंपोतःशवःकिंतुत्वंचकामेनमोहितः ॥३४॥
हिताहितंनजानासिदिष्ट्याजीवसिकेवलम् ॥ अहोब्रह्मकुलीनस्त्वंब्राह्मणैःसंस्कृतःपुनः ॥ ३५ ॥ साक्षरोऽसिनमूर्खस्त्वंमहामूर्ख
इवाधुना ॥ पितृश्राद्धदिनेऽप्येवंयत्करोषिजुगुप्सितम् ॥ ३६ ॥ काहंवेश्यादुराचाराक्वत्वंब्रह्मकुलोद्भवः ॥ अहोदैवगतिश्चित्रायन्मामे
वमुपागतः ॥ ३७ ॥ धिक्त्वांद्विजाधमंलोकेनिंदितंसाधुबंधुभिः ॥ परित्यज्यनिजंधर्मंयत्कुमार्गरतोऽस्यलम् ॥ ३८ ॥ अहो
यथामयिप्रीतिस्तवेयंनिश्चलाद्विज ॥ एवंचेद्भगवतिकृष्णेपरमात्मनिकेशवे ॥ ३९ ॥ मतिस्तेयदिसंलग्नातदाधन्योभविष्यसि ॥
किंवृथाममभोगार्थीप्राणापेक्षांसमाचरन् ॥४०॥ किमद्यापिसमायातोमद्गृहंश्राद्धवासरे ॥ पितृश्राद्धदिनेपत्न्यायोद्गृजोमैथुनीभवे
त् ॥ ४१ ॥ रौरवंनरकंभुक्त्वाजायतेग्रामसूकरः ॥ इत्येवंविप्रवदनाच्छ्रुतंमेद्विजपुंगव ॥ ४२ ॥ त्वंतुसर्वंपरित्यज्यमयारंतुमिहे

च्छसि ॥ धिक्त्वामतोद्विजातीनांकलंकोऽसिनसंशयः ॥ ४३ ॥ त्वयापुत्रेणतेमातापितावानचपुत्रिणौ ॥ इत्येवंभर्त्सितोविप्रः
कृष्णातीरेमहानिशि ॥ ४४ ॥ प्रबुबोधतदाविप्रःसंन्यवर्ततदुर्गुणात् ॥ तूष्णींस्थित्वाक्षणंप्राहवेश्यांगच्छगृहंप्रति ॥ ४५ ॥ अहंतु
रजनीमेतामुषित्वाप्रातरेवहि ॥ यथारुचिगमिष्यामिपरित्यज्यगृहंधनम् ॥ ४६ ॥ इतिश्रुत्वावचस्तस्यवेश्याचिंतामणिः पुनः ॥
बिल्वमंगलमाहेदंतवसाहसदर्शनात् ॥४७॥ मोहादुक्तवतीचास्मिक्षमस्वागच्छमेगृहम् ॥ श्रुत्वैवंवचनंतस्याउवाचबिल्वमंगलः॥४८॥
अतः परंनवक्तव्यंकिंचिदेवमपित्वया ॥ ममसद्बुद्धिदानेनश्रीकृष्णस्योपदेशतः ॥ ४९ ॥ गुरुरेवास्तिभवतीमातृतुल्यानसंशयः ॥
प्रणमाम्येवचरणौनाकिंचिद्वक्तुमर्हसि ॥ ५० ॥ इत्युक्त्वातांपरित्यज्यययौस्वैरगतिर्द्विजः ॥ अनुवव्राजतंवेश्यातिष्ठतिष्ठेतिचाब्र
वीत् ॥ ५१ ॥ नतस्थौचतदाविप्रस्तदावेश्यान्यवर्तत ॥ आजगामगृहंरात्रौचिंतयंतीद्विजंमुहुः ॥ ५२ ॥ ब्राह्मणोऽपिततोदूरंगत्वा
तरुतलेक्वचित् ॥ नीत्वारात्रिंपुनःप्रातर्ययौस्वैरगतिर्द्विजः ॥ ५३ ॥ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येबिल्वमंगलचरितंनामत्रिचत्वा
रिंशः सर्गः ॥ ४३ ॥ छ ॥ ॥ चिंतयामासचैकाकीपथिगच्छन्द्विजःसतु ॥ कंयामिशरणंयोऽहंकथंयास्यामिसद्गतिम् ॥१॥ जन्मा
रभ्यशुभंकर्मनकृतंक्वचिदप्यहो ॥ कथंभजामिश्रीकृष्णंसर्वपापहरंहरिम् ॥ २ ॥ एवंचिंतापरोविप्रःपश्चात्तापेनदुःखितः ॥ वृक्ष
मूलेविशश्रामक्षुत्क्षामः श्रमपीडितः ॥ ३ ॥ ददर्शतत्रस्वपितंपथिसब्राह्मणंद्विजः ॥ सोऽपितत्रसमागत्यतस्थौविश्रामकांक्षया ॥ ४ ॥
स्थित्वामुहूर्तंपप्रच्छपथिकोबिल्वमंगलम् ॥ कस्त्वंचिंतापरोविप्रकस्मादिहसमागतः ॥५॥ ब्रह्महत्यामिवपुनःकृत्वाचिंतयसेविभो ॥

इत्युक्तवंतंपथिकंप्राहश्रीबिल्वमंगलः ॥ ६ ॥ जन्मतःसकलंवृत्तंवेश्यावाक्यावधिस्वकम् ॥ पुनःप्राहगुरुंसंतंकंचिदन्वेषया
म्यहम् ॥ ७ ॥ योमेहितोपदेशेनहृत्तापंशमयिष्यति ॥ इतिश्रुत्वावचस्तस्यपथिकःप्राहतंद्विजम् ॥ ८ ॥ बिल्वमंगलमाभैषीः
कृष्णातीरेऽविदूरतः ॥ नाम्नासोमगिरिश्चास्तितपस्वीब्राह्मणान्वयः ॥ ९ ॥ वानप्रस्थेनविधिनावनेतिष्ठतिसंयमी ॥ शांतोदांतो
दयायुक्तःसर्वभूतसुहृत्तमः ॥ १० ॥ तमेवशरणंगच्छसतेमंत्रंप्रदास्यति ॥ तन्मंत्रमात्रदानेनकृतार्थस्त्वंभविष्यसि ॥ ११ ॥ इति
श्रुत्वावचस्तस्यपथिकस्यमहात्मनः॥नमस्कृत्यचतंविप्रंप्रययौबिल्वमंगलः ॥ १२ ॥ यत्रसोमगिरिर्नामतपस्वीतपआस्थितः ॥
तत्रसोमगिरिंदृष्ट्वादंडवत्प्रणिपत्यच ॥ १३ ॥ तस्थौकृतांजलिश्चाग्रेस्थाणुवद्बिल्वमंगलः ॥ दृष्ट्वाग्रेतंतुतिष्ठंतंप्राहसोमगिरिःस्वयम्
॥ १४ ॥ कोऽसिकस्मादिहायातः किमर्थंचात्रतिष्ठसि ॥ कथयाशुनचेन्मांत्वंमुहूर्तंस्थातुमर्हसि ॥१५॥ इत्युक्तःप्रणिपत्याहभक्त्या
श्रीबिल्वमंगलः ॥ जन्मादिवेश्यावाक्यांतंततःस्वोद्धरणायच ॥ १६ ॥ प्रार्थयित्वाबभूवाथतूष्णींवैबिल्वमंगलः ॥ ततः सोमगिरिः
प्राहनिवसात्रगृहेसुखम् ॥ १७ ॥ इदानीमेवतेमंत्रंदास्यामिहितकारकम् ॥ इत्युक्त्वामनसासोमगिरिश्चिंतापरोऽभवत् ॥१८॥ अस्मै
किमुपदेक्ष्यामियेनायंसुकृतीभवेत् ॥ आजन्मपातकीचायंविप्रधर्मबहिष्कृतः ॥ १९ ॥ इतिचिंतयमानस्यहृदिसोमगिरिस्तदा ॥
प्रादुर्बभूवतुःश्लोकौकेनाप्युक्तावितिस्फुटम् ॥ २० ॥ कृष्णेतिमंगलंनामयस्यवाचिप्रवर्तते ॥ भस्मीभवन्तितस्याशुमहापातककोटयः ॥ २१ ॥ दरिद्रोवारुजार्तोवाग्रहार्तोवापियोनरः ॥ श्रीकृष्णेतिजपन्नामसुखीभवतिनिश्चितम् ॥ २२ ॥ इतिसोमगिरिर्लब्ध्वा

मनसाचिंतितंवरम् ॥ सद्योजगामतेजस्वीबिल्वमंगलसन्निधौ ॥ २३ ॥ प्राहागच्छमयासार्द्धंकृष्णातीरेद्विजार्भक ॥ तत्राहंतंप्रदा
स्यामिमंत्रंसर्वार्थसाधकम् ॥ २४ ॥ तत्रगत्वानदीतीरेस्नात्वावैबिल्वमंगलः ॥ गुरुसन्निधिमागत्यतस्थौतत्रकृतांजलिः ॥ २५ ॥
विधिनास्मैददौमंत्रंश्रीकृष्णेत्यक्षरत्रयम् ॥ मूर्ध्निदत्त्वाकरंदक्षकर्णेमंत्रमुवाचह ॥ २६ ॥ तत्करस्पर्शतोमंत्रमाहात्म्याद्बिल्वमंगलः ॥
विधूतपापस्तत्कालेजज्वालाग्निरिवद्विजः ॥ २७ ॥ दंडवत्प्रणिपत्याहगुरुंसोमगिरिंवचः ॥ कृतार्थोऽहंकृतार्थोऽहंकिंकरोमीतिशाधि
माम् ॥२८॥ ततःसोमगिरिःप्राहसम्यगाचारवान्भव ॥ वसात्रान्यत्रवाक्वापिजपमंत्रंविमुक्तये ॥ २९ ॥ इत्युक्तोगुरुणाबिल्वमंग
लोऽतीवमंगलः ॥ गुरुसेवापरोनित्यमुषित्वागुरुसंनिधौ ॥ ३० ॥ षण्मासाभ्यंतरेचित्रंमहाकविरभूद्द्विजः ॥ सर्वशास्त्रार्थतत्त्वज्ञो
विमुक्तोविषयेषुवै ॥ ३१ ॥ ततोगुरुमनुज्ञाप्यश्रीकृष्णदर्शनेच्छया ॥ वृंदावनंजिगमिषुःप्रतस्थेबिल्वमंगलः ॥ ३२ ॥ अथा
गच्छत्ततोविप्रोनर्मदातीरमागतः ॥ माहिष्मतींपुरींतत्रददर्शातिमनोहराम् ॥ ३३ ॥ उवासकतिचिन्मासांस्तत्रकृष्णमनुस्मर
न् ॥ एकस्मिन्दिवसेतत्रमहाश्चर्य्यमभूदहो ॥ ३४ ॥ बिल्वमंगलभक्तस्तुमाहात्म्यंकथयाम्यहम् ॥ एकदानर्मदातीरेययौस्नातुं
द्विजोत्तमः ॥ ३५ ॥ ददर्शतत्ररुदतींब्राह्मणींविधवांसतीम् ॥ क्रोडेबालकमादायमृतंकर्मविपाकतः ॥ ३६ ॥ तांतथारुदतींदृष्ट्वा
दयालुर्बिल्वमंगलः ॥ उवाचास्यचकिंजातंकस्तवायंमृतःशिशुः ॥ ३७ ॥ इतिश्रुत्वावचस्तस्यप्रोवाचरुदतीसती ॥ नाथब्रह्मकुले
जाताब्राह्मणेनविवाहिता ॥ ३८ ॥ बालमेवंसमुत्पाद्यकर्मणासेमृतःपतिः ॥ तदारभ्यशिशुंचैनंपश्यन्तीधैर्य्यमास्थिता ॥ ३९ ॥

व्यतीत्यायुःकियञ्चित्तुकालंप्रापाद्यवैशिशुः ॥ किंकरोमिक्वगच्छामिपितृभ्रातृविवर्जिता ॥ ४० ॥ सहतेनाथबालेनप्रविशामिचनर्म
दाम् ॥ नान्यंवैतुप्रविश्यामित्वांनमामिपितुःसमम् ॥ ४१ ॥ इतिश्रुत्वावचस्तस्याःकृपयाबिल्वमंगलः ॥ समागत्यसमीपेतंबालं
कृत्वानिजाग्रतः ॥ ४२ ॥ प्रार्थयामासमनसाजीवयाशुशिशुंविभो ॥ नोचेदहंसहानेनमरिष्यामिनसंशयः ॥ ४३ ॥ एवंनिश्चित
चित्तंतंज्ञात्वाभक्तंजनार्दनः ॥ भक्तिभाववशीभूतोजीवयामासबालकम् ॥ ४४ ॥ जीवन्तंबालकंदृष्ट्वाब्राह्मणीहर्षसंयुता ॥ नमश्च
कारबहुधाद्विजंपितृसमंसती ॥ ४५ ॥ सुतमादायविप्रोऽपिददौतस्यैप्रहृष्टवान् ॥ पश्यतांसर्वलोकानांतदाश्रीबिल्वमंगलः ॥ ४६ ॥
स्नात्वागत्वास्वभवनंपूजयामासकेशवम् ॥ तदारभ्यद्विजस्तत्रदेववद्वंदितोजनैः ॥ ४७ ॥ उवासकतिचित्तत्रदिनानिबिल्वमंगलः॥४८॥
इति श्रीभगवद्भक्तिमाहात्म्येबिल्वमंगलचरितंनामचतुश्चत्वारिंशःसर्गः ॥४४॥ छ ॥ विरक्तोनिरपेक्षोऽसौपौरैरावेष्टितोजनैः ॥ निज
कार्यात्ययंमत्वामहोद्विग्नोऽभवद्द्विजः ॥१॥ उत्थायचलितोद्रष्टुंकृष्णंवृंदावनेद्विजः ॥ पथिगच्छन्ददर्शाथवैश्यपत्नींमनोहराम् ॥ २ ॥
नर्म्मदायांकृतस्नानांगच्छन्तींनिजमंदिरम् ॥ सर्वांगसुन्दरींरामांपूर्णचंद्रनिभाननाम् ॥ ३ ॥ खेलत्खञ्जनयुग्माभनेत्रद्वंद्वमनोहराम् ॥
नातिपीनस्तनयुतांतन्वींतांतनुमध्यमाम् ॥ ४ ॥ दृष्ट्वातांचपलापांगींमोहितोबिल्वमंगलः ॥ तत्पृष्ठतोऽतिचपलःश्लिष्यन्निवजगाम
ह ॥ ५ ॥ आयांतंतंद्विजंदृष्ट्वाकामुकंपृष्ठतःसती ॥ द्रुतगत्याययौगेहंभर्तारमिदमब्रवीत् ॥ ६ ॥ भर्तातांप्राहधन्यासितिष्ठात्रैवममाज्ञया॥
आगमिष्यतिचेत्स्वामीतस्मैदेहियदीप्सितम् ॥ ७ ॥ पतिव्रताव्रतत्यागोमास्तुतेमदनुज्ञया ॥ एवंकथयतोस्तत्रदम्पत्योर्द्वारदेशतः॥८॥

बिल्वमंगलआगत्यतूष्णींतस्थौततोवणिक् ॥ दंडवत्प्रणिपत्याहभगवन्नेहिमेगृहम् ॥ ९ ॥ इयंदासीचदासोऽहंयथेच्छसिकुरुप्रभो ॥
अद्यमेसफलंजन्मभवदागमनेनच ॥ १० ॥ इतिश्रुत्वावचस्तस्यवणिजंबिल्वमंगलः ॥ प्रशशंसतदातौतुतत्पत्नीप्राहहर्षितः ॥ ११ ॥
आगच्छात्रगृहेसौम्येकिंचिद्वक्तव्यमस्तिमे ॥ इत्युक्तासाथभर्त्रापिनियुक्तातद्गृहेययौ ॥ १२ ॥ एकांतेतांप्रणम्याहभक्त्याश्रीबिल्व
मंगलः ॥ सूचीद्वयंसमादायशीघ्रंमेदेहिसुव्रते ॥ १३ ॥ इत्युक्तासातिशीघ्रंतुददौसूचीद्वयंसती ॥ नीत्वाकराभ्यांतिष्ठन्सस्फोटया
मासचाक्षिणी ॥ १४ ॥ स्वकीयेद्विजशार्दूलोजगामतद्गृहाद्बहिः ॥ स्फोटिताक्षंबहिर्यातंरुधिराप्लुतवक्षसम् ॥ १५ ॥ दृष्ट्वातंविल
पंतौतौहाहेतिवैश्यदम्पती ॥ विप्रपृष्ठेतुचलितौसंतौप्राहात्रतिष्ठतम् ॥ १६ ॥ नयुवामपराधोऽस्तिप्रसन्नोयुवयोरहम् ॥ नेत्रदुर्न
यतोऽत्राहमवशःकाममोहितः ॥१७॥ पर्य्यधावन्निमांसाध्वींतस्मात्तेस्फोटितेमया ॥ यथेष्टंयामिचातोऽहंभवंतंसुखिनौयुवाम् ॥१८॥
तत्रगत्वाथकालिंद्यांस्नात्वास्पृष्ट्वाथकेशवम् ॥ कालिंदीतीरमागत्यतस्थौक्षुत्परिपीडितः ॥ १९ ॥ कोदास्यतिकथंयामिजीवनेना
पिकिंफलम् ॥ इयंहिमथुरामोक्षप्रदाश्रीकृष्णजन्मभूः ॥ २० ॥ अस्यांयदिपतेद्देहःकिंत्वतःपरमुत्तमम् ॥ इतिसंचिंत्यमनसाक्षुधार्तः
सोऽवतस्थिवान् ॥ २१ ॥ एवंतत्रोपविष्टस्ययमुनातीरमंदिरे ॥ अहोरात्रद्वयंजातंनपीतंयमुनोदकम् ॥ २२ ॥ तृतीयेऽह्निनिशी
थिन्यांभगवान्भक्तवत्सलः ॥ द्विजवेषंसमादायगृहीत्वान्नंसुदुर्लभम् ॥ २३ ॥ बिल्वमंगलमभ्येत्यप्राहोत्तिष्ठद्विजोत्तम ॥ बुभुक्षितं
ततोज्ञात्वाहान्नंनीत्वासमागतः ॥ २४ ॥ उत्तिष्ठभुंक्ष्वपानीयमिदंपिबसुखीभव ॥ बिल्वमंगलइत्युक्तःकृष्णेनद्विजरूपिणा ॥ २५ ॥

प्राहांधोऽहंनपश्यामिसमागच्छममांतिकम् ॥ हस्तेगृहीत्वादेह्यन्नंकृपांकुरुममप्रभो ॥ २६ ॥ इत्युक्तोद्विजरूपस्तुबिल्वमंगलसन्निधि
म् ॥ समागत्यददावन्नंहस्तंधृत्वास्वपाणिना ॥ २७ ॥॥ स्पर्शाद्वैशिष्ट्यमालक्ष्यगाढंजग्राहतंकविः ॥ कोऽसिसत्यंकथयमेनोचेत्त्वांन
त्यजाम्यहम् ॥ २८ ॥ इत्युक्तःस्वकरंदेवोबलेनाहृत्यतत्करात् ॥ तस्थौसमीपतस्तूष्णींततोवैबिल्वमंगलः ॥ २९ ॥ प्राहज्ञातोऽसि
बलतोजित्वामांयद्बहिर्गतः ॥ हृदयाद्यदिवागच्छेत्ततोजेयोऽसिमेप्रभो ॥ ३० ॥ इत्युक्तःपुंडरीकाक्षःप्रसन्नोबिल्वमंगलम् ॥ प्राहज्ञात
स्त्वयाविप्रत्वंमेप्रियतरोह्यसि ॥ ३१ ॥ पुत्रंमित्रंकलत्रंचधनंगेहादिकंचयत् ॥ त्वंपरित्यज्यलोकेऽस्मिन्मामेकंशरणंगतः ॥ ३२ ॥
अतस्त्वत्सदृशोनास्तिजगत्यांममकश्चन ॥ बिल्वमंगलसत्यंतेप्रतिजानेशृणुष्वतत् ॥ ३३ ॥ नमेभक्तसमःकश्चिन्नश्रीरपितथाप्रि
या ॥ नकर्तव्यंकिमप्यस्तिभक्तार्थंबिल्वमंगल ॥ ३४ ॥ पश्यगोपकुलेजन्मगोपोच्छिष्टादिभोजनम् ॥ कुब्जादासीसखित्वंच
फाल्गुनस्यचभृत्यता ॥३५॥ गणिकागजगृध्रादिम्लेच्छाजामिलमित्रता॥एवमादीनिकर्माणिममहेतुंविचारय ॥३६॥ अतस्त्वंमेप्रियोब्र
ह्मन्नेत्रेप्राप्नुहिसुंदरे ॥ इदंविप्रस्यरूपंमेपश्यात्रैवाचिराद्द्विज ॥ ३७ ॥ आवयोःसख्यमेतेनरूपेणास्तुनिरंतरम् ॥ अतोदिव्यंतुतेचक्षुर्द
दाम्यहमनुत्तमम् ॥ ३८ ॥ ततोद्रक्ष्यासिमेरूपंयोगिध्येयंनसंशयः ॥ इत्युक्तश्चक्षुषीप्राप्यप्रहृष्टोबिल्वमंगलः ॥ ३९ ॥ ददर्शद्विजवे
षंतंश्रीकृष्णंपरमेश्वरम् ॥ आनंदाश्रुपरिक्लिन्नः पपातहरिपादयोः ॥ ४० ॥ उत्थापितोमूर्ध्निकरंदत्त्वाकृष्णेनसद्द्विजः ॥ पुनः प्राहात्रनि
वससुखीत्वंबिल्वमंगल ॥ ४१ ॥ स्मृतोऽहंतवसान्निध्यमागमिष्यामितत्क्षणात् ॥ अन्नंपानीयमेतत्त्वंप्रत्यहंप्राप्स्यसिद्विज ॥ ४२ ॥

इत्युक्त्वांतर्दधेकृष्णोद्विजरूपधरोहरिः ॥ बुभुजेऽन्नंसुधाप्रायंतत्कालेबिल्वमंगलः ॥ ४३ ॥ भुक्त्वान्नमुदकंपीत्वातद्रूपंहृदिचिंतयन् ॥ शिश्येसयमुनातीरेमंदिरे बिल्वमंगलः ॥ ४४ ॥ प्रभातेपुनरुत्थायचिंतयामाससद्विजः ॥ किमयंस्वप्नआहोस्विद्भ्रमोऽयंनात्रसंशयः ॥ ॥ ४५ ॥ यत्कृष्णेनचसंवादोमनुष्येणैवमेऽभवत्॥ एवंचिंतापरोविप्रआश्चर्याद्भ्रांतिमानिव ॥ ४६ ॥ अन्तर्मनाःशौचकर्म्मस्नानादिक मथाचरत् ॥ अथैकांतकुटीमध्येसस्मारोक्तंवचोहरेः ॥ ४७ ॥ स्मृतोऽहमागमिष्यामीत्युक्तमस्तिकरोमितत् ॥ आगमिष्यतिचेत्स वैसत्यमेवनसंशयः ॥ ४८ ॥ उपविश्यततोनेत्रेनिमील्यविश्वरूपिणम् ॥ रात्रौदृष्टंयथाकृष्णंदध्यौनाबिल्वमंगलः ॥ ४९ ॥ तत्काले भगवान्कृष्णस्तद्रूपेणाजगामह ॥ उवाचाहमिहायातःकिमर्थंचिंतितस्त्वया ॥ ५० ॥ इत्युक्तोविजहौध्यानंदृष्ट्वातंरात्रिवत्स्थितम् ॥ प्रणनामातिहृष्टात्माक्षमस्वेतिकृतांजलिः ॥ ५१ ॥ उक्त्वाहृदयसंदेहंविज्ञाप्याधोमुखःस्थितः ॥ उवाचतंपुनःकृष्णःसंदेहंमाकृथाम यि ॥ ५२ ॥ सर्वदैवंतवस्नेहात्त्वत्सान्निधिपरोऽस्म्यहम् ॥ इत्युक्त्वासगतःकृष्णश्चिंतांतत्याजसद्विजः ॥५३॥वसन्वृंदावनेकृष्णंचिंत यानोदिवानिशम् ॥ मेनेकृतार्थमात्मानंसर्वभूतेषुकृष्णधीः ॥ ५४ ॥ इति श्रीभगवद्भक्तिमाहात्म्येबिल्वमंगलचरितंनामपंचचत्वा रिंशःसर्गः ॥ ४५ ॥ छ ॥ ॥ अथैकस्मिन्दिनेकृष्णसन्निधौबिल्वमंगलः ॥ स्मृत्वाचिंतामणिंवेश्यामात्मवृत्तानिसर्वशः॥१॥कथ यामासकृष्णायवेश्यावाक्योपदेशतः ॥ फलमेतादृशंलब्धंदुर्लभंदेवदानवैः ॥२॥ इत्युक्तःकविनाकृष्णःस्मित्वोवाचद्विजंप्रति॥ आग मिष्यतिसावेश्येत्युक्त्वान्यत्रजगामह ॥ ३ ॥अथचिंतामणिर्वेश्याविरक्तेबिल्वमंगले ॥तत्याजनिजवृत्तिंसाविप्रवैराग्यदुःखिता ॥४॥

अहोमद्वाक्यतोविप्रः सर्वंत्यक्त्वाधनादिकम् ॥ श्रीकृष्णंशरणंयातोधिङ्मांलोकानुरागिणीम् ॥५॥ अहोवेश्यापुराकाचित्पाठयंतीशु
कंस्वयम्॥रामनामततोयाताविष्णुलोकमितिस्थितिः ॥६॥ ततोऽहमपिकृष्णेतिनाम्नैवाप्यघकारिणी ॥ विमोक्ष्यामिनसंदेहोनामवैता
रकंकलौ ॥ ७ ॥ एवंसंचिंत्यमनसावेश्यासानिजमंदिरम्॥समागत्यविरक्तेवतस्थौश्रीकृष्णतत्परा ॥ ८ ॥ स्वजनैःप्रार्थ्यमानापिना
नुरक्ताह्युवाचतान् ॥ भवद्भिःक्रियतांसर्वंगृहकृत्यंनसंशयः ॥ ९ ॥ अद्यारभ्यमयात्यक्तानिजवृत्तिर्नसंशयः ॥ वेश्याहंवासुदेवस्य
दासीतस्यैवनान्यथा ॥ १० ॥ प्रीणयंतीतमेवाहंतरिष्यामिभवार्णवम् ॥ इत्युक्त्वानिजबंधुभ्यश्चिंतामणिरुदारधीः ॥ ११ ॥
विसस्मारगृहंमित्रंधनपुत्रादिकंतथा ॥ गायंतीकृष्णचरितंश्रीकृष्णप्रतिमाग्रतः ॥ १२ ॥ नृत्यंतीतन्मनाभूत्वाकदाचित्कंचिदाश्र
मम् ॥ एवंगतेषुकालेषुकृष्णातीरनिवासिनः ॥ १३ ॥ जनानिजगृहात्सर्वेनिर्गत्यैकत्रसंगताः ॥ मथुरांगंतुमुद्युक्ताःकृष्णदर्शनमा
नसाः ॥ १४ ॥ तेषांसमीपमागत्यचिंतामणिरुवाचतान् ॥ अहोऽहमपिगच्छामिभवद्भिः साकमेवहि ॥१५॥ मथुरामपिकृष्णोमे
प्रसन्नोभगवान्भवेत् ॥ आगच्छेतिचतैरुक्तासमागत्यततस्तुसा ॥ १६ ॥ गायंतीकृष्णचरितंतैःसाकंमथुरांययौ ॥ तत्रस्नात्वा
थकालिंद्यांवीणामंकेनिधायसा ॥ १७ ॥ प्रणम्यकेशवंदेवंगायंतीप्रणनर्तह ॥ आनंदजाश्रुसंसिक्तस्तनयुग्मांकलावतीम् ॥ १८ ॥
नृत्यंतींददृशुः सर्वेसाधुसाध्वितिवादिनः ॥ अथकेशवनैवेद्यंप्रसादंकोऽपिपूजकः ॥ १९ ॥ चिरकालांतरंतस्यैददौसाशिरसाग्रहीत् ॥
गृहीत्वापिननर्तासौनततोविरराससा ॥२०॥ अथमध्याह्नसमयेकपाटंकेशवालये ॥ दत्त्वास्वमालयंसर्वेजग्मुस्तेपूजकाजनाः ॥ २१ ॥

ततश्चिंतामणिरपिनिवृत्तागीतनृत्यतः ॥ यमुनातीरमागत्यबुभुजेपूजकार्पितम् ॥ २२ ॥ तावन्मात्रंतुभुक्त्वासापीत्वाचयमुनो
दकम् ॥ आगच्छंतीददर्शाथबिल्वमंगलमंदिरम् ॥ २३ ॥ तत्रोपविष्टंध्यायंतंददर्शबिल्वमंगलम् ॥ तप्तहाटकवर्णाभंसाक्षात्सू
र्यमिवोदितम् ॥ २४ ॥ तंदृष्ट्वाताहृशंवेश्याद्वारसन्मुखतोबहिः ॥ तस्थौक्षणांतरेतांतुददर्शबिल्वमंगलः ॥ २५ ॥ उत्थायबहि
रागत्यप्रणनामचतांद्विजः ॥ तवोपदेशादेवाहंजीवन्मुक्तोऽभवंपुनः ॥ २६ ॥ दंडवत्प्रणिपत्याहचिंतामणिरपिद्विजम् ॥ त्वत्संस
र्गवशाद्ब्रह्मन्गणिकाप्यघकारिणी ॥ २७ ॥ विमुक्तासर्वदोषेभ्यःश्रीकृष्णंशरणंगता ॥ एवंपरस्परंतौतुस्तुवंतौभक्तिसंयुतौ ॥ २८ ॥
तस्थतुश्चांगणेहृष्टौवेश्याचबिल्वमंगलः ॥ बिल्वमंगलउत्थायनिजभोजनमागतम् ॥ २९ ॥ गृहादानीयपानीयंददौतस्यैद्विजोत्त
मः ॥ भुक्त्वातदन्नंभक्तासापीत्वापानीयमुत्तमम् ॥ ३० ॥ तस्थौविवक्षुस्तांवेश्यामुवाचबिल्वमंगलः ॥ अहोधन्यासियस्यास्तेश्री
कृष्णेप्रीतिरीहृशी ॥ ३१ ॥ अतःपरंक्वचिद्देशेनिवसाप्यत्रवेश्मनि ॥ इतिश्रुत्वाथतंभक्त्याप्राहचिंतामणिर्द्विजम् ॥३२॥ एवमेवविवक्षु
स्तामस्मिन्नात्रवसाम्यहम् ॥ आज्ञापयक्वचिद्यामिकालिंदीतीरवेश्मनि ॥३३॥ इत्युक्त्वाप्रययौवेश्यागृहेक्वापिस्थिताऽभवत् ॥ ध्यायं
तीहृदिगोविंदंगायंतीतद्गुणंमुखे ॥ ३४ ॥ एवमुत्साहतोभूतंदिनद्वयमभोजनम्॥तृतीयेदिवसेतस्याअन्नमादायकेशवः ॥३५॥ स्वप्नेनियु
क्तवान्कंचिन्माथुरंपूजकंद्विजम् ॥ तदारभ्यामृतप्रायमन्नंसाप्यलभत्सुखम् ॥ ३६ ॥ एवंतौमथुरायांवैकृतार्थौमरणावधि ॥ अंतेगोविं
दसायुज्यंगत्वासुखमवापतुः ॥ ३७ ॥ इत्येतत्कथितंसर्वंबिल्वमंगलचेष्टितम् ॥ चिंतामणेस्तुवेश्यायाभक्तिमाहात्म्यमुत्तमम् ॥३८॥

किमसाध्यंनृणांभक्त्यानित्यंतुष्टेजनार्दने ॥ तस्माद्भक्तिःसदाकार्य्याविद्वद्भिः सर्वसाधिनी ॥ ३९ ॥ नजातिधर्मोनचवर्णधर्मोन पक्षधर्मोऽथनयोगकर्म ॥ हरेः प्रसादायनकारणंतथाययथेहलोकंपरिहायकीर्तिम् ॥ ४० ॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्येबिल्वमंगल चिंतामणिचरितंनामषट्चत्वारिंशः सर्गः ॥ ४६ ॥ छ ॥ अथापरंप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥ यच्छ्रुत्वासर्वपापेभ्योमुक्तो भक्तिलभेन्नरः ॥ १ ॥ मिथिलायामभूद्विप्रोविष्णुशर्म्मेतिविश्रुतः ॥ तरौनीग्रामवासीचवंशेकरमहाह्वये ॥ २ ॥ वेदशास्त्रार्थतत्त्वज्ञः कु लीनः कर्मतत्परः ॥ कृत्वापाणिग्रहंकालेपुत्रानुत्पाद्यचैकदा ॥ ३ ॥ पत्न्याः कटुवचः श्रुत्वाविरराजक्रुधाद्विजः ॥ गत्वाशिवस मीपंसयामोपांतेऽतिनिर्मले ॥ ४ ॥ गैरिकंपरिधानीयमुत्तरीयंचगैरिकम् ॥ विधायभस्माभरणंदध्यौचित्तेनशंकरम् ॥ ५ ॥ शिखां सूत्रंचबिभ्राणःसंन्यासेचद्विजःस्थितः ॥ अत्रांतरेग्रामवृद्धायुवबालाश्चयेजनाः ॥ ६ ॥ तेसर्वेतत्रगत्वातंवारयामासुरातवत् ॥ पत्नी चाथाययौतत्रगृहीत्वातनयान्निजान् ॥ ७ ॥ प्रार्थयामासबहुधाननिवृत्तोद्विजोत्तमः ॥ अत्यावेशंकृतेपौरैरुत्थायचलितोद्विजः ॥ ८ ॥ पत्नीचानुजगामार्तातामनादृत्यचक्रुधा ॥ जगामैवविरक्तःसन्ननिवृत्तोबभूवह ॥ ९ ॥ ततस्तेग्रामवृद्धास्तंपत्नींतांस्तनयानपि ॥ गृहीत्वाग्राममागत्यस्वंस्वमालयमाययुः ॥ १० ॥ विष्णुशर्मातदारभ्यलोकोनिंदामवापसः ॥ अयथाविधिसंन्यासाल्लोकेऽयंपर्य्यट न्सदा ॥ ११ ॥ प्रत्याख्यातोद्विजैःकश्चित्तरौनीग्रामवासिभिः ॥ ससुविद्योमहाप्राज्ञःशिखासूत्रादिमानपि ॥ १२ ॥ तत्याजकर्मजा लंससंन्यासीवनसंशयः ॥ सजगामशिलानाथोयत्रतिष्ठतिशंकरः ॥ १३ ॥ परिबभ्रामपृथिवींसकलांविरहातुरः ॥ तस्यांगंयत्रदेशेच

पतितिस्मतदाहरः ॥ १४ ॥ तस्यापिचतदंगंसंस्थापयामासशंकरः ॥ एवंभ्रमन्पृथिव्यांतुमिथिलामागतःपुनः ॥ १५ ॥ जनकस्यच राजर्षेर्गृहाद्वैयोजनद्वये ॥ सरोबिंदुह्रदोनामतीर्थंपापहरंपरम् ॥ १६ ॥ तत्पश्चात्कमलानद्यादक्षिणेधरणीतले ॥ सत्याःप्रपतितं देव्याउदरंनाभिसंयुतम् ॥ १७ ॥ शिवोऽप्यपातयत्तत्रस्वोदरंनाभिसंयुतम् ॥ ततोब्रह्माचविष्णुश्चसमागत्यकृतांजली ॥ १८ ॥ आसाद्यशंकरंदेवमूचतुःपरमेश्वरौ ॥ किमिदंक्रियतेनाथदेहपातनमद्भुतम् ॥ १९ ॥ वस्तुतस्तेनदेहोऽस्तिपातनंतस्यवैकुतः ॥ तथापिजगतांभूत्यैदेहवानसिशंकर ॥ २० ॥ इतिश्रुत्वातयोर्वाक्यंविहस्यपरमेश्वरः ॥ उवाचविष्णुंब्रह्माणंगुह्यंलोकानुकंपया ॥ २१ ॥ शृणुब्रह्मन्नथोविष्णोगुह्यंलोकहितंपरम् ॥ लोकोपकारायमयादेहोऽयंपात्यतेभुवि ॥ २२ ॥ पूर्वंबिन्दुसरोनामतीर्थमेतत्सनातनम् ॥ अत्रावयोर्देहपाताद्विशिष्टमभवत्पुनः ॥ २३ ॥ सरोबिन्दुह्रदेस्नात्वाकमलायांतथानरः ॥ आवयोरुदरंदृष्ट्वाब्रह्महत्यांव्यपोहति ॥ २४ ॥ यद्यत्कामयतेलोकःपुत्रदारधनादिकम् ॥ मासमेकमिहासीनोममाराधनतत्परः ॥ ॥ २५ ॥ तत्रतस्मैप्रयच्छामिसत्यमेतन्नसंशयः ॥ युवांजानीतमेतद्धिमणिकर्ण्याःसमंसरः ॥ २६ ॥ अहंविश्वेश्वरःसाक्षान्मुक्तिदश्चनिरंतरम् ॥ वसाम्यत्रमृतानांतुमुक्तिंदातुंनसंशयः ॥ २७ ॥ सिद्धिक्षेत्रमिदंदेवैर्जानीतमावयोःप्रियम् ॥ अचिराल्लभतेसिद्धिं पुरश्चर्यापरोनरः ॥ २८ ॥ इत्युक्त्वास्वोदरेशम्भुःप्रविवेशाथपश्यतोः ॥ तयोःप्रस्तुवतोर्भक्त्याब्रह्मकेशवयोरथ ॥ ॥ २९ ॥ ब्रह्मापिकेशवश्चापिनिजनाम्नातिसुन्दरम् ॥ शिवलिंगंप्रतिष्ठाप्यजग्मतुःस्वंस्वमालयम् ॥ ३० ॥ एवंभूत्वाशिलानाथः

शंकरो भक्तवत्सलः ॥ तत्र गत्वा विष्णुशर्म्मा शिवाराधनतत्परः ॥ ३१ ॥ तत्रैकं वत्सरं विप्र उवास ब्रह्मचर्य्यवान् ॥ वत्सरांते शिलाना
थो रात्रौ स्वप्नेऽब्रवीद्वचः ॥ ३२ ॥ परितुष्टोऽस्मि भद्रं ते तवाराधनतो द्विज ॥ वैष्णवं मंत्रराजं ते ददामि सर्वसिद्धये ॥ ३३ ॥ तन्मंत्रं जप
भो नित्यं ममाराधनतत्परः ॥ भुक्त्वा भोगानशेषांस्तु मृतो मोक्षमवाप्स्यसि ॥ ३४ ॥ तवास्ति दीर्घमायुष्यं पुनर्दारपरिग्रहः ॥ भविष्य
ति शुभा तत्र संततिर्वंशवर्द्धिनी ॥ ३५ ॥ इत्युक्त्वा द्वादशार्णं तु दत्त्वा मंत्रं सदाशिवः ॥ तापसो द्विजरूपेण तत्रैवांतरधीयत ॥ ३६ ॥ विष्णुश
र्म्मा समुत्थाय स्वप्नं संस्मृत्य विस्मितः ॥ भविष्यति कथं चैतदिति चिन्तापरोऽभवत् ॥ ३७ ॥ द्वादशार्णं जपन्नित्यं तुलसीदामभूषितः ॥ अया
चिताशी तत्रासीदेकदा शिवरात्रके ॥ ३८ ॥ सर्वे ग्रामात्समायाताः शिवदर्शनमानसाः ॥ तद्ग्रामीणा अपि जनाः समायाता दिदृक्षवः ॥ ३९ ॥
पूजयित्वा शिलानाथं विष्णुशर्माणमेत्य ते ॥ परितोष्य वचोभिस्तं निन्युः संघा समं वहि ॥ ४० ॥ तत्र पूर्वं गृहं त्यक्तात स्थाकन्य ... सद्वि
जः ॥ पुनः पाणिग्रहस्तत्र पुत्रमुत्पाद्य कालतः ॥ ४१ ॥ वैष्णवप्रवरो भूत्वा गृहिण्या वै द्विजर्षभः ॥ सर्वानामंत्र्य बन्धून्स जगाम पुरुषो ...म् ॥
॥ ४२ ॥ भक्तिरत्नावलीं कृत्वा ग्रंथं भागवतोत्तमम् ॥ श्रावयित्वा जगन्नाथं तं समर्प्य ततोऽभ्यगात् ॥ ४३ ॥ आगत्य काशीं तस्थौ स बिन्दुमाधव
सन्निधौ ॥ जगन्नाथं हृदि ध्यात्वा मंत्रं वै द्वादशाक्षरम् ॥ ४४ ॥ जपन्नानंदपूर्वं स तस्थावानंदकानने ॥ एकदा श्रीजगन्नाथ पूजकेभ्यो निशात्य
ये ॥ ४५ ॥ भक्तिरत्नावलीमालां देहि मह्यमिति स्वयम् ॥ उवाच स्वप्ने सा तीव प्रिया मम न संशयः ॥ ४६ ॥ विष्णुशर्म्मकृता सा तु काश्यां तिष्ठ
ति स द्विजः ॥ मदाज्ञया तु वै यत्र भक्तिरत्नावलीं ततः ॥ ४७ ॥ गृहीत्वा पुनरायातु मत्कण्ठे तां नियोजय ॥ तावन्मणिमयीं तां मालां

त्यक्ष्याम्यसंशयम् ॥ ४८ ॥ एवमुक्तास्तुतेसर्वेनिद्रांत्यक्त्वासमुत्थिताः ॥ आश्चर्यंपरमंमत्वाराज्ञेप्रोचुर्यथार्थतः ॥ ४९ ॥ राजा पिस्वप्नेतत्सर्वंदृष्टवान्सोऽब्रवीच्चतान् ॥ वयंयूयंगमिष्यामःश्रीजगन्नाथमंदिरे ॥ ५० ॥ तत्रोपायंकरिष्यामिभक्तिरत्नावलीयथा ॥ शीघ्रंप्रयातचेत्युक्ताःसर्वेराजपुरस्सराः ॥ ५१ ॥ आगत्यमंदिरेदृष्ट्वामालांरत्नमयींपुरः ॥ पतितांभुविकेनापिनिक्षिप्तामिवतद्गलात् ॥ ५२ ॥ तंदृष्ट्वामहदाश्चर्य्यंराजापत्रंलिलेखतत् ॥ दूतान्द्रुतगतीन्काश्यांराजाश्रीविष्णुशर्म्मणे ॥ ५३ ॥ तेगत्वातत्रतत्पत्रं ददुःश्रीविष्णुशर्म्मणे ॥ विष्णुशर्मापितत्पत्रंजग्राहशिरसाद्विजः ॥ ५४ ॥ आनन्दांभोधिसंमग्नस्तान्परिष्वज्ययत्नतः ॥ पाद्यास नार्घ्यदानेनतेषांसत्कारमाचरत् ॥ ५५ ॥ तेऽप्यूचुर्नवयंब्रह्मन्निवसामोऽत्रवैनिशि ॥ आज्ञाराज्ञोऽस्तिनःकार्यंद्रुतमेतन्नसंशयः ॥ ५६ ॥ इत्युक्तोविष्णुशर्माथस्वहस्तलिखितांततः ॥ भक्तिरत्नावलींतेभ्योददौहर्षसमन्वितः ॥ ५७ ॥ नमस्कृत्यचतान्सर्वान्विससर्ज कृतांजलिः ॥ भक्तिरत्नावलींनीत्वाद्रुतंराज्ञेन्यवेदयन् ॥ ५८ ॥ राजापितांसमादायविद्वद्ब्राह्मणवक्त्रतः ॥ श्रावयामासगोविंदं भक्तिरत्नावलींमुहुः ॥ ५९ ॥ पुनःस्वप्नेददर्शाथराजाश्रीपुरुषोत्तमम् ॥ भक्तिरत्नावलीश्लोकगुलिकांविनिधायभोः ॥ ६० ॥ मालांकृत्वाप्रयच्छाशुततःप्रीतोभवाम्यहम् ॥ इत्युक्तःप्रातरुत्थायतथैवकृतवान्नृपः ॥ ६१ ॥ भक्तिरत्नावलींमालांददौकृष्णायवै पुनः ॥ ततःप्रसन्नोभगवान्मालामन्यांदधौहरिः ॥ ६२ ॥ एवंप्रभावःसुव्यक्तोभक्तेर्वैविष्णुशर्म्मणः ॥ यइदंशृणुयाल्लोकेभक्तिमाहा त्म्यमुत्तमम् ॥ ६३ ॥ सर्वपापविनिर्मुक्तोभक्तिमान्स्यान्नसंशयः ॥ ६४ ॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्येविष्णुशर्म्मचरितंनाम

सप्तचत्वारिंशःसर्गः ॥ ४७ ॥ अथवक्ष्येविष्णुभक्तान्संप्रदायप्रवर्तकान् ॥ चतुरोलोकविख्यातान्कीर्तिमान्मुक्तिमुक्तिमान् ॥ १ ॥
विष्णुस्वामीप्रथमतोनिंबादित्यस्ततःपरम् ॥ मध्वाचार्य्यस्तृतीयस्तुतुर्योरामानुजःस्मृतः ॥ २ ॥ एतेवैष्णवमुख्यावैसंप्रदायप्रवर्त
काः ॥ शिष्यप्रशिष्याएतेषांमाहात्म्यात्पूज्यतांगताः ॥ ३ ॥ अद्यापिपृथिवीमेतामलंकुर्वंतिभक्तितः ॥ विष्णुस्वामिकुलेतत्रवल्लभा
चार्य्यसंभवः ॥ ४ ॥ दाक्षिणात्येषुतैलंगोजात्याविप्रोऽतिभक्तिमान् ॥ परित्यज्यनिजंदेशंसस्त्रीकोगोकुलेऽवसत् ॥ ५ ॥ अयाच
नाशीसन्तुष्टःश्रीकृष्णार्चनतत्परः ॥ माहात्म्यात्तस्यविप्रस्यशिष्याःसर्वेनृपादयः ॥ ६ ॥ प्रतीक्षंतस्तदाज्ञां वै चक्रुःसर्वेसमीहितम् ॥
एकदातस्यगेहेतुसाधुरेकःसमागतः ॥ ७ ॥ शालग्रामशिलांबद्धागलेकौशेयवाससा ॥ आचार्य्यद्वारदेशेतुक्षेमंकरतरौसतु ॥ ८ ॥
शालग्रामंनिधायाथवल्लभाचार्य्यसन्निधौ ॥ गत्वाप्रणम्यद्रक्ष्यामिमंदिरेतवकेशवम् ॥ ९ ॥ आज्ञापयेतिश्रुत्वावैगच्छेत्युक्तो
महात्मना ॥ गत्वातन्मंदिरेदृष्ट्वाशालग्रामशिलाचयम् ॥ १० ॥ तुलसीदामभिःश्वेतैश्चन्दनैश्चयवैस्तिलैः ॥ नानासुगंधिकुसुमैः
सुरभीकृतमंदिरैः ॥ ११ ॥ पूजितंपरमप्रीत्याप्रणम्यद्वारमागतः ॥ क्षेमंकरतरुंगत्वाशालग्रामशिलांनिजाम् ॥ १२ ॥ ना
पश्यद्विललापार्तोवल्लभाचार्यसन्निधौ ॥ समागत्याब्रवीद्वाक्यंशालग्रामशिलामम ॥ १३ ॥ क्षेमंकरतरौबद्धाकेनाप्यपहृता
शुभा ॥ अतःपरंनजीवामिशालग्रामशिलांविना ॥ १४ ॥ इतिश्रुत्वावचस्तस्यसाधोराचार्यआहतम् ॥ माविषादंकुरुत्वं
वैगच्छमेदेवमंदिरम् ॥ १५ ॥ यामिच्छसिशिलांतांत्वंगृहाणात्रनसंशयः ॥ इत्युक्तःप्रत्युवाचाथनास्तितेतादृशीशिला ॥ १६ ॥

किंकरोम्यन्यथानाथशिलांतांचविनाविभो ॥ श्रुत्वेदंवल्लभाचार्यःपुनराहव्रजेतितम् ॥ १७ ॥ ततोगत्वापुनःसाधुर्भगवन्मंदिरं
शुभम् ॥ दृष्ट्वातत्रशिलाःसर्वाःस्वशिलासदृशीःशुभाः ॥ १८ ॥ आश्चर्याद्बहिरागत्यतमाचार्यमुवाचतत् ॥ पुनराचार्यवचनात्क्षेमं
करतरोस्तले ॥ १९ ॥ गत्वातद्वृक्षबद्धांस्वांशालग्रामशिलांपुनः ॥ संप्राप्यकृतकृत्योऽभूदाचार्यनिलयेऽवसत् ॥ २० ॥ एवमा
दीनिचित्राणिबहून्यत्रमहात्मनः ॥ कर्माणिपृथिवीमध्येसंतिव्यक्ततराणिच ॥ २१ ॥ अत्रैववंशेविख्यातोज्ञानदेवइतिश्रुतः ॥ कथां
तस्यप्रवक्ष्यामिशृण्वतांपापनाशिनीम् ॥ २२ ॥ दक्षिणस्यामथेंद्राणीनदीपुण्यजलाशुभा ॥ तत्तीरेकाचिदानंदक्षेत्रंद्विजगणाकुलम् ॥
॥ २३ ॥ तत्रैकोब्राह्मणःकश्चित्पत्न्याकलहतोरुषा ॥ वंचयित्वाथतांपत्नींसंन्यासंजगृहेस्वयम् ॥ २४ ॥ अथकालेकतिपयेयातेज्ञात
स्तयासतु ॥ सासमागत्यभर्तारंमांगृहाणेतिचाब्रवीत् ॥ २५ ॥ सोऽब्रवीद्गच्छभद्रंतेनचभर्ताहमस्मिते ॥ इत्युक्तासातुतत्पत्नीतद्गुरुं
प्रणिपत्यच ॥ २६ ॥ प्राहनाथाऽनपत्याहंपितृमातृविवर्जिता ॥ कंयामिशरणंब्रूहिपतिस्तेशिष्यतांगतः ॥ २७ ॥ इतिश्रुत्वावचस्त
स्यागुरुःस्वाम्यतिदुःखितः ॥ आहूयविप्रंतंशिष्यंग्राह्येयंसुव्रतासती ॥ २८ ॥ नैनांत्यजगृहाणेमांमद्वाक्यान्मास्तुतेभयम् ॥ अकर्तव्यं
कृतंचैतन्मयाप्यज्ञानतोमहत् ॥ २९ ॥ भविष्यंतिसुतास्तस्यांतववंशविवर्द्धनाः ॥ माहात्म्याद्देवताःसर्वे भविष्यंतिद्विजोत्तमाः ॥ ३० ॥
इत्याज्ञयागुरोःसोऽथपत्नीमादायसुव्रताम् ॥ उवासक्वचिदेकांतेभिक्षुधर्म्मंसमाचरन् ॥ ३१ ॥ मनसानकदाचित्तांसोऽकामयतसुव्रतः ॥
ऋतावेवचकामार्तोजगामकाममोहितः ॥ ३२ ॥ एवंपुत्रास्त्रयोजाताःकालेयस्यमहात्मनः ॥ तेषांज्येष्ठोज्ञानदेवोजातस्तुसप्तहायनः ॥

॥ ३३ ॥ तंगृहीत्वायतिर्ग्रामेगतोब्राह्मणमंदिरम् ॥ एषमेतनयोब्रह्मन्भवद्भिरुपनीयताम् ॥ ३४ ॥ अध्याप्यतांश्रुतिंविप्रायुष्माकंशरणं
गतः॥इतिश्रुत्वावचस्तस्यजहसुस्तेपरस्परम् ॥ ३५ ॥ एषसंन्यस्तवान्पत्नींसंजग्राहततःसुतम्॥समुत्पाद्याध्यापयितुमायातश्चात्रमंद
धीः ॥ ३६ ॥इतिसंचिंत्यमहिषंददृशुस्तेऽतिसन्निधौ॥तमालंब्याब्रुवन्सर्वेविद्यामदविमोहिताः ॥३७॥ अहोवयंपाठयामोयद्येषमहिषो
ऽधुना॥पठेद्वेदंतदेत्येतत्प्रतिज्ञैषानसंशयः ॥ ३८ ॥ इत्युक्तःसतुतूष्णींवैतस्थौयतिरधोमुखः॥ज्ञानदेवउवाचाथतान्विप्रान्मधुराक्षरम् ॥
॥ ३९ ॥ असंभावितमेतत्तुप्रतिजानीतार्किंद्विजाः॥तथापिसत्यंचेद्विप्राःकोंऽदहरिचेष्टितम् ४० ॥ इत्युक्तास्तेपुनर्विप्रास्तथैवजहसु
स्तदा ॥ ज्ञानदेवस्तुतंदृष्ट्वामहिषंप्राहसस्मितः ॥ ४१ ॥ अतोमहिषरूपेणभवानपिहरिःस्वयम् ॥ स्वभक्तमयशःसिंधौमग्नंसंरक्षमाधव
॥४२॥ भक्तसंकल्पसिद्ध्यर्थमाविर्भवतिभूरिशः ॥इति श्रुत्वावचस्तस्यज्ञानदेवस्यतत्क्षणात् ॥४३॥ महिषःसस्वरंवेदानपठत्पश्यतां
नृणाम् ॥ ततस्तेब्राह्मणाःसर्वेमहाश्चर्य्येणविस्मिताः ॥ ४४ ॥ श्रुत्वान्येऽप्यागतावृद्धाग्रामेयेवैदिकाद्विजाः ॥ तेसर्वेतंयतिंप्राहुर्ज्ञानदे
वंचसादरम् ॥४५॥ अहोधन्योऽसिधन्योऽयंतवपुत्रोनसंशयः ॥ यत्कृतेमहिषेऽप्येत्यविष्णुर्वेदंसमर्पयत् ॥ ४६ ॥ युवामतः क्षमेया
थांपाठयामोवयंश्रुतिम् ॥ इत्युक्तोज्ञानदेवस्तुमहिषंप्रणिपत्यतम् ॥ ४७ ॥ कृतांजलिपुटःप्राहक्षमस्वातःपरंविभो ॥ इत्युक्तोविररा
मासौमहिषः श्रुतिपाठतः ॥ ४८ ॥ ब्राह्मणाअपितंबालंविज्ञापयितुमादरात् ॥ निन्युर्निजगृहंसर्वेव्रतबंधमकारयन् ॥ ४९ ॥ ततः
कतिपयैरेवमासैर्वेदत्रयींपठन् ॥ शास्त्राणिचततस्तंतुपाठयामासुरादरात् ॥ ५० ॥ इत्याश्चर्य्यमभूत्तत्रासिद्ध एकः समागतः ॥ सर्पं

कृत्वाग्रतोदेवैव्याघ्रमारुह्यनिर्भयः ॥ ५१ ॥ कुत्रास्तिज्ञानदेवःसइतिपृच्छज्जनान्प्रति ॥ इतिश्रुत्वाज्ञानदेवोभित्तिमारुह्यतस्थिवान्
॥ ५२ ॥ भित्तिंप्राहमहाभागेसिद्धआयातिमांप्रति ॥ तदग्रेयाहिमांतत्रनयत्वंप्रणतोऽस्म्यहम् ॥ ५३ ॥ इत्युक्ताचलिताभित्तिःसर्पंती
सिद्धसम्मुखम् ॥ दृष्ट्वातौव्याघ्रभित्तिस्थौलोकाविस्मयमागताः ॥ ५४ ॥ अहोखलुमहाश्चर्यमित्यूचुस्तेपरस्परम् ॥ ततःसिद्धस्तु
तंदृष्ट्वाभित्तिस्थंज्ञानदेवकम् ॥ ५५ ॥ साधुसाध्विवितिसंपूज्यसस्नेहंहृदयेन्यधात् ॥ ज्ञानदेवोऽपितंप्राहभवतांकृपयात्विदम् ॥ ५६ ॥
एवंपरस्परालापंकृत्वासिद्धोयथारुचि ॥ जगामज्ञानदेवोऽपिपद्मामेवाययौगृहम् ॥ ५७ ॥ यइदंशृणुयाद्भक्त्याज्ञानदेवस्यचेष्टि
तम् ॥ अभीष्टंलभतेलोकेपरत्रसुखमश्नुते ॥ ५८ ॥ इति श्रीभगवद्भक्तिमाहात्म्येवल्लभाचार्य्यज्ञानदेवचरितंनामाष्टचत्वारिंशः
सर्गः ॥ ४८ ॥ ॥ छ ॥ ज्ञानदेवस्यशिष्यौद्वौनामदेवत्रिलोचनौ ॥ नामदेवकथाचोक्तान्योच्यतेवैसमासतः ॥ १ ॥ त्रिलोचनस्सप
त्नीकोदरिद्रोवैद्विजोत्तमः ॥ भिक्षाशीनित्यसंतुष्टोविष्णुभक्तिपरायणः ॥ २ ॥ आमध्याह्नंयाचयित्वानित्यंविप्रेषुभोजनम् ॥ दत्त्वास्व
यंतुबुभुजेव्रतमेतद्द्विजन्मनः ॥ ३ ॥ परंतुहरिरित्येतदक्षरद्वयमुत्तमम् ॥ क्षणमेकंनतत्याजजात्वद्विप्रः कथंचन ॥ ४ ॥ तद्भक्त्यापुंडरीकाक्षः
समागत्याथतद्गृहे ॥ समाययौविप्ररूपोवृद्धोऽतर्यामिसंज्ञकः ॥ ५ ॥ त्रिलोचनेनसाकंतुबहुधाभिक्षितुंययौ ॥ दृष्ट्वाभारपरिश्रांतंभिक्षान्नेन
त्रिलोचनम् ॥ ६ ॥ अंतर्यामीस्वयंनीत्वाययौतेनसमोगृहे ॥ विप्राणांभोजनांतेतुभोक्तव्यमितिनिश्चयः ॥ ७ ॥ यावदन्नंमिलत्यस्यभुंक्ते
तावन्नसंशयः ॥ अंतर्यामीजातुनैवभुंजन्नित्यब्रवीद्वचः ॥ ८ ॥ त्रिलोचनस्यमहिषीभोजयित्वाद्विजानथ ॥ शिष्टमन्नंददौनित्यमंतर्यामी

द्विजायसः ॥९॥ स्वयंबुभुक्षितोह्यासीत्तृप्तोऽस्मीतिनमोऽब्रवीत्॥एवंदुःखपरानित्यंतत्पत्नीचातिसुव्रता॥१०॥एकस्मिन्दिवसेजातमन
श्नन्त्यादिनत्रयम् ॥ सामाजिकासखीकाचिदाजगामगृहंप्रति ॥११॥ कथमेतांदशांयाताविनारोगेणतेसखि ॥ किंवारोगोऽस्तिमेब्रूहिप्र
तीकारंकरोम्यहम् ॥ १२ ॥ इत्युक्तासाप्युवाचाथनरोगोममवर्तते ॥ भिक्षातुप्रमितायातिसर्वेषांभोजनांतरं ॥१३॥ अंतर्यामीभुनक्त्येष
तृप्तोऽस्मीतिनभाषते ॥ अतोदिनत्रयंमेऽद्यजातमन्नंविनासखि ॥ १४ ॥ इत्युक्तातत्सखीप्राहकोऽसौकस्मादिहागतः ॥ कथमेष
प्रियोनित्यंतवभर्तुर्वरानने ॥ १५ ॥ त्रिलोचनप्रियेत्युक्तासख्यासाहतुतांपुनः ॥ अहोतस्याप्रियोनैवकश्चिद्दृष्टोमयासखि ॥ १६ ॥
कोवेदकुतआयातःकिमर्थमिहतिष्ठति ॥ श्रुत्वैवंभाषितंतस्याअन्तर्यामीतुतत्क्षणात् ॥ १७ ॥ अन्तर्दधेजगामाथनिजधामततो
हरिः ॥ अथत्रिलोचनःसायंप्राहपत्नींपतिव्रताम् ॥१८॥ अंतर्यामीनदृष्टोऽद्यगतःक्वापिविवित्सिकिम्॥इत्युक्ताप्राहपत्नीतंनाहंजानामि
कुत्रसः ॥ १९ ॥ भुक्त्वाजगामनायातःपुनरत्रगृहेमम ॥ अथत्रिलोचनःसंध्यामुपास्यैतस्ततःपुनः ॥ २० ॥ अन्तर्यामिणमुच्चैस्तु
जुहावस्नेहयंत्रितः ॥ अनागतंतंविलपंस्तस्यशोकेनदुःखितः ॥ २१ ॥ बुभुजेनैवरात्रौसतस्यचिंतापरायणः ॥ अथत्रिलोचनं
स्वप्नेप्रोवाचभगवान्हरिः ॥ २२ ॥ माशुचस्त्वंमहाभागत्रिलोचनममप्रिय ॥ त्वद्भक्त्याहंतवगृहेह्यवात्संविप्ररूपधृक् ॥ २३ ॥
अद्यारभ्यांतरिक्षेतुतववेश्मनिसन्ततम् ॥ निवसामिनसंदेहस्त्वमिदंकुरुमद्वचः ॥ २४ ॥ प्रातरारभ्यभिक्षायामागच्छत्वंक्वचिद्द्विज ॥
जरयादुर्बलोऽसित्वंत्वद्दुःखाद्दुःखितोऽस्म्यहम् ॥ २५ ॥ गृहेतेयानिभांडानिसदापूर्णानिसंतुवै ॥ तैलंघृतंतथान्नंचह्यौषध्योद्रव्यमेवच॥

॥ २६ ॥ अक्षयंतेगृहंविप्रभविष्यतिनसंशयः ॥ तन्नैवशतशोविप्रान्भोजयित्वास्वयंपुनः ॥ २७ ॥ भुंक्ष्वत्वंकिंचसर्वेभ्योदेह्यन्नानि
सदाव्रती ॥ यावज्जीवंप्रसादान्मेसर्वंपूर्णंभविष्यति ॥ २८ ॥ इतिलब्ध्वावरंस्वप्नेप्रभातेसत्रिलोचनः ॥ सद्दृशेस्वान्नसंभारान्गृहे
सर्वान्सुसंस्कृतान् ॥ २९ ॥ जहर्षपत्नीमाभाष्यविप्रानाहूयनित्यशः ॥ भोजयामासबुभुजेस्वयंपत्न्यासहद्विजः ॥ ३० ॥ एवं
भक्त्याभगवतोद्विजःसर्वसमृद्धिमान् ॥ इहलोकेसुखंप्राप्यमृतोमोक्षमवाप्तवान् ॥ ३१ ॥ यइदंशृणुयाल्लोकेभक्तिमाहात्म्यमुत्तमम् ॥
दरिद्रोलभतेवित्तंनामोच्चारणतत्परः ॥ ३२ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येत्रिलोचनचरितंनामैकोनपंचाशत्तमःसर्गः ॥ ४९ ॥
अथान्यत्संप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥ नीलाचलेमहात्माभूद्राजावैकुलशेखरः ॥ १ ॥ सीतारामजपासक्तःसीतारामप्रपूजकः ॥
सीतारामपदद्वन्द्वेषट्पदीकृतमानसः ॥ २ ॥ दयाधर्मरतोनित्यंसदाव्रतपरायणः ॥ आमध्याह्नंराजकर्मकृत्वारामंहृदिस्मरन् ॥ ३ ॥
ततोऽपराह्णेशुश्रावरामायणमनन्यधीः ॥ तस्यपौराणिकस्तंतुरामार्थेत्यक्तजीवितम् ॥ ४ ॥ ज्ञात्वारामस्यदुःखादिसीतायाहरणादि
कम् ॥ जातुनश्रावयामासजानन्वैराजनिश्चयम् ॥ ५ ॥ पौराणिकस्त्वेकदातुक्लिष्टोऽभूज्ज्वररोगतः ॥ तत्पुत्रःश्रावयामासराज्ञेरामा
यणंतदा ॥ ६ ॥ रावणेनकृतंसर्वंश्रावयामासपुत्रकः ॥ श्रुत्वातद्दुःखदंवाक्यंसीतायाहरणादिकम् ॥ ७ ॥ गृहीत्वा खड्ग
मुत्थायशीघ्रमश्वंसमानय ॥ अद्याहंरावणंहत्वानयिष्यामिचजानकीम् ॥ ८ ॥ मयिजीवतिमेमाता सीतारक्षोहृताभवेत् ॥
अहोधिगस्तुमामद्येत्युक्त्वाश्वंससमारुहत् ॥ ९ ॥ धावयित्वाश्वमुख्यंतंपयोनिधिसमीपगः ॥ पुनरश्वंकशाघातैःसमुद्रेऽपातयद्रुषा ॥

॥ १० ॥ अश्वेनैवचपाथोधिंतीर्त्वाहत्वाचरावणम् ॥ सीतांमद्यानयिष्यामीत्येवंनिश्चितमानसः ॥ ११ ॥ अथैवंनिश्चयंतस्यज्ञा
त्वाश्रीरघुनन्दनः ॥ लक्ष्मणेनसहभ्रात्रासीतयासहनौस्थितः ॥ १२ ॥ आविर्बभूवसहसाकर्णधारेणसंयुतः ॥ आविर्भूयसमुद्रेतंक
र्णधारोऽब्रवीन्नृपम् ॥ १३ ॥ किमर्थंयासिलंकांत्वंहत्वारावणमाहवे ॥ सीतांनीत्वासहभ्रात्रायात्ययोध्यापुरीमयम् ॥ १४ ॥
निवर्तस्वपुरींगच्छतद्वाक्यात्कुलशेखरः ॥ ततोविमानमायान्तंसमारूढन्ददर्शह ॥ १५ ॥ एवंनिरीक्ष्यतान्सर्वाञ्श्रुत्वावैतस्य
भाषितम् ॥ निवर्तयामासनृपोपयोधेरंतरात्स्वयम् ॥ १६ ॥ जलाद्बहिःसमागत्यददर्शनिजवाहिनीम् ॥ तयानमस्कृतोराजातू
ष्णींभवनमाययौ ॥ १७ ॥ पौराणिकंसमभ्येत्यदृष्टंचित्रंन्यवेदयत् ॥ श्रुत्वाचित्रंद्विजः सोऽपिराजानमभ्यनंदयत् ॥ १८ ॥ तवभ
क्त्यामहाराजसत्यंसत्यंनसंशयः ॥ समुद्रंप्रविशंतंत्वांज्ञात्वायंभक्तवत्सलः ॥१९॥ स्वयंनिवारयामासदर्शयित्वात्मविग्रहम् ॥ धन्यो
ऽसित्वंमहाराजधन्येयंधरणीत्वया ॥ २० ॥ त्वद्भक्त्यायोगिदृश्योऽसौरामस्त्वद्दृक्पथंगतः ॥ इतिश्रुत्वाथवचनंपौराणिकसमीरितम्
॥ २१ ॥ तदाबुबोधनृपतिःशौर्य्यावेशाच्चनिर्गतः ॥ पश्चात्तापंचकारोच्चैस्तदाज्ञातोनमेप्रभुः ॥ २२ ॥ शौर्य्यंदुर्मददुष्टेनचित्ते
नातोधिगस्तुमाम् ॥ इतिचिंतापरोराजातद्रूपंहृदिचिंतयन् ॥ २३ ॥ नियमंपूर्वमास्थायस्थितोवेश्मनिभक्तितः ॥ एवंसराजाध
र्मात्माभक्तिमान्कुलशेखरः ॥ २४ ॥ कलावपिहरिंसाक्षादपश्यद्भक्तियोगतः ॥ २५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येकुलशे
खराल्वार्चरितंनामपंचाशत्तमःसर्गः ॥ ५० ॥ ॥ छ ॥ कुलशेखरमाहात्म्यमपरंपापनाशनम्॥वक्ष्याम्याश्चर्य्यजनकंसाधोर्भक्ति

११

विवर्धनम् ॥ १ ॥ एकदामाधवेमासिशुक्लपक्षेनृपोत्तमः ॥ चतुर्दश्यांनृसिंहस्यप्रादुर्भावादिचेष्टितम् ॥ २ ॥ भक्त्यानुकारयामास
राजाश्रीकुलशेखरः ॥ कश्चिद्धिरण्यकशिपुःकश्चित्प्रह्लादरूपधृक् ॥ ३ ॥ विप्रःकश्चिदुपाध्यायः सभाचैवतुतादृशी ॥ प्रह्लादशा
सनंतादृक्प्रह्लादोक्तिस्तुतादृशी ॥ ४ ॥ सभास्तंभेनिलीयैकःस्थितोनृहरिरूपधृक् ॥ हस्तिपादतलेदानमग्नौनिक्षेपणंपुनः ॥
॥ ५ ॥ सर्पदंशनकर्मादिकारयित्वाततःस्वयम् ॥ हिरण्यकशिपुः सोऽयंगृहीत्वाखड्गमुत्तमम् ॥ ६ ॥ प्रह्लादंतुकरे
धृत्वावामेनैवतुपाणिना ॥ दक्षिणेनासिमुद्यम्यप्रह्लादंप्राहमंदधीः ॥ ७ ॥ क्वतेरामःक्वतेकृष्णःयद्बलान्नशृणोषिमे ॥ दर्शयाद्यनचे
न्मूढघातयामिनसंशयः ॥ ८ ॥ इत्युक्तःपितरंप्राहप्रह्लादोभक्तिमान्वचः ॥ तातक्वास्तेइतिपदंतवनोयुज्यतेहृदि ॥ ९ ॥ सर्व
दासर्ववर्तीसरामः सर्वमयोमहान् ॥ तत्रायंयुज्यतेनैवप्रश्नस्तेइतिमेमतिः ॥ १० ॥ इत्युक्तःप्राहयद्येवंस्तंभेऽस्मिन्वर्ततेकिमु ॥ वर्तते
सत्यमेवैतदुक्तः पुत्रेणदैत्यराट् ॥ ११ ॥ हस्तेनस्तंभंसंताड्यक्वास्तेसंदर्शयाधुना ॥ एवंब्रुवंतंदैत्येंद्रंनिर्गत्यस्तंभतोबली
॥ १२ ॥ नृसिंहरूपीजग्राहकराभ्यांलीलयापुनः ॥ भूमौनिपात्यहृदयंदारयामासवैनखैः ॥ १३ ॥ ममारचततःसाधुर्हिरण्यक
शिपुश्चयः ॥ नृसिंहरूपीजज्वालक्रोधेनमहतावृतः ॥ १४ ॥ हाहाशब्दोमहानासीत्तस्मिन्नद्भुतकर्मणि ॥ ततोराजासमुत्थायधूप
नीराजनादिभिः ॥ १५ ॥ संपूज्यनरसिंहंतंभक्तियुक्तेनचेतसा ॥ प्रह्लादंदर्शयामासततः शांतोबभूवसः ॥ १६ ॥ ऊचुःकेचिद
होद्वेषादनेनाघातितःस्वयम् ॥ कर्णेकर्णेवदंतिस्मकतिचित्तत्रवैजनाः ॥ १७ ॥ श्रुत्वाराजापितांवार्तांमेनेतानल्पचेतनान् ॥

तस्मिन्नेवाश्विनेमासिरामकीर्तनमद्भुतम् ॥ १८ ॥ राजातुकारयामासयथाविधिमहाधनैः ॥ नृसिंहचरितेयस्तुनृसिंहोऽभूद्द्विजो
त्तमः ॥ १९ ॥ दशरथःसएवात्रजातोचान्येऽन्यनामकाः ॥ कौशल्याकैकयीवाथसुमित्रामंथरातथा ॥ २० ॥ जानकीलक्ष्म
णश्चैवभरतश्चतथाविधः ॥ शत्रुघ्नश्चसुमंत्रश्चवसिष्ठाद्यामहर्षयः ॥ २१ ॥ एतेचान्येचरामस्यलीलयातत्स्वरूपिणः ॥ जन्मा
दियौवराज्यांतकथांतेवनवासिनः ॥ २२ ॥ रामप्रस्थानसमयेमिथ्यादशरथस्यच ॥ प्राणत्यागोबभूवाथमहाश्चर्यंप्रपश्यताम्
॥ २३ ॥ तेषामपिनृणांचित्तेविश्वासःसुमहानभूत् ॥ अहोसत्यंव्रजेगोप्यःपूतनारिष्टधेनुकान् ॥ २४ ॥ दुष्टानप्यनुकुर्वन्त्योजग्मुः
श्रीकृष्णसन्निधिम् ॥ अहोमाहात्म्यमेतत्तुभक्तेरेवनसंशयः ॥ २५ ॥ अनुकुर्वन्तदात्मानंप्राप्यमुक्तिंव्रजंतुयत् ॥ नास्तिभक्ते
रसाध्यंतुकिंचापिभुविवैनृणाम् ॥ २६ ॥ यइदंशृणुयाल्लोकेमाहात्म्यंश्रद्धयान्वितः ॥ सर्वान्कामानवाप्नोतिभक्तिंचपुरुषोत्तमे ॥
॥ २७ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येकुलशेखराल्वार्चरितंनामैकपंचाशत्तमःसर्गः ॥ ५१ ॥ अथान्यत्संप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्त
मम् ॥ शृण्वतांप्रीतिजननंकृष्णभक्तिप्रदायकम् ॥ १ ॥ एकारतिमतीनाम्नाब्राह्मणीदाक्षिणात्यजा ॥ पतिपुत्रविहीनासाधनिनी
धर्मवत्सला ॥ २ ॥ कदाचिद्भवनेतस्याःसायंकालेसमागतः ॥ साधुःश्रीकृष्णभक्तश्चबालगोविंदपूजकः ॥ ३ ॥ तंदृष्ट्वासास
मुत्थायहर्षिताप्रणनामतम् ॥ पाद्यमाचमनीयंचपानीयमुदकंशुचि ॥ ४ ॥ अन्नंस्वादुददौतस्मैद्विजायातिथयेमुदा ॥ गृहीत्वास
र्वमातिथ्यंविप्रःसन्ध्यामुपास्तवान् ॥ ५ ॥ बालगोविन्दप्रतिमांबहिःसंस्थाप्यतत्पुनः ॥ निवेद्यसर्वंतुष्टावक्षणंनेत्रेनिमील्यच ॥ ६ ॥

भोजयित्वाथसंस्थाप्यस्वयंहिबुभुजेपुनः ॥ रतिमतीददर्शाथबालगोविंदमद्भुतम् ॥ ७ ॥ विप्रंप्राहातिभक्त्यासाकृतांजलिपरासती ॥
अहोब्रह्मकुलेजातापतिपुत्रविवर्जिता ॥८॥ कांगतिंयामिनोजानेकथंस्यात्सद्गतिर्मम॥अद्यावधिचपापानिजानंत्यानकृतानिभोः ॥९॥
धर्मंचापिनवाकार्यंपतिपुत्रशुचार्दिता ॥ अद्यैवबालगोविंदंदृष्ट्वामेमतिरुत्थिता ॥ १० ॥ एतादृशमनुंदेवंकारयित्वास्ववेश्मनि ॥
संस्थाप्यपूजयिष्यामिइत्याज्ञांदेहिसुव्रत ॥ ११ ॥ तन्मंत्रंदेहिमेविप्रपूजोपकरणंवद ॥ शिल्पिनंचसमाहूयकारयामिगृहोत्तमम्
॥ १२ ॥ तावत्त्वयात्रवस्तव्यंप्रसन्नोभवसुव्रत ॥ इत्युक्तोब्राह्मणःसोऽथप्राहतांब्राह्मणस्त्रियम् ॥ १३ ॥ पूर्वकर्मविपाकेन
विधवात्वमपुत्रिणी ॥ इदानींत्वंतुधन्यासियस्यास्तेमतिरीदृशी ॥ १४ ॥ दृष्ट्वेमंबालगोविंदंजातातेभक्तिरुत्तमा ॥
नमंत्रोनैवसामग्रीभक्त्यातुष्यतिकेशवः ॥१५॥ सुप्रसन्नोददातीष्टंप्रेमरज्जुनियंत्रितः॥श्रीकृष्णायनमस्त्वेतद्गृहाणमंत्रमुत्तमम् ॥१६॥
पतिपुत्रेयथाप्रेमतथास्याद्यदिकेशवे ॥ तदाशीघ्रंसगोविंदोददात्यभिमतंप्रभुः ॥ १७ ॥ तावत्तिष्ठामित्वद्भक्त्याशीघ्रमानयशिल्पि
नम् ॥ एवमुक्तारतिमतीशीघ्रमाहूयशिल्पिनम् ॥ १८ ॥ दर्शयामासगोविंदंप्रतिमामीदृशींकुरु ॥ इत्याज्ञाप्यद्विजंचाथतर्पयित्वा
धनांबरैः ॥१९॥ विससर्जतदाविप्रंगोविंदंहृदिसंस्मरन् ॥ गतेविप्रेरतिमतीगोविंदप्रतिमांशुभाम् ॥ २० ॥ स्थापयामाससद्भक्त्या
महोत्सवपुरःसरम् ॥ एकपुत्रेवजननीतंबालमिवसर्वदा ॥ २१ ॥ कर्मणामनसावाचामुदापरिचचारसा ॥ बिभीतकफलैःसार्द्धम
रिष्टफलमालया ॥ २२ ॥ अलंचकारगोविंदंदृष्टिदोषभयेनसा ॥ सर्वालंकरणैर्युक्तमुखंकज्जललांछितम् ॥ २३ ॥ दृष्टिदोषोपशांत्य

र्थंमातेवपुत्रवत्सला ॥ चकारशीतसमयेददावुष्णंतथौषधम् ॥ २४ ॥ रात्रौसातंतुगोविंदंसंस्थाप्यबालवद्धृदि ॥ आच्छाद्यांचल
वस्त्रेणततःसुष्वापसर्वतः ॥ २४ ॥ मृत्काष्ठनिर्मितंचैवबालक्रीडनकंतुसा ॥ तस्याग्रेस्थापयित्वासाक्रीडयंतीजहर्षच ॥ २६ ॥
प्रातःकालादिकेचैवतैलाभ्यंगादिकंतदा ॥ आह्लादभाषणंवापिकुर्वतीसामुमोदह ॥ २७ ॥ एवंतुपुत्रबुद्ध्यासापूजयंतीजगत्पतिम् ॥
गतेकतिपयेकालेशृण्वंतीचरितंहरेः ॥२८॥ श्रीमद्भागवतंनामपुराणंद्विजविश्रुतः॥नवनीतस्यचौर्य्यंतुयशोदायाविभीषिका ॥ २९ ॥
पलायनंभगवतोमातुस्तस्यानुधावनम् ॥ श्रीकृष्णग्रहणंचैवमात्राताडनमेवच ॥ ३० ॥ मृद्भक्षणंततःश्रुत्वापुत्रस्नेहेनतत्रसा ॥
ततोयशोदयादाम्नाबद्धःकृष्णोदृढंरुषा ॥ ३१ ॥ श्रुत्वात्वेवंरतिमतीहाहाकृष्णेतिभाषिणी ॥ मूर्च्छितापतिताभूमौप्राणांस्तत्या
जतत्क्षणात् ॥ ३२ ॥ ततोहाहाकृताःसर्वेजनास्तत्रसमागताः ॥ कश्चिदुत्थापयामासनोत्तस्थौसामृतायतः ॥ ३३ ॥ कृष्णप्रेमव
शादेषामृतारतिमतीपुनः ॥ जगामकृष्णसान्निध्यंयशोदेवनसंशयः ॥ ३४ ॥ नयोगोनतपोध्यानंनज्ञानंनापिसत्क्रिया ॥ प्रेम्णा
रतिमतीमुक्ताभक्तेर्माहात्म्यतोध्रुवम् ॥ ३५ ॥ बलिगेहेगतोविष्णुर्हंतुंवामनरूपधृक् ॥ तंदृष्ट्वाबलिपुत्रीसामनस्येवमचिंतयत् ॥ ३६ ॥
अहोऽतिसुंदरोबालोधन्यामातानसंशयः ॥ यद्येवंतनयोमेस्यात्पाययिष्यामिस्वंस्तनम् ॥ ३७ ॥ कृतार्थास्यामितिमुदासंकल्पंमन
साकृतम् ॥ सैवागत्यव्रजेजातापूतनाबालघातिनी ॥ ३८ ॥ पाययित्वास्तनंद्वेषाद्यशोदागतिमाययौ ॥ एवंद्वेषादपिगतामुक्तिंराक्षस
कन्यका ॥ किंपुनर्ब्राह्मणीपुण्याकृष्णप्रेमपरायणा ॥ ३९ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येरतिमतीचरितंनामद्विपंचाशत्तमःसर्गः॥५२॥

पुरुषोत्तमपुरेराजाबभूववैष्णवोत्तमः ॥ शांतोदांतोदयायुक्तोभक्तिमान्पुरुषोत्तमे ॥ १ ॥ एकदासनृपोगेहे चिक्रीडान्यैश्चतुष्पदीम् ॥
अस्मिन्नेवक्षणेश्रीमज्जगन्नाथस्यपूजकः ॥ २ ॥ पूजांकृत्वातत्प्रसादभूतांमालांकरेणच ॥ समादायततोराज्ञेदातुंतस्थौततोनृपः ॥ ३ ॥
क्रीडासक्तेनमनसावामंहस्तंप्रसारयत ॥ मालांगृहीतुमुद्युक्तःसतदापूजकोद्विजः ॥ ४ ॥ नवातांनददौमालांतदातस्मैमहीभुजे ॥ अयं
राज्यमदाविष्टोयद्वामेनेहपाणिना ॥५ ॥ मालांगृहीतुमुद्युक्तस्तस्मान्नास्मैददाम्यहम् ॥ इतिनिश्चित्यसगतःपूजकोनिजमंदिरम् ॥ ६ ॥
राजास्मृत्वापितंविप्रंविवृत्तमपमानतः ॥ पश्चात्तापेनमहताखिन्नोभूदतिचिंतया ॥ ७ ॥ तस्माच्चद्यूतमक्षंचमहाशोकपरोऽभवत् ॥ गर्ह
यन्नात्मनात्मानंनलेभेशर्मकुत्रचित् ॥८ ॥ जगन्नाथप्रसादस्यमालायाअपमानतः ॥ दंडःसमुचितोमेऽद्यइतिसंचिंत्यभूपतिः॥ ९ ॥
स्वहस्तंदक्षिणंछेत्तुंमनश्चक्रेनृपोत्तमः ॥ पिशाचव्याजतोहस्तंस्वयंवैछेदयाम्यहम् ॥ १० ॥ इतिनिश्चित्यमनसामहाशोकाकुलोऽभ
वत् ॥ तंदृष्ट्वातिकृशंदीनंभृत्योराज्ञोऽतिवल्लभः ॥११॥ बद्धांजलिपुटोभूपंपप्रच्छरहसिस्थितः ॥ महाराजकुतश्चिंताभवेद्यत्कार्श्यकारि
णी ॥ १२ ॥ ब्रूहिमेयदियोग्यंस्यात्तस्योपायंकरोम्यहम् ॥ इतिश्रुत्वासनृपतिस्तंप्राहकपटाद्वचः ॥ १३ ॥ अहोरात्रंसमागत्य
पिशाचोऽतिभयंकरः ॥ शयानंदंडहस्तोमांविभीषयतिनित्यशः ॥ १४ ॥ तस्मान्मेचिंतयानैवनिद्रानापिसुखंक्वचित् ॥ अद्य त्वं
शयनागारेतिष्ठतावत्स्वपाम्यहम् ॥ १५ ॥ तदाद्रक्ष्यसितंप्रेतंयेनेयंममदुर्दशा ॥ इत्युक्तःसतुभृत्योवैराजपर्यंकसन्निधौ ॥ १६ ॥
निष्कोशखड्गमादायतस्थौतत्परमानसः ॥ अथार्द्धरात्रसमयेसभृत्योनिद्रयाकुलः ॥ १७ ॥ किंचिन्नृपविशन्नेवसुष्वापाथनृपस्तदा ॥

स्वशय्यायांनिजाकारंवस्त्रंसंस्थाप्ययत्नतः॥१८॥ बहिरागत्यभित्तेस्तुगवाक्षद्वारमागतः। दक्षहस्तस्थदंडेनताडयामासतंनृपम् ॥१९॥
निजाकारंस्वशय्यायामथोत्तस्थौसपूरुषः ॥ ददर्शहस्तदंडेनताडयंतंनृपासनम् ॥ २० ॥ खड्गमुद्यम्यभृत्योऽपिकरंचिच्छेदसत्वर
म् ॥ ततश्छिन्नेस्वहस्तेतुराजाचगृहमागतः ॥ २१ ॥ दृष्ट्वातंछिन्नहस्तंतुसभृत्योभूपतेर्भयात् ॥ वेपमानोऽब्रवीन्नैवबद्धांजलिपुटः
स्थितः ॥ २२ ॥ तमाहभूपतिस्तत्रनापराधोऽस्तिकश्चन ॥ मयैवैतत्कृतंसर्वंस्वहस्तच्छेदनायभोः ॥ २३ ॥ जगन्नाथप्रसादस्तुमो
हान्नानेनपाणिना ॥ याचितोऽतस्तुदंडोऽयंहस्तच्छेदोमयाकृतः ॥२४॥ माभैस्त्वंममभृत्योऽसिप्रियःप्राणसमःसखा ॥ इत्युक्त्वासोऽ
वशिष्टांतुनिन्येतेननिशांनृपः ॥ २५ ॥ अथतस्मिन्क्षणेरात्रौददर्शपूजकोद्विजः ॥ जगन्नाथंकृपासिंधुंभाषमाणमिदंवचः ॥ २६ ॥
अहोनृपतिनातस्मिन्दिनेऽस्मिन्नपमानिता ॥ ममालाततस्तस्यपश्चात्तापोमहानभूत् ॥ २७ ॥ प्रसादात्तस्यतज्जातंवामहस्तप्रसारण
म् ॥ इदानींसतुतद्दोषाच्छेदयामासदक्षिणम्॥२८॥करंस्वकीयंनृपतिर्मद्भक्तोऽतीवमत्प्रियः॥अतस्त्वंप्रातरेवाशुप्रसादंचस्रजंमम॥२९॥
गृहीत्वादेहिभूपायततःस्वस्थोभविष्यति ॥ यदाछिन्नेनहस्तेनमत्प्रसादंगृहीष्यति ॥ ३० ॥ तदातस्मिन्क्षणेतस्यहस्तःसम्यग्भ
विष्यति ॥ तस्ययद्धस्तखंडंतुवर्ततेखलुतद्गृहे ॥ ३१ ॥ तदानयित्वावाटयांमेरोपयाशुततःपुनः ॥ दमनोमेप्रियोवृक्षोभविष्य
तिनसंशयः ॥ ३२ ॥ एवमुक्तस्ततोदेवपूजकःससमुत्थितः ॥ प्रातःप्रसादमादायययौराजनिकेतनम् ॥ ३३ ॥ राजापितंद्विजं
दृष्ट्वासमुत्थायातिभक्तितः ॥ प्रणनामततःसोऽपिस्वप्नमुक्त्वाथपूजकः ॥ ३४ ॥ मालांप्रसादंप्रददौकराभ्यांनृपतिस्तदा ॥ गृही

तुमुत्थितोनत्वाहस्ताभ्यांदक्षिणस्तदा ॥ ३५ ॥ करःप्राग्वदभूत्तस्यजगृहेतेनतांस्रजम् ॥ ततःसर्वेप्रमुदितादृष्ट्वातत्परमाद्भुतम् ॥३६॥ पूजकोनृपतेः पाणिंछिन्नंनीत्वाययौगृहम् ॥ वाट्यांसंरोपयामासततोऽभूद्दमनस्तरुः ॥ ३७ ॥ तत्पत्रेणचपुष्पेणपूजितः पुरुषोत्तमः ॥ अद्यापिवरदोभूत्वाददात्यभिमतंनृणाम् ॥ ३८ ॥ तस्माद्भक्तेःसमंनैवकिंचिदन्यत्प्रसादनम् ॥ विद्यतेश्रीहरेरेतज्ज्ञात्वा भक्तिंसमाचरेत् ॥ ३९ ॥ इत्येतत्कथितंभक्तेर्माहात्म्यंपरमाद्भुतम् ॥ श्रद्धयेदंनरःश्रुत्वा भक्तिंप्राप्नोत्यनुत्तमाम् ॥ ४० ॥ इति श्रीभगवद्भक्तिमाहात्म्येपुरुषोत्तमपुरराजचरितंनामत्रिपंचाशत्तमःसर्गः ॥ ५३ ॥ ॥ अथान्यत्संप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥ महदाश्चर्यजनकंमहाभक्तिप्रवर्द्धनम् ॥ १ ॥ पश्चिमेपुष्करप्रांतेकर्मानाम्नेतिविश्रुता ॥ ब्राह्मणीपतिपुत्राभ्यांरहिता बंधुवर्जिता ॥ २ ॥ निर्धनाऽपिशुभाचाराभिक्षामात्रपरायणा ॥ एकदापर्यटंतीसाभिक्षार्थंब्राह्मणीसती ॥ ३ ॥ श्रीजगन्नाथमाहात्म्यपुराणंशुश्रुवेक्कचित् ॥ तत्रगत्वाजगन्नाथंदृष्ट्वासर्वेऽतिपापिनः ॥ ४ ॥ मुच्यंतेपापराशिभ्यःसत्यंसत्यंनसंशयः ॥ किंचित्तत्रतुयःकश्चिदन्नंतस्मैन्यवेदयेत् ॥ ५ ॥ भुक्त्वान्नंपरमंप्रीत्यातस्मैतुष्यतिवैहरिः ॥ इहभुक्त्वापरान्भोगानंतेप्राप्नोतिसद्गतिम् ॥ ६ ॥ इति श्रुत्वापुराणंसामाहात्म्यंभगवद्विभोः ॥ तत्रैवगत्वास्थास्यामियावज्जीवंव्यचिंतयत ॥ ७ ॥ तावद्ददामियत्किंचिल्लप्स्यामिभिक्षयान्वहम् ॥ सर्वंनिवेद्यभोक्ष्यामिव्रतमेतत्कृतंमया ॥ ८ ॥ एवंनिश्चित्यमनसाभिक्षाटनपरायणा ॥ प्राप्तकालंतदारभ्य निवेद्यहरयेपुनः ॥ ९ ॥ स्वयंसाबुभुजे नित्यंभक्तिभावपरायणा॥अथैकस्मिन्दिने श्रीमज्जगन्नाथंदिदृक्षवः ॥ १० ॥ आगतावैष्ण

वास्तत्रमार्गक्रमवशादतः ॥ सद्ग्रामीणाअपिजनास्तैःसाकंगंतुमुद्यता ॥ ११ साऽतिकर्मेतिविख्याताब्राह्मणीवैष्णवैःसह ॥ जगाम
श्रीजगन्नाथंद्रष्टुंभक्तिपरायणा ॥ १२ ॥ तत्रगत्वाजगन्नाथंदृष्ट्वाहृष्टाबभूवसा ॥ भुक्त्वाऽमृतसमंतत्रप्रसादान्नंमुमोदसा ॥ १३ ॥ एवं
दिनक्षयेजातेनस्वार्थंसाययाचवै ॥ अतोऽन्नंहरयेनैवददौभुक्तंस्वयंपुनः ॥ १४ ॥ तृतीयेदिवसेसातुसस्मारनिजकर्मतत् ॥ ततोऽति
चिंतयाविष्टामहाशोकपराभवत्॥ १५ ॥ अहोस्वमनसाधिङ्मांयददत्त्वातुविष्णवे ॥ भुक्तंदिनद्वयंचात्रतस्माद्द्यकरोमिकिम् ॥ १६ ॥
इतिसंचिंत्यमनसाकश्चित्पप्रच्छवैष्णवम् ॥ किमद्याहंकरिष्यामितद्ब्रूहिभगवन्मम ॥ १७ ॥ निवेद्यहरयेचान्नंभोक्तव्यमितिमेव्र
तम् ॥ तदन्नंदिनयुग्मंतुभुक्तंनैवेद्यभोजनात् ॥ १८ ॥ अतःपरमदत्त्वान्नंजगन्नाथायविष्णवे ॥ नभोक्तुमुत्सहेतस्माद्यथायोग्यंवदस्व
मे ॥ १९ ॥ इतिश्रुत्वावचस्तस्यावैष्णवोवाक्यमब्रवीत् ॥ यद्येवंतेदृढाभक्तिस्तदानैवास्तिदूषणम् ॥ २० ॥ कुरुष्वनिजहस्तेनपा
कंसंभोज्यकेशवम् ॥ स्वयंभुंक्ष्वनसंदेहोभक्त्यातुष्यतिवैहरिः ॥ २१ ॥ इतिश्रुत्वावचस्तस्यकर्मानाम्न्यतिहर्षिता ॥ भिक्षयातंडुला
दीनिसमादायजलान्तिके ॥ २२ ॥ पक्त्वानित्यंनिवेद्यास्मैबुभुजेभक्तितत्परा ॥ एकस्मिन्दिवसेसातुमहाभोगंददर्शह ॥ २३ ॥ दृष्ट्वा
सर्वरसोपेतंपरमान्नमनल्पकम् ॥ मनसाचिंतयामाससाचाचारपरायणा ॥ २४ ॥ अहोसर्वरसोपेतमन्नंभुक्तवतेपुनः ॥ ददाम्यहंकद
न्नंवैकथंभोक्ष्यत्ययंप्रभुः ॥ २५ ॥ अतोऽहंप्रातरुत्थायकृत्वाऽन्नंकृसरंद्रुतम् ॥ भोजयामिसदाप्रातःक्षुधयाभोक्ष्यतिप्रभुः ॥ २६ ॥ वि
चार्यैवंहृदानित्यंप्रातरुत्थायसापुनः ॥ अकृत्वाशौचमस्नात्वानसंमार्ज्यस्थलंपुनः ॥ २७ ॥ मृत्पात्रेकृसरान्नंवैशैघ्र्यात्संपाद्य

भक्तितः ॥ निवेद्यहरयेपश्चात्स्वयंस्नानंचकारसा ॥ २८ ॥ स्नात्वादृष्ट्वाजगन्नाथंपश्चात्तद्बुभुजेस्वयम् ॥ एवंभक्तिपरासातुकृसरान्नंददौ
मुदा ॥ २९ ॥ तद्भक्तिवशगोनित्यंजगन्नाथःकृपामयः ॥ बुभुजेकृसरान्नंतुसतस्याअंतरिक्षगः ॥ ३० ॥ एवंगतेषुकालेषु
कदाचित्कोपिवैष्णवः ॥ कर्मागृहेसमायातःकृसरान्नार्पणक्षणे ॥ ३१ ॥ अनाचारेणतद्दृष्ट्वाहरेरन्नार्पणंसतु ॥ जगर्हकर्मासा
धुःसआचारंचाप्यशिक्षयत् ॥ ३२ ॥ किमिदंकुरुषेमूढेह्यनाचारान्निवेदनम् ॥ नेदंभोक्ष्यतिदेवेशस्तस्मादाचारतोऽर्पय ॥ ३३ ॥ उष
स्युत्थायसंमार्ज्यगोमयेनोपलिप्यच ॥ गृहंतत्रशुचिस्नात्वापक्वान्नंभक्ष्यंसमर्पय ॥ ३४ ॥ इत्युक्त्वासगतःसाधुःकर्माचिंतामवा
पसा ॥ अहोऽद्यावधियद्दत्तंहरयेऽन्नंमुदामया ॥ ३५ ॥ नभुक्तंतद्धरिणाममानाचारदूषणम् ॥ धिगस्तुमांततोमूढांक्षम्यतांमेहरिःप्र
भुः ॥ ३६ ॥ इतिनिर्भर्त्स्यचात्मानमन्यस्मिन्दिवसेतुसा ॥ स्नात्वावैचार्द्रवस्त्रेणसंपाद्यान्नंशुचौशुचिः ॥३७॥ बहुप्रकारंतद्भक्त्याजग
न्नाथायचार्पयत् ॥ अथागत्यहरिस्तस्याबुभुजेभक्तियंत्रितः ॥ ३८ ॥ परंतुतस्याआचारकरणेकष्टदर्शनात् ॥ स्वयमुद्विग्नचि
त्तोऽभूज्जगन्नाथःकृपामयः ॥ ३९ ॥ स्वमठेपूजकैर्दत्तमन्नंनैवाददेप्रभुः ॥ यतोमहत्प्रणालीतोवारिनैवागमद्बहिः ॥ ४० ॥ किंचो
च्छिष्टंमुखेलग्नंदर्शयामासपूजकान् ॥ जगन्नाथस्ततःसर्वेदृष्ट्वातत्परमाद्भुतम् ॥ ४१ ॥ तत्रतेपूजकाश्चिन्तांप्राप्नुवंतिमहत्तराम् ॥
बुभुक्षिताःस्थिरारात्रौदद्दृशुःस्वप्नमुत्तमम् ॥ ४२ ॥ जगन्नाथःसमागत्यभाषतेस्वानिदंवचः ॥ अहोऽद्यान्नंनभुक्तंयच्छृणुतस्यतुकार
णम् ॥ ४३ ॥ कर्मानाम्नेतिमद्भक्त्याब्राह्मणीमत्परायणा ॥ तयानिवेदितंनित्यंकृसरान्नसुखोऽस्म्यहम् ॥ ४४ ॥ भुञ्जानोऽती

वसंतुष्टस्तद्भक्त्यानात्रसंशयः ॥ तान्तुकश्चिद्दुवाचाथमूढेऽनाचारतःकथम् ॥ ४५ ॥ कृसरान्नंददास्येतन्नभोक्ष्यतिहरिःस्वयम् ॥
तस्मादाचारपूर्वंहिकृत्वान्नंहरयेऽर्पय ॥ ४६ ॥ इतितस्यवचःश्रुत्वाकर्माचातीवदुःखिता ॥ महाकष्टेनसंपाद्यनैवेद्यंमेसमर्पयत् ॥
॥ ४७ ॥ तन्नैवेद्यमहंभुक्त्वातद्दुःखेनातिदुःखितः ॥ युष्माभिर्दत्तमप्यन्नंनस्पृष्टंपाणिनामया ॥ ४८ ॥ मत्तपोद्विग्नमनसाविस्मितं
मुखमार्जनम् ॥ ततउच्छिष्टमन्नंमेलग्नमेतद्धिवर्तते ॥ ४९ ॥ तस्माद्भवंतःशृण्वंतुसंभोक्ष्यामिनिजेप्सितम् ॥ साकर्मातीवमेभक्त्या
यथापूर्वंयदृच्छया ॥ ५० ॥ कृसरान्नंददात्येषानतुक्लिश्यतुमत्कृते ॥ अद्यारभ्यैषनियमोममसर्वंविमृश्यताम् ॥ ५१ ॥ कर्मायाःकृस
रान्नंतुपूर्वंभोक्ष्याम्यहंमुदा ॥ ततःपरंभवद्दत्तमन्येषांनानिवेदितम् ॥ ५२ ॥ भोक्ष्याम्यत्रनसन्देहस्तस्मात्कुरुमदीरितम् ॥ उक्तवान्यः
सदाचारंतस्मैतेनसमंपुनः ॥ ५३ ॥ भवतोयांतितद्गेहेकर्मासंबोधयंतुवै ॥ कृसरान्नंयथापूर्वंकृत्वामह्यंददातुसा ॥ ५४ ॥ ततोऽहं
परितुष्टःस्यांभोक्ष्यामिभवदर्पितम् ॥ एवंदृष्ट्वातुतेस्वप्नेवदंतंपुरुषोत्तमम् ॥ ५५ ॥ प्रातरुत्थायचैकत्रमुक्त्वागत्वातदालयम् ॥
तंवैष्णवंसमादायसदाचारप्रवादिनम् ॥ ५६ ॥ कृत्वाग्रतस्तुतेसर्वेकर्मांप्राहुर्विनीतवत् ॥ कर्मेदेविनमस्तुभ्यंधन्याऽसित्वंशुचि
व्रते ॥ ५७ ॥ त्वदर्थंखिद्यतेदेवःश्रीमान्वैपुरुषोत्तमः ॥ नैवेद्यंत्वंयथापूर्वंदत्तवत्यसिसुव्रते ॥ ५८ ॥ तथैवदेहिदेवायमाचिरंकुरुकष्टद
म् ॥ त्वत्क्लेशात्कष्टमाप्नोतिजगन्नाथोमहाप्रभुः ॥ ५९ ॥ तस्मात्त्यजश्रमंभद्रेनिवेदययथारुचि ॥ अनेनोक्तंतुयत्पूर्वमाचाराद्न्नम
र्पय ॥ ६० ॥ तद्भक्तस्यजानीहिभक्तौनाचारचिंतनम् ॥ तवान्नंप्रथमंभुक्त्वाकृसरंवैततःपरम् ॥ ६१ ॥ अन्यार्पितंप्रसादंतु

ग्रहीष्यतितदाहरिः ॥ अद्यारभ्यततस्त्वंतुस्वेच्छयान्नंविधायच ॥ ६२ ॥ समर्पययथापूर्वंजगन्नाथायभक्तितः ॥ इत्येतदर्थमायाता वयंसर्वेतवाश्रमम् ॥ ६३ ॥ अद्यारभ्यकुरुष्वैतत्प्रार्थयामोवयंमुहुः ॥ इतिश्रुत्वावचस्तेषांकर्मादेव्यतिहर्षिता ॥ ६४ ॥ उवाच वचनंतांस्तुप्रणम्यविहितांजलिः ॥ अहोनजानेऽहंकिंचिदाचारंवातथापरम् ॥ ६५ ॥ भवादृशोक्तमेवाहंश्रुत्वाकारिषमर्चनम् ॥ अतःपरंभवंतस्तुयद्वदंतिकरोमितत् ॥ ६६ ॥ इत्युक्त्वासासमुत्थायनैवेद्यस्यचसाधनम् ॥ कर्तुंव्यवसितासाध्वीकर्मादेव्यतिभक्तितः ॥ ६७ ॥ पूर्ववत्कृसरान्नंसासम्पाद्यहरयेऽर्पयत् ॥ तेऽपिवैपूजकाविप्राःसमागत्यस्वमंदिरम् ॥ ६८ ॥ कृताह्निकाःसर्वरसमन्नंसंपाद्यभक्तितः ॥ मुदानिवेदयामासुर्जगन्नाथायहृष्टवत् ॥ ६९ ॥ यथापूर्वंसजग्राहतत्सर्वंपुरुषोत्तमः ॥ मठप्रणालिकाद्वाराद्बहिर्जातंजलंतदा ॥ ७० ॥ दृष्ट्वामुमुदिरेसर्वेयथापूर्वंचपूजकाः ॥ एवंप्रभावःकर्मायाभक्तेर्वैवर्णितोमया ॥ ७१ ॥ अद्यापितस्याःकृसरमत्तिपूर्वंजनार्दनः ॥ तस्माद्भक्तिर्हिसर्वेषांकर्मणांवैगरीयसी ॥ ७२ ॥ तयासंतोष्यबहुशस्तेरुःसंसारसागरम् ॥ ७३ ॥ इति श्रीभगवद्भक्तिमाहात्म्येकर्माचरितंनामचतुःपंचाशत्तमःसर्गः ॥५४॥ अथान्ययोःप्रवक्ष्यामिकन्ययोर्भक्तिचेष्टितम् ॥ यदाकर्ण्यनरोभक्तिंलभतेनात्रसंशयः ॥ १ ॥ एकाग्रामेतुकन्यासीदपराराजपुत्रिका ॥ उभयोःपरमाप्रीतिर्नृपजासेवनीपरा ॥ २ ॥ एकदातत्रकोऽप्यासीद्वैष्णवोऽतीवभक्तिमान् ॥ तद्दृष्टुंराजमातातुकन्याभ्यांसहिताययौ ॥३॥ तत्रगत्वाथसंपूज्यवैष्णवंभक्तितत्परा ॥ प्रणम्यचलितागेहंराज्ञीकन्याद्वयंतथा ॥ ४ ॥ वैष्णवंतंतुविज्ञायप्रार्थयामासभूरिशः ॥ पूजार्थंदेहिमेदेवंगुरोसाधोनमोऽस्तुते ॥ ५ ॥

इतिश्रुत्वातयोर्वाक्यंसमहावैष्णवोत्तमः ॥ शिलाखंडद्वयंताभ्यांकन्याभ्यांप्रददौहसन् ॥ ६ ॥ आहनामतयोःसाधुःशिल्लपिल्लेतिहा
स्यतः ॥ तेउभेभक्तितस्तौदौशिलाखंडौप्रगृह्यच ॥ ७ ॥ प्रणम्यतंगुरुंसाधुंसमागत्यनिजालये ॥ पूजयामासतुस्तेद्वेकन्येभक्त्या
शिलाद्वयम् ॥ ८ ॥ तद्भक्त्याभगवांस्तत्रसर्वव्यापीनिरंतरम् ॥ प्रतिजग्राहपूजांतांताभ्यांनिष्कामतःकृताम् ॥ ९ ॥ अत्रेति
हासमुभयोःप्रत्येकंकथयाम्यहम् ॥ ग्रामाधीशस्यकन्यायाराजपुत्र्यास्तथैवसः ॥ १० ॥ ग्रामाधीशस्यदायादःशत्रुभूतस्तुवै
कदा ॥ बलेनमहतायुक्तःसमागत्याथतद्गृहम् ॥ ११ ॥ सर्वंलुंठितवांस्तत्रकन्यायाअपिसाशिला ॥ मंजूषायांस्थितायत्रसापितेन
चलुण्ठिता ॥ १२ ॥ ग्रामाधीशादयःसर्वेधनशोकेनदुःखिताः ॥ राजद्वारंययुस्तस्मैनिवेदयितुमातुराः ॥ १३ ॥ साकन्यागृहमध्ये
तुतामदृष्ट्वानिजांशिलाम् ॥ शोकार्तातुरुरोदाथत्यक्त्वाहारादिकाःशुचा ॥ १४ ॥ पित्रामात्राबंधुवर्गैर्बोधितापिदृढव्रता ॥नस्वीचकार
पानीयमपिचान्नस्यकाकथा ॥ १५ ॥ ततस्तुबांधवाःसर्वेतामूचुःकन्यकांपुनः ॥ गच्छतस्यगृहंत्वंतुतामानयशिलांनिजाम् ॥ १६ ॥
नोचेदन्योनास्तियतःकश्चित्तवशिलांप्रति ॥ इतिश्रुत्वावचस्तेषांसाकन्यातीवहर्षिता ॥ १७ ॥ शूद्रांकांचित्समादाययर्योदायादमं
दिरम् ॥ दायादश्चापितांद्वारिन्यवारयतयत्नतः ॥ १८ ॥ किमर्थमागताचात्रवदमांगच्छमंदिरम् ॥ इतिश्रुत्वावचस्तस्यादायादस्याति
निष्ठुरम् ॥ १९ ॥ उवाचवचनंकन्यादेवंमेनीतवानसि ॥ तंदेहिमेतदर्थंतेद्वारेऽहंसमुपागता ॥ २० ॥ इतिश्रुत्वावचस्तस्यादायादः
पुनरब्रवीत् ॥ मिथ्यापाखण्डमेतत्तेगच्छमूढेगृहंस्वकम् ॥ २१ ॥ नोचेद्देवोऽस्तिसत्यस्तेतंसमाहूयतेऽतिकम् ॥ आगमिष्यतितंनीत्वा

गमिष्यसिस्वमंदिरम् ॥ २२ ॥ इतिश्रुत्वावचस्तस्यकन्यानाहारतःकृशा ॥ रुरोदार्तस्वरेणैवव्याजहारपुनःपुनः ॥ २३ ॥ ततःप्रभ
गवांस्तत्रमंजूषायांस्थितःप्रभुः ॥ सामंजूषासमुत्प्लुत्यकन्याग्रेसमुपागता ॥ २४ ॥ तांदृष्ट्वानिजमंजूषांसासुमोददृढव्रता ॥ गृहीत्वाच
लितागेहमथतत्रापिपामरम् ॥ २५ ॥ दायादःप्रत्युवाचाथकिमत्रास्तीतिदर्शय ॥ तदाकर्ण्यतुसाशीघ्रंदर्शयामासतांशिलाम् ॥ २६ ॥
दृष्ट्वाशिलांतुदायादोनिवृत्तःस्वगृहंगतः ॥ साकन्यापिशिलांनीत्वासमायातापितुर्गृहम् ॥ २७ ॥ संपूज्यचशिलाभित्तंनिवे
द्यान्नंततः स्वयम् ॥ उपोषिताहिसाकन्याबुभुजेप्रीतमानसा ॥ २८ ॥ एवंप्रभावःकन्यायावक्ष्येराजसुताकथाम् ॥ राजकन्यापितांय
ताच्छिलांसंपूज्यसामुदा ॥ २९ ॥ तस्थौपितृगृहेकालेविवाहसमयेपिता ॥ कारयामासनृपतेःपुत्रेणपरमादरात् ॥ ३० ॥ विवाहमथ
तांपत्नींसचादायगृहंययौ ॥ निन्येतत्रापिसाकन्याशिलाभित्तंनवैजहौ ॥३१॥ मंजूषायांतुसंस्थाप्यधृत्वास्वशिबिकोपरि ॥ आगता
पतिगेहेऽपिराजपुत्र्यतिभक्तितः ॥ ३२ ॥ शिलापिल्लेतिनाम्नावैपूजयंतीसदाहरिम् ॥ एवंगतेषुकालेषुकदाचिद्दैवयोगतः ॥ ३३ ॥
पूजयंतींशिलाखंडंपतिरेवंददर्शह ॥ पप्रच्छकिमिदंकांतेकरोषिकथयस्वनः ॥ ३४ ॥ श्रुत्वैतत्प्राहतंस्मित्वादेवपूजांकरोम्यहम् ॥ अने
नैवतुसर्वेषामैहिकामुष्मिकंसुखम् ॥ ३५ ॥ इतिश्रुत्वावचस्तस्याश्चुकोपसनृपात्मजः ॥ अज्ञातपूजोनामासौद्वितीयइवनास्तिकः ॥
॥३६॥ पादेनपूजासामग्रींचिक्षेपसशिलांतदा॥ततःसराजतनयाहाहाकृत्वारुरोदह ॥३७॥ ततोऽधिकतरःक्रुद्धोराजपुत्रोऽतिमन्दधीः ॥
स्वयमुत्थायतांसर्वांशालग्रामशिलांतदा ॥३८॥ गृहद्वारिसरिन्मध्येजलेचिक्षेपकोपतः ॥ साहृष्ट्वातुजलागाधेक्षिप्तंदेवंनृपात्मजा॥३९॥

उद्बंधनादिनामर्तुमुपचक्रेदृढव्रता ॥ ततोनिवारयामासुर्बांधवामरणोन्मुखीम् ॥ ४० ॥ तांराजतनयांप्रोचुर्दास्यामस्तांशिलांतुताम् ॥
ततोनिवृत्तामरणात्प्राप्तकामानिजांशिलाम् ॥ ४१ ॥ अगाधेपतितांतांतुज्ञात्वासर्वेपराङ्मुखाः ॥ यत्रतत्रगतास्सर्वेसाकन्यैकारुरो
दह ॥ ४२ ॥ एवंदिनद्वयंयातंतस्याअन्नादिकंविना ॥ मरणेकृतसंकल्पाशिलाखंडंविनासती ॥ ४३ ॥ तृतीयेदिवसेप्राप्तेपतिस्त
स्याःसमागतः ॥ निष्कास्यखड्गंमूढात्मात्रासयामासनिष्ठुरम् ॥ ४४ ॥ किमिदंखिद्यसेमूढेप्रपद्यनकरिष्यसि ॥ मदुक्तंपश्यमेखड्गंह
न्मित्वांनात्रसंशयः ॥ ४५ ॥ इतिभर्तृवचःश्रुत्वाप्रहस्यसहसैवसा ॥ अहोऽस्माकंतुकर्तव्यंयत्तदार्य्यकृतंत्वया ॥ ४६ ॥ मर्तव्यमेव
तंदेवंविनानास्त्यत्रसंशयः ॥ तद्भवद्भिर्विनायत्नंममसंपादितंस्वयम् ॥ ४७ ॥ इतिश्रुत्वावचस्तस्याःसपत्न्याराजपुत्रकः ॥ चिंतया
माससमनसाकिंकरोमिततःपरम् ॥ ४८ ॥ मरणेकृतसंकल्पाशिलाखंडंविनाकुधीः ॥ कथमेवशिलाप्राप्तिर्भविष्यतिकरोमिकिम् ॥४९॥
इतिनिश्चित्यतांस्नेहात्पुनराहनृपात्मजः ॥ शिलागाधेजलेक्षिप्ताकथंप्राप्स्यसितांशुभे ॥ ५० ॥ गृहाणान्यांशिलांमत्तःप्रसादंकुरुमत्कृ
ते ॥ इतिभर्तृवचःश्रुत्वासाराजतनयाब्रवीत् ॥ ५१ ॥ निर्भयागतशोकावैमरणेकृतनिश्चया ॥ स्वामिन्प्रसीदमेऽद्यत्वंयद्ब्रवीमिकुरुष्व
तत् ॥ ५२ ॥ स्वयंघातयमांत्वंवानयतत्रजलाशये ॥ निमज्ज्याहंकरिष्यामिप्राणत्यागंशिलांविना ॥ ५३ ॥ कथंचिदपितेगेहेनाव
स्थानंममाधुना ॥ श्रुत्वैतद्वचनंसोऽपितामुवाचव्रजाधुना ॥५४॥ नाहंत्वांघातयिष्यामिकुरुतत्रयथारुचि ॥ ततःसाराजकन्यावैजनैः
कतिपयैर्वृता ॥५५॥ स्नानव्याजेनवव्राजनदीतीरेऽतिगोपिता ॥ वाहनान्निर्गतासद्योजगामागाधवारिणि ॥५६॥ स्मरंतीतंनिजंदेहे

शिल्लपिल्लहरिंमुदा ॥ अथांतरेतुभगवाञ्ज्ञात्वातस्यादृढांमतिम् ॥ ५७ ॥ मंजूषाशिल्लपिल्लस्यपादलग्नांचकारह ॥ ततःपादेतुसल ग्नेकिमिदंकिमिदंत्विति ॥ ५८ ॥ गृहीत्वापाणिनातोयान्निष्कास्यैक्षतसुव्रता ॥ ददर्शतांतुमंजूषांसंहृष्टासाश्रुलोचना ॥ ५९ ॥ संस्थाप्यशिबिकायांतांमंजूषांसापुनर्द्रुतम् ॥ स्नात्वाहर्षाश्रुनयनासमायातास्वमंदिरम् ॥ ६० ॥ मर्तुंवारिप्रविष्टाहंतदामेमिलितो हरिः ॥ पश्यनाथकृतार्थास्मिशिल्लपिल्लप्रसाधनम् ॥ ६१ ॥ स्वयसोऽपिदुराचारान्निवृत्तोहरिकीर्तने ॥ कृत्वामतिंराजपुत्रो पुत्रपौत्रैर्मुमोदह ॥ ६२ ॥ एवंतद्भक्तिसंसर्गाद्राजाभक्तियुतोऽभवत् ॥ विष्णुभक्तिप्रभावेणजग्मतुस्तौहरेःपदम् ॥ ६३ ॥ तस्मा द्यथातथाचित्तमेकाग्रंचेद्धरौभवेत् ॥ सनशोचेतकुत्रापिसत्यमेतन्नसंशयः ॥ ६४ ॥ इति श्रीभगवद्भक्तिमाहात्म्ये कन्याद्वयचरितंनामपंचपंचाशत्तमःसर्गः ॥ ५५ ॥ ॥ छ ॥ ॥ अथान्यत्संप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमम् ॥ परमाश्चर्य्य जननंशृण्वतांलोमहर्षणम् ॥ १ ॥ आसीत्पांचालदेशेतुराजावैष्णवपूजकः ॥ सर्वदातिथिपूजायांनिरतः सत्यवाक्छुचिः ॥ ॥ २ ॥ पतिव्रताप्रियातस्यप्राणेभ्योऽपिगरीयसी ॥ पत्युःप्रियकरीनित्यंप्राणैरपिधनैरपि ॥ ३ ॥ एकदातद्गृहेकोऽपिविष्णुभ क्तःसमागतः शिष्यैश्चबहुभिःसार्द्धंवासार्थंत्वंबुदागमे ॥ ४ ॥ दृष्ट्वातंवैष्णवंराजाभक्तिपूर्वंप्रणम्यच ॥ वासायाश्रममेकंतुब हवोदंददौनृपः ॥ ५ ॥ तत्रगत्वासभक्तस्तुप्रत्यहंसुखमास्थितः ॥ राज्ञासंमानितोनित्यमुत्तरोत्तरवृद्धितः ॥ ६ ॥ निवृत्ते बुदकालेतुभक्तशिष्यगणोऽब्रवीत् ॥ स्वामिन्प्रावृड्गतात्रैवतिष्ठतीतिभवान्किमु ॥ ७ ॥ तदास्मान्वदहृष्ट्वातंजगन्नाथंनवांतिकम् ॥

आयास्मामोवयंपश्चात्तथाशुचकरिष्यसि ॥८॥ इति श्रुत्वावचस्तंपांशिष्याणांवैष्णवोत्तमः ॥ राजानंप्राहयास्यामिदेह्याज्ञांनृपस
त्तम ॥ ॥ ९ ॥ श्रुत्वाराजापितद्वाक्यंकर्णशूलमिवस्वयम् ॥ अमन्यतपरंतस्मैभक्ततोषायचाब्रवीत् ॥१०॥वनंप्रयास्यसिविभोश्वःपर
श्वोनसंशयः ॥ परंतुनिवसंत्वद्यभवंतइतिमेमतिः ॥११॥ इतिश्रुत्वावचोराज्ञोभक्तःप्राहनृपंमुदा ॥ आगमिष्याम्यहंराजंस्तवगेहेपुनः
पुनः ॥ १२ ॥ इतिश्रुत्वाततोराजापरश्वोगंतुमर्हसि ॥ इत्युक्त्वागृहमागत्यविमनास्समुपाविशत् ॥ १३ ॥ दृष्ट्वातंविमनस्कंतुतत्पत्नी
पतिमब्रवीत् ॥कुतोऽद्यविमनाःस्वामिन्यदियोग्यंवदप्रभो ॥१४ ॥इतिश्रुत्वावचस्तस्याराजोवाचप्रियांप्रति॥ अद्योक्तंतेनभक्तेनगमि
ष्यामीत्यनंतरम् ॥ १५ ॥ गमिष्यसिपरश्वश्चेत्युक्तंतच्चुष्टयेमया ॥ अतःपरश्वोगंतासहरिभक्तोनसंशयः ॥ १६ ॥ तस्मिन्गतेहरेर्नाम
कीर्तनंतत्कथापिवा ॥ नभविष्यतिचात्रातोविस्मयोमेमहानभूत ॥ १७ ॥ इतिभर्तृवचःश्रुत्वासापिदीनापतिव्रता ॥ चिंतयामासमन
साभक्तावस्थानकारणम् ॥ १८ ॥ एवंतयोश्चिंतयतोर्दिनद्वयमथात्यगात ॥ तृतीयेदिवसेप्राप्तेभक्तःशिष्यैःसहागतः ॥ १९ ॥ यया
चेनृपतिंराजन्नाज्ञापयगतोऽस्म्यहम् ॥ इतिश्रुत्वाततोराजाप्रातगतासिनिश्चितम् ॥ २० ॥ अद्येऽहनिवसस्वामिन्क्षमस्वाविनयंमम ॥
इतिश्रुत्वानववृतेभक्तोभक्तिवशीकृतः॥ २१॥ अथराजान्नपानादितत्याजविरहातुरः ॥पत्न्यादिपरितोषायमुक्तवान्वैयथातथा ॥२२॥
राज्ञीतदानिश्चिकायगतेनक्तेपतिर्मम ॥ हरिकीर्तनविश्लेषात्तद्भक्तविरहादपि ॥ २३ ॥ नजीविष्यतिकेनापिप्रकारेणेतिमेमतिः ॥ मृतंप
त्यौवरस्त्रीणांधिक्सुतंजीवनंधनम् ॥२४॥ तस्मादुपायंकिंचिद्धिकरिष्यामिनिवर्तने ॥भक्तोनिवृत्तोराजापिसुखीस्थास्यत्यसंशयम्॥२५॥

इतिनिश्चित्यमनसारात्रौसाराजवल्लभा ॥बालायस्वस्यपुत्रायमहानिशिविषंददौ ॥२६॥ मृतेसुतेनचान्येनजीविष्यतिप्रयत्नतः॥ अत
एनंमृतंज्ञात्वानगमिष्यतिवैष्णवः ॥२७॥ततोराजापिनिर्विघ्नंनिवत्स्यतिनिजालये ॥ विचार्य्यैवंतुतत्कर्मचकारपरमाद्भुतम् ॥ २८ ॥
अथदंडद्वयेरात्रिशेषेसाराजवल्लभा ॥ रुरोदोच्चैःस्वरेणांतःपुरेहाहेतिवादिनी ॥ २९ ॥ श्रुत्वातद्रुदितंसर्वेयथास्थानमुपागताः ॥ कि
मिदंकिमिदंचेतिवदन्तोऽतित्वरान्विताः ॥३०॥ राजापिसमुपायातोभक्तस्तत्राप्युपाययौ॥ ददर्शतंमृतंबालंनिमग्नःशोकसागरे ॥३१॥
पत्नींपप्रच्छराजातुप्रिये जानासिकारणम् ॥ इतिश्रुत्वाब्रवीद्राज्ञीचेत्क्षमस्वब्रवीम्यहम् ॥ ३२ ॥ वदनैवापराधंतेपश्यामिवरवर्णिनि ॥
इत्युक्तासाप्युवाचाथशिशोर्मरणकारणम् ॥ ३३ ॥ भक्तेगतेतुभवतोदुर्लभंवतजीवनम् ॥ मृतेत्वयितुतेनालंजीवितंनधनेनवा ॥
॥ ३४ ॥ इतिविज्ञायशिशवेविषंदत्तंमयाप्रभो ॥ मृतेऽस्मिन्वैष्णवः स्वामीप्रातःस्थास्यतिनिश्चितम् ॥ ३५ ॥ भवानप्येकदिवसं
जीवेदितिमनोरथम् ॥ कृत्वाघातितवत्यस्मिस्वपुत्रंनात्रसंशयः ॥ ३६ ॥ इतितस्यावचःश्रुत्वाराजाऽपिमुमुदेहृदि ॥ प्रशशं
सचतांपत्नींभक्तावस्थानलाभतः ॥ ३७ ॥एवंदृष्ट्वातयोर्भक्तिंससाधुर्वैष्णवोत्तमः ॥ गर्हयित्वात्मनात्मानंस्वापराधममन्यत ॥ ३८॥
अथाहूयस्वशिष्यांस्तुप्राहराज्ञीविचेष्टितम् ॥ तेऽपिश्रुत्वामहाश्चर्य्यंदृष्ट्वाबालंशुचार्दिताः ॥ ३९ ॥ भक्तोगुरुस्तदाशिष्यैःप्रतिजज्ञे
महाद्भुतम् ॥ शृण्वतांसर्वलोकानांतदद्भुतमिवाभवत् ॥ ४० ॥ अन्याहोमदर्थेयत्स्वयंपुत्रोनिपातितः ॥ तस्मादस्याइमंपुत्रंजीव
यिष्यतिचेद्धरिः ॥ ४१ ॥ तदातुवयमाप्यजीविष्यामोऽन्यथानहि ॥ हुताशनंप्रवेक्ष्यामःसत्यंसत्यंनसंशयः ॥ ४२ ॥ इत्येवंते

प्रतिज्ञायविचिंत्यमनसाहरिम् ॥ मंत्रैःस्तोत्रैस्तथागीतैस्तुष्टुवुर्गरुडध्वजम् ॥ ४३ ॥ एवंगतेऽर्द्धदिवसेबालोनेत्रेप्रचालयन् ॥
उत्तानशयनात्पार्श्वंसबालोह्युदतिष्ठत ॥ ४४ ॥ दृष्ट्वातत्परमाश्चर्यंसर्वेतत्रत्यमानवाः ॥ हर्षाश्रुनयनाःसर्वेचित्रवत्संस्थिताभुवि ॥४५॥
अहोक्षणेनचोत्तस्थौसबालःपश्यतांनृणाम् ॥ दृष्ट्वातमुत्थितंबालंभक्तोऽयंतत्समीपगः ॥ ४६ ॥ क्रोडेकृत्वामुखंतस्यमार्ज्ज
यामासपाणिना ॥ ततोराजानमाहूयतस्यक्रोडेशिशुंददौ ॥ ४७ ॥ दृष्ट्वाननंदतंबालंभक्तंप्राहमहीपतिः ॥ नमेपुत्रेणमित्रेणधनेना
स्तिप्रयोजनम् ॥ ४८ ॥ तवसंतोषएवैकःसततंप्रार्थ्यतेमया ॥ इतिश्रुत्वावचस्तस्यराज्ञोवैविष्णुवल्लभः ॥ ४९ ॥ उवाचशिष्या
नाहूयराजभक्तिवशीकृतः ॥ यावज्जीवाम्यहंशिष्यानत्यक्ष्यामित्विदंपदम् ॥ ५० ॥ एतादृशमहाभक्तदारत्यागेऽस्तिदूषणम् ॥
तस्मान्नाहमितोशिष्यागंतुमिच्छामिकुत्रचित् ॥ ५१ ॥ इत्येवंतेगुरोर्वाक्यंश्रुत्वाशिष्यास्ततःपरम् ॥ गंतुमभ्युद्यतास्सर्वेततोराजा
ऽब्रवीच्चतान् ॥ ५२ ॥ कृतांजलिपुटोभूत्वाप्रणम्यविनयान्वितः ॥ स्नात्वाभुक्त्वाप्रगंतव्यंकर्तव्योमय्यनुग्रहः ॥ ५३ ॥ श्रुत्वा
तद्वचनंराज्ञःशिष्याःसर्वेततःपरम् ॥ स्नात्वासमागताराजमंदिरंगंतुमुद्यताः ॥ ५४ ॥ राजापिभोजयामासतान्सर्वान्भक्तितः स्व
यम् ॥ कंबलाजिनवासोभिःसंपूज्यविससर्जह ॥ ५५ ॥ ततस्तेषांगुरोर्भक्तोराजातुस्वयमेवहि ॥ दासवत्परिचर्य्यांतुचकारसदिने
दिने ॥ ५६ ॥ एवंसराजाराज्ञीचसएववैष्णवोत्तमः ॥ कृत्वातुविविधांभक्तिंजगामहरिमंदिरम् ॥ ५७ ॥ पत्नीतुतस्यराज्ञःसाबभू
वसहगामिनी ॥ ततोभक्तोऽपितत्पुत्रंराज्येसंस्थाप्यचस्वयम् ॥ ५८ ॥ ययौस्वैरगतिर्विष्णुंचिंत्यमानोऽतिभक्तितः ॥ एवंभक्तस्तु

माहात्म्यंयत्किंचित्कथितंमया ॥ ५९ ॥ शृण्वन्नेतन्नरोभक्तिंश्रीकृष्णेलभतेपराम् ॥ ६० ॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्येपंचालराजचरितंनामषट्पंचाशत्तमः सर्गः ॥ ५६॥ अथान्यत्संप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमम् ॥ महाश्चर्य्यकरंनृणांशृण्वतांरोमहर्षणम् ॥ १ ॥ देशेवैपुष्करप्रांतेराजाकोऽप्यतिभक्तिमान् ॥ प्रजापालनसंसक्तोदातावैष्णवपूजकः ॥२॥ तस्यासीत्तनयाचैकाकुमारइववर्द्धिता ॥ निरीक्ष्यतातचरितंसातिभक्ताबभूवह ॥ ३ ॥ प्रत्यहंवैष्णवानांतुजलंपादावनेजनम्॥धृत्वाशिरसिपीत्वातुबुभुजेऽन्नादिकंशुभम् ॥ ४ ॥ एवंभक्तिपरायास्तुतस्याःपाणिग्रहंपिता ॥ कारयामासधनिनाराजपुत्रेणहर्षितः ॥५॥ सागतापतिवेश्माथतत्रसर्वान्हिवैष्णवान् ॥ दृष्ट्वाशोकपरांस्तत्रराजकन्याऽतिदुःखिता ॥ ६ ॥ पतिंसाप्रार्थयामासविष्णुपूजार्थमादरात् ॥ सराजपुत्रोविष्णोर्हिनाममात्रंनवास्मरत् ॥७॥ ततोऽब्रवीत्पतिस्तांतुकोविष्णुःकिंचपूजनम् ॥ कोऽपिनैवात्रजानातिप्रियेकिंभाषसेवृथा॥८॥ श्रुत्वैतद्वचनंपत्युर्नृपकन्यातिचिंतया ॥ तूष्णींतस्थौददर्शाथपत्युःकुलविचेष्टितम् ॥ ९ ॥ कस्यापिमुखतोनैवविष्णुनामानुकीर्त्तनम् ॥ नदयानापिधर्मोऽन्यःसर्वेहिंसापरायणाः ॥ १० ॥ कस्मैकिंकथयाम्यद्यनश्रोष्यतिमतंमम ॥ एवंनिश्चित्यमनसातूष्णींतस्थौनृपात्मजा ॥११॥ महाचिंतापरानित्यंदृष्ट्वाभक्तिपराङ्मुखान् ॥ तथापिसाध्वीभावात्तद्गृहेतस्थौमनस्विनी ॥ १२ ॥ एवंगतेषुकालेषुपुत्रमेकमसूतसा ॥ सुमुहूर्तेऽथतंदृष्ट्वासर्वेहर्षसमन्विताः ॥१३॥ राजाचराजपुत्रश्चयेचान्येराजसेवकाः ॥ पुत्रंचप्राणभूतंचसर्वेऽमन्यंतनित्यशः ॥ १४ ॥ अथद्वित्राब्दकेयातेबालेसर्वमनोहरे ॥ सराजतनयादासींशिक्षयामासयत्नतः ॥१५॥ अस्मिन्ग्रामेयदासाधुरेकोऽप्यायातिवैष्णवः ॥

तदैवमांत्वंकथयतंचदास्याम्यभीप्सितम् ॥ १६ ॥ सादासीशिरसानत्वास्वीचकारतदीरितम् ॥ पश्यंतीवैष्णवंनित्यंसायंकालेसमा
गतम् ॥ १७ ॥ एकदाद्वारकायास्तेसमायाताःसुवैष्णवाः ॥ प्राप्ताराजपुरंतेऽपिनिवासार्थंययाचिरे ॥१८॥ नकोऽपिस्वीचकाराथतेषां
वासंनरस्तदा ॥ तेसर्वेवैष्णवाग्रामाद्बाह्येवापीसमीपतः ॥ १९ ॥ तरोरधस्तादाच्छाद्यतत्रभूरितृणानिच ॥ प्रक्षाल्यहस्तौपा
दौचक्षुधार्तादीनचेतसः ॥ २० ॥ तान्दृष्ट्वाश्रमितान्दासीपृष्ट्वाकस्मादिहागताः ॥ क्वगमिष्यथचेत्येवंपप्रच्छविनयान्विता ॥ २१ ॥
श्रुत्वातस्यावचस्तेतुवैष्णवाः शान्तमानसाः ॥ ऊचुस्तांदासपत्नींतेद्वारावत्याः समागताः ॥२२॥ जगन्नाथंप्रयास्यामोवयंवैष्णवस
त्तमाः ॥ इतितेषांवचः श्रुत्वाययौराज्ञीसमीपतः ॥ २३ ॥ उवाचनत्वाशिरसादेविभक्ताःसमागताः॥संपूर्णेनगरेभ्रांत्वालेभिरेनयदा
स्थलम् ॥ २४ ॥ तदावापीसमीपेतुतरोस्तलमुपागताः ॥ तृणमाच्छाद्यसुषुपुःक्षुधयापीडिताअपि ॥ २५ ॥ श्रुत्वैतद्राजपत्नीसा
भक्तराजसुतासती ॥ दृष्ट्वाददौस्वपुत्रायविषंहालाहलंस्वयम् ॥ २६ ॥ भुंजन्नेवंविषंबालोममारक्षणमध्यतः ॥ ततस्तुजननीभक्तरा
जपुत्रीरुरोदह ॥ २७ ॥ श्रुत्वातद्रुदितंशब्दंपतिस्तत्रसमागतः ॥ किंजातमितितांपत्नींपप्रच्छातिशुचारुदन्॥ २८ ॥ सोवाचजानेनै
वाहंकस्मादेषसुतोमृतः ॥ ततःसर्वेसमायाताअंतःपुरचराजनाः ॥ २९ ॥ दृष्ट्वाबालंमृतंतत्ररुरुदुश्चातिदुःखिताः ॥ हाहाकारंप्रकुर्वं
तोमूर्च्छामापुश्चतेतदा ॥ ३० ॥ तदातज्जननीराजकन्याप्रोवाचतान्प्रति ॥ ममभ्रातृगृहेचेत्थंममभ्रातामृतस्तथा ॥ ३१ ॥ तदामेजन
कोभक्तान्वैष्णवान्प्रणिपत्यच ॥ आनीयस्वगृहेऽभ्यर्च्यतत्पादोदकवारिणा ॥३२॥ स्नापयित्वामृतंबालंजीवयामासवैष्णवैः ॥ वैष्ण

वाः पूजितास्सर्वैर्मृतबालस्यसन्निधौ ॥ ३३ ॥ स्तुत्वानारायणंदेवंजीवयामासुराशुवै ॥ एवंदृष्टंमयासत्यंनिजमातृगृहेपुनः ॥ ३४ ॥
बहुधान्यत्रनगरंपितुरेवंबभूवह ॥ तस्मादिहापिचेत्कोऽपिभक्तोग्रामेसमागतः ॥ ३५ ॥ स्यात्तदातंसमानीयभवंतोजीवयंत्वमुम् ॥इति
तस्यावचः श्रुत्वापप्रच्छुस्तांपुनस्तुते ॥ ३६ ॥ कथंहिभक्तोज्ञातव्यःकीदृशःसचतद्वद ॥ नाद्यावधिहरेर्भक्तोदृष्टोऽस्माभिः श्रुतोऽथवा
॥ ३७ ॥ श्रुत्वातेषांवचोहृष्टाराजपुत्रीजगादह॥इयंदासीविजानातिसाधून्मत्पितृमंदिरे ॥ ३८ ॥ गतादृष्टवतीभक्तान्पितृपूज्यान्गृहे
स्थितान् ॥ इतितस्यावचःश्रुत्वासुस्वरस्तांसमाह्वयत् ॥ ३९ ॥ आगतांतामुवाचाथराजादासींत्वरान्वितः ॥ त्वंविजानासिभक्तो
वैग्रामेऽस्मिन्नद्यकोऽपिचेत् ॥ ४० ॥ समायातस्तंचत्वंतुद्रुतंमांदर्शयाधुना ॥ इतिश्रुत्वाथराज्ञेचदासीप्राहकृतांजलिः ॥ ४१ ॥ महा
राजाद्यदृष्टामेसायंभक्ताः समागताः ॥ वापीसमीपेवृक्षस्यछायामाश्रित्यसंस्थिताः॥४२ ॥ द्वारकायाःसमायाताजगन्नाथंव्रजंतिते ॥
इतितस्यावचः श्रुत्वाराजाचातीवहर्षितः॥ ४३ ॥ तत्क्षणंतत्रगत्वातान्वैष्णवान्प्रणिपत्यच ॥ महाभक्त्यासमानीयसंपूज्यविधिवत्स्व
यम् ॥ ४४ ॥ तत्पादोदकतीर्थेनस्नापयामासतंशिशुम्॥ततस्तान्वैष्णवान्सोऽपिराजातुप्राहचाद्भुतम् ॥४५॥ शृण्वंतुतारणंभक्ताःकथ
यामियथार्थतः॥अयंपौत्रोमृतोमेऽद्यविनारोगेणबालकः ॥४६॥ ततोऽस्यमातामांप्राहयदिकोऽप्यत्रवैष्णवः॥तमानयित्वासंपूज्यतत्पा
दोदकवारिणा ॥ ४७ ॥ स्नापयित्वामृतंबालंवैष्णवंप्रार्थयाधुना ॥ ततस्तेजीवयिष्यंतिबालमेनंनसंशयः ॥ ४८ ॥ स्वपितुर्भवने
दृष्टंकतिधातत्प्रयत्नतः ॥ इतिसामेस्नुषासत्यंकृत्वास्मानब्रवीद्वचः ॥४९॥ ततोहमद्यभवतःसमानीयात्रभक्तितः ॥ पूजयित्वाभवत्पाद

वारिणासुमृतंशिशुम् ॥५०॥ स्नापयित्वाथभवतांसमीपेस्थापितोमया ॥ अतःपरंतुभवतामिच्छयाऽस्यशुभाशुभम् ॥५१॥ भविष्य
तिनसंदेहोसाधवःसमदर्शनाः ॥ श्रुत्वैतद्वचनंराज्ञोवैष्णवास्तेव्यचिंतयन् ॥ ५२॥ परस्परंनिरीक्षंतस्तूष्णींतस्थुःक्षणंतदा ॥ तेषांमध्ये
वृद्धएकोहरौविश्वसितोऽब्रवीत् ॥५३॥ अहोपश्यंतुनृपतेःस्नुषायाभक्तिमुत्तमाम् ॥ एवंवदतियद्भक्तानतःकिंचिद्ब्रवीम्यहम् ॥५४॥ इतो
स्माभिर्नगंतव्यंजीवेद्यावन्नचेदयम् ॥ जीवयिष्यतिवैबालंकृष्णोयंभक्तवत्सलः ॥५५॥ नोचेत्सर्वेमरिष्यामोवयमत्रनसंशयः ॥ इतिश्रु
त्वावचस्तस्यवृद्धस्यान्येऽपिवैष्णवाः॥५६॥स्वीचक्रुर्हृष्टमनसोवस्त्रेणाच्छाद्यतंमृतम्॥तुष्टुवुःस्तोत्रगीताद्यैःश्रीकृष्णंभक्तवत्सलम्॥५७॥
स्तुवतांभक्तिपूर्वंतुतेषामस्तंगतोरविः ॥ सर्वेराजादयस्तत्रजनास्तस्थुर्मृताइव ॥५८॥ एवंदिनेव्यतीतेतुसंध्यामस्तंगतेरवौ ॥ संचचार
शिशोरंगंहस्तपादादिकंतथा ॥ ५९ ॥ दृष्ट्वांगस्यचसंचारंसर्वेमुमुदिरेजनाः ॥ वैष्णवाअपिदेवेशंश्रीकृष्णंपरितुष्टुवुः ॥ ६० ॥ ततो
मुहूर्ताद्बालंतुतमुत्थायनिरैक्षत ॥ उत्थितेबालकेराजाहर्षेणमहतावृतः ॥ ६१ ॥ पपातवैष्णवानांतुचरणेष्वतिभक्तितः ॥ उवाचक्ष
म्यतांभक्ताजीवितोऽयंमृतःशिशुः ॥६२॥ श्रुत्वातद्राजवचनंवैष्णवाअपिहर्षिताः ॥ समुन्मील्याक्षितेसर्वेददृशुर्जीवितंशिशुम् ॥६३॥
न्यवर्तंततत्स्तेऽपिराज्ञासंप्रार्थितास्तदा ॥ आगत्यराज्ञीभक्तानांपादौजग्राहभक्तितः ॥ ६४ ॥ ततोराजाथतान्भक्तान्स्नापयित्वाथभ
क्तितः ॥ भोजयित्वातुविविधैरन्नैश्चबुभुजेस्वयम् ॥ ६५ ॥ तदासर्वेमहानंदमग्नाःसर्वेनृपादयः ॥ वैष्णवान्प्रार्थयामासुरवस्थानायते
मुहुः ॥ ६६ ॥ ततस्तेवैष्णवाःसर्वेराजानमिदमब्रुवन् ॥ जगन्नाथंनिरीक्ष्याथागमिष्यामोवयंपुनः ॥ ६७ ॥ तावत्त्वंहरिसेवायांनिर

तोभवसुव्रत ॥ हिंसांत्यक्त्वाहरिंनित्यंपूजयन्भक्तिमाचर ॥ ६८ ॥ ग्रामेराज्येचसर्वत्रदेह्याज्ञांनृपसत्तम ॥ इत्युक्त्वातेगताःसर्वेवैष्ण वाराजपूजिताः ॥ ६९ ॥ नीलाचलेजगन्नाथंद्रष्टुंश्रीपुरुषोत्तमम् ॥ तेषांवाक्यंतुशिरसादधारनृपसत्तमः ॥ ७० ॥ पूजयंतुहरिंसर्वेतद्भ क्तान्ब्रणमंतुच ॥ तदारभ्यतुतद्देशे ग्रामेग्रामेगृहेगृहे ॥ ७१ ॥ विष्णुपूजांहरेर्भक्तिंवैष्णवानांसमर्चनम् ॥ स्थापयामासहिंसादीस्त त्याजातिदयापरः ॥ ७२ ॥ एवंसराजानृपपुत्रपौत्रपत्नीधनंप्राप्यहरौसुभक्तिम् ॥ भुक्त्वास्वराज्यंहतकंटकंमृतोवैकुंठमापामरलो कदुर्लभम् ॥ ७३ ॥ इति श्रीभगवद्भक्तिमाहात्म्येराजपुत्रीभक्तिचरितंनामसप्तपंचाशत्तमःसर्गः ॥ ५७ ॥ छ ॥ अथापरंप्रवक्ष्या मिभक्तेर्माहात्म्यमुत्तमम् ॥ आश्चर्यकारकंविष्णोर्दृढभक्तिप्रदायकम् ॥ १ ॥ दक्षिणेद्रविडेदेशेग्रामेश्रीरंगपत्तने ॥ तत्रश्रीरंगना थआसीद्विष्णुभक्तसुरद्रुमः ॥ २ ॥ तत्रवेदैश्चशास्त्रैश्चब्राह्मणास्तंजपंतिहि ॥ अन्येऽपियेवसंतिस्मतेऽपिभक्तिंप्रकुर्वते ॥ ३ ॥ तत्रास्तां स्वर्णकारौद्वौमातुलोभागिनेयकः ॥ केनापिवैष्णवेनाथताबुभावुपदेशितौ ॥ ४ ॥ ततस्तौस्वर्णकारौतुमहाभक्तौबभूवतुः ॥ अथैक दातयोश्चित्तेबभूवाकस्मिकंत्विदम् ॥ ५ ॥ श्रीरंगमठनिर्माणमावांकुर्यावयत्नतः ॥ परंतुनधनंवास्तिकथमेतद्भविष्यति ॥ ६ ॥ इतिचिंतापरौतौद्वौपरस्परमभाषताम् ॥ अहोऽयंनास्तिकोग्रामोमहाधनसमृद्धिमान् ॥ ७ ॥ तत्रतद्भृत्यवेषेणचावां तद्गृहगौपुनः ॥ चोरयित्वातुतद्द्रव्यंतेनकुर्यावतन्मठम् ॥ ८ ॥ इतिनिश्चित्यमनसागतौतौनास्तिकालयम् ॥ तमुक्त्वावांभवत्स र्वकृत्वातद्वेतनेनच ॥ ९ ॥ जीविकांप्रकरिष्यावोयदितेऽभिमतंविभो ॥ इतिश्रुत्वातयोर्वाक्यंतिष्ठतामितिसोऽब्रवीत् ॥ १० ॥ ततस्तौ

स्वर्णकारौतुतद्गृहेभृत्यवत्स्थितौ ॥ परस्परंचिंतयंतौचोर्यावोधनंकिमु ॥ ११ ॥ नापश्यतांत्ववश्यंतुधनंतद्दवतामृते ॥ देवतातुत
दीयासीत्सुवर्णप्रतिमामयी ॥ १२ ॥ महार्घरत्नघटिताबहुमौल्यातिसुंदरी ॥ दृष्ट्वातांप्रतिमांतौतुचक्रातेहरणेमनः ॥ १३ ॥ अथै
कदानिशायांतुसुप्तेलोकेततस्तुतौ ॥ प्रतिमांमठमारुह्यगवाक्षंददृशेमहत् ॥ १४ ॥ द्वारेकपाटसंरोधात्तेनमार्गेणमातुलः ॥ कष्टा
त्कष्टतरेणाथययौमंदिरमध्यतः ॥ १५ ॥ उत्थाप्यप्रतिमांतांतुभागिनेयायचार्पयत् ॥ ततःस्वयंतुतेनैवमार्गेणागंतुमुद्यतः ॥ १६ ॥
नशशाकबहिर्गंतुंद्वाराल्पत्ववशादसौ ॥ ततोऽब्रवीद्भागिनेयंमातुलोमठमध्यगः ॥ १७ ॥ अतःपरंयद्वक्ष्यामितत्कुरुष्वाविचारितम् ॥
उपायोऽस्तिनचान्योऽत्रकुरुशीघ्रंमदीरितम् ॥ १८ ॥ छित्त्वाममस्तकंयाहिगृहीत्वा प्रतिमामिमाम् ॥ नोचेत्पश्यंतिमांप्रातरुभयोर्म
रणंध्रुवम् ॥ १९ ॥ इत्थंमयिमृतेत्वंतु गृहीत्वामांविनाधनम् ॥ श्रीरंगमठनिर्माणंकुरुष्वममशासनात् ॥ २० ॥ एतावदेवकर्तव्य
मासीद्बहुदिनावधि ॥ मातुलस्येतिवचनंश्रुत्वातद्भागिनेयकः ॥ २१ ॥ छित्त्वाशिरोमातुलस्यनीत्वातांप्रतिमांद्रुतम् ॥ ययौस्वभ
वनंरात्रौसंस्थाप्यप्रतिमांतुताम् ॥ २२ ॥ प्रययौसपुनस्तस्यनास्तिकस्यनिवेशनम् ॥ सुष्वापपूर्ववत्स्वर्णकारःशय्यातलेनिजे ॥
॥ २३ ॥ अथास्यमातुलस्यापिशिरश्छेदंयदाकरोत् ॥ तदैवपुनरेवास्यशिरःप्रादुर्बभूवह ॥ २४ ॥ उद्घाटितःकपाटोऽपिस्वयंश्री
रंगभक्तितः ॥ मातुलोऽपिमठद्वारमार्गेणागत्यतद्बहिः ॥ २५ ॥ भागिनेयस्यनिकटेसुष्वापातिमुदान्वितः ॥ ततःप्रातःसमुत्थाय
निरीक्षेतांपरस्परम् ॥२६॥ किमिदंचेतिपप्रच्छभागिनेयःस्वमातुलम् ॥ मातुलोऽपितदाप्राह श्रीरंगकृपयाह्यहम् ॥२७॥ भूत्वावैपूर्वव

च्चात्रसमायातोस्मितेंऽतिके ॥ इत्येवमुक्त्वावचनंप्रातरारभ्यतौपुनः ॥ २८ ॥ स्वकार्य्येनिरतौभूत्वाचक्रातेभृत्यतामुभौ ॥ अथो
त्थायततोजैनोदृष्ट्वादेवस्यमंदिरे ॥ २९ ॥ उद्घाटितंकपाटंचमहाशंकामुपागतः ॥ द्रुतंगत्वामठेनैवददर्शप्रतिमांचताम् ॥ ३० ॥
मुमोहशोकाज्जैनःसचिंतामापदुरत्ययाम् ॥ रुदित्वाबहुदुःखार्तस्तौभृत्यावाहकोपतः ॥ ॥३१॥ अहोभवद्भ्यांगंतव्यमिदानीमेवमेगृहात् ॥
स्थितयोर्युवयोरेवगृहेचौर्यमभून्मम ॥३२॥ ततोनैवास्तिमेकिंचित्फलंसंरक्ष्यवैयुवाम् ॥इतिजैनेनतावुक्तौचौरौतुस्वर्णकारकौ ॥ ३३ ॥
महाप्रसादइत्युक्त्वोत्तस्थतुस्तौततोगृहात् ॥आगत्यस्वगृहंतौतुकिंचित्कालंव्यतीत्यच ॥ ३४ ॥ प्रतिमाभूषणैरत्नैश्चक्रतुर्मठमुत्तमम् ॥
एवंभक्तस्तुमाहात्म्यंशिरश्छेदेऽपियत्पुनः ॥३५॥ शिरोबभूवलग्नस्तुकपाटःस्फुटितःस्वयम् ॥श्रीरंगेऽद्यापिजल्पंतिवृत्तमेतत्पुरातनम् ३६॥
तस्मान्नाश्चर्यभूतंहिकिंचिद्भक्तेर्हिविद्यते ॥ ३७ ॥ इति श्रीभगवद्भक्तिमाहात्म्येस्वर्णकारचरितंनामाष्टपंचाशत्तमः सर्गः ॥ ५८ ॥
अथान्यत्संप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥ यस्यश्रवणमात्रेणसंदेहातोऽपिमुच्यते ॥ १ ॥ आसीद्धैमथुराप्रान्तेराजावैकोऽपि
धार्मिकः ॥ ॥ पूर्वकर्मविपाकेन सतुकुष्ठीबभूवह ॥ २ ॥ औषधानिबहून्यस्यजातानिपृथिवीतले ॥ नशांतिमगमद्रोगो
राजाचातीवदुःखितः ॥ ३ ॥ मरणेकृतसंकल्पःप्रयागंगंतुमुद्यतः ॥ अथैतस्मिन्क्षणेकोऽपिवैद्यस्तत्रसमागतः ॥ ४ ॥ राजानमाहभो
भूपमर्तुमागच्छसांप्रतम् ॥ इमंतंकुष्ठरोगंतुत्रिदिनान्नाशयाम्यहम् ॥ ५ ॥ सत्यमेतन्नसंदेहःप्रतिजानामितेपुरः ॥ परंतुहंसमेकंमेह्यौ
षधार्थंसमर्पय ॥६॥ जीवंतमेकंत्वंवैतद्वैद्यस्यवचनंनृपः ॥ श्रुत्वाजहर्षतत्कालंव्याधमाहूयचाब्रवीत् ॥ ७ ॥ अरेजीवंतमेकंवैहंसमान

यततः ॥ औषधार्थंत्वरायुक्तोगच्छेदानीममाज्ञया ॥ ८ ॥ इतिराजवचःश्रुत्वाव्याधस्तत्कालमेवहि ॥ चतुर्दिक्षुगतोधर्तुंहंसंजीवंतमे
वहि ॥ ॥९ ॥ अथायंसरसीतीरेदृष्ट्वाहंसयुगंतदा॥उपायंधर्तुकामस्तुचकारतदनंतरम् ॥ १० ॥ उड्डीयप्रगतौतस्मात्सरोवरतटाद्दुभौ ॥
एवंबहुदिनंयातंनतंधर्त्तुंशशाकह ॥ ११ ॥ ततोराजाऽतिकोपेनव्याधमाहूयचाब्रवीत् ॥ दिनत्रयेणचेद्धंसंनप्रदास्यसिलुब्धक ॥ १२ ॥
तदात्वांसकुटुंबंतुहनिष्यामिनसंशयः ॥ इति राज्ञोवचःश्रुत्वासर्वेव्याधाःपलायिताः ॥१३॥ एकएवस्थितस्तत्रराजसेवापरायणः ॥
मध्येचैकःसरस्तीरेहर्तुंहंसंप्रयत्नतः॥१४॥तत्रगत्वाददर्शाथहंसयुग्मंसरस्तटे ॥ तत्रैकंवैष्णवंस्नात्वापूजयंतंहरिंस्थितम् ॥ १५ ॥ तदग्रेहं
समिथुनंविचचाराकुतोभयम्॥दृष्ट्वातत्परमाश्चर्यंव्याधोऽयंनिश्चिकायतम् ॥१६ ॥अहोवैष्णवरूपेणबहुधानबिभेत्ययम् ॥ अतोहमपि
तद्रूपंकृत्वाप्रातर्निजेच्छया ॥ १७ ॥ धरिष्यामिनसंदेहोराजकार्यंभविष्यति ॥ इतिनिश्चित्यमनसासायमागतवान्गृहम् ॥१८॥ विधा
यमालांमुद्रांचकृत्वातिलकमुज्ज्वलम् । तुलसीमाल्यकंठस्तुरामेत्युच्चैर्वदन्मुहुः ॥१९॥ ययौससरसीतीरेधर्तुंहंसंप्रयत्नतः ॥ दृष्ट्वातंव्याध
मायांतंधर्तुंहंसोऽब्रवीद्वचः ॥२०॥ हंसींभयातुरःपत्नींपश्यमेंदुष्टचारिणम् । विधायवैष्णवंरूपंधर्तुमायात्यसौखलः॥२१॥इतिभर्तृवचः
श्रुत्वाहंसीप्राहाद्भुतंवचः॥अहोसत्यंसमायातिधर्तुमेवनसंशयः ॥२२॥ तथापिनैवभेतव्यमावाभ्यामितिमेमतिः ॥ नूनंव्याधःसएवाद्य
यःपूर्वंदिवसत्रयम् ॥ २३ ॥ धर्तुमागतवान्दृष्ट्वायमावाभ्यांपलायितम् ॥ पूर्वंतुदृष्टमेवात्रदृष्ट्वावांवैष्णवांतिके ॥ २४ ॥ निर्भयंवि
चरंतौचततौवैष्णववेषधृक् ॥ धर्तुमायातिधूर्तोऽसौमत्यमेवनसंशयः ॥ २५ ॥ तस्माद्वैष्णवरूपंतुयदस्मद्धरणायवै ॥ कृतवान्यद्भव

त्वेषनवेषोऽस्यमृषाभवेत् ॥ २६ ॥ भगवद्भक्तवेषस्यसाफल्येनतुतद्वयम् ॥ तस्माद्भगवद्भक्तस्यतन्नामोच्चारणस्यच ॥ २७ ॥
छलेनापिकृतस्यास्यभविता वांछितंफलम् ॥ यद्यप्ययंगृहीत्वावांमारयिष्यत्यसंशयम् ॥ २८ ॥ तथापिनैवगंतव्यंवर्मएवंमतोमम ॥
अवश्यमेवमर्तव्यंप्राप्यजन्मनसंशयः ॥ २९ ॥ इतिहंसीवचः श्रुत्वाहंसोऽपिस्वीचकारह ॥ नचेलतुस्ततस्तस्मात्स्थानाद्दिव्यौचपक्षि
णौ ॥ ३० ॥ अथागत्यतुसव्याधोहंसंधृत्वाचचालह ॥ ततोहंसीनतत्याजहंसंस्नेहवशीकृता ॥ ३१ ॥ बलादागत्यव्याधस्यकरो
परिपपातह ॥ तामप्यथदधाराशुव्याधोहिंसापरायणः ॥ ३२ ॥ आगत्यस्वंगृहंव्याधःकृत्वातौपंजरेतुसः ॥ राज्ञःसन्निधिमागत्य
ददौहंसद्वयंमुदा ॥ ३३ ॥ ततोराजातिसंतुष्टोदापयित्वाचवेतनम् ॥ आनिन्येभिषजंतस्मैदर्शयामासपक्षिणौ ॥ ३४ ॥ दृष्ट्वातद्धंसमि
थुनंवैद्योऽपिसुमुदेभृशम् ॥ कर्तुमुद्युक्तवान्राज्ञोरोगशांत्यर्थमौषधम् ॥ ३५ ॥ उवाचराज्ञीभूपंत्वंस्नात्वाभुक्त्वाविशात्रभोः ॥ शो
णितेनास्यहंसस्यस्नापयित्वाक्षतस्थले ॥ ३६ ॥ लेपनंतुप्रदास्यामिमुहुर्यामचतुष्टये ॥ एवंदिनत्रयेजातेरोगःशांतोभविष्यति ॥ ३७ ॥
इत्युक्तवतिवैद्येतुराज्ञीतत्कर्तुमुद्यता ॥ द्विजरूपेणभगवानाययौभक्तवत्सलः ॥ ३८ ॥ मद्भक्तवेषंमिथ्यापिकृतवान्यत्तुहिंसकः ॥ ज्ञा
त्वावेषफलंदातुंमरणेकृतनिश्चयौ ॥ ३९ ॥ नोड्डीययतुःक्वापिस्वयमेवतुधारितौ ॥ तस्मादेतौमहाभक्तौरक्षिष्यामिनसंशयः ॥ ४० ॥
इतिनिश्चित्यभगवान्नीत्वातैलंसमागतः । भूत्वावैद्योपिकुशलः प्रावोचद्राजसंनिधौ ॥ ४१ ॥ राजन्वृथाकिमर्थंत्वंपक्षिणौहंतुमिच्छसि ॥
ममास्त्यपूर्वंतैलंहिकुष्ठरोगविनाशनम् ॥ ४२ ॥ एतस्यस्पर्शमात्रेणकुष्ठरोगःप्रणश्यति ॥ पश्याद्यैवमहाराजवृथाहिंसांपरित्यज ॥ ४३ ॥

इत्युक्तस्तेनहरिणावैद्यरूपधरेणच ॥ नृपतिः स्वीचकाराथददौतैलंभिषग्वरः ॥ ४४ ॥ तत्तैलंहस्तपादेतुलेपयामासभूपतिः ॥ तत्क्ष
णान्निर्विषंयातंस्फुटितंगलितंतुयत् ॥ ४५ ॥ सर्वंपूर्ववदासीच्चनृपांगमतिसुंदरम् ॥ दृष्ट्वासर्वेसुसुदिरेमहाश्चर्य्यंतदाजनाः ॥ ४६ ॥ अ
साध्यः खलुसंसारेरोगोऽयंतत्क्षणंगतः ॥ निवृत्तेदुष्टरोगेतुराजाहर्षसमन्वितः ॥४७॥ वैद्यराजनमस्तुभ्यंफलितोमेमनोरथः॥ महारोगा
र्णवेमग्नंत्वंमामुद्धृतवानसि ॥ ४८ ॥ अतोवरयविप्रेंद्रयावत्तेऽभिमतंधनम् ॥ इतिश्रुत्वावचस्तस्यराज्ञोऽयंवैद्यरूपधृक् ॥४९ ॥ उवाच
सस्मितंवाक्यंराजानमतिहर्षितः ॥ राजन्हंसाविमौदेहियदितुष्टोऽसिमांप्रति ॥ ५० ॥ किंचान्यद्यत्तुदातव्यंतदस्मैगुरवेऽर्पय ॥ अयंनै
वविजानातिवैद्यराजस्तुमामिह ॥५१॥ मयात्वस्यगृहेस्थित्वापठितंबहुवत्सरम् ॥ इत्युक्त्वातस्यवैद्यस्यनामग्रामादिकंहरिः ॥ ५२ ॥
उवाचतत्पितुर्नामतत्पत्न्याश्चापिसस्मितम् ॥ निश्चित्यतुततःसर्वेशिष्योऽस्यायंनसंशयः ॥ ५३ ॥ राजापिप्रददौहंसौहरयेवैद्यरूपि
णे ॥ हरिर्वैद्योगृहीत्वातौहंसौप्रचलितस्ततः ॥ ५४ ॥ आगत्यनगराद्बाह्येतत्याजभगवान्खगौ ॥ माययामोहितौतौतुहंसौवैद्यमवोच
ताम् ॥५५॥ अहोधन्योऽसिभद्रंतेयदावांरक्षितौत्वया ॥ नोचेदयंवृथाराजाघातयेन्नचसंशयः ॥ ५६ ॥ इत्युक्त्वातौगतौहंसौहरिर्वैकुं
ठमागतः ॥ राजापितस्मैवैद्यायदत्त्वाबहुधनंतदा ॥ ५७ ॥ विसर्जयामासमुदाविजहारसुखीस्वयम् ॥ व्याधोऽपिसचतद्रूपंतत्याजेति
विचिंत्यवै ॥ ५८ ॥ अहोमिथ्यापितद्वेषंभक्तस्यधृतवानहम् ॥ पक्षिणावपिविश्वासान्नभसस्तत्समागतौ ॥५९॥सत्यंचेन्ममतद्रूपंस्या
त्तदाकिंसुदुर्लभम् ॥ इतिसंचिंत्यतद्रूपंहरेर्नामानुकीर्तनम् ॥ ६० ॥ तदारभ्यनतत्याजव्याधोऽयंभक्तिमानभूत् ॥ एवंभक्तस्तुमाहा

त्स्यहंससंबंधियन्मया ॥ ६१ ॥ श्रुतंतत्पठितंवापिशृण्वतांशांतिवर्द्धनम् ॥ एवंभगवतोभक्तिर्भक्तरक्षाकरीसदा ॥६२॥ भगवानपिस
र्वत्रसर्वस्मिन्नितिवैक्षणे ॥ स्वभक्तंचापितद्भक्तंरक्षत्येवनसंशयः ॥६३ ॥विश्वासःकेवलंचित्तेनृणामेकोह्यपेक्षितः ॥ ६४ ॥ इतिश्रीभगव
द्भक्तिमाहात्म्येहंसव्याधचरितंनामैकोनषष्टितमःसर्गः ॥ ५९ ॥ अथापरंप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमम् ॥ यस्यश्रवणमात्रेणहरौभ
क्तिःप्रजायते ॥१॥ आसीद्वैपश्चिमेदेशेकश्चिद्धनसमृद्धिमान् ॥ अनपत्यत्वदुःखेनमहाचिंताकुलःसदा ॥२॥ एकदाकोऽपिभक्तस्तुस
मायातोवणिग्गृहे ॥ तंसंपूज्यवणिक्पश्चादवोचद्दुःखमात्मनः ॥ ३ ॥ अहोमेसंततिर्नास्तिकोभोक्ष्यतिधनंमम ॥ तस्माद्वदमहाभागय
थास्यात्संततिर्मम ॥४॥ इत्युक्तस्तेनवणिजासभक्तस्तमुवाचह ॥ सत्यंवदसिवैश्यत्वंनपुत्रेणविनासुखम् ॥५॥ विशेषतोगृहस्थस्यज
न्मैवतुनिरर्थकम् ॥ तस्मात्तेऽहंप्रवक्ष्यामियथास्यात्संततिःशुभा ॥ ६ ॥ अद्यारभ्यवणिक्श्रेष्ठसाधुसेवापरोभव ॥ प्रीणातिभगवान्कृ
ष्णःसाधुसेवनतःसदा ॥ ७ ॥ तस्मिन्प्रीतेभगवतिकिमसाध्यंशरीरिणाम् ॥ इत्युक्त्वासगतोभक्तःसवैश्योपिहितद्दिनात् ॥८॥ साधु
सेवांसमारेभेकर्मणामनसागिरा ॥ एवंगतेषुकालेषुतस्यैकातनयाऽभवत् ॥ ९ ॥ दृष्ट्वातांतनयांवैश्यःपुत्रवत्प्रीतिमानभूत् ॥ अनपत्य
स्यकन्यापिसुखार्थंपुत्रवर्द्धिनी ॥१०॥ अथतस्मात्तृतीयेऽब्देजातःपुत्रोऽतिशोभनः॥अमन्यतवणिक्साधुसेवनस्यफलंत्विदम् ॥११॥
तदारभ्यवणिक्साधूनतिभक्त्याप्रपूजयन् ॥ददातिवित्तवस्त्राणिसाधुभ्योयद्यदीप्सितम् ॥ १२ ॥ अथैकस्मिन्दिनेरोगीभक्तएकःसमा
गतः ॥ दृष्ट्वातंरोगिणंभक्तंभक्तिमान्सवणिक्स्वयम् ॥ १३ ॥ निनायस्वगृहेतंतुदापयामासचौषधम्॥औषधैश्चतथापथ्यैर्द्रुतंवैनीरुजोभ

वत् ॥१४॥ ततस्तंवणिजंप्राहभक्तोऽतिविनयान्वितः॥ त्वयाहंजीवितोरोगादनाथोनात्रसंशयः ॥१५॥ अहंवैश्यकुलेजातोमृतौचपित
रौमम ॥ बाल्येततःसाधुभिश्चजीवितोऽहंयथातथा॥१६॥इदानींत्वद्गृहान्नैवगंतुमिच्छाम्यहंक्वचित्।भोजनंत्वेकदाचेत्स्यात्तदात्रैववसा
म्यहम् ॥१७॥ इतिश्रुत्वावचस्तस्यवैश्योसौसाधुभक्तिमान् ।उवाचप्रांजलिर्वाक्यंसर्वंहिभवतामिदम् ॥१८॥ यथेच्छसितथाभुंक्ष्ववयं
तेकिंकरा अमी॥ इत्युक्तोवणिजाभक्तस्तस्थौतस्यगृहेसुखी ॥१९॥ एवंगतेषुकालेषुसभक्तोवैश्यमंदिरे । स्ववेश्मनिवसंस्तस्थौवैश्योवि
श्वस्तवानभूत् ॥२०॥ वैश्यपुत्रस्तुयोबालःसतंभक्तंपितुःसमम् ॥ अमन्यताथभक्तोऽपिपुत्रवत्तंनिरैक्षत ॥२१॥ एकस्मिन्दिवसेतत्रग्राम
स्यनिकटेवने ॥ श्रीकृष्णप्रतिमांरम्यांद्रष्टुंसर्वेगतास्ततः ॥२२॥ वैश्यपत्नीचभक्तश्चतस्यबालश्चकन्यका ॥ देवंद्रष्टुंगताःसर्वेसाकंचग्राम
वासिभिः ॥२३ ॥दृष्ट्वागत्यपुनःसर्वेतस्थुःस्वेस्वेगृहेजनाः।वैश्यपुत्रस्तुतंभक्तंमुहुरुत्कंठितोऽब्रवीत् ॥२४॥ नयमांतत्रयत्रास्तेदेवःप्रेक्ष्या
म्यहंतुतम् ॥ इतिबालवचःश्रुत्वाभक्तस्तंपरिगृह्यच ॥ २५ ॥ दर्शयामासतंदेवंपुनरानीतवान्गृहम् ॥ एवंमुहुर्मुहुस्तंतुदर्शयामास
वैष्णवः ॥ २६ ॥ एकदातस्यभक्तस्यमतिरासीत्सुदारुणा ॥ तंनीत्वावैश्यबालंतुधनालंकारसंयुतम् ॥ २७ ॥ मारयित्वाथतंबालं
तस्यालंकरणानिसः ॥ तंबालंमृतकंभूमौखनित्वातद्गृहंययौ ॥ २८ ॥ तत्रालंकरणंतस्यवस्त्रेबद्ध्वान्यधापयत् ॥ प्रातर्गंतुमनाभूत्वा
तूष्णींतस्थौसचोरवत् ॥ २९ ॥ अथसावैश्यपत्नीतुबहुकालगतंसुतम् ॥ विचिन्वंतीनपश्यंतीतदापप्रच्छवैष्णवम् ॥ ३० ॥
सभक्तस्तामुवाचाथनागतोऽद्यममांतिकम् ॥ ततःसातीवसंत्रस्तावैश्यंप्राहातिविह्वला ॥ ३१ ॥ पतेपुत्रोगृहेनैवबहुकालाद्धिवर्तते ॥

श्रुत्वैतद्वचनंतस्याःसवैश्यश्चातिचिंतया ॥ ३२ ॥ दासींप्राहनिगंअस्यकुत्रास्तेसतुबालकः ॥ श्रुत्वातद्वचनंदासीग्राममध्येक्रुतोय
यौ ॥ ३३ ॥ पप्रच्छचजनान्सर्वान्दासीपुत्रंददर्शन ॥ परावृत्यनिजंगेहमागच्छंतीततस्तुताम् ॥ ३४ ॥ उवाचपथिकोऽप्ये... मू
न्यासीदास्योपितम् ॥ अयंयस्त्वद्गृहेभक्तोवैष्णवःखलुतिष्ठति ॥ ३५ ॥ तेनैवनिहतोबालोनूनंनास्त्यत्रसंशयः ॥ अद्यैवाहंवनेऽप
श्यंभक्तंतंदुर्गमस्थले ॥ ३६ ॥ भूमौखनित्वाकिंचित्तुसंस्थाप्यापूरयन्मृदा ॥ श्रुत्वैतद्वचनंतस्यस्वामिनोदासवल्लभा ॥ ३७ ॥
प्रणिपत्याब्रवीन्नाथदर्शयस्वस्थलंहितत् ॥ ततःसभिक्षुकोदासींदर्शयामासतत्स्थलम् ॥ ३८ ॥ दृष्ट्वादासीशोणिताक्तंतत्स्थलंप्ररुरो
दसा ॥ उत्पाट्यबालकंदृष्ट्वामृतकंसापुनस्तथा ॥ ३९ ॥ भूमौनिखन्यचायातास्वामिनंवैश्यमब्रवीत् ॥ नाथानेनतुभक्तेनबाल
स्तेघातितोवने ॥ ४० ॥ दृष्ट्वाहंमृतकंबालमागतास्मितवांतिकम् ॥ केनापिस्वामिनादृष्टस्तस्मिन्स्थानेत्वयंवने ॥ ४१ ॥ भूमौ
खनित्वानिक्षिप्यकिंचिद्वैपूरयन्मृदा ॥ ततस्तेनैवतत्स्थानंदर्शितंमेऽथभिक्षुणा ॥ ४२ ॥ अहंतुबालमुत्पाट्यदृष्ट्वातंस्थाप्यपूर्व
वत् ॥ समागतास्मिभवनंसत्यमेतन्नसंशयः ॥ ४३ ॥ इतिश्रुत्वावचस्तस्यास्तत्रासौगतवांस्तदा ॥ ददर्शतंनिजंबालंगतासुंस्था
पितंभुवि ॥ ४४ ॥ पूरयित्वास्वयंमृद्भिःसमायातोऽतिहृष्टवत् ॥ उवाचसर्वंभार्यायैनिजकर्मविचेष्टितम् ॥ ४५ ॥ साधुसेवाप्रसादे
नदत्तोऽयंहरिणाशिशुः ॥ तेनैवनिहतोऽयंचेत्तदानास्त्यस्यदूषणम् ॥ ४६ ॥ अतःपरंनवक्तव्यंत्वयात्रशपथोमम ॥ शृणुचैकंमतंमे
ऽद्ययथास्यादावयोःसुखम् ॥ ४७ ॥ मृतोऽयंबालकोदैवाज्जीवनंनसुखायनौ ॥ ततस्त्वेषातुयापुत्रीकृपणातांतुभक्तितः ॥ ४८ ॥

भक्तायास्मैप्रदायाथगत्वाचावांमहापथम् ॥ हिमाद्रौप्रतपिष्यावोहितमेतन्मतंमम ॥ ४९ ॥ इतिपत्युर्वचःश्रुत्वास्वीचक्रेसापिसुव्रता ॥
ततस्तस्मिन्दिनेवैश्यस्तंभक्तंप्राहसंस्तुवन् ॥ ५० ॥ अहोमेतनयोजातोभवतामेवसेवनात् ॥ दुर्दैवदोषतोनष्टइदानीमितिमेमतिः ॥ ५१ ॥
अतोमयाहितंकिंचित्पत्न्यासहविचारितम् ॥ अनुमोदस्वतत्त्वंतुकृपांकुरुममोपरि ॥ ५२ ॥ इतिश्रुत्वावचस्तस्यसभक्तोऽतीवशंकि
तः ॥ नोवाचकिंचित्स्वंकर्मस्मृत्वासोऽतीवभीतवत् ॥ ५३ ॥ मुहुरेवंप्रार्थ्यमानःशनैराहकिमित्यहो ॥ ततोवैश्योऽब्रवीद्भक्तंभवा
न्भक्तः सुहृन्मम ॥ ५४ ॥ मज्जातीयोऽसितस्मात्त्वांस्वाभीष्टंप्रार्थयाम्यहम् ॥ बालोहृतोविधात्राथकन्येयंवर्ततेऽधुना ॥ ५५ ॥
इमांतुभ्यंप्रदायाथयास्यावश्चोत्तरापथम् ॥ इदंधनमिमेभृत्यायशश्चापीहयत्स्थितम् ॥ ५६ ॥ नतत्ररमतेचित्तमावयोरतिदुःखिनोः ॥
तस्मात्स्वीकुरुमद्वाक्यंगृहाणमांसुतांमम ॥ ५७ ॥ धनानिचैवसर्वाणितवैतानिनसंशयः ॥ यत्त्वयाचिंत्यतेचित्तेस्मृत्वाकर्मस्वयं
कृतम् ॥ ५८ ॥ नतत्रतवदोषोऽस्तिकर्तानारायणःस्वयम् ॥ इतिवैश्यवचः श्रुत्वानस्वीचक्रेऽथवैष्णवः ॥ ५९ ॥ म्लानवक्त्रोबहिर्ग
त्वामर्तुमैच्छतसोऽप्यथ ॥ अथतस्मिन्क्षणेकृष्णोभक्तस्यगुरुवेषधृक् ॥ ६० ॥ तेषांसंरक्षणार्थायसमायातोऽतिसत्वरम् ॥ दृष्ट्वातंगुरु
मायांतंसभक्तोऽतीवलज्जितः ॥ ६१ ॥ ज्ञात्वादुश्चरितंमेऽद्यगुरुर्मेकिंवदिष्यति ॥ इतिचिंतापरोऽप्येषस्वीचकारगुरुःस्वयम् ॥ ६२ ॥
वैश्योऽपितद्गुरुंभक्त्यासंपूज्याहनिजेप्सितम् ॥ गुरुःश्रुत्वातुतत्सर्वंवैश्यंप्राहातिसत्वरम् ॥ ६३ ॥ सम्यग्विचारितंवैश्यत्वयैतत्समयो
चितम् ॥ कन्यादानंकुरुष्वाद्ययात्रायांयुवयोस्तुयत् ॥ ६४ ॥ करिष्यतिहरिस्तत्तेसत्यमेवनसंशयः ॥ इत्युक्तोगुरुणावैश्यःसमानी

यपुरोहितम् ॥६५॥ तस्मैभक्तायतनयांददौसविधिपूर्वकम् ॥ अथदानक्षणंलाजहोमस्यसमयेगुरुः ॥६६॥ प्राहलाजास्तुकन्यायाभ्रा
तुर्हस्तात्प्रगृह्यते ॥ इतिसर्वत्रसिद्धांतस्तस्माद्भ्रातास्तिवानवा ॥ ६७ ॥ इतिश्रुत्वावचस्तस्यगुरोर्वैश्यसुहृज्जनाः ॥ रुरुदुर्भृशदुः
खार्तावैश्यस्तत्प्रत्यषेधयत् ॥ ६८ ॥ अथसोऽपिगुरुःप्राहवर्ततेऽस्याःसहोदरः ॥ आयातिकेनचित्साद्धंक्षणादेवनसंशयः ॥ ६९ ॥
इतितस्यगुरोर्वाक्यंश्रुत्वासर्वेऽतिविस्मिताः ॥ अथैकस्तत्रविपिनेपत्राद्यानयितुंगतः ॥ ७० ॥ तद्ग्रामीणस्तुतंबालंदृष्ट्वावैश्यस्यचे
त्ययम् ॥ वनेकथमिहायातइतिसंचिंत्यतंपुनः ॥ ७१ ॥ गृहीत्वावैश्यभवनंनिनायातित्वरान्वितः ॥ दृष्ट्वातंबालकंसर्वेसाधुसाध्वितितं
गुरुम् ॥ ७२ ॥ प्रणेमुःपूजयित्वाथगुरुस्तंबालकंस्वयम् ॥ गृहीत्वापाणिनालाजान्दापयामासतत्करात् ॥ ७३ ॥ ततोविवाहेसंजा
तेवैश्यःपत्नीसमन्वितः ॥ किमयंस्वप्नआहोस्विद्भ्रमोऽयमितिचिंतयन् ॥ ७४ ॥ साधुसेवाफलंचैतदित्येवंनिश्चिकायसः ॥ अथप्रा
तर्गुरुस्तस्माद्वैश्यागारात्त्वरान्वितः ॥ ७५ ॥ गंतुमुत्कंठितोवैश्यस्तंहिसंपूज्यभक्तितः ॥ प्रस्थापयामाससुदादत्त्वाधनमनेकशः ॥
॥ ७६ ॥ अथवैश्यःपरावृत्यभक्तेनसहहर्षितः ॥ सुतंदृष्ट्वाऽक्षतंहृष्टोसाधुसेवापरोऽभवत् ॥ ७७ ॥ भक्तोऽपितस्यबालस्यस्वर्णालंकर
णानितु ॥ परिधायचतंबालमुवाचस्वस्यकिल्बिषम् ॥ ७८ ॥ वैश्यःश्रुत्वातुतत्सर्वंज्ञातपूर्वंनविव्यथे ॥ संतोषवाक्यंभक्तायप्रो
वाचाथप्रहर्षितः ॥ ७९ ॥ नतेदोषोऽस्तिजामातःसर्वंहरिविचेष्टितम् ॥ एवं वैश्यस्यभक्त्यावै भगवान्भक्तवत्सलः ॥ ८० ॥ आग
त्यजीवयामासवैश्यनिश्चययंत्रितः ॥ क्वपुत्रमरणंतेनभक्तेनेतिनिशम्यसः ॥ ८१ ॥ कर्मांकिंतुपुनस्तस्यचकाराथदृढव्रतः ॥ एवं

निश्चितबुद्धिस्तुकलावपिजगन्मयः ॥ ८२ ॥नदूरेऽस्तीतिमंतव्यंसत्यंसत्यंनसंशयः ॥८३॥ इतिश्रीभगवद्भक्तिमाहात्म्येवैश्यभक्तिच
रितंनामषष्टितमःसर्गः ॥ ६० ॥ अथापरंप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमम् ॥ यस्यश्रवणमात्रेणश्रीकृष्णेभक्तिमाप्नुयात् ॥१॥ पश्चिमे
गढचित्तेतुराजासीत्कृष्णपूजकः ॥ चतुर्भुजाहरेर्मूर्तिस्तस्यगेहेप्रतिष्ठिता ॥ २ ॥ तेषांमध्येस्थितश्चैकःसेनानीराजवल्लभः ॥ तस्य सर्वा
धिकोमानोवेतनंत्वधिकंतथा ॥३॥ विश्वासोऽपिहितस्यैवराज्ञः सर्वाधिकःकिल ॥ नाम्नाभुवनसिंहस्तुजात्याचौमानसंज्ञितः ॥ ४ ॥
महावीरःस्वामिकार्य्येमरणेकृतनिश्चयः ॥ एकदासतुराजावैमृगयायैगतोवनम् ॥ ५ ॥ तत्रहत्वामृगान्व्याघ्रान्गृहमागंतुमुद्यतः ॥
तदैकाहरिणीराज्ञः समीपात्प्रपलायिता ॥ ६ ॥ तदान्यांस्तत्रसंस्थाप्यनीत्वातांभवनंनृपः ॥ चलितोहरिणींहंतुंहयेनातिजवेनवै ॥७॥
अथारण्येसरस्तीरेकर्दमोदकभीतितः ॥ नगंतुंहरिणी शक्तातताराजाब्रवीद्वचः ॥ ८ ॥ तस्मैभुवनसिंहायजहीमंमृगमुत्तमम्॥श्रुत्वातद्व
चनंराज्ञोद्रुतंसभुवनाह्वयः ९ ॥ खड्गेनतांजघानाशुहरिणींराजशासनात् ॥ उदरेनिहतासातुआसन्नप्रसवायदा ॥ १० ॥ तस्याउदरम
ध्यात्तुशिशुयुग्मंपपातह ॥ दृष्ट्वातुमृगजौतौतुराजाकिंचिद्दयान्वितः ॥ ११ ॥ तत्याजहिंसासंवादंकृष्णभक्तिरतोऽभवत् ॥ खड्गं
तत्याजतंहस्तान्निर्माय्यासिंसदारुजम् ॥१२॥ कोशेकृत्वाकरेदध्रेजीविकार्थंनृपांतिके॥ चतुर्भुजमहोरात्रंध्यायंस्तन्नामसंस्मरन् ॥१३॥
हिंसाविरतराजानंसिषेवेसचवैष्णवः ॥ एकस्मिन्दिवसेतस्यज्ञातयोऽन्येविरोधिनः ॥ १४॥ राजानमूचुःसर्वेऽपिभुवनस्यविचेष्टितम् ॥
भुवनोऽयंमहाराजमिथ्यासेवांकरोतिवै ॥ १५ ॥ मालांजग्राहखड्गंस्वमत्यजद्दारुजंत्विदम् ॥ कृत्वासिंकोशमध्येतुधृत्वातंधार्य्यतेक

रे ॥ १६ ॥ त्वंतुधूर्तस्यतस्यैवविश्वासंकुरुषेसदा ॥ इतिश्रुत्वावचस्तेषांजनानांसनृपस्तदा ॥ १७ ॥ तानुवाचास्यशीघ्रंवैकरिष्या
मिविनिश्चयम् ॥ इतिश्रुत्वाततोराजानिनायकतिचिद्दिनम् ॥ १८॥ अथैकस्मिन्दिनेराजाद्रष्टुमाराममुत्तमम् ॥ आययौसर्वभृत्यैश्च
भुवनेनापिसंयुतः ॥ १९ ॥ तत्ररंभावनंपक्वंफलाढ्यंसददर्शह ॥ दृष्ट्वैकांकदलींपक्वफलाढ्यांनृपतिःस्वयम् ॥ २० ॥ छित्त्वासिनाफ
लंतस्यस्थापयामासचैकतः ॥ अथोवाचसतान्सर्वान्भुवनंचापिभूपतिः ॥ २१ ॥ एवंरंभातरुंछित्त्वानयध्वंतत्फलानिभोः॥इतिश्रुत्वा
वचस्तस्यसर्वेतेवैविरोधिनः ॥ २२ ॥ तदैवरंभांछित्त्वावैफलंभूपतयेददुः ॥ अथचिन्ताकुलस्तत्रभुवनश्चातिशंकितः ॥ २३ ॥ सस्मा
रतंनिजंदेवंचतुर्भुजमनन्यधीः ॥ अथतस्मिन्क्षणेराजातंवैभुवनमब्रवीत् ॥ २४ ॥ कस्मात्त्वंनैवसंछिद्यरंभामानयसीहभोः ॥ इतिश्रु
त्वावचस्तस्यराज्ञःसभुवनाह्वयः ॥ २५ ॥ चतुर्भुजमुवाचेदंमनसाचातिविस्मितः ॥ अद्यमेजीवितंकीर्तिस्त्वदधीनेचतुर्भुज ॥ २६ ॥
रक्षवागमयात्रैवयथेच्छसितथाकुरु । इत्युक्त्वासिंकरेकृत्वावामेवैदक्षपाणिना ॥२७॥कोशात्खड्गंविनिष्कास्यचिच्छेदकदलीतरुम् ।
निरीक्ष्यखड्गंतेसर्वेघोरंविद्युत्समद्युतिम् ॥ २८॥ भीत्याक्षिणीनिमील्याथराजाद्यास्तत्रसंस्थिताः ॥ राजाभुवनसिंहतंप्रोवाचातीववि
स्मितः॥२९॥कस्मादिहागतोऽयंतेखड्गंपश्यामिदेहिमे । इतिश्रुत्वावचोराज्ञःसतदाभुवनाह्वयः॥३०॥ददौखड्गंकरेराज्ञोददर्शासिंमहा
द्भुतम् ॥ ततोराजातिकोपेनभ्रुकुटीभीषणाननः॥३१॥ विरोधिनोददर्शाथराजानंतेविरोधिनः ॥ ऊचुःप्रणम्यभोस्वामिन्खड्गोऽयंदारु
निर्मितः ॥३२॥ सत्यमेतन्नसंदेहःपृच्छत्वंभुवनंनृप ॥ ततोराजातुतंखड्गंदत्त्वाभुवनमब्रवीत् ॥ ३३ ॥ किमिदंभुवनैतेत्वांवदंतिहढनि

श्रया: ॥ त्वंसत्यंवद किंचास्तिकारणंकलहायवै ॥३४॥ इतिराज्ञोवचःश्रुत्वाभुवनोवाक्यमब्रवीत् । राजन्सत्यंवदंत्येतेनमिथ्यावादिनो
ह्यमी ॥३५॥ शृणुष्वममवृत्तांतंकथयामियथार्थतः ॥ तस्मिन्दिनेमृगींराजन्यदाघातितवानहम् ॥३६॥ दृष्ट्वातत्पोतयुगलंबभूवातीव
मेदया ॥ वैराग्यंचसमुत्पन्नंत्यक्ताहिंसाततोमया ॥३७॥ ध्यायंश्चतुर्भुजंदेवंकपटेनापितेनृप ॥ सेवांकुर्वञ्जीविकायैतिष्ठामितवसन्निधौ
॥ ३८ ॥ एषदारुमयःखड्गोमयानिर्मापितःकिल ॥ धृत्वाकोशंकरेकृत्वातिष्ठामिपुरतस्तव ॥ ३९ ॥ अद्यकोवेदकिंजातंयद्दारुमयएव
सः ॥ बभूवोत्तमखड्गस्तुकोवेदहरिचेष्टितम् ॥ ४० ॥ जहिहिंमातरुंवेतिश्रुत्वाज्ञांशंकितोऽभवम्॥ध्यात्वाचतुर्भुजंदेवंत्वत्समक्षंनृपोत्तम
॥ ४१ ॥ कोशान्निष्कासितःखड्गोदृष्टएवमहाद्भुतः ॥ इतिश्रुत्वावचोराजाभुवनस्यमहात्मनः ॥ ४२ ॥ प्रोवाचखड्गंकोशाद्वैपुनर्नि
ष्कास्यतांत्वया ॥ श्रुत्वानृपवचःसोपिभुवनोऽसिंतुकोशतः ॥४३॥ निष्कास्यदर्शयामासखड्गंदारुमयंतदा ॥ राजादृष्ट्वाथतंदारुमयं
खड्गंस्वयंतदा ॥ ४४ ॥ प्रशशंसास्यभक्तिंसप्रोवाचभुवनंवचः ॥ एतत्तेभक्तिमाहात्म्यंभुवनास्तिनसंशयः ॥४५॥ चतुर्भुजस्तवप्रीतस्ते
नेदंसकलंकृतम् ॥ अतःपरंस्वगेहेत्वंस्थित्वातद्भजनंकुरु ॥ ४६ ॥ गृहाणवेतनंमत्तोद्विगुणंनात्रसंशयः ॥ निवसस्वगृहेकृष्णंभज
स्वत्वंनिजेच्छया ॥ ४७ ॥ ममापिदर्शनंदेहिसत्यमेतन्नसंशयः ॥ इत्युक्तोभुवनोभूपंप्राहाज्ञांतेकरोम्यहम् ॥ ४८ ॥ इतिदृष्ट्वामहाश्च
र्यंराजाद्यागृहमागताः ॥ भुवनंतंप्रशंसंतोमनसाकर्मणागिरा ॥ ४९ ॥ यावज्जीवंसभुवनश्चतुर्भुजमुपास्यवै ॥ मृतोजगामपरंधामकृ
ष्णप्रसादतः ॥ ५० ॥ एवंतुकथितंसर्वंभुवनस्यविचेष्टितम् ॥ शृण्वन्कृष्णेपरांभक्तिंलभतेनात्रसंशयः ॥ ५१ ॥ ॥ इति श्रीभग

वद्भक्तिमाहात्म्येभुवनचौभानचरित्तंनामैकषष्टितमःसर्गः ॥ ६१ ॥ ॥ ७ ॥ ॥ अस्यैवराज्ञोभक्तेस्तुमाहात्म्यंपरमाद्भुतम् ॥
वक्ष्यामिभक्तिजनकंशृण्वतांप्रीतिवर्द्धनम् ॥ १ ॥ चित्तौरगढराजस्यकृष्णमूर्तिश्चतुर्भुजा ॥ आसीत्तस्यास्तुपूजायांनियुक्तोब्राह्मणोत्त
मः ॥ २ ॥ देवाजीइतिनाम्नासभक्तिमान्वैष्णवःशुचिः ॥ राजाज्ञयात्रिकालंसपूजयामासभक्तितः ॥ ३ ॥ राजातुप्रत्यहंतत्रकृतनित्य
क्रियःशुचिः ॥ समागत्यनमस्कृत्यचतुर्भुजमनन्यधीः ॥ ४ ॥ जगामराजकार्यार्थमेवंतस्यव्रतंदृढम् ॥ देवाजीतुततस्तस्मैराज्ञेराव्य
र्पितांस्रजम् ॥ ५ ॥ प्रसादंप्रत्यहंप्रीत्याप्रददौप्रीतिहेतवे ॥ राजातुशिरसानत्वापर्यधात्तांस्रजंतदा ॥ ६ ॥ एकस्मिन्दिवसेतत्रदेवाजीब्रा
ह्मणोत्तमः ॥ उपोष्यैकादशींप्रातर्द्वादश्यांप्रातरेवहि ॥ ७ ॥ चतुर्भुजंसमभ्यर्च्यराजार्थंचस्रजंस्वके ॥ गलेनिधायसंतस्थौराजागमन
कांक्षया ॥८॥ अथागच्छंतमालोक्यशीघ्रंमालांगलात्तुसः ॥ स्थाल्यामुत्तार्यसंस्थाप्यराज्ञेदातुंव्यवस्थितः॥ ९ ॥अथराजातुभक्त्या
तांगृहीत्वास्रजमुत्तमाम्।परिधायददर्शाथमालायांधवलाःकचाः ॥ १० ॥ सक्रुद्धोनृपतिर्ज्ञात्वामालानेनधृतागले । अतएवास्यवृद्धस्य
लग्नाःशुभ्राःकचाइह ॥ ११ ॥ इतिसंचिंत्यतंविप्रंप्राहराजाद्भुतंवचः।अहोवृद्धोबभूवासौकिमयंतुचतुर्भुजः ॥१२॥ राजंतेधवलाःकेशा
स्तस्यमूर्धनिसंस्थिताः॥इतिश्रुत्वावचोराज्ञोदेवाजीवापिशंकितः ॥ १३ ॥ उवाचनृपतिंधैर्य्याद्राजन्वृद्धोहिकीदृशः ॥ विधेरपिविधा
तायःसकिंवृद्धोनभूपते ॥ १४ ॥ केशाःशुक्लास्तथाकृष्णानिष्केशत्वंतथापुनः ॥ सर्वमैच्छिकमेतस्यसंदेहंमाकुरुप्रभो ॥ १५ ॥ इति
श्रुत्वावचस्तस्यद्विजस्यसतुभूपतिः ॥ उवाचप्रातर्द्रक्ष्यामिवृद्धंवाशिशुमेववा ॥ १६ ॥ अथतुद्वादशीस्वल्पापारणार्थंत्वरान्वितः ॥

व्रजामिपाकशालायांभोक्तुंब्राह्मणसत्तम ॥ १७ ॥ इतिश्रुत्वावचस्तस्यदेवाजीनृपतेर्भयात् ॥ शंकांतुमहतींप्राप्यमुक्तवान्नैवकिं
चन ॥ १८ ॥ अहोरज्ञापरिज्ञातमुपभुक्तान्नगर्पिता ॥ ततःक्रुद्धेनमनसासक्षिप्रंवाक्यमब्रवीत् ॥ १९ ॥ पलायित्वाक्वगंतव्यमवस्था
मेजरातुरा ॥ तस्माच्चतुर्भुजोमेऽद्यशरणंकोऽपिनापरः ॥२०॥ इतिनिश्चित्यतस्याग्रेसुष्वापासौद्विजोत्तमः ॥ त्यक्त्वान्नजलपानंसंसंध्या
पूजांविधायच ॥ २१ ॥ सुप्तमात्रस्यतस्याथचतुर्भुजउवाचह ॥ उत्तिष्ठविप्रभुंक्ष्वान्नंत्यजशोकंनिरर्थकम् ॥ २२ ॥ त्वदुक्तंनमृषा
विप्रराजाज्ञास्यत्यसंशयम् ॥ पश्यमेमस्तकेकेशाःशुभ्रावक्षःस्थलेतथा ॥२३॥ आगत्यराजामांदृष्ट्वावृद्धंतेभक्तिमुत्तमाम् ॥ करिष्यति
नसंदेहस्तस्मात्त्वंभुंक्ष्वसांप्रतम् ॥ २४ ॥ इतिदृष्ट्वाहरिंस्वप्नेदेवाजीचातिहर्षितः ॥ उत्थायतस्यदेवस्यमस्तकंहृदयंतथा ॥ २५ ॥
शुभ्रकेशैःपरिवृतमपश्यद्धृद्वच्चतम् ॥ हरिंदृष्ट्वाब्रह्मरूपंजहर्षद्विजसत्तमः ॥ २६ ॥ बुभुजेफलमूलादिस्वप्नवृत्तमनुस्मरन् ॥ अथप्र
भातेराजापिकृतनित्यक्रियःशुचिः ॥ २७ ॥ द्रष्टुंचतुर्भुजंदेवंचागतोब्राह्मणैस्सह ॥ नमस्कृत्यस्थितस्तत्रदेवाजीतुततःपरम् ॥ २८॥
उवाचवचनंराज्ञेसाक्षेपंस्मितपूर्वकम् ॥ चतुर्भुजंपश्यराजन्वृद्धोऽयमथवायुवा ॥ २९ ॥ इतिविप्रवचःश्रुत्वाराजाकिंचित्प्रकुप्यच ॥
मूर्तेःसमीपमागत्यददर्शतंचतुर्भुजम् ॥ ३० ॥ मस्तकेधवलाःकेशास्तथावक्षसिसंस्थिताः ॥ राज्ञादृष्टास्तदाराजामहाश्चर्य
ममन्यत ॥ ३१ ॥ दर्शयामासतान्सर्वान्ब्राह्मणांश्चपुनःपुनः ॥ समीपमेत्यदेवस्यददर्शातिप्रयत्नतः ॥ ३२ ॥ देवाजीतुततोवस्त्रंसुकु
टंदेवतांगतः ॥ पृथक्कृत्याब्रवीद्वाक्यंपश्यसर्वंनराधिप ॥ ३३ ॥ ततोदृष्ट्वामहाराजोब्राह्मणैःसहितःस्वयम् ॥ शिखाकेशद्वयंधृत्वा

संदेहाद्दैवकषच ॥ ३४ ॥ ततश्चोत्पाटितंकेशद्वयतस्माच्चशोणितम् ॥ निःससारततोराजादृष्ट्वाभीतोऽतिशंकितः ॥ ३५ ॥
देवाजीब्राह्मणस्याथपादयोःपतितोनृपः ॥ त्राहिब्रह्मन्दुराचारंसापराधंतुमामिह ॥ ३६ ॥ गतोमेत्वयिसंदेहःपश्याम्येवंचतुर्भुजम् ॥ केशोत्पाटनतःशीर्षादसृग्धारापतत्यसौ ॥ ३७ ॥ निवारयद्रुतंत्वंतुप्रार्थयित्वाहरिंद्विज ॥ श्रुत्वैतद्वचनंतस्यदेवाजीमूर्तिसन्निधौ ॥ ३८ ॥ उवाचभगवंतंसक्षम्यतांमूर्खचेष्टितम् ॥ ततोरुधिरधारासान्यवर्ततशिखास्थलात् ॥ ३९ ॥ राजातुभीतवत्तत्रबद्धांजलिपुटःस्थितः ॥ देवाजिस्तुततोदेवंसंपूज्यबहिरागतः ॥ ४० ॥ सांत्वयामासराजानंमाचिंतांकुरुभूपते ॥
जातोमहाननर्थस्तुत्वत्तोनैवात्रसंशयः ॥ ४१ ॥ क्षम्यतेभगवानेषसापराधस्यतेप्रभो ॥ गच्छस्वभवनंराजंस्त्यजचिंतांमनोगताम् ॥ ४२ ॥ इत्युक्तस्सनृपस्तेनजगामगृहमात्मनः ॥ चिंतयन्स्वापराधंहिमहाचिंतापरोऽभवत् ॥ ४३ ॥
उपवासपरोभूत्वारात्रौसुष्वापभूपतिः ॥ ततः स्वप्नेददर्शाथकंचिद्विप्रंतपस्विनम् ॥ ४४ ॥ आगत्यवक्तिभोराजन्किमर्थंखिद्यसेवृथा ॥ अतः परंतुभगवान्गतोऽन्यत्रचतुर्भुजः ॥ ४५ ॥ इदंतुत्वदवस्थानंम्लेच्छस्तद्वैग्रहीष्यति ॥ इतिदृष्ट्वानृपः स्वप्नंभयात्त्वरितमुत्थितः ॥ ४६ ॥ चिंतयामासबहुशोमंत्रिणः समुवाचतत् ॥ अथयातेकतिपयेकालेदिल्लीश्वरोनृपः ॥ ४७ ॥ म्लेच्छोजग्राहतत्स्थानंततोदेवंचतुर्भुजम् ॥ नीत्वातेपूजकाः सर्वेअंतर्वेदमुपागमन् ॥ ४८ ॥ अद्यापिगोकुलस्थानेपूजयन्त्यतिभक्तितः ॥
एवंचतुर्भुजेभक्तिर्द्विजस्यपरिवर्णिता ॥ ४९ ॥ श्रुतेयंभक्तिदानृणांपातकध्वंसकारिणी ॥ ५० ॥ ॥ इति श्रीभगवद्भक्तिमा

हात्म्येदेवाजीभक्तिचरितंनामद्विषष्टितमः सर्गः ॥ ६२ ॥ अथापरंप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमम् ॥ यस्यश्रवणमात्रेणदृ
ढाभक्तिर्भवेन्नृणाम् ॥ १ ॥ राजोदयपुरस्यासीज्जात्याराणेतिविश्रुतः ॥ तस्यासीत्क्षत्त्रियोभृत्योमहाशूरोनृपप्रियः ॥ २ ॥
संग्रामेनिहतः सोऽथसंमुखंशार्ङ्गिपश्यति ॥ ततोनरपतिस्तस्यपुत्रानाहूययत्नतः ॥ ३ ॥ संतोष्यचतुरोबंधूनरक्षपृथिवीपतिः ॥ तेषां
मध्येत्रयोनित्यंराजसेवापरायणाः ॥ ४ ॥ तेषांकामध्वजोनाम्नाकनीयानतिभक्तिमान् ॥ सराजभवनंगत्वासिषेवेननराधिपम् ॥५॥
प्रातरुत्थायभवनाद्वनंगत्वातरोस्तले ॥ रामेति प्रजपन्नित्यंमध्याह्नेतुपुनर्गृहम् ॥ ६ ॥ आगत्यान्नमशित्वाचपुनर्यातिवनंद्रुतम् ॥
दृष्ट्वैवंचरितंतस्यभ्रातुस्तंबांधवाः क्रुधा ॥ ७ ॥ ऊचुः क्रोधयुतंवाक्यंभर्त्सयंतोऽतिनिर्दयाः ॥ अरेमूर्खगृहंत्यक्त्वाप्रातरुत्थायगच्छ
सि ॥ ८ ॥ भोक्तुंपुनः समायासिपुनर्यासिगृहाद्वनम् ॥ केयंतेमतिरुत्पन्नाकेनत्वंशिक्षितोह्यसि ॥ ९ ॥ राज्ञोभृत्यावयंसर्वेया
नित्यंनृपांतिके ॥ त्रयोवयंयामनत्वंतत्रगच्छसिमूर्खवत् ॥ १० ॥ राजात्वामीदृशंज्ञात्वाकिंकरिष्यतिधर्मवित् ॥ योदत्तातिपि
तुर्भक्तिंसंस्मृत्याद्यापिनोधनम् ॥ ११ ॥ तस्मादस्माभिरेवाथसहागच्छनृपांतिकम् ॥ नोचेत्क्रुद्धोनृपः सर्वंहरिष्यतिनसंशयः ॥
॥ १२ ॥ इतिकामध्वजः श्रुत्वाबंधूनांवचनंहितम् ॥ उवाचविनयाद्भ्रातॄन्स्मितपूर्वमिदंवचः ॥ १३ ॥ सत्यंवदतयूयंभोभ्रातरोनात्र
संशयः ॥ परंत्वहंतुचैकस्यराज्ञोभृत्यत्वमाप्तवान् ॥ १४ ॥ त्यक्त्वाऽयोध्यापतिंतंतुराजराजेश्वरंप्रभुम् ॥ नान्यंसेवितुमायामिसत्यमे
तद्ब्रवीमिवः ॥ १५ ॥ राजायंसेवितः पित्रायुष्माभिः सेव्यतेपुनः ॥ युष्मासुपरितुष्टोऽस्तिमयिकोपेनतस्यकिम् ॥ १६ ॥ मद्दत्त

नस्यहर्ताचेद्भविष्यतिभवत्वयम् ॥ इत्युक्त्वाविररामाथभ्रातॄन्कामध्वजस्तदा ॥ १७ ॥ भ्रातरोऽपिचतंभ्रांतचित्तमुन्मेनिरेपुनः ॥
ऊचुः सर्वेदयायुक्ता अरेवेश्मनिसंवस ॥ १८ ॥ मायाहिविपिनेघोरंसिंहव्याघ्रभयंकरम् ॥ किंचिद्दैवान्मृतंत्वांतुकोधक्ष्यतिवनेपुनः ॥
॥ १९ ॥ किंचतत्रवृकाव्याघ्राभक्षिष्यंतिकलेवरम् ॥ तस्मादिहैवनिवसभ्रातर्मागच्छकाननम् ॥ २० ॥ इति श्रुत्वावचस्तेषांभ्रातॄ
णांचदयान्वितम् ॥ कामध्वजस्तानुवाचप्रहसन्विजयान्वितः ॥२१॥ भ्रातरः सत्यमेवेदंयुष्माभिर्यदुदाहृतम् ॥ परंतुयस्यभृत्योऽहंस
मांधक्ष्यतिनिश्चितम् ॥२२॥ तस्ययोजायतेदेवानागायक्षाश्चराक्षसाः ॥ नोपसर्पंतितंभक्तंव्याघ्रादीनांतुकाकथा ॥२३॥ नतस्यभृत्यः
कोऽप्यस्तिदुःखितोवाधरातले । इतियूयंविजानीतमच्चिंतांत्यजताधुना ॥२४॥ इत्युक्त्वान्कामध्वजोहृदिरामंविचिंतयन् ॥ जगामवि
पिनंतत्रसंस्मरन्पूर्ववद्धरिम् ॥ २५ ॥ एवंप्रत्यहमेवासौवनमागत्यवैहरिम् । चिंत्यमानस्तुमध्याह्नेभोक्तुमायातिमंदिरम् ॥२६॥ भ्रातृभि
श्चापिविज्ञातोविक्षिप्तोऽयंनसंशयः ॥ तदारभ्यनकिंचित्तमूचुरौदास्यमाश्रिताः ॥२७॥ एवंगतेषुकालेषुचैकस्मिन्दिवसेसतु ॥ कामध्व
जोममाराथचिंतयन्रघुनायकम् ॥ २८ ॥ ततस्तंतुमृतंज्ञात्वाभगवान्भक्तवत्सलः ॥ प्रेषयामासशतशोवानरांस्तस्यसन्निधौ ॥ २९ ॥
दग्धुंकामध्वजंभक्तंमृतंज्ञात्वातिसत्वराः ॥ ततस्तेवानरास्तत्रसमागत्यसुशंकितम् ॥ ३० ॥ उत्थाप्यतंशवंनद्यास्तीरेनीत्वाशुचि
स्थले ॥ काष्ठान्यानीयशुष्काणितस्योपरिनिधायते ॥ ३१ ॥ ददुरग्निंमुखेतस्यमध्याह्नेसमुपस्थिते ॥ अथतस्यतुतेतत्रभ्रातरो
गृहसंस्थिताः ॥ ३२ ॥ कामध्वजंसस्मरुस्तमद्यासौनागतःकुतः ॥ ततस्तेषांतुभ्रातॄणामेकस्तत्रगतोवने ॥ ३३ ॥ दृष्टुंतंभ्रात

रंभ्रातापश्यंस्ततस्थानमुत्तमम् ॥ शुष्ककाष्ठस्यनिचयेस्थापितंमृतकंतुतम् ॥ ३४ ॥ वानराःप्रदहंतिस्मदृष्ट्वेदंप्ररुरोदह ॥ अथ
वानरैर्भीत्यासतत्रगंतुंशशाकन ॥ ३५ ॥ द्रुतमागत्यभवनेभ्रातॄनाहरुदन्सवै ॥ श्रुत्वातद्वचनंतौतुभ्रातरौचातिदुःखितौ ॥ ३६ ॥ आ
जग्मतुर्ग्रामवृद्धैरुदंतौतत्समीपतः ॥ दृष्ट्वातानागतान्सर्वान्मनुष्यान्वानराश्चते ॥ ३७ ॥ तस्मात्स्थानादुपक्रम्यतस्थुर्नैवातिदूरतः ॥
ततस्तेभ्रातरोऽन्येचग्रामवृद्धास्तथापरे ॥ ३८ ॥ चितासमीपमागत्यापश्यन्कामध्वजंतदा ॥ तेषांसंदर्शनार्थायनाग्निस्तस्यमुखंपु
रा ॥ ३९ ॥ ददाहदृष्टेतैःसर्वैर्भस्मसादकरोत्क्षणात् ॥ ततस्तौभ्रातरौतेचग्रामीणाःशोकदुःखिताः ॥ ४० ॥ ततःप्रचलितांस्तां
स्तुवानरान्ददृशुस्त्विमे ॥ स्नात्वानद्यांजलंतस्मैदत्त्वाकामध्वजायते ॥ ४१ ॥ जग्मुर्विपिनमध्येतुतदाश्चर्यमिवाभवत् ॥ अथसर्वे
ऽपितेग्राममागत्यह्यौर्ध्वदेहिकम् ॥ ४२ ॥ चक्रुःकामध्वजस्याथददुरन्नंधनानिच ॥ पश्येदंपरमाश्चर्यंप्रशशंसुर्जनाश्चतम् ॥ ४३ ॥
एवंकामध्वजोभक्तिंकृत्वाप्राप्यहरेःपदम् ॥ ददाहभगवांस्तस्यशवंभक्त्यावशीकृतः ॥ ४४ ॥ यःशृणोत्येतदाख्यानंदुर्गतिस्तस्यन
श्यति ॥ प्रसन्नोभगवांस्तस्मैददात्यभिमतंपदम् ॥ ४५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येकामध्वजचरितंनामत्रिषष्टितमःसर्गः ॥ ६३ ॥
अथापरंप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमम्॥यस्यश्रवणमात्रेणभक्तिमाञ्जायतेनरः ॥ १ ॥मरुदेशेबभूवैकोराजाजै ( जय ) मल्लसंज्ञकः ॥
सोऽपिमूर्तिंचतुर्बाहुंश्रीकृष्णस्यातिभक्तितः ॥ २ ॥ गृहेसंस्थाप्यतत्पूजांचकारप्रत्यहंनृपः ॥ यद्यद्वस्तुगृहेतस्यराज्येचासीन्महोत्त
मम् ॥ ३ ॥ तत्सर्वंविष्णवेतस्मैभक्त्यादत्त्वातुवैस्वयम् ॥ धनंपुत्रांस्तथादारानात्मानंचसमर्प्यसः ॥ ४ ॥ कृतकृत्योबभूवाथरा

जापरमभक्तिमान् ॥ उदयात्प्रहरंचैकंकृष्णपूजापरायणः ॥ ५ ॥ शृणोतिनान्यन्नोक्तेनान्यंपश्यतिभूपतिः ॥ एवंहिनियम
स्तस्यभूपतेःपरमोदृढः ॥ ६ ॥ कियत्यथगतेकालेशत्रवस्तस्यभूपतेः ॥ विचार्यमनसासर्वेराज्यंहर्तुंव्यवस्थिताः ॥ ७ ॥
अयंनृपोयाममेकंनपूजागृहतोऽन्यतः ॥ निर्यात्येवंव्रतंतस्यतावन्मध्येवयंपुनः ॥ ८ ॥ परिवार्यपुरींसर्वाजयमल्लंनिहत्यवै ॥ इति
निश्चित्यतेसर्वेजयमल्लस्यशत्रवः ॥ ९ ॥ एकस्मिन्दिवसेसर्वेपुरीमावव्रुराशुगाः ॥ दृष्ट्वातान्मंत्रिणःसर्वेजयमल्लस्यचिंतया ॥ १० ॥
पूजागृहद्वारिबहिःस्थित्वोचुर्विनयान्विताः ॥ राजंस्तेरिपवोऽभ्येत्यपरिवेष्ट्यपुरीमिमाम् ॥ ११ ॥ जिघांसंतःसमायांतिकिंकुर्मस्तद्व
दस्वनः ॥ इतिश्रुत्वावचस्तेषांमंत्रिणांनृपसत्तमः ॥ १२ ॥ नोवाचकिंचिन्मौनस्थःपूजयंस्तंचतुर्भुजम् ॥ एवंनिवेद्यबहुधामंत्रिणो
ऽथयथोत्तरम् ॥ १३ ॥ नप्रापुश्चतदातेषामेको वृद्धस्त्वरान्वितः ॥ सैन्यमाज्ञापयामासद्रुतंसन्नह्यतामिति ॥ १४ ॥ श्रुत्वातस्यवचः
सर्वेसन्नाएकत्रसंस्थिताः ॥ पुनराहनृपंमंत्रीराजंस्तेऽतीवसन्निधिम् ॥ १५ ॥ समायातास्तवाज्ञाचेद्गच्छामोवयमेवहि ॥ इतिश्रुत्वापिनो
वाचश्रीकृष्णबलमाश्रितः ॥ १६ ॥ अथतस्यदृढांभक्तिंनिश्चयंतादृशंपुनः ॥ श्रीकृष्णःसततंज्ञात्वास्वयमेवाश्ववाहनः ॥ १७ ॥
भूत्वारिपुचमूंगत्वावेत्रपाणिर्भयंकरः ॥ वेत्रेणैवचतान्सर्वाञ्जघानातुलविक्रमः ॥ १८ ॥ तेसर्वेरिपवस्तंतुबाणैःखड्गैःपरश्वधैः ॥ श
क्तिभिर्भिंदिपालैश्चमुद्गरैस्तोमरैस्तथा ॥ १९ ॥ निजघ्नुस्तंतदास्त्राणितद्गात्रंनास्पृशन्नहो ॥ एवंदृष्ट्वातुतेसर्वेप्राणत्राणपरायणाः ॥
॥ २० ॥ दुद्रुवुःस्वेच्छयासर्वेदिशोदशभयार्दिताः ॥ केचिन्मृतास्तुतत्रैवकेचिच्छिन्नोरुबाहवः ॥ २१ ॥ रुदंतोदेहिपानीयमित्ये

वंतेबभाषिरे ॥ अथश्रीजयमल्लोऽपिनित्यपूजांसमाप्यच ॥ २२ ॥ यातेतुप्रहरेपूजागाराद्बहिरुपागतः ॥ निजमश्वंसमारुह्यमंत्रिभिःसहसे
नया ॥ २३ ॥ ततोग्रामाद्बहिस्तत्रपश्यंस्तांश्चतथाविधान् ॥ संग्रामेनिहतान्कांश्चित्तथाछिन्नकलेवरान् ॥ २४ ॥ दृष्ट्वाराजातिसंदिग्धो
मंत्रिणःप्राहतान्स्वयम् ॥ अहोकेनेदृशंयुद्धंकृतमस्त्यत्रसंयुगे ॥ २५ ॥ यत्सहस्रावधिमृताश्छिन्नांगाश्चापिभूरिशः ॥ अन्येपलायिताः
सर्वेकेनेदंकृतमीदृशम् ॥ २६ ॥ इतिश्रुत्वावचोराज्ञोमंत्रिणःप्राहुरानताः ॥ महाराजनजानीमःकेनेदंकृतमीदृशम् ॥ २७ ॥ इतिश्रु
त्वावचोराज्ञोराजानंचब्रुवंतिते ॥ वयंतुभवतामाज्ञांप्रतीच्छंतःस्थितागृहे ॥ २८ ॥ ततोराजास्वयंतस्मिन्कश्चिच्छिन्नपदद्वयम् ॥
पप्रच्छकेनतेवीरकृतेयंदुर्गतिर्वद ॥ २९ ॥ इतिश्रुत्वावचोराज्ञश्छिन्नपादोभटोऽब्रवीत् ॥ शृणुराजन्महाश्चर्य्यंयथास्माकमियंदशा ॥
॥ ३० ॥ ग्रामादेकोयुवाश्यामोविशालनयनःपुमान् ॥ पीताम्बरोवेत्रपाणिःश्वेताश्वोपरिसंस्थितः ॥ ३१ ॥ वेत्रेणहतवानस्मांश्चा
तिभयंकरः ॥ दृष्टोग्रामंप्रविष्टःसक्रीडन्निवमहाबलः ॥ ३२ ॥अस्माकंयानिशस्त्राणितदंगेनाविशन्कचित् ॥ ज्ञात्वैतद्बहवोवीरामदीयाः
प्रपलायिताः ॥ ३३ ॥ वयंतुदुर्गतिंप्राप्तारणभूमौमृताइव ॥ मरिष्यामःक्षतार्ताश्चक्षुत्पिपासार्दिताःकिल ॥ ३४॥ इतिश्रुत्वावचस्तस्य
च्छिन्नाङ्गस्यमहीपतिः ॥ अवतीर्यहयात्तस्मात्प्रणनाममुहुश्चतम् ॥ ३५ ॥अहोधन्याभवंतोवैनशोचतकिमप्यथ ॥ आगच्छतगृहंमेऽद्य
विक्षतान्प्रकरोमिवः ॥ ३६ ॥ इत्युक्त्वातान्समारोप्यवाहनेषुनृपोत्तमः ॥ निनायनगरंसर्वानौषधैस्तानजीवयत्॥३७॥येमृतास्तत्रसं
ग्रामेतज्जातीयांस्तुतानपि ॥ स्वस्वजात्युक्तसंस्कारंकारयामासभूपतिः ॥ ३८ ॥ अथयेजीवितास्तांस्तुबहुमानपुरस्सरम् ॥ दत्त्वाधना

न्नपानादिप्रेषयामासतान्गृहान् ॥ ३९ ॥ तदातेमंत्रिणस्तंतुराजानंप्रोचुरानताः ॥ महाराजमहानेषसंशयोहृदिवर्तते ॥४०॥ शत्रुपक्षक
राःशूराःयेस्थितारणभूमिगाः ॥ मृतप्रायामृतावापिकृतास्तेपांचसत्क्रियाः ॥ ४१ ॥ अवतीर्यहयात्तांस्तुध्यात्वादेवंचतुर्भुजम् ॥
आहतेरिपवोभग्नामृताश्छिन्नाश्चयेनवै ॥ ४२ ॥ तंश्रीचतुर्भुजंतेवैममरक्षापरायणम् ॥ दृष्टवंतःस्वचक्षुर्भिर्धन्याएतेनसंशयः ॥ ४३ ॥
इतिज्ञात्वानमस्कारंतेषांवैकृतवानहम् ॥ इतिश्रुत्वावचस्तस्यराज्ञस्तेमंत्रिणस्तदा ॥ ४४ ॥ नमस्कृत्यचराजानंततस्तेस्वगृहंययुः ॥
राजापिस्वगृहेनित्यंचिंतयन्वैचतुर्भुजम् ॥४५॥कृत्वाजगामतत्पूजांवैष्णवंपदमुत्तमम् । एवंतुजयमल्लस्यभक्तिमाहात्म्यमुत्तमम्॥४६॥
श्रुत्वाभक्तिमवाप्नोतिमानवोनात्रसंशयः ॥ इति श्रीभगवद्भक्तिमाहात्म्येजयमल्लचरितंनामचतुःषष्टितमःसर्गः ॥ ६४ ॥ ॥ छ ॥
अथापरंप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमम् ॥ यस्यश्रवणमात्रेणभक्तिर्भवतिवैष्णवी ॥ १ ॥ जयमल्लस्यराज्ञोवैगोपालोनगरे
ऽभवत् ॥ तस्यैकाजननीगेहेनान्यःकोऽपिनिजोजनः ॥ २ ॥ एकातुमहिषीतस्यादुग्धेनैवतुजीविका ॥ चारयामासविपिनेगो
पालोमहिषींस्वयम् ॥ ३ ॥ सायमागत्यनिलयेपयस्तस्याःप्रगृह्यवै ॥ दत्त्वामात्रेस्वयंभुक्त्वासुष्वापप्रत्यहंसतु ॥ ४ ॥ परंतुविपि
नेसाधुसेवायांनिरतोऽभवत् ॥पत्रैः पुष्पैः फलैश्चैवपाकार्थमिंधनैरपि ॥५॥ सेवयामासवैसाधून्गोपालोऽप्यतिभक्तितः ॥ केनापिशि
क्षितोऽरण्येनामस्मरणमाचर ॥ ६ ॥ तदाह्यनुपलंगोपोहरिनामस्मरन्हृदि ॥ साधुसेवांचकाराथमहिषीमपिचारयन् ॥ ७ ॥ एकस्मि
न्दिवसेसाधुसेवायांनिरतोवने ॥ विसस्मारनिजांगोपोमहिषीमप्यरण्यगाम् ॥ ८ ॥ तदाचोरेणमहिषीहृतागोपस्यतस्यवै ॥ यमुना

याः परेपारंनीत्वातांमहिषींययौ ॥ ९ ॥ संध्यायांसतुगोपालः स्मृत्वातांमहिषींनिजाम् ॥ अरण्येपर्यटन्द्रष्टुंनापश्यन्महिषींचताम् ॥
॥ १० ॥ ततोनिववृतेतस्मादागच्छन्निजमंदिरम् ॥ मातुर्भयेनचिंतार्तोगोपोगृहमुपागतः ॥ ११ ॥ दृष्टोजनन्यापृष्टस्तुम
हिषीकुत्रपुत्रक ॥ श्रुत्वैतद्वचनंमातुः प्रोवाचभयतोमृषा ॥ १२ ॥ मातर्मयासामहिषीन्यस्ताकस्मैद्विजन्मने ॥ पालयित्वा
घृतंतस्याः संततिश्चापियापुनः ॥ १३ ॥ वर्षत्रयेणतत्सर्वंप्रदास्यतिनसंशयः ॥ जीवनंतक्रमात्रेणसकुटुंबस्यगोपिके ॥ १४ ॥
भविष्यतिचनिर्वाहः उपकारोमहानयम् ॥ इतिश्रुत्वावचस्तस्यगोपस्यजननीतदा ॥ १५ ॥ नाभ्यनंदततद्वाक्यात्तूष्णीं
तस्थौगृहेतुसा ॥ अथतस्यैजनन्यैसगोपालोऽन्नंत्वनिच्छया ॥ १६ ॥ प्रदायगत्वाविपिनंस्वयंसाधुजनैः सह ॥ फलमूलादि
भुंजानोनिन्येऽहानिसुखेनवै ॥ १७ ॥ अथतस्यतुभक्त्यापितुष्टोदेवश्चतुर्भुजः ॥ गोपायमहिषींदातुमनश्चक्रेजनार्दनः ॥ १८ ॥
वर्षत्रयेव्यतीतेतुमहिषीमेवतस्करः ॥ नीत्वाथयमुनातोयेस्नापयन्स्वयमागतः ॥ ॥ १९ ॥ तस्याः पुत्रीत्रयंजातंपुत्र्यैकातुस्थितापु
रा ॥ एवंपंचाभवंस्तत्रमहिष्यश्चौरमंदिरे ॥ २० ॥ चौरेणतासांदुग्धादिविक्रीयापितुयद्धनम् ॥ तेनालंकरणंकृत्वातासांग्रीवांब
बंधह ॥ २१ ॥ अथस्नांत्योमहिष्यस्तायमुनायांचतस्करैः ॥ दंडेननिहतास्तोयाद्बहिर्नीताः समंततः ॥ २२ ॥ अथतासांतुस्थ
विराजननीसाचतसृणाम् ॥ तांकृष्णः स्मारयामासननिवृत्ताबभूवसा ॥ २३ ॥ ततस्तस्याश्चतस्रस्तुपुत्र्यस्तुययुरुत्सुकाः ॥ अथ
तेतस्कराः सर्वेनिषेधंकर्तुमुत्सुकाः ॥ २४ ॥ नशेकुर्भीषिताः सर्वेतरंगैर्जलजंतुभिः ॥ महिष्यस्तास्तुनत्तीर्यपरंपारंययुर्मुदा ॥ २५ ॥

ततोऽपिचसमेत्याशुगोपगेहंययुर्मुदा ॥ दृष्ट्वागोपस्तुमहिषींस्वांवृद्धांज्ञातवांस्तदा ॥ २६ ॥ तत्पृष्ठलग्नाअन्यास्तुज्ञातवांस्तत्सुता
इति ॥ ज्ञात्वानिनायभवनेगोपोमातरमब्रवीत् ॥ २७ ॥ ममेयंमहिषीमातर्ब्राह्मणेनसमर्पिता ॥ घृतमूल्यधनेनापिदत्त्वालंकरणंग
ले ॥ २८ ॥ अपत्यसहिताअद्यदत्तामेसत्यवादिना ॥ इति श्रुत्वावचस्तस्यपुत्रस्यजननीतदा ॥ २९ ॥ दूर्वाक्षतैस्तांसंपूज्यनिना
यनिजमंदिरे ॥ अथगोपस्यजननीदृष्ट्वालंकरणानिसा ॥ ३० ॥ बहुमूल्यानिविज्ञायदधारोत्तार्यतद्गलात् ॥ अथतासांतुसर्वासां
दुग्धैस्तैश्चधनैरपि ॥ ३१ ॥ महाधनवतीजातागोपस्यजननीतदा ॥ विवाहंकारयामासपुत्रस्यसुमहोत्सवैः ॥ ३२ ॥ गोपस्तु
साधुसेवायांनिरतः सर्वदासदा ॥ स्मरन्नारायणंपानाद्यैर्वस्त्रैर्भक्तानतोषयत् ॥ ३३ ॥ पुत्रपौत्रैः सुखंभुक्त्वामृतोऽगादुत्तमांगतिम् ॥
एवंसज्जनसेवायाः फलंकलियुगेऽपिच ॥३४॥ भक्तेःकृतायाः पश्यन्वैसुखार्थीतांसमाचरेत् ॥ ३५॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्ये
गोपालचरितंनामपंचषष्टितमः सर्गः ॥६५ ॥पुनर्भूयः प्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥ यस्यश्रवणमात्रेणनरोमुच्येतसंसृतेः॥१॥
पूर्वयः कथितोऽत्रैवश्रीधरस्वामिसंज्ञकः ॥ पूर्वावस्थितिजातंचभक्तिमाहात्म्यमुच्यते ॥ २ ॥ सएकदागृहेतिष्ठन्वेदशास्त्रार्थपारगः ॥
आहूतोधनिनैकस्मिन्दिनेकेनचिदध्वरे ॥ ३ ॥ तत्रगत्वातवान्विप्रोधनानिकतिचिद्द्विजः ॥ गृहीत्वातानिचैकाकीश्रीधरोगृहमा
व्रजत् ॥ ४ ॥ मार्गमध्येमार्गचौरैरनुयातः सुविस्मितः ॥ ततस्ताञ्छ्रीधरोज्ञात्वाशस्त्रपाणीन्भयंकरान् ॥ ५ ॥ त्रस्तः श्रीराम
कवचंभक्त्यासस्मारसद्द्विजः ॥ कवचस्यकृतेपाठेभ्रातरौरामलक्ष्मणौ ॥ ६ ॥ धनुर्बाणधरौवीरौश्यामगौरकलेवरौ ॥ श्रीधर

स्यसमीपेतुगच्छंतौभीषयन्बलात् ॥ ७ ॥ नावेत्सश्रीधरःकश्चिच्चोराद्दृष्ट्वातुतौपथि ॥ नप्रहर्तुंशक्नुवंतःश्रीधरंयेसमागताः
॥ ८ ॥ दृष्ट्वातयोःसौकुमार्यंसौंदर्यंचाप्यनुत्तमम् ॥ मोहितानप्रहर्तुंवैशक्तास्तद्भयतःखलाः ॥ ९ ॥ अथश्रीधर
विप्रोऽपिनिजग्रामंयदागतः ॥ तदातौभ्रातरावंतर्दधातेरामलक्ष्मणौ ॥ १० ॥ अथचोराअदृष्ट्वातौवीरौचापशरायुधौ ॥ वि
रहार्ताःश्रीधरस्यद्वार्यागत्यसमास्थिताः ॥ ११ ॥ दृष्ट्वाताञ्छ्रीधरोविप्रःपप्रच्छविनयान्वितः ॥ यूयंत्वद्यसमायातायेमयासह
तेध्रुवम् ॥ १२ ॥ किमत्रब्रूतकार्यंवोयदर्थमिहतिष्ठत ॥ निवासिष्यथचेदद्यवसतात्रगृहेमम ॥ १३ ॥ इत्युक्तःश्रीधरेणाहुस्तंहिचोरा
इदंवचः ॥ नवस्तुमिच्छामवयंत्वयासहसमागताः ॥ १४ ॥ मार्गेऽद्राक्ष्मचयौवीरौश्यामगौरकलेवरौ ॥ चापबाणधरौवीरावागच्छंतौ
त्वयासह ॥ १५ ॥ तौवयंद्रष्टुमिच्छामःक्वगतौतौप्रदर्शय ॥ दृष्ट्वातौसुंदरौवीरौगच्छामोऽद्यनसंशयः ॥ १६॥ श्रुत्वातेषांवचोविप्रःश्री
धरःप्राहतान्पुनः ॥ अहोकिंवदताश्चर्यंयूयंसत्यवचःकिमु ॥ १७ ॥ केयूयंकुत्रवोवेश्मकावावृत्तिरिहास्तिवः ॥ ब्रूतसत्यंततोऽहंतौ
दर्शयिष्याम्यसंशयम् ॥ १८ ॥ इतिश्रुत्वावचस्तस्यचोराःसत्यंबभाषिरे ॥ वयंविप्रकुलेजाताधर्म्मकर्म्मविवर्जिताः ॥ १९ ॥ स्थि
त्वातस्मिन्वनेचौरवृत्त्यास्माकंतुजीवनम् ॥ दृष्ट्वावयंभवंतंहिसधनंहिंसितुंतदा ॥ २० ॥ समायातास्तदादृष्ट्वावीरौचापशरायुधौ ॥ भी
षयंतौतुतावस्मांस्तद्भयंनवयंपुनः ॥ २१ ॥ नहिंसितोभवांस्तौतुत्वयासहसमागतौ ॥ प्रविष्टौगृहांतरितौनदृष्टौतौपुनर्द्विज ॥ २२ ॥
इतिश्रुत्वावचस्तेषांश्रीधरोविनयान्वितः ॥ प्रणम्यधन्यायूयंतुइत्युवाचपुनःपुनः ॥ २३ ॥ ततस्तेतमपृच्छंतकिमिदंभाषसेद्विज ॥ तौ

दर्शयमहाभागप्रतिज्ञातंपुरात्वया ॥ २४ ॥ श्रुत्वैतद्वचनंतेषांश्रीधरःप्राहतान्पुनः ॥ अहोनतौगृहेस्तोमेभ्रातरौरामलक्ष्मणौ ॥ २५ ॥ ग्रा
ज्ञात्वातुभवतोऽहंवैहिंसितुंमांसमागतान् ॥ तदाश्रीरामकवचमपठंविपिनेभयात् ॥२६॥ रक्षितुंमांसमायातौदेवौतौभक्तवत्सलौ ॥ ग्रा
मपर्यंतमायातावंतर्द्धानंगतौतदा ॥ २७ ॥ धन्याभवंतःपुण्याश्चभाग्यवंतोनसंशयः ॥ यैर्दृष्टौजगतांनाथौलोचनैरामलक्ष्मणौ ॥
॥ २८ ॥इतिश्रुत्वावचस्तस्यश्रीधरस्यचतस्कराः ॥ अस्त्राणिचूर्णयित्वातेवैराग्यंपरमंययुः ॥ २९ ॥ नमस्कृत्यचतंविप्रंश्रीधरंविनया
न्विताः ॥यदृच्छयागताःसर्वेचिंतयंतस्तुतौमुदा ॥३०॥ तेऽपिजातामहाभक्ताश्चोराअपिकलौयुगे ॥तस्माद्भक्तिसमंनास्तिनृणांसुखक
रंभुवि ॥ ३१ ॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्येश्रीधरचरितंनामषट्षष्टितमःसर्गः ॥ ६६ ॥ ॥ अथापरंप्रवक्ष्यामिभक्ते
र्माहात्म्यमुत्तमम् ॥ यस्यश्रवणमात्रेणलभतेभक्तिमुत्तमाम् ॥ १ ॥ पुरासीन्मथुराप्रांतेब्राह्मणःकोऽपिधार्मिकः ॥ मातैकातस्यभवने
नान्यःकोऽपिसुहृज्जनः ॥ २ ॥ सएकदाद्विजःपत्नींनीत्वाश्वशुरमंदिरात् ॥आगच्छन्निजवेश्मासौकृष्णभक्तोऽतिवैष्णवः ॥३॥ मार्गम
ध्येवनेतस्यलुंठकामिलितास्तदा ॥ दृष्ट्वातानस्त्रशस्त्राढ्यान्विप्रोभयसमाकुलः ॥ ४ ॥ क्वचित्तरुतलेतस्थौपत्न्यासहमहामतिः ॥ स्ना
नादिकर्तुमुद्युक्तस्तमूचुस्तेचघातिनः ॥ ५ ॥ किमत्रकुरुषेविप्रस्नानपूजादिकंवृथा ॥ योजनद्वयमग्रेऽस्तिवनमेतन्महद्भयम् ॥ ६ ॥
उल्लंघ्यतत्ततःस्नानंकरिष्यसिसुनिर्भयः ॥ अस्माभिःसाकमेवंहियास्यामोऽथवयंद्रुतम् ॥ ७ ॥ इत्युक्तस्तैस्तुलुंठाकैर्ब्राह्मणोऽतीवभी
तवत् ॥ उवाचनाहंगच्छामिभवद्भिःसाकमेवहि ॥ ८ ॥ गंतव्यंभवनापूर्वंगमिष्यामिततस्त्वहम् ॥ नाज्ञातकुलशीलैश्चसाकंगच्छेद्वने

बुधः ॥९॥ इत्युक्तास्तेपुनःप्राहुर्ब्राह्मणंतेऽतिवंचकाः ॥ माभयंकुरुभोविप्रकथयामोमवद्धितम् ॥ १० ॥ आवयोरंतरेदेवः श्रीकृष्णोनात्रसं
शयः ॥ यस्यात्रपापबुद्धिःस्यात्तस्यदंडंकरिष्यति ॥ ११ ॥ इतिश्रुत्वावचस्तस्यचोरस्यैकस्यसद्द्विजः ॥ विश्वस्यगमनंचक्रेसाकंतैः
कृष्णभक्तिमान् ॥१२॥ अथतेहिंसकाःसर्वेद्विजंयांतंमहावने ॥ खड्गेनघातयामासुर्गृहीत्वांतःस्थितंधनम् ॥ १३ ॥ पत्नींहंतुंद्रुतंसर्वेत
त्समीपमुपागताः ॥ ऊचुर्दोलाहरान्सर्वेलुंठकाअतिनिर्दयाः ॥१४॥ कगच्छथअरेभृत्यानायंवासःपथोहिवः ॥ दक्षिणेनपथायातगृह
मस्माकमेवहि ॥१५॥ नोचेद्युष्मान्निहन्मोऽद्यविप्रवन्नात्रसंशयः ॥ इतिश्रुत्वावचस्तेषांदोलावाहाभयार्दिताः ॥१६॥ स्वगृहाभिमुखाज
ग्मुःप्राणरक्षापरायणाः ॥ इतिश्रुत्वावचस्तेषांचोराणांब्राह्मणीसुता ॥१७॥ रुरोदार्तातिदुःखेनपत्युर्मरणसंश्रवात् ॥ कृष्णःकुत्रास्तिभो
स्वामिंस्त्वंवेष्टोयस्यनामतः ॥ १८ ॥ विश्वस्यैतैःसमायातोमहारण्येऽतिहिंसकैः ॥ एवंवदंतीसाबालारुरोदचमुहुर्मुहुः ॥१९॥ अथतेनै
वमार्गेणचत्वारोहयवाहकाः ॥ निष्कोशखड्गहस्तास्तेतिष्ठतिष्ठेतिवादिनः ॥२०॥ चोरान्संत्रासयामासुःसमागत्यतदंतिकम् ॥ जघ्नुः
खड्गेनतान्सर्वान्दोलावाहान्यवर्तत ॥ २१ ॥ तामूचुर्विप्रपत्नींवैमाभयंकुरुपुत्रिके ॥ आगच्छास्माभिरेवात्रपत्यासहयुताभव ॥२२॥
इत्युक्त्वातेतुतामार्तांनिन्युःपत्युःसमीपतः ॥ ददृशुस्तंमृतंविप्रंशयानंधरणीतले ॥ २३ ॥ विप्रपत्नीरुरोदार्तातांदृष्ट्वातेकृपान्विताः ॥
अभयंप्रददुस्तस्यैतेषामेकस्त्ववातरत् ॥२४॥ अश्वात्तस्यतुविप्रस्यशिरःकायेनियोज्यच ॥ वस्त्रेणाच्छाद्यगहनेवनेजग्मुर्यदृच्छया ॥२५॥
अथाच्छादितमात्रस्तुसद्द्विजोजीवसंयुतः ॥ उत्तस्थौतत्क्षणादेवत्यक्तनिद्रोयथानरः ॥२६॥ दृष्ट्वातंजीवितंविप्रंदोलावाहाश्चहर्षिताः ॥

ऊचुःसर्वेतुयज्जातंमृतेतस्मिन्द्विजन्मनि ॥ २७ ॥ पत्नींचापितथोवाचश्रुत्वाविप्रोऽतिविस्मितः ॥ श्रीकृष्णेपरमांभक्तिंचकारपूर्वतो
ऽधिकाम् ॥ २८ ॥ ततस्तस्मात्समुत्पत्यसहपत्न्यातिहर्षितः ॥ आजगामगृहंमातुर्नमश्चक्रेपदांबुजम् ॥ २९ ॥ माताश्रुत्वातु
तत्सर्वंपथिवृत्तंसुतस्यवै॥रुदतीकृष्णभक्त्यैवजीवितश्चेत्यमन्यत ॥३०॥ एवंसवैद्विजोजीवञ्छ्रीकृष्णचरणांबुजम् ॥ ध्यायन्सपरमंधा
मजगामकृष्णभक्तितः ॥३१॥ एवंभक्तस्यवशगःश्रीकृष्णोऽद्यापिभूतले ॥ आपद्भ्यश्चपालयतिस्वंभक्तंनात्रसंशयः ॥३२॥ ॥ इति श्री
भगवद्भक्तिमाहात्म्येकृष्णभक्तिचरितंनामसप्तषष्टितमःसर्गः ॥६७॥ ॥ ६८ ॥ अथापरंप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमम् ॥ यस्यश्रवण
मात्रेणश्रीकृष्णेप्रीतिरुत्तमा ॥१॥ मरुदेशेबभूवैकोब्राह्मणोधनवाञ्छुचिः ॥ हरिपालेतिनाम्नावैवृद्धावस्थांगतोयदा ॥२॥ अपुत्रोदेवयज
नात्पुत्रमेकमवापसः ॥ जातेपुत्रेतिहर्षेणब्राह्मणेभ्योधनंददौ ॥३॥ अथकालेनपुत्रस्तुवर्द्धमानोदिनेदिने ॥ उपनीयविवाहंचकारयामा
सवैपिता ॥ ४ ॥ अतिस्नेहेनबाल्येसपित्रानातीवपाठितः ॥ परंतुभगवद्भक्तौमतिस्तस्यस्वभावजा ॥ ५ ॥ पात्रवस्त्रादिभक्तेभ्योदी
नेभ्योऽदाद्धनंमुहुः ॥ सत्कार्य्यमितिविज्ञायन्यवर्ततततःपिता ॥ ६ ॥ अथकालेनरोगार्तोहरिपालोमृतस्तदा ॥ तस्यपत्नीमहाभागाब
भूवसहगामिनी ॥ ७ ॥ अथतस्यसुतःसोऽपिपत्न्यासहगृहेवसन् ॥ भुंजानःस्वधनंनित्यंसाधुभ्योऽपिददौमुदा ॥ ८ ॥ एवंगतेषुका
लेषुविप्रःक्षीणधनोऽभवत् ॥ तथापिसाधुसत्कारंनतत्याजातिभक्तिमान् ॥ ९ ॥ पात्रवस्त्रादिकंयद्यत्पत्न्यलंकरणानिच ॥ विक्रीयसा
धुसंतोषंचक्रेसद्विजसत्तमः ॥ १० ॥ ऋणंकृत्वाततोविप्रःसहस्रावधिसंख्यया ॥ पितुःप्रतिष्ठामासाद्यतोषयामाससज्जनान् ॥ ११ ॥

अथतेनधनंनाप्यिदालब्धंद्विजन्मना ॥ ग्रामेग्रामेतुभिक्षित्वातर्पयामासचातिथीन् ॥ १२ ॥ ततःसर्वैर्ज्ञातिवर्गैरन्यैःसामाजिकैर
पि ॥ अमानितोऽपिलज्जां वैनलेभेभक्तियंत्रितः ॥ १३ ॥ ततःसर्वेद्विजंततुज्ञात्वानिष्किंचनंजनाः ॥ निष्किंचनेतिनाम्नावैचक्रुःस
र्वेहसन्मुखाः ॥ १४ ॥ तदादिसद्विजःख्यातोनाम्नानिष्किंचनेतिवै ॥ अथनिष्किंचनोभिक्षांनाप्तवांस्तादृशींयथा ॥१५॥ सर्वेषामति
थीनांतुवैसंपद्येतभोजनम् ॥सदानिष्किंचनश्चौर्य्यंचक्रेऽसावतिनिर्भयः ॥१६॥ चौर्य्यानीतधनैःसाधून्भोजयामासकेवलम् ॥ स्वयंतु
विषवन्मत्वानाग्रहीद्भार्ययासह ॥ १७ ॥ चौर्य्येणापियदापूर्तिर्नाभूदतिथिभोजने ॥ तदावनेलुंठयित्वाशस्त्रपाणिर्जनान्स्वयम् ॥
॥ १८॥ धनमादायागतेभ्योददौनित्यंचभोजनम्॥परंतुधनमात्रंसजग्राहातिविभीषया ॥ १९ ॥ नजघानवनेकिंचिद्धिंसादोषमनुस्म
रन् ॥ तत्रापिवैष्णवान्विप्रान्नलुंठतिद्विजोत्तमः ॥ २० ॥ एवंकतिपयेकालेगतेचैकदिनेयदा ॥ लुंठनेनापिनैवाप्तंधनंकिंचिद्द्विजन्मना
॥ २१ ॥समागत्यगृहेसायंचिंतितःप्रिययासह॥क्षुधार्तएवसुष्वापभोजनाभावतोद्विजः ॥ २२ ॥ प्रातःकालेतुसंप्राप्तेजगामविपिनंद्वि
जः॥ निष्किंचनोनापकिंचिन्मध्याह्नेह्यागतोगृहे ॥ २३ ॥ तत्रापश्यत्समायातानतिथीनतिवैष्णवान्॥पत्नीदत्तासनेसर्वानुपविष्टान्प्र
णम्यसः ॥ २४ ॥ गृहमध्येसमागत्यपत्नींप्राहकरोमिकिम्॥ एतेसमागताःसर्वेतिष्ठंतिचबुभुक्षिताः ॥ २५ ॥ अभोजयित्वाचैतान्वै
मरिष्येनात्रसंशयः ॥ इतिश्रुत्वापतिवचःपत्नीप्राहातिविस्मिता ॥ २६ ॥ तवेयंचेद्गतिर्नाथममाप्येतद्धिनिश्चितम् ॥ तवानुगमनेनैं
वप्राणांस्त्यक्ष्याम्यसंशयम् ॥२७॥ परंतुसाधूनेतान्वैस्नातुंप्रेषयनिष्ठुरम् ॥ तत्पश्चान्मरणोपायंकरिष्यामिनचांदिमे ॥ २८॥मतुंदा

स्यंतिवैचात्रसाधवोऽतिदयालवः ॥ वारयिष्यंतिचात्रावांमरणेकृतनिश्चयौ ॥ २९ ॥ इतिश्रुत्वावचस्तस्याःपत्न्याःसद्विजपुंगवः ॥
आगत्यद्वारितान्सर्वान्स्नातुंगच्छेतिजल्पतः ॥ ३० ॥ एतस्मिन्नंतरेकृष्णोरुक्मिणींप्राहयाम्यहम् ॥ लुंठाकरूपोभक्तोऽस्तिदातुंत
स्मैधनानिच ॥३१॥ श्रुत्वैतत्प्राहसादेवीसहैवनयमामपि ॥३२॥ श्रुत्वैतद्वचनंतस्याःप्राहकृष्णोहसन्निव ॥३२॥ आगच्छकिंतुमांत्वां
सलुंठिष्यतिनसंशयः ॥ तत्रैकामुद्रिकादेविनदेयासहसात्वया ॥ ३३ ॥ एवंपत्न्याविचार्यासौभगवान्भक्तवत्सलः ॥ रक्षणायस्व
भक्तस्यविनोदंकर्तुमागतः ॥ ३४ ॥ अथश्रीभगवान्कृष्णोज्ञात्वातौमरणोन्मुखौ ॥ वैश्यरूपंसमादायरुक्मिण्याभार्य्ययासह ॥
॥ ३५ ॥ तद्गृहद्वारमागत्यकुत्रनिष्किंचनोद्विजः ॥ इत्युवाचततस्तौतुदृष्ट्वानिष्किंचनस्तदा ॥ ३६ ॥ स्वर्णालंकरणैर्युक्तौना
नावस्त्रोपशोभितौ ॥ पथिकावितितौमत्वाजहर्षमनसिद्विजः ॥ ३७ ॥ स्नानंकुरुतभोयूयमित्युक्त्वातांस्तुवैष्णवान् ॥ प्रेषयामाससह
साहर्षेणमहतावृतः ॥ ३८ ॥ प्राहनिष्किंचनोऽहंवैकिंकार्य्यंतद्वदस्वमे ॥ इतिश्रुत्वावचस्तस्यप्रत्युवाचहसंस्तदा ॥३९ ॥ अहंतत्रग
मिष्यामिमार्गेतस्मिन्वनेक्वचित् ॥ श्रूयंतेयत्रलुंठाकालुंठन्तिपथिकाञ्जनान् ॥४०॥ वैश्योऽहंस्त्रीसहायश्चस्वर्णालंकारभूषितः ॥ मया
दातुंनशक्नोमितस्मात्त्वंचात्रतिष्ठसि ॥ ४१ ॥ यथासुखंगमिष्यामिवनेऽस्मिन्द्विजसत्तम ॥ तथाकुरूपकारंत्वंकिंचिद्दास्यामितेधनम् ॥
॥ ४२ ॥ इतिश्रुत्वावचस्तस्यकृष्णस्यवैश्यरूपिणः ॥ निष्किंचनोहृष्टमनाःप्रोवाचमधुराक्षरम् ॥ ४३ ॥ आगच्छत्वंमयासार्द्धं
मेषतत्रैवयाम्यहम् ॥ मदग्रेऽन्येतुलुंठाकालुंठिष्यंतिकथंचन ॥ ४४ ॥ इत्युक्त्वाससमादायगृहीत्वावणिजौपथि ॥ चलितः प्राहपत्नीं

तुपाकंकुरुयदृच्छया ॥४५॥ अहंशीघ्रंसमायामिप्रेष्यमेवैश्यदंपती ॥ इत्युक्त्वाप्रययौताभ्यांवनंनिष्किंचनोद्विजः ॥४६॥ गत्वार
ण्येसमुद्यम्यभीषयन्वैश्यमब्रवीत् ॥ देहिशीघ्रंधनंवैश्यसर्वालंकरणानिच ॥४७॥ नोचेत्त्वांपातयाम्यत्रसपत्नीकंनसंशयः ॥ निष्किं
चनवचःश्रुत्वावैश्यरूपोऽब्रवीद्धरिः ॥ ४८ ॥ अहोकिमर्थंकुरुषेपापंभूत्वाद्विजन्मनि ॥ उवाचनाहंभोक्तुंवैकरोम्येतदघंवने ॥ ४९ ॥
ममैकंतुव्रतंवैश्यबाल्यमारभ्यनिश्चितम् ॥ विष्णुभक्ताश्चयेकेचित्समागच्छंतिमद्गृहे ॥ ५० ॥ एकोवाथशतानीहभोजयेतान्नसंशयः ॥
पापंचेदस्तुमेवैश्यप्रीयतां भगवान्मम ॥५१॥ यस्मिन्दिनेक्षुधार्तास्तेगमिष्यंतिममाश्रमात् ॥ मरिष्येऽहंतदैवेतिव्रतमेतद्दृढंमम ॥५२॥
सपत्नीकस्यमेचैतद्व्रतमेवनसंशयः ॥ तस्मात्कृष्णस्यप्रीत्यर्थंकरोम्येतत्सुदारुणम् ॥ ५३ ॥ देहिशीघ्रंधनंवैश्यद्वारितिष्ठंतिवैष्ण
वाः ॥ मध्याह्नोल्लंघनंतेषांभोजनेहिभविष्यति ॥ ५४ ॥ नोचेत्त्वांघातयिष्यामिसपत्नीकंनसंशयः ॥ श्रुत्वैतद्वचनंतस्यवैश्यरूप
धरोहरिः ॥ ५५ ॥ ददौधनानिवस्त्राणिसर्वाण्याभरणानिच॥रुक्मिण्यपिददौसर्वंधनंमुद्रिकयाविना ॥ ५६ ॥ निष्किंचनोथदृष्ट्वातां
मुद्रिकांतत्करेस्थिताम् ॥ देहीत्युवाचनादायतदानिष्किंचनःस्वयम् ॥ ५७ ॥ गृहीत्वापाणिनापाणिंरुक्मिण्याश्चातिनिर्दयः ॥ त्रोट
यित्वांगुलिंतस्याआजहारसमुद्रिकाम् ॥ ५८ ॥ अनयातुशतंभोक्ष्येसाधूनितिवदन्वचः ॥ सर्ववस्त्रेनिबध्यायंचलितःस्वगृहंप्रति ॥
॥ ५९ ॥ ततःकृष्णोहसन्प्राहनिष्किंचनमिदंवचः ॥ अरेनिष्किञ्चनेयंतुमुद्रिकातीवदुर्लभा ॥ ६० ॥ इमांरक्षगृहेसम्यग्दत्तेयंवै
ष्णवेनमे ॥ साधुसेवार्थमेषावैददातिसकलंधनम् ॥ ६१ ॥ स्वीकृत्यशीघ्रमायातोमंदिरंसतुवैष्णवः ॥ पत्न्यैददौधनंसर्वंमुद्रिका

पृथगर्पिता ॥ ६२ ॥ उक्त्वातस्यागुणंतस्यैसातयापरिरक्षिता ॥ अतिथीन्भोजयित्वातुवैष्णवान्संविसृज्यसः ॥ ६३ ॥ आत्मार्थंप्र
ययौग्रामेभिक्षितुंसतुहर्षितः॥आनीयभिक्षांरात्रौसबुभुजेभार्ययासह ॥ ६४ ॥ ततस्तस्मिन्धनेक्षीणेप्रार्थयित्वासमुद्रिकाम् ॥ लब्ध्वा
ततोधनंतेनतोषयामाससज्जनान् ॥ ६५ ॥ इत्थंनिष्किंचनोयावज्जीवमाराध्यसज्जनान् ॥ अंतेजगामवैकुंठंभार्ययासहवैद्विजः ॥६६॥
भगवानपिरुक्मिण्यासहतुष्टोययौगृहम् ॥ एवंभक्तस्तुमाहात्म्यंनिष्किंचनसमुद्भवम् ॥ ६७ ॥ किंचिदेवात्रकथितंसम्यग्वक्तुंक्षमोहि
कः ॥ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येनिष्किंचनचरितंनामाष्टषष्टितमःसर्गः ॥ ६८ ॥ अथापरंप्रवक्ष्यामिभक्तिमाहात्म्य
मुत्तमम् ॥ यस्यश्रवणमात्रेणभक्तिर्भवतिशाश्वती ॥ १ ॥ अस्तिगौडेषुविख्यातोग्रामःपुरदहाइति ॥ तत्रासीद्ब्राह्मणकुलंशास्त्राध्य
यनतत्परम् ॥ २ ॥ तत्रासीद्ब्राह्मणश्चैकोधनवानतिधार्मिकः ॥ स्त्रीपुत्रकन्यासहितोविरक्तइवस्वेगृहे ॥ ३ ॥ एकदातीर्थयात्रा
यांमनश्चक्रेद्विजोत्तमः ॥ ततश्चिंताकुलोजातोनिरीक्ष्यात्मजरांद्विजः ॥ ४ ॥ कथमेकाकिनोमेऽद्यवृद्धस्यगमनंभवेत् ॥ इतिश्रुत्वा
वचस्तस्यकश्चिद्विप्रोऽतिहर्षितः ॥ ५ ॥ उवाचवचनंतस्मैवृद्धायातिविनीतवत् ॥ पितृभ्यांरहितोविप्रोकृतदारपरिग्रहः ॥ ६ ॥
दृष्ट्वासाकंत्वयातेनगंतव्यमितिनिश्चयः ॥ सहायेनविनानैवकंचिद्देशंसमाश्रयेत ॥ ७ ॥ इतिचिंतयतस्तस्यपुरएकोद्विजन्मनः ॥
आजगामाथतद्ग्रामवासीकृष्णस्यभक्तिमान् ॥ ८ ॥ पितृभ्यांरहितोविप्रोकृतदारपरिग्रहः ॥ दृष्ट्वातंप्राहवृद्धस्तुसम्यगागतवान
सि ॥ ९ ॥ तीर्थयात्रांचिकीर्षामिवृद्धावस्थांविलोक्यभोः ॥ मयासहव्रजेस्त्वंचेत्तदामेगमनंभवेत् ॥ १० ॥ इतिश्रुत्वावचस्त

स्यसविप्रोऽथातिहर्षितः ॥ उवाचवचनंतस्मैवृद्धायातिविनीतवत् ॥ ११ ॥ अहोममापियात्रायांमतिर्बहुदिनावधि ॥ वर्ततेनगृहे
कोपिपितामाताथवासुहृत् ॥ १२ ॥ तस्मात्सत्यंगमिष्यामिकुरूद्योगंयथोचितम् ॥ इतिश्रुत्वासवृद्धस्तुपुत्रंपत्नींसुहृज्जनान् ॥१३॥
उक्त्वातत्कालमेवासौप्रतस्थेस्थविरोद्विजः ॥ अथसोऽपियुवाविप्रःस्वमादायांबरादिकम् ॥ १४ ॥ आगतस्तेनसार्द्धंतुचलितःस
चहृष्टवत् ॥ गयामागत्यप्रथमंश्राद्धंकृत्वातुभक्तितः ॥ १५ ॥ काशींप्राजग्मतुर्हृष्टौतत्रयात्रांप्रचक्रतुः ॥ ततःप्रयागमागत्यस्थि
त्वामासंतुतत्रवै ॥ १६ ॥ ततोजग्मतुर्मथुरांस्थित्वायात्रांप्रचक्रतुः ॥ अथरोगातुरोवृद्धस्तापंप्राप्तोधिदैवतम् ॥ १७ ॥ तंवृद्धंसेव
यामाससतावद्भक्तिसंयुतः ॥ अथरोगाद्विनिर्मुक्तःसवृद्धःसुखवानभूत् ॥ १८ ॥ दृष्ट्वासेवांप्रहृष्टोऽभूत्तंयुवानमुवाचह ॥ अहोत्वया
कृतासेवाममातीवस्वतातवत् ॥ १९ ॥ अतस्तेपरितुष्टोऽहंयद्ब्रवीमिशृणुष्वतत् ॥ ममयावर्ततेकन्यागृहेसातेऽर्पितामया ॥ २० ॥
तत्रगत्वाप्रदास्यामिविधिनातांनसंशयः ॥ इतिश्रुत्वावचस्तस्यसयुवावाक्यमब्रवीत् ॥ २१ ॥ अहोनेदंप्रवक्तव्यमयोग्यंद्विजसत्त
म ॥ इतिश्रुत्वावचस्तस्यवृद्धःप्रोवाचतंद्विजम् ॥ २२ ॥ अहोमयिस्थितेकोऽन्योदातुमर्हतिकन्यकाम् ॥ पितृदेयाहिकन्यास्यादिति
शास्त्रविनिश्चयः ॥ २३ ॥ तस्माद्दत्तामयाकन्यासाक्षीगोपालएवनौ ॥ इत्युक्त्वातत्रगोपालंसाक्षिणंतौप्रचक्रतुः ॥ २४ ॥ ऊचतु
स्तंतुगोपालत्वंसाक्षीभवचावयोः ॥ इत्युक्त्वाकतिचित्कालंस्थित्वानत्वाऽथकेशवम् ॥२५॥ चलितौतौनिजंदेशंमार्गेवृद्धंयुवापुनः ॥
सेवयामाससभक्त्यावैपूर्वतोप्यतिभक्तितः ॥ २६ ॥ एवंसमागतौतौतुक्षेमपूर्वंनिजगृहे ॥ अथवृद्धःस्ववृद्धायैपत्न्यैबंधुभ्यएवच ॥२७॥

उवाचस्वस्यदुःखादिब्राह्मणस्यचसेवनम् ॥ कन्यादानप्रतिज्ञांतांश्रुत्वापुत्रादयोऽब्रुवन् ॥ २८ ॥ किमिदंभाषसेव्यर्थंकेयंतेमतिरी
दृशी ॥ नैवंविधायविप्रायदेयाकन्याकुलेमम ॥ २९ ॥ जातिबाह्योभविष्यामिदत्त्वास्मैकन्यकामिमाम् ॥ तस्मात्त्वंतिष्ठतूष्णींसं
विवदामोवयंद्विजम् ॥ ३० ॥ इतितेषांवचःश्रुत्वास्वीचक्रेसोऽपितद्वचः ॥ अथासौब्राह्मणोवृद्धंदत्तांकन्यामयाचत ॥ ३१ ॥ श्रुत्वा
तद्वचनंतेतुवृद्धपुत्रादयःक्रुधा ॥ ब्राह्मणंतर्जयामासुर्गालिदानादिभिस्तदा ॥ ३२ ॥ अथसब्राह्मणःक्रोधाद्राजद्वारमुपागतः ॥
नृपायोक्तंतुतत्सर्वंश्रुत्वाराजाचुकोपसः ॥ ३३ ॥ आनयित्वाथतान्सर्वान्विद्वांसंसमयाचत ॥ उक्तवान्विदुषेराजावादःकन्यानिमि
त्तकः ॥ ३४ ॥ एतयोःसुमहानस्तितत्रधर्म्मंवदैतयोः ॥ इतिराजाज्ञयाविद्वान्सभांकृत्वाथतत्रह ॥ ३५ ॥ स्थित्वावृद्धजनैःसार्द्धं
शुश्रावोभयभाषितम् ॥ अन्येचशुश्रुवुःसर्वेयेचतत्रसभासदः ॥ ३६ ॥ कन्यादानंकनिष्ठायजात्यानैवतुजायते ॥ एवंस्वदेशमर्य्यादा
छेत्तव्यानकथंचन ॥ ३७ ॥ तस्मादेनंतुयुक्त्यावैकरिष्यामोनिरुत्तरम् ॥ इतिवृद्धसुतादीनांकुलीनानांचपंडितः ॥ ३८ ॥ सभासद्भिः
पक्षपातंचक्रेधर्मंचविस्मरन् ॥ प्राहतंब्राह्मणंकोऽपिजानात्येवंत्वदीरितम् ॥ ३९ ॥ लिखितंचास्तिवृद्धस्यसाक्षीवाकोऽपिचास्तिभोः॥
तद्दर्शयगृहाणास्यकन्यारत्नमनुत्तमम् ॥ ४० ॥ इतिश्रुत्वावचस्तस्यविदुषोविप्रआहतम् ॥ लिखितंनास्तिमेविद्वान्साक्षीनैवास्ति
मानुषः ॥ ४१ ॥ गोपालोमथुरायांतुसमेसाक्षीहवर्तते ॥ वृद्धेनचमयाचापिधृतःसाक्षीतदाहरिः ॥ ४२ ॥ श्रुत्वैतद्वचनंविद्वत्सभास
द्भिरुवाचतम् ॥ आगत्यसाक्षीसदसिस्वब्रूयात्सत्यमेवतत् ॥ ४३ ॥ तदाकन्यांप्रदास्यामोवयंसर्वेनसंशयः ॥ इतिश्रुत्वावचस्तेषांसवि

प्रश्नातिदुःखितः ॥ ४४ ॥ उवाचयामितंदेवंगोपालंशरणंत्वहम् ॥ अतःपरंगतिर्नास्तिवर्ततेममसर्वथा ॥४५॥ यत्करिष्यतिगोपाल
स्तदेवचहितंमम ॥ परंत्वेकंतुमद्वाक्यंसर्वेशृण्वंतुमेमतम् ॥ ४६ ॥ श्रुत्वायुक्तंप्रकर्तव्यमयुक्तंत्यज्यतांध्रुवम् ॥ मासैश्चतुर्भिर्यास्यामिप्र
यास्यामिपुनर्गृहम् ॥ ४७॥ तावदस्यात्मजांयोवैगृह्णीयात्सतुविप्रहा।एवंप्रतिज्ञांकुरुतयूयंसर्वेऽत्रधार्म्मिकाः॥४८॥तदाहंतुगमिष्यामि
गत्वायास्यामिचद्रुतम् ॥ इतिश्रुत्वावचस्तस्यविद्यावंतःसमासदः॥४९॥ऊचुस्तंसत्यमात्थत्वंतत्रापिशृणुनोवचः ॥ अद्यारभ्यगतेचै
वचतुर्मासेऽथपंचमे ॥ ५० ॥ प्रथमेदिवसेकन्यांदास्यामस्तांनसंशयः॥सोपिस्वीकृत्यविप्रस्तुजगाममथुरांपुरीम्॥५१॥मासेनैकेनदुः
खार्तःश्चितयंस्तंहरिंद्विजः ॥गोपालमंदिरस्याग्रेतत्रगत्वास्थितोऽभवत्॥५२॥गोपालमुक्त्वाचैकांतेविप्रःसर्वजनैःकृतम् ॥ नागच्छसि
यदित्वंभोस्त्यक्ष्याम्यत्रैवजीवितम् ॥५३॥ इतिनिश्चित्यविप्रस्तुसुष्वापातिबुभुक्षितः॥गोपालस्तुतदारात्रौभक्तानुग्रहवान्प्रभुः ॥५४॥
स्वप्नेतंकथयामासभक्तंश्रांतंबुभुक्षितम् ॥ माचिंतांकुरुविप्रत्वंगमिष्यामित्वयासह॥५५॥कथयिष्यामिसत्यंतद्द्रुतंतवहितायच ॥ त्वं
तुप्रातःसमुत्थायस्नात्वाऽन्नंभुंक्ष्वसत्वरम् ॥ ५६ ॥ ततोऽर्द्धरात्रिसमयेप्रस्थास्यामिमठादहम् ॥ त्वमग्रेव्रजपादाभ्यांत्वत्पृष्ठस्थोव्र
जाम्यहम् ॥ ५७ ॥ मत्पादनूपुररवंशृण्वन्गच्छत्वमग्रतः ॥ नमांविलोकयक्वापिभ्रांत्यापिद्विजसत्तम ॥ ५८ ॥ ततोऽग्रेनगमिष्यामि
यत्रत्वंद्रक्ष्यसिद्विज ॥ इतिमेसमयोविप्रचित्तेस्थाप्यनिरंतरम् ॥ ५९ ॥ इतिस्वप्नेद्विजोदृष्ट्वाप्रातरुत्थायसत्वरम् ॥ स्नात्वाभुक्त्वाथ
मुदितोमंदिरस्याग्रतः स्थितः ॥६०॥ कदायास्यतिरात्रिर्वैइत्युवाचातिभक्तितः ॥ अथरात्र्यामागतायांमहानिशिमहाप्रभुः ॥६१॥गो

पालोमंदिराद्वाह्येसमायातोयदांगणे ॥ तदासतुद्विजोजाग्रत्सुश्रावनूपुरध्वनिम् ॥६२॥ स्ववस्त्रादिकमादायबहिरेत्याग्रतोययौ ॥६३॥
इति श्रीभगवद्भक्तिमाहात्म्येसाक्षिगोपालचरितंनामैकोनसप्ततितमः सर्गः ॥ ६९ ॥ ॥ ७ ॥ अथभक्तवशोदेवोगोपालो भक्त
वत्सलः ॥ गौडब्राह्मणपृष्ठस्थोगौडदेशंजगामह ॥१॥ सतुविप्रोनिजग्रामसमीपंतुयदागतः ॥ तदाऽस्तंप्रययौसूर्योनिशायामप्यगा
द्विजः ॥२॥ नीत्वागोपालमद्याहमागतश्चेतिहर्षितः ॥विस्मृत्यसमयंपृष्ठेव्यलोकयतसद्विजः ॥३॥ ततस्तत्रैवगोपालःप्रादुर्भूयस्थितोऽ
भवत् ॥ अथविप्रस्तुतंदृष्ट्वाहर्षाश्रुव्याकुलेक्षणः ॥ ४ ॥ स्तुत्वाध्यात्वामुहुस्तत्रतांरात्रिंस्थितवान्मुदा ॥ एकाकिनंतंगोपालंत्यक्त्वानै
वागतोगृहे ॥ ५ ॥ अथतस्यांतुरात्र्यां वै राजाद्याग्रामवासिनः ॥ स्वप्नेददृशुरायातोगोपालोब्राह्मणःसच ॥ ६ ॥ वदतिस्पष्टमेवासौ
ब्राह्मणेनार्पितात्मजा ॥ कृत्वामांसाक्षिणंचास्मैद्विजायप्रतिपादने ॥७॥ इतिराजातथामात्यःसचविद्वान्सभासदः ॥ तद्ग्रामवासिनो
ऽन्येचददृशुश्चाद्भुतंनिशि ॥ ८ ॥ प्रातरुत्थायतेष्वेवंचिंतयत्सुपरस्परम् ॥ प्रातरेकोययौग्रामात्पश्चिमेकार्य्यगौरवात् ॥ ९ ॥ददर्श
तत्रतंविप्रंप्रतिमांवैष्णवींतथा ॥ दृष्ट्वासमीपमागत्यनमस्कृत्यद्विजंमुदा ॥ १० ॥ आगतोह्येषगोपालोविप्रःसचकिमागतः॥धन्योऽसी
त्यभिधायासौत्वरितोग्राममागतः ॥११॥ उवाचसर्वान्ग्रामीणान्गोपालोऽत्रसमागतः॥ब्राह्मणस्यतुकार्यार्थंसाक्ष्यंदातुंनसंशयः॥१२॥
अथतेग्रामनिलयाः सर्वेतत्रसमागताः ॥ राजापिचाययौतत्रदृष्ट्वागोपालमद्भुतम् ॥ १३ ॥ हर्षगद्गदयावाचाश्रुतंतज्जगदीश्वरम् ॥
ब्राह्मणस्यपदांभोजेनिपपाततिभक्तिमान् ॥ १४ ॥ अथराजातुतत्कालमाहूयाथद्विजंतुतम् ॥ भक्तायदापयामासकन्यां

विप्रायसत्कृताम् ॥ १५ ॥ स्वयंददौधनंभूरितस्मैविप्रायभूपतिः ॥ ग्रामंघुरदहाख्यातंजीविकायैददौनृपः ॥ १६ ॥ गोपालस्य
मठंराजाधनैर्बहुभिरादरात् ॥ कारयामासत्वरितंसमाहूयतुशिल्पिनः ॥ १७ ॥ सविप्रस्तत्रनिवसन्कन्यांप्राप्यकुलोद्भवाम् ॥
गोपालगतचित्तोऽसौगोपालस्मृतितत्परः ॥ १८ ॥ गोपालसेवांचक्रेसकर्मणामनसागिरा ॥ राजाद्यास्तुजनाः सर्वेविप्रंभक्त्या
सिषेविरे ॥ १९ ॥ साक्षीभूत्वायदागत्यस्थितस्तत्रमहाप्रभुः ॥ साक्षिगोपालइत्येतन्नामतस्याभवत्ततः ॥ २० ॥ अद्यापितत्र
देवेशः साक्षिगोपालनामतः ॥ तिष्ठतीत्यद्भुतंलोकाः पश्यंतुभक्तिचेष्टितम् ॥ २१ ॥ अथासीन्मथुरायां वै महाचिंतानृणांतदा ॥
गोपालःक्वगतः केननीतोऽस्माकंतुजीवनम् ॥ २२ ॥ चालितुंनहिशक्यःसमनुष्येणेतिनिश्चितम् ॥ तस्माद्देवाश्चदैत्याश्चजह्रुर्देवंन
संशयः ॥ २३ ॥ इतिचिंताकुलाः सर्वेनकिंचित्कर्तुमुद्यताः ॥ अथतस्मिन्क्षणेविप्रोगौडदेशात्समागतः ॥ २४ ॥ स्नात्वाविश्रा
मतीर्थेषुदृष्ट्वादेवंचकेशवम् ॥ गोपालमंदिरस्याग्रेसमायातोदिदृक्षया ॥ २५ ॥ ज्ञात्वैतत्तत्रवृत्तांतंदृष्ट्वासर्वान्सुचिंतनान् ॥
उवाचब्राह्मणांस्तान्वैमाचिंतांकुरुतद्विजाः ॥ २६ ॥ अहंवक्ष्यामिशृणुतगोपालोयत्रतिष्ठति ॥ इतिश्रुत्वावचस्तस्यपप्रच्छु
स्तंमुदान्विताः ॥ २७ ॥ वदविप्रमहाभागत्वंभाग्यादत्रचागतः ॥ नोचेद्विनातंगोपालंविद्ध्यस्मांस्त्यक्तजीविताना ॥२८ ॥इतिते
षांवचःश्रुत्वाप्रोवाचब्राह्मणः सतान् ॥ मद्देशेश्रीजगन्नाथःपश्चिमेयोजनोपरि ॥ २९ ॥ ग्रामःघुरदहाख्योऽस्तिगोपालस्तत्रतिष्ठति ॥
यथाब्राह्मणयोर्जातोविवादःकन्यकाकृते ॥ ३० ॥ विदुषोवचनंतद्वत्सामाजिकवचस्तथा ॥ आनेतुंसाक्षिणंदेवंपुनर्विप्रागमंतथा ॥

॥ ३१ ॥गोपालागमनंतत्रराजभक्तिंतथाद्विजः ॥ उवाचसर्ववृत्तांतंश्रुत्वातेऽतिप्रहर्षिताः ॥ ३२ ॥ तेनैवब्राह्मणेनाथसाकंसर्वेप्रतस्थि
रे ॥ गतास्तेयत्रगोपालोदृष्ट्वातंरुरुदुश्चते ॥ ३३ ॥ ऊचुःसर्वेतुतंदेवकिमिदंकृतवानसि ॥ इत्युक्त्वातत्रतेसर्वेप्रतिमासन्निधिंगताः ॥
॥ ३४ ॥ उत्थापयितुमुद्युक्तानोत्तस्थौप्रतिमाततः ॥ तस्थुस्त्यक्त्वान्नपानादिनिराहाराःस्थिताद्विजाः ॥३५॥ अथरात्रौतुगोपालस्ता
न्स्वप्नेवाक्यमब्रवीत्॥ यूयंगच्छततत्रैवमथुरायामितोद्विजाः ॥ ३६ ॥ नेयंमूर्तिरितस्तत्रगमिष्यतिकथंचन ॥ अयंमेऽस्तीहयोभक्तस्त
द्वशेऽहंस्थितःकिल ॥ ३७ ॥ युष्माभिस्तत्रगंतव्यंनीत्वान्यांप्रतिमांमम ॥ स्थाप्यतांमंदिरेतत्रतस्मिन्स्थास्याम्यहंसदा ॥ ३८ ॥ एवं
वदंतंतेसर्वेगोपालंददृशुर्निशि ॥ प्रातरुत्थायसुस्नातागोपालंतंप्रणम्यच ॥३९॥ चलितांश्चततस्तान्वभोजयामासवैद्विजः ॥ भोजयि
त्वाददौ तेभ्योधनानिविविधानिच ॥४०॥ विसर्जयामासतदाप्रेमास्राविलतलोचनः ॥ सभक्तोवैद्विजश्रेष्ठोमहाश्चर्यममन्यत ॥४१॥ अ
थतेत्वरिताःसर्वेब्राह्मणामथुरांययुः ॥ गोपालप्रतिमांकृत्वास्थापयामासुरानताः ॥४२॥ पूर्ववत्पूजयंतिस्मतत्रतेपूजकाद्विजाः ॥ सर्वेत
त्रप्रमुदितामथुरावासिनोनराः ॥४३ ॥ एवंभक्तिवशीभूतः श्रीकृष्णोभक्तवत्सलः॥पूरयत्यखिलान्कामान्निजभक्तस्यसर्वदा ॥४४॥ श्रु
त्वेदंपरमाश्चर्यंद्विजभक्तिविचेष्टितम् ॥ लभतेसकलान्कामान्कृष्णभक्तिंलभेतवै ॥ ४५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येसाक्षिगोपाल
चरितंनामसप्ततितमःसर्गः ७० ॥ ७ ॥ ॥ अथापरंप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमम् ॥ परमाश्चर्यजनकंहरिभक्तिप्रदायकम् ॥
॥ १ ॥ द्वारकायास्तुपूर्वस्यांडाकोरइतिविश्रुतः ॥ महाग्रामोऽस्तितत्रासीद्ब्राह्मणोभक्तिसंयुतः ॥ २ ॥ रामदासइतिख्यातःकुटुंबीहरिपू

जकः ॥प्रतिमासंद्विजःसोऽथगत्वाद्वारावतींमुदा॥३॥ उपोष्यैकादशींतत्रकृत्वाजागरणंनिशि ॥ समाययौनिजंगेहमितितस्यदृढंव्रतम्
॥ ४ ॥गेहेऽपिसाधुसेवायांनिरतःसर्वदाद्विजः ॥ भिक्षयान्नानिचादायसाधुभ्यःप्रददौमुदा ॥५॥ एवंगतेषुकालेषुरामदासोजरांगतः ॥
तथापिद्वारकायात्रांरणशूरहरेःपुरा ॥ ६ ॥ उपवासंजागरणंचक्रेकृच्छ्रेणसद्विजः ॥एवंश्रुत्वाव्रतंकर्तुमशक्तोब्राह्मणोत्तमः॥७॥ नचतस्थौ
द्वारकायांकुटुंबभरणायसः॥ डाकोरग्राममागत्यचक्रेपुत्रादिपालनम् ॥८॥ अथैकस्मिन्दिनेविप्रोरामदासो जरातुरः ॥ एकादश्यांगत
स्तत्ररणशूरसमीपतः ॥ ९ ॥ अतिश्रमाज्जरादोषादतिम्लानोबभूवसः ॥तथाप्युपोषितोरामदासःकृत्वातुजागरम् ॥१०॥ द्वादश्यांपार
णंकृत्वानगंतुंशक्तिमानभूत् ॥ ततस्तत्रैवसुष्वापरणशूरस्यसन्निधौ ॥ ११ ॥ अथस्वप्नेरामदासंरणशूरउवाचतम् ॥ अहोमांनयतत्रैव
यत्रत्वंवससिद्विज ॥ १२ ॥आनीयशकटंतत्रमामारोप्यमहानिशि ॥ इतःप्रयाहित्वद्भक्त्यागमिष्यामिनसंशयः ॥ १३ ॥ इतिदृष्ट्वा
ऽथस्वप्नंसःप्रातरुत्थायहर्षितः ॥ द्विजोऽथगृहमागत्यनीत्वाशकटमुत्तमम् ॥ १४ ॥ एकादश्यांरामदासोद्वारकायांसमागमत् ॥ सतु
रात्रौस्थितस्तत्रव्रतीजागरणंचरन् ॥ १५ ॥ द्वादश्यांपारणंकृत्वानिशायामर्द्धरात्रके ॥ उत्ताप्यालंकृतान्सर्वान्संस्थाप्यतन्मठे
पुनः ॥ १६ ॥ रणशूरंसमुत्थाप्यसंस्थाप्यशकटोपरि ॥ निर्जगामद्वारकायाभयादतिजवेनसः ॥ १७ ॥ अथप्रभातेद्वादश्यांरणशू
रस्यपूजकाः ॥ अदृष्ट्वारणशूरंतुचिंतांजग्मुर्दुरत्ययाम् ॥ १८ ॥ केननीतोऽयमस्माकंरणशूरःप्रतापवान् ॥ इतिसंचिंत्यतेसर्वेतत्रत्या
न्ददृशुर्नरान् ॥ १९ ॥ कोनास्तिवास्तिपूर्वेद्युरागतानांनृणामिति ॥ जिज्ञासवोरामदासमदृष्ट्वातेऽथपूजकाः ॥ २० ॥ शकटंचा

ध्यहृज्ञातेसर्वैरेतद्धिनिश्चितम् ॥ अनेनैवतुनीतोऽसौनिशायांनात्रसंशयः ॥ २१ ॥ अतोवैशकटंनीत्वापूर्वंद्युरिहचागतः ॥ अर्द्धरात्रौ
रामदासोजगामशकटेनवै ॥ २२ ॥ इतितत्रत्यमनुजैरुक्तास्तेपूजकास्तदा ॥ उत्थायदुद्रुवुः सर्वेरामदासंप्रतिद्विजाः ॥ २३ ॥ रामदा
सःसमायातोयदास्वग्रामसन्निधौ ॥ तदातेपूजकास्तत्रददृशुस्तंद्विजोत्तमम् ॥ २४ ॥ रामदासोऽपितान्सर्वान्ददर्शातित्वरागतान् ॥
विज्ञायमूर्तिमुत्थायवाप्यांचिक्षेपभीतिमान् ॥ २५ ॥ स्वयमागत्यशकटेरामदासः स्थितोऽभवत् ॥ अथतेपूजकास्तत्रसमायातास्त्व
रान्विताः ॥ २६ ॥ ददृशुःशकटंतत्रनापश्यन्प्रतिमांशुभाम् ॥ तन्मध्येकोऽप्युवाचाथवापीतीरेगतोह्ययम् ॥ २७ ॥ कोवेदतत्रनि
क्षिप्यपुनरागतवानसौ ॥ इत्युक्त्वातत्रतेसर्वेवापीतीरमुपागताः ॥ २८ ॥ पश्यंतोजलमध्यंतेददृशुःप्रतिमांहरेः ॥ उत्थापयितु
मारब्धाः सर्वेतेपूजकास्तदा ॥ २९ ॥ नोत्तस्थौप्रतिमातत्रसर्वेचिंतासमाकुलाः ॥ ग्रामादौचबलिष्ठान्वैयथाशतसहस्रशः ॥३०॥ प्रा
र्थ्यानीयचतैश्चापिनोत्थिताप्रतिमास्थलात् ॥ ततः सर्वेनिवृत्तास्तेज्ञात्वाहरिविचेष्टितम् ॥ ३१ ॥ रामदासेनचैकेनप्रतिमेयंसमु
त्थिता ॥ सैवास्माभिस्तुबलिभिःसहस्रैरपिनोत्थिता ॥३२॥ अतोनैवहरेस्तत्रगंतुमिच्छास्तिनिश्चितम् ॥ तथाचात्रैववत्स्यामोवयंचै
वनसंशयः ॥३३॥ इतिनिश्चित्यतेसर्वेतस्थुस्त्यक्ताशनोदकाः ॥ निशायांरणशूरस्तुतानुवाचवचोहितम् ॥ ३४ ॥ स्वप्नेनाहमितोयामि
रामदासस्यभक्तितः ॥ यूयंयातद्वारकायांस्वर्णंनीत्वातुतत्समम् ॥ ३५ ॥ तत्रान्यमूर्तिंकृत्वामेस्थापयध्वंत्वहंपुनः ॥ तत्रापिभवतां
भक्त्यातिष्ठाम्येवनसंशयः ॥ ३६ ॥ तानुक्त्वैवंततोरामदासंस्वप्नेऽवदत्प्रभुः ॥ मत्तुल्यकनकंप्रातर्दत्त्वातेभ्योऽतिभक्तितः ॥ ३७ ॥

पूजकेभ्योऽथतान्भक्त्याविसृज्यमांपुनर्गृहे ॥ संस्थाप्यार्चयतिष्ठामित्वद्गृहेनात्रसंशयः ॥ ३८ ॥ इत्युक्त्वारामदासायस्वप्नंतस्याःस्त्रियं
पुनः ॥ स्वप्नंप्रोवाचभगवान्भक्तानुग्रहकारकः ॥ ३९ ॥ कर्णालंकरणंयच्चुरक्किकात्रयमस्तिते ॥ तदर्पयतुलायान्तुतत्समोऽपिभवा
म्यहम् ॥ ४० ॥ इतिदृष्ट्वाथतेस्वप्नमुत्तस्थुःप्रातरेवहि ॥ पूजकारामदासस्यगृहद्वारिसमागताः ॥ ४१ ॥ देहिनःप्रतिमातुल्यंस्वर्णं
यामोगृहंवयम् ॥ इतितेषांवचःश्रुत्वारामदासोऽतिविस्मितः ॥ ४२ ॥ उवाचसत्यमेतद्वैममाप्याहजनार्दनः ॥ परंतुकनकंतद्वद्दत्तेकुत्र
मेद्विजाः ॥ ४३ ॥ तथापिपत्नींपृष्ट्वाहंसमागच्छामितिष्ठत ॥ इत्युक्त्वातान्गतःपत्नीसमीपंप्राहसास्वयम् ॥ ४४ ॥ अहोकिमर्थंखि
न्नोऽसिभगवान्भक्तवत्सलः ॥ मामुवाचाथस्वप्नेयत्कर्णेऽस्तितेहिरण्यकम् ॥ ४५ ॥ तेनैवतुलितोभद्रेभविष्यामिनसंशयः ॥ इत्युक्त्वा
कर्णदेशात्साकनकंप्रददौसती ॥ ४६ ॥ हर्षयन्तीरामदासंवचनैर्भक्तिसंयुतैः ॥ अहोयोनमनुष्यैस्तुसहस्रैरुत्थितःप्रभुः ॥ ४७ ॥
कथंसतुत्वयैकेनस्थापितःशकटेहरिः ॥ कथंचात्रजलेन्यस्तस्तत्सर्वंहृदिचिंतय ॥ ४८ ॥ माकुरुष्वात्रसन्देहंतुलितःस्यादनेन
सः ॥ इतितस्यावचःश्रुत्वागृहीत्वाकनकंतुतत् ॥ ४९ ॥ तुलामादायमहतींरणशूरंन्यधापयत् ॥ श्रुत्वैतत्सर्ववृत्तांतमागताग्रामवा
सिनः ॥ ५० ॥ तेषामग्रेतुलायांतुरामदासोऽतिभक्तितः ॥ रणछूरंस्थापयित्वाददौतत्कनकंस्वयम् ॥ ५१ ॥ ततःप्रजहसुःसर्वेदृष्ट्वाते
कनकंजनाः ॥ पूजकास्तेसमूचुस्तंकिमिदंकुरुषेद्विज ॥ ५२ ॥ एतावतीकथंमूर्तिरनेनतुलिताभवेत् ॥ इतितेषांवचःश्रुत्वा
रामदासोऽब्रवीद्वचः ॥ ५३ ॥ तोलयंतुभवंतोऽत्रमाकुरुध्वंचसंशयम् ॥ गुरुतालघुताचेतिसर्वंकृष्णस्यलीलया ॥ ५४ ॥ सहस्रैर्नोत्थि

तोयोऽसौपश्यतैकेनचोत्थितः ॥ इतिश्रुत्वावचस्तस्यरामदासस्यपूजकाः ॥ ५५ ॥ सत्यंमत्वाथतन्मध्येएकोवोत्थायचागतः ॥ तुला
मुत्थापयामासतेनैवतुलितःप्रभुः ॥ ५६ ॥ ततःसर्वेमहाश्चर्य्यंमेनिरेभक्तिसंयुतम् ॥ अथतेषांपूजकानांमध्येचैकोऽतिमूर्खवत् ॥
॥ ५७ ॥ हरिंनेतुंमनःकृत्वातमुत्थापयितुंगतः ॥ बहुप्रयासंकृतवान्नोत्तस्थौसमहाप्रभुः ॥ ५८ ॥ ततःसर्वेहसन्तस्तंवारयामासुरा
तुरम् ॥ अथतेब्राह्मणास्तावद्गृहीत्वाकनकंमुदा ॥ ५९ ॥ भोजितारामदासेनजग्मुर्द्वारावतींपुरीम् ॥ रामदासोऽपितांमूर्तिंरणछो
रस्यभक्तितः ॥ ६० ॥ स्थापयामासभवनेसिषेवेतामहर्निशम् ॥ संपूज्यरणछोरंसयावज्जीवंकृतार्थधीः ॥ ६१ ॥ मृतोवैकुंठम
वनंययौकृष्णमनुस्मरन् ॥ अद्यापिसहरिस्तत्रडाकोरग्राममध्यतः ॥ ६२ ॥ तिष्ठत्यवजनान्भक्तान्कृतार्थीकर्तुमात्मनः ॥ धन्यो
वैरामदासस्तुधन्यातद्भक्तिरुत्तमा ॥ ६३ ॥ यदर्थंद्वारकांत्यक्त्वारणछोरःसमागतः ॥ ६४ ॥ इति श्रीभगवद्भक्तिमाहात्म्येरा
मदासचरितंनामैकसप्ततितमःसर्गः ॥ ७१ ॥ छ ॥ अंतर्वेदेजसूश्यामोनाम्नासीद्वैष्णवःकिल ॥ तस्यैकोवृषभोगेहेनान्यत्किंचि
द्धनादिकम् ॥ १ ॥ येनक्षेत्रंचकारासौभक्तेभ्यःप्रददौमुदा ॥ एकदातस्यवृषभश्चौरेणापहृतोवने ॥ २ ॥ जसूश्यामोऽतिखिन्नो
भूदलब्ध्वावृषभंवने ॥ चिंतयामासमनसाकिंकरोम्यहमद्यवै ॥ ३ ॥ वृषभोऽपिहृतश्चौरैःकथंक्षेत्रंभविष्यति ॥ क्षेत्राभावेहिसा
धूनांसेवनंनभविष्यति ॥ ४ ॥ मृतिरेववरंमन्येसाधुसेवांविनामम ॥ तस्माद्द्यवमर्तव्यंगृहेगत्वानसंशयः ॥ ५ ॥ इतिनिश्चित्य
मनसासमागच्छद्गृहंप्रति ॥ ज्ञातोभगवतासौतुमरिष्यतिनसंशयः ॥ ६ ॥ तादृशोवृषभस्तस्यसमीपेऽग्रेनिवेशितः ॥ अथासौतुज ॥

सूश्यामोदृष्ट्वातंवृषभंस्वकम् ॥ ७ ॥ जहर्षत्वरितस्तंतुजग्राहवृषभंमुदा ॥ गृहीत्वागृहमायातोभक्तसेवापरायणः ॥ ८ ॥ कृत्वा
क्षेत्रंतदुत्पन्नैस्तर्पयामाससज्जनान् ॥ एवंसंवत्सरेजातेसचोरस्तत्रचागतः ॥ ९ ॥ क्षेत्रंक्षेत्रेसकृष्यंतंताहृशंवृषभंतथा ॥ दृष्ट्वाकस्मात्स
मायातोसएववृषभोमम ॥ १० ॥ इतिसंचिंत्यगेहेस्वेसमायातोऽथतस्करः ॥ ददर्शवृषभंतंतुपुनस्तत्रसमागतः ॥ ११ ॥ तत्राप्य
पश्यद्वृषभंपुनरेवगृहंययौ ॥ एवंपुनःपुनःश्चौरोदृष्ट्वाश्चर्यंमहांस्तदा ॥ १२ ॥ जसूश्यामस्यचरणेनिपत्यदमुवाचह ॥ अहोमयावृषो
नीतोवनात्तवनसंशयः ॥ १३ ॥ पुनस्तवायंवृषभस्ताहृशोदृश्यतेमया ॥ इतीदंमेमहच्चित्रंजायतेभक्तसत्तम ॥ १४ ॥ तस्मात्त्वद्वृष
भंनीत्वातुभ्यंदातुंसमागतः॥गृहाणेमंवृषंस्वामिन्कुरुशिष्यंचमामिह ॥ १५ ॥ अद्यारभ्यमयाचौर्यंत्यक्तंसत्यंनसंशयः ॥ तस्मात्त्वांश
रणंप्राप्तःकृतार्थंकुरुमांविभो ॥ १६ ॥ इत्युक्तस्तेनचोरेणजसूश्यामोदयान्वितः ॥ प्रददौगोपचोरायमंत्रंभक्तिविवर्धनम् ॥ १७ ॥
गृहीत्वातस्यमंत्रंसप्रदायवृषभंचतम् ॥ आगत्यस्वगृहेगोपोमहाभक्तोबभूवह ॥१८॥ दधिदुग्धादिकंनीत्वाजसूश्यामस्यसेवनम् ॥ च
कारप्रत्यहंगोपःसोऽतिभक्तोबभूवह ॥१९॥ एवंचौरोऽपिभक्तस्यसंसर्गाद्भक्तिमानभूत्॥तस्मात्सज्जनसंसर्गोनृणांसवार्थसाधकः ॥२० ॥
॥ इति श्रीभगवद्भक्तिमाहात्म्येजसूश्यामचरितंनामद्विसप्ततितमःसर्गः ॥ ७२ ॥ ॥ छ ॥ अथापरंप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्त
मम् ॥ महाश्चर्यप्रदंनृणांहरिभक्तिप्रदायकम् ॥ १ ॥ गंगायाउत्तरेकूलेनैमिषारण्यपश्चिमे ॥ आस्तेनाम्नाबरेलीतिग्रामोब्राह्मण
संकलः ॥ २ ॥ तत्राभूद्ब्राह्मणश्चैकोनंददासइतिश्रुतः ॥ अविद्योनिर्द्धनःशांतःकृषिकर्मचकारसः ॥ ३ ॥ परंतुहरिभक्तोऽसौसा

धुसेवापरायणः ॥ संध्यायामागतान्सर्वान्ददात्यन्नंसमक्तितः ॥ ४ ॥ तंदृष्ट्वानिरपेक्षंतुतत्रत्यायेसुदुर्ज्जनाः ॥ तंकदर्थयितुंसर्वेमंत्रं



चक्रुःपरस्परम् ॥ ५ ॥ अहोऽस्मिन्नगरेनीचःसर्वस्माद्प्ययंद्विजः ॥ सर्वेभ्योमहतींलोकेप्रतिष्ठांप्रापदंभतः ॥ ६ ॥ सायंसमागते
भ्योऽसौददात्यन्नंयतस्ततः ॥ ख्यातोलोकेषुसर्वत्रग्रामेसर्वाधिकोऽभवत् ॥ ७ ॥ अतस्तथाप्रकर्तव्यंयेनतस्यचमंदिरं ॥ नगच्छे
त्कोऽपितंदूरात्त्यजेच्चांडालवद्द्विजः ॥ ८ ॥ सर्वेभ्योमहतींलोकेप्रतिष्ठांप्रापदंभतः ॥ तथाकेनापिदोषेणचाप्रतिष्ठाभवेद्यथा ॥ ९ ॥
इत्येवंमंत्रयित्वातेमृतांवत्सतरींखलाः ॥ तत्क्षेत्रेस्थापयामासुःसुप्तेलोकेमहानिशि ॥ १० ॥ अथप्रातस्सस्वक्षेत्रंनंददासोगतःस्वयम्
तदैवतेद्रुतंतत्रगताःक्षेत्रेऽतिदुर्ज्जनाः ॥११॥ दृष्ट्वावत्सतरींतांतुनंददासंतथाद्विजम् ॥ उच्चुर्धिक्शब्दमुच्चार्य्यनंददासंमहाशुचिम् ॥१२॥
अरेविप्रकुलेजातःकथमेषाहतात्वया ॥ वृथामुद्रांचमालांचवहसित्वंद्विजाधम ॥ १३ ॥ दंभेननगरेनूनंसर्वान्वंचयसिस्वयम् ॥ इ
त्युक्त्वातेसमाजग्मुर्ग्रामेदर्शयितुंजनान् ॥ १४ ॥ उक्त्वानीत्वाचसर्वास्तेगतास्तत्रातिदुर्ज्जनाः ॥ दर्शयामासुरुद्विग्नंनंददासंचतां
मृताम् ॥ १५ ॥ निनिंदुर्दुर्ज्जनास्तत्रसज्जनामौनमास्थिताः ॥ नोचुः किंचिन्नंददासंपरावृत्यस्वकंगृहम् ॥ १६ ॥ अथतान्नंददा
सस्तुप्रोवाचातिप्रहृष्टवत् ॥ मयानघातितेयंचेत्यतद्रक्ष्याम्यहमृतम् ॥ १७ ॥ अत्रैतेसाक्षिणः संतिब्राह्मणाअतिधार्मिकाः ॥
तस्माद्भवंतोगच्छंतुश्रुत्वैकंवचनंमम ॥ १८ ॥ जीवयिष्यतिचेद्देतांरामोवत्सतरींप्रभुः ॥ तदानयासहाहंभोआगमिष्यामिमन्दिर
म् ॥ १९ ॥ नोचेद्यत्रगताचेयंतत्रयास्याम्यसंशयम् ॥ इतिश्रुत्वावचस्तस्यसर्वेग्राममुपागताः ॥ २० ॥ नंददासस्तुतत्रैववत्स

स

तय्याः समीपतः ॥ स्थित्वारामेतिमंत्रंवैभक्तिपूर्वंजजापह ॥ २१ ॥ ततोमध्याह्नसमयेप्रोक्तस्थौसाक्षुधातुरा ॥ श्रीरामकृपयावत्सा
चचारक्षेत्रजान्यवान् ॥ २२ ॥ चारयित्वाथतांरामदासःकृत्वाग्रतःस्वयम् ॥ समायातोऽथनगरेशिष्टब्राह्मणसन्निधौ ॥२३॥ तेदृष्ट्वा
तंप्रणम्योचुर्धन्यस्त्वंद्विजसत्तम ॥ त्वत्समोनास्तिकोऽप्यन्योभगवद्भक्तिमान्द्विजः ॥ २४ ॥ तेचदृष्ट्वातुतांवत्सांजीवितामतिविस्मि
ताः ॥ अधोमुखाः स्थितास्तूष्णींमहाशोकातुराइव ॥ २५ ॥ अथवत्सतरीसातुहुंभारावैः स्वमातरम् ॥ आह्वयंतीमुहुस्तस्यामा
ताश्रुत्वातुतद्ध्वनिम् ॥ २६ ॥ छित्वास्वबंधनंतत्रसमायाताथतत्क्षणात् ॥ गोस्वाम्यपिसमायातोगोपृष्ठेतुगतस्त्वरन् ॥ २७ ॥
दृष्ट्वावत्सतरींसागौः पाययामासवैस्तनम् ॥ तदागोस्वामिनंसर्वेपप्रच्छुः कथमत्रते ॥ २८ ॥ वत्सेयमागताविप्रब्रूहिसत्यंयथार्थतः ॥
इतिश्रुत्वावचस्तेषां गोस्वामीवक्तुमुद्यतः ॥ २९ ॥ अथांतरेसमायातोग्रामाधीशस्तुतत्रवै ॥ सोऽपिपप्रच्छतंविप्रंयथार्थंवदमेद्विज
॥ ३० ॥ तदाहविप्रोगोस्वामीसत्यमेवब्रवीम्यहम् ॥ एषावत्सतरीचास्यागोर्मृताममामन्दिरे ॥ ३१ ॥ तृतीयदिवसेपश्चाद्दिमांगेहा
त्तुचर्म्मकृत् ॥ तत्याजबहिरित्यंतज्जानेऽहंनात्रसंशयः ॥३२॥ गौरियंतुतदारभ्यहुंभारावैःसुदुःखदैः ॥ उद्वेजयंतीघासंवैनजग्रासक्षुधा
कुला ॥३३॥ अद्यवत्सारवंश्रुत्वात्रोटयित्वास्वबंधनम् ॥ आगतात्रततःपश्चादहमागतवानिह ॥३४॥ इतिश्रुत्वावचस्तस्यगोप्रभोस्तु
नराधिपः ॥ प्रणम्यनंददासंतुविससर्जगृहंप्रति ॥३५॥ तान्दुष्टान्ब्राह्मणान्सर्वान्नानाप्यचनराधिपः ॥ निंदयित्वाबहिश्चक्रेस्वराज्याद
तिकोपतः ॥३६॥ तदादिनंददासस्ययशोऽतीवबभूवह ॥ पूर्वस्मादप्ययंनंददासोदीनवदास्थितः ॥३७॥ श्रीरामंचिंतयन्नित्यंसाधुसेवा

परायणः ॥ यावज्जीवंस्थितस्तत्रमृतोरामांतिकंययौ ॥३८॥ इतिश्रीभगवद्भक्तिमाहात्म्येनंददासचरितंनामत्रिसप्ततितमः सर्गः॥७३॥
अथापरंप्रवक्ष्यामिमाहात्म्यंपरमाद्भुतम् ॥ अह्लदासस्यभक्तस्यभक्तेर्भक्तिविवर्धनम् ॥१॥ गंगाया उत्तरेकूलेब्रह्मावर्तसमीपतः ॥ अ
ह्लदासोमहानासीद्विष्णुभक्तोविमत्सरः ॥ २ ॥ आब्रह्मकीटपर्यंतंपश्यन्विष्णुंसनातनम् ॥ आजीवंब्रह्मसेवायांनिरतोद्विजसत्तमः ॥
॥ ३ ॥ एकदासतुभक्तोवैनैमिषारण्यमुत्तमम् ॥ तीर्थंगंतुंमनश्चक्रेनीत्वैकंशिष्यमुत्तमम् ॥ ४ ॥ चलितोनैमिषारण्यंकियद्दूरंगतोय
दा ॥ ततोमार्गेददर्शासावाम्रवृक्षवनंमहत् ॥ ५ ॥ निदाघघर्मतप्तांगोविशश्रामवनेतदा ॥ तस्यशिष्योददर्शैकंमहोच्चंवृक्षमुत्तमम् ॥
॥ ६ ॥ तस्योपरिस्थशाखायांफलान्यासन्महांतिवै ॥ पक्वानिपीतरक्तानिदृष्ट्वाशिष्योऽतिहर्षितः ॥७॥ अह्लदाससुवाचेदंस्वामिन्देह्य
स्यमेफलम् ॥ महांतंपीतरक्तंतुदृष्ट्वालुब्धंमनोमम ॥ ८ ॥ इति श्रुत्वावचस्तस्यशिष्यस्यसद्गुरुस्तदा ॥ अयाचतफलंतंवैशिष्यार्थंवन
रक्षकम् ॥ ९ ॥ श्रुत्वाऽह्लदासवचनंवनरक्षाकरोऽब्रवीत् ॥ अहोकश्चास्यशिरसिनरोगंतुमिहार्हति ॥ १० ॥ कदाचित्पतितस्त
स्मान्म्रियतेनैवसंशयः ॥ सतूपहासतःप्राहवनरक्षाकरोहसन् ॥ ११ ॥ त्वंतुसिद्धोऽसिभक्तोऽसिब्रह्मन्वृक्षमुत्तमम् ॥ सतेश्रुत्वावचो
भक्तनम्रोभूत्वार्पयिष्यति ॥ १२ ॥ सतूपहाससंयुक्तंश्रुत्वेतिवचनंगुरुः ॥ तमुवाचातिसंतुष्टःकिमसाध्यंजगत्प्रभोः ॥ १३ ॥ इत्यु
क्त्वातंतरुंविष्णुंहृदिमत्वाऽब्रवीद्वचः ॥ अहोभवानपिहरिर्महान्साधुस्वरूपवान् ॥ १४ ॥ परार्थंजन्मचादायतिष्ठसीहधरातले ॥ पत्रैः
पुष्पैःफलैर्मूलैरुपकर्ताजनानिह ॥१५॥ अतोऽयंबालकोदृष्ट्वात्वत्फलंनैवगच्छति ॥ याचतेमांफलंत्वत्तःकथमस्मैददाम्यहम् ॥ १६ ॥

तस्मात्तेयदिभोक्तृतदयास्याद्देहिबालके ॥ तदाचगमनंमेस्यादतस्त्वंतुप्रसीदमे ॥ १७ ॥
तदा ॥ नम्रीकृत्योर्ध्वगांशाखांतस्थौपक्वफलैर्मुदा ॥ १८ ॥ अर्हद्दासस्ततस्तंतुवनरक्षाकरंनरम् ॥ पप्रच्छभवतोवाक्यादेवंभूतो
बभूवह ॥ १९ ॥ अतःपरंफलान्यस्मैदेहियानीप्सितानिते ॥ इतिश्रुत्वावचस्तस्यवनरक्षाकरस्तदा ॥ २० ॥ साष्टांगंप्रणि
पत्याहस्वामिन्मेक्षम्यतामिह ॥ नचैवैतद्वनंसर्वंगृह्यतांयावदिच्छसि ॥ २१ ॥ इत्युक्तस्तेनविप्रेणवनरक्षाकरेणसः ॥ उवाच
गृह्यतांशिष्यंफलान्यस्यतरोस्त्वया ॥ २२ ॥ इतिश्रुत्वागुरोर्वाक्यंशिष्यस्तत्रफलानिसः ॥ पंचैवत्रोटयामासजग्राहस्वस्यवा
ससा ॥ २३ ॥ पुनराहार्हद्दासस्तुरसालत्वंसुखीभव ॥ पूर्ववत्तिष्ठबालोऽयंकृतपूर्णमनोरथः ॥ २४ ॥ अथतत्रवने
ह्यासन्येकेचवनरक्षकाः ॥ दृष्ट्वातदद्भुतंतूर्णंतदवोचुर्गृहेगृहे ॥ २५ ॥ श्रुत्वातद्वचनंसर्वेतदैवाजग्मुरुत्सुकाः ॥ ददृशुस्तेमहाश्चर्यं
वृक्षसन्नमनादिकम् ॥ २६ ॥ अथार्हद्दासश्चलितःशिष्यैःसार्द्धंत्वरान्वितः ॥ अनुयातास्ततस्तस्मैग्रामीणाअतिभक्तितः ॥ २७ ॥
स्थित्वैकत्रचतान्सर्वान्नमस्कृत्यविसृष्टवान् ॥ स्वयंतुनैमिषारण्यंजगामशिष्यसंयुतः ॥ २८ ॥ इत्येतत्कथितंपुण्यंभक्तेर्माहात्म्यमुत्तम
म् ॥ श्रद्दधानोनरःश्रुत्वामुच्यतेसर्वसंशयैः ॥ २९ ॥ इति श्रीभगवद्भक्तिमाहात्म्येअर्हद्दासचरितंनामचतुःसप्ततितमःसर्गः ॥
॥ ७४ ॥ अथापरंप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥ यस्यश्रवणमात्रेणकृष्णेभक्तिर्दृढाभवेत् ॥ १ ॥ श्रीरंगनाथोयश्चास्तिदक्षि
णेऽतीवविश्रुतः ॥ तत्समीपेबभूवैकावेश्यानामकलावती ॥ २ ॥ गीतनृत्यादिकुशलामोहिनीसर्वदेहिनाम् ॥ धनाढ्याऽतिथिभक्ताच

साधुसेवापरायणा ॥ ३ ॥एकदातद्गृहद्वारंदृष्ट्वास्फीतंसुसंस्कृतम् ॥ महानुभावश्चैकस्तुविद्वान्धर्मार्कुलोद्विजः ॥ ४ ॥ ब्राह्मणाश्रमइ
त्येवंज्ञात्वातत्रोपविष्टवान् ॥ अथदृष्ट्वाथसावेश्याविद्वांसमागतंद्विजम् ॥ ५ ॥ रत्नानिस्वर्णमुद्राश्चकृत्वारजतभाजने ॥ ब्राह्मणाग्रेनि
धायाथनत्वांजलिपुटास्थिता ॥ ६ ॥ अथविप्रस्तुतांदृष्ट्वाविनीतांददतींधनम् ॥ उवाचकाऽसिकल्याणिकस्यत्वंदयितावद ॥ ७ ॥
श्रुत्वेदंवचनंतस्यवारनारीवचोऽब्रवीत् ॥ स्वामिन्नहंतुदुर्भाग्यावेश्याऽस्मिन्नगरेस्थिता ॥ ८ ॥ प्रतिश्रुत्यवचस्तस्यामहाभागवतोऽब्र
वीत् ॥ बालेनाहंतवाहामिधनमेतन्नसंशयः ॥ ९ ॥ इत्थमेवहितुष्टोऽस्मीत्युक्त्वागंतुमनाअभूत् ॥ ततोवेश्याप्रणम्याहकृतांजलिपुटा
द्विजम् ॥ १० ॥ब्रह्मन्निदंधनंतुभ्यंमयासंकल्पितंहृदि ॥ कथंनेष्यामितद्ब्रूहिकिंचैकंप्रार्थयाम्यहम् ॥ ११ ॥ भवादृशानांविप्राणां
नयोग्यायद्यहंविभो ॥ तदाकथंमेप्रीयेतभगवान्पुरुषोत्तमः ॥ १२ ॥ इतिश्रुत्वावचस्तस्याद्विजोवचनमब्रवीत् ॥ त्वयितुष्टोऽस्तिश्री
[illegible] ॥ वेश्यापित्वंशुभाचारासाधुसेवापरायणा ॥ अतोजानामितेतुष्टोवर्ततेजगदीश्वरः ॥ १४ ॥ इदंतुयद्ध
नमह्यंदत्तंतस्यतुशोभनम् ॥ कारयित्वाचमुकुटंश्रीरंगायसमर्पय ॥ १५ ॥ इत्युक्तवंतंतंविप्रंवेश्याप्राहकृतांजलिः ॥ भवानेव
नगृह्णाति श्रीरंगश्चकथंस्पृशेत् ॥ १६ ॥ इति श्रुत्वावचस्तस्याःपुनर्विप्रउवाचताम् ॥ भक्तिप्रियोऽसौलोकेषुनिरपेक्षोग्रहीष्य
ति ॥ १७॥ इत्युक्त्वासगतोविप्रोग्रामांतरमुदारधीः ॥ सापिवेश्यातिभक्त्यावैस्वर्णकारमथाह्वयत् ॥ १८ ॥ अन्यान्यपिसुव
र्णानिदत्त्वातस्मिन्सुवर्णके ॥ मुकुटंकारयामाससरत्नैश्चखचितंशुभम् ॥ १९ ॥ एकस्मिन्दिवसेवेश्यामुकुटंरत्नमंडितम् ॥ श्रीरंगस्वा

मिनेदातुंमनश्चक्रेतदानिशि ॥ २० ॥ तस्यामेवतुश्रीरंगःस्वप्नेसेवकमब्रवीत् ॥ प्रातरेष्यतिसावेश्यादातुंमेमुकुटंशुभम् ॥ २१ ॥
दृष्ट्वामांपुष्पिणीसावैभविष्यतिनसंशयः ॥ स्वहस्तादेवमुकुटंमस्तकेमेयथार्पयेत् ॥ २२ ॥ तथात्वयाप्रकर्तव्यंप्रीतयेममपूज
क ॥ संदेहोऽत्रनकर्त्तव्यःसाममातीवदुर्ल्लभा ॥ २३ ॥ इतिदृष्ट्वातुस्वप्नंसपूजकःप्रातरुत्थितः ॥ उक्त्वान्येभ्यश्चविप्रेभ्यःपूजां
कर्तुंमठेगतः ॥ २४ ॥ अथसावारयोषापिस्नात्वाशुक्लांबरस्रजा ॥ शुक्लचंदनलिप्तांगीमुकुटंरौप्यभाजने ॥ २५ ॥ कृत्वाकरे
णचादायदासीभिर्बंधुभिःसह ॥ जगामसामठद्वारिमहाभक्तिसमन्विता ॥ २६ ॥ दृष्ट्वातांपूजकःसत्यंरात्रिस्वप्नममन्यत ॥
आगत्यतामुवाचाथसमागच्छभयंजहि ॥ २७ ॥ तवाज्ञावर्ततेविष्णोर्मुकुटंदातुमुत्तमम् ॥ धन्यासित्वंयतोभक्त्याएवंप्रीतोऽस्तिवैह
रिः ॥ २८ ॥ इतिश्रुत्वावचस्तस्यपूजकस्यचसापुनः ॥ नमस्कृत्यजगामांतर्मठस्यमुदितातदा ॥ २९ ॥ दृष्ट्वाश्रीरंगनाथंसामहा
नंदेममज्जह ॥ रजस्वलातदैवाभूद्वेश्यातीवचलज्जिता ॥ ३० ॥ तस्थौतत्रैवसंत्रस्तापूजकस्तांतदाऽब्रवीत् ॥ किंतिष्ठसिशुभेगच्छ
देह्यस्मैमुकुटंशुभम् ॥ ३१ ॥ श्रुत्वेदंप्राहसावेश्यास्प्रष्टुंनार्हास्म्यहंहरिम् ॥ दर्शनादेवदेवस्यजातास्मिचरजस्वला ॥ ३२ ॥ इतिश्रुत्वाव
चस्तस्याःपूजकःप्राहसस्मितः ॥ नतेदोषोऽस्तिसुश्रोणिदेह्यस्मैमुकुटंस्वयम् ॥ ३३ ॥ इतिश्रुत्वापिसावेश्यासंस्थाप्यमुकुटंमठे ॥
बहिरागत्यसुस्नातावासोऽन्यत्परिधायसा ॥ ३४ ॥ मठेगत्वाथमुकुटंनीत्वारंगसमीपतः ॥ दातुंमुकुटमारेभेनममौमस्तकेहरेः ॥ ३५ ॥
प्रतिमायाःस्वपंत्यास्तुमस्तकंचाल्पसंस्थितम् ॥ तदासाचिंतितावेश्याकिमर्थंमुकुटंकृतम् ॥ ३६ ॥ एवंसंचिंत्यसुदतीतस्थौसभ

गवांस्तदा ॥ उत्थाप्यतंस्वशिरसिजग्राहमुकुटंशुभम् ॥ ३७ ॥ पश्यतांसर्वलोकानांमहाश्चर्यमभूदिह ॥ अथसावारयोषापिधन्या
हर्षाश्रुलोचना ॥ ३८ ॥ ननर्तगीतंगायंतीचानाय्यस्वगृहाद्धनम् ॥ दीनानाथदरिद्रेभ्योददौश्रीरंगतुष्टये ॥ ३९ ॥ तुष्टुवुस्तांवार
योषांधन्याधन्येतिवादिनः ॥ सावेश्याविजहौस्वीयंकर्मश्रीरंगसन्निधौ ॥ ४० ॥ कृत्वाकुटींसुवासाथभुक्त्वाकिंचिद्दयान्वितम् ॥ नृ
त्यगीतैश्चसततंतोषयामासवैहरिम् ॥ ४१ ॥ एवंभक्तिपरावेश्यात्यक्त्वाकर्मतुलौकिकम् ॥ श्रीरंगोपासनांकृत्वासंप्राप्यहरि
मंदिरम् ॥४२॥ जातिभ्रष्टोमहापापीकृतघ्नोगोघ्नएवच ॥ भक्त्याहरिंव्रजेदेवसत्यंसत्यंनसंशयः ॥४३॥ इति श्रीभगवद्भक्तिमाहात्म्ये
वेश्याभक्तिचरितंनामपंचसप्ततितमःसर्गः ॥ ७५ ॥ ॥ छ ॥ अथापरंप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥ यस्यश्रवणमात्रेणपर
मांभक्तिमाप्नुयात् ॥ १ ॥ पांचालेषुबभूवैकोराजाभक्तिसमन्वितः ॥ विष्णुपूजापरोनित्यंनामोच्चारणतत्परः ॥ २ ॥प्रातरारभ्यसायांतं
सायादिप्रातरंततः ॥ वैष्णवेभ्योधनंनित्यंददौनान्यत्रकुत्रचित ॥ ३ ॥ अन्यंजनंविष्णुभक्त्यानमतिस्मतुभक्तितः ॥ चौरोवापति
तोवापिभक्तरूपधरोहियः॥ ४ ॥ सममन्यतभक्त्यावैददौतस्मैयथेप्सितम् ॥ इति तस्यव्रतंराज्ञोदृढंज्ञात्वाजनास्तदा ॥५॥ स्तुवंत्यश्चा
तिनिंदंत्यआसंस्तस्यप्रजास्तुवै ॥ एकदातस्यक्रीडार्थभंडायेनगरेस्थिताः ॥६॥ तेसर्वेमंत्रयामासुर्वंचयित्वावयंनृपम् ॥ ग्रहीष्यामो
धनंचेतिनिश्चित्यैकत्रसंस्थिताः ॥ ७ ॥ कृत्वावैष्णवरूपंतेमालातिलकभूषितम् ॥ हरिनामवदंतस्तुराजद्वारिसमागताः ॥ ८ ॥ ऊचु
र्दौवारिकंब्रूहिराजानंवयमागताः ॥ श्रुत्वातेषांवचोद्वारपालोराजसमीपतः ॥ ९ ॥ राजन्भक्ताःसमायाताद्वारेतिष्ठंतिसांप्रतम् ॥ श्रुत्वा

तद्वचनंराजाययौतत्रत्वरान्वितः ॥ १० ॥ दृष्ट्वातान्वैष्णवान्भक्त्याप्रणम्यसतुभूपतिः ॥ उवाचयूयंधन्याश्चविरक्ताविचरंतिहि ॥
॥ ११ ॥ पुत्रदारधनादीनांमोहंत्यक्त्वानिराकुलाः ॥ कुतआगच्छतक्वतगंतुमिच्छथकुत्रवै ॥ १२ ॥ श्रुत्वाराज्ञोवचस्तेऽपिप्रोचुःकृ
त्रिमवैष्णवाः ॥ द्वारकायाःसमायाताअयोध्यांगंतुमुत्सुकाः ॥ १३ ॥ त्वांश्रुत्वावैष्णवंभूपंद्रष्टुकामाइहागताः ॥ इतिश्रुत्वावचस्तेषां
राजोवाचकृतांजलिः ॥ १४ ॥ स्नात्वाभुक्त्वाद्यवसथगमिष्यथदिनांतरं ॥ श्रुत्वाराजवचःसर्वेशंकिताभंडवैष्णवाः ॥ १५ ॥ जानीया
दथचेद्राजागंतव्यंचततोऽधुना ॥ इतिनिश्चित्यराजानमाहुःसर्वेत्वरान्विताः ॥१६॥ इदानीमेवगच्छामोराजन्स्थातुंनशक्नुमः ॥ इति
श्रुत्वावचस्तेषांराजावस्त्रैर्धनैर्मुदा ॥ १७ ॥ तोषयामासतान्सर्वान्रत्नैश्चविविधैरपि ॥ अथसर्वंगृहीत्वातेभंडाराजाग्रतस्तदा ॥ १८ ॥
भंडत्वंस्वंदर्शयंतोननृतुश्चापिपूर्ववत्॥दृष्ट्वाराज्यपिराजासनचुकोपातिभक्तिमान् ॥ १९ ॥ दृष्ट्वातान्भक्तरूपान्वैनमश्चक्रेविसृज्यवै ॥
अथांतःपुरमायातोराजातेऽप्यथभंडकाः ॥ २० ॥ राज्ञायन्निश्चितायेतंभक्तास्तस्माच्चुतेऽपिवै ॥ तत्क्षणादभवन्सर्वेविरक्ताःस्त्रीसुतादिषु
॥२१॥ राजदत्तंधनंतद्वैदत्त्वाविप्रेभ्यएवते ॥ दिशोदशगताःसर्वेचिंतयंतोहरिंमुदा ॥२२॥तेऽपिजातामहाभक्ताभक्तिनिश्चयतोऽधमाः॥
दृष्ट्वेदंपरमाश्चर्यंसर्वेमंत्रिपुरोगमाः ॥ २३ ॥ राजानंचाप्यमन्यंतसाक्षाद्विष्णुंसनातनम् ॥ राजापिराज्यंपुत्रायदत्त्वातेश्रीहरिंस्मरन् ॥
॥ २४ ॥ जगामपरमंधामयोगिनामपिदुर्लभम् ॥२५॥ इतिश्रीभगवद्भक्तिमाहात्म्येराजभक्तिचरितंनामषट्सप्ततितमःसर्गः॥७६॥छ॥
अथापरंराजभक्तेर्माहात्म्यंपरमाद्भुतम् ॥ वक्ष्यामिभक्तिजनकंसर्वपापप्रणाशनम् ॥ १ ॥ आसीद्राजामहाभक्तःसततंरामनाम

तत ॥ जजापह्लदयेबाह्येकदाचिदपिनैवसः ॥ २ ॥ कीदृशीभक्तिरित्येतन्नजानातिकथंचन ॥ अंतर्भक्तस्यतस्याथपत्नीभक्तिमतीस
ती ॥ ३ ॥ चिंतयामाससततंपतिःस्याद्भक्तिमान्कथम् ॥ अंतर्भक्तस्यतस्यैवंराज्ञोभक्तिमजानती ॥४॥ एवंचिंतापरासाध्वीशयानंस्व
पतिंदिवा ॥ अवेक्ष्यमाणाशय्यायांजाग्रतीचिंतितास्थिता ॥ ५ ॥ अथपत्युर्मुखाद्राज्ञीसीतारामेतिशुश्रुवे ॥ तदैवोत्थायविप्रेभ्योदाप
यामासभूरिशः ॥ ६ ॥ धनानिवरवस्त्राणिरत्नानिविविधानिच ॥ वादयामासवाद्यानिमहामांगलिकानिच ॥७॥ अथवाद्यादिनिर्घो
षैरुत्थितोनृपतिस्तदा ॥ पत्नींपप्रच्छकिमिदमकांडेतांडवादिकम् ॥८॥ कस्यपुत्रोऽद्यजातोऽस्तिभ्रातुस्तेवासुतस्यवा॥इतिपत्युर्वचःश्रु
त्वाराज्ञीप्राहातिहर्षिता ॥९॥ नमेभ्रातुर्नपुत्रस्यपुत्रोजातोमहाभुज ॥ शृणुनाथोत्सवस्यास्यकारणंकथयामिते ॥१०॥ त्वन्मुखान्नैवरा
मस्यनामाश्रौषंकदाप्यहम् ॥ तस्मान्नाथातिखिन्नाहंजानामित्वामवैष्णवम् ॥ ११ ॥ उपदेष्टुंनशक्नोमिगुरुरेकः पतिःस्त्रियाः॥कथंतेहृ
दिभक्तिःस्यादितिचिंतापरायणा ॥१२॥ साचाद्याहंत्वत्समीपेजाग्रतीशयनेस्थिता ॥ सुतस्यतववक्त्रात्तुसीतारामेतिनिर्गतम् ॥१३॥
तदाश्रुत्वातुमुदिताजाताहंहृदयेतव ॥ वर्ततेश्रीहरिश्चेतिज्ञात्वासर्वंमयाकृतम् ॥ १४ ॥ दानादिब्राह्मणेभ्यश्चदत्तानिविविधानिच ॥
त्वमप्युत्तिष्ठविप्रेभ्योदेहिवित्तानिभूरिशः ॥१५॥ इतिश्रुत्वाप्रियावाक्यमुवाचसचभूपतिः ॥ यत्कृतंसुकृतंदेवित्वयिनास्त्यत्रसंशयः ॥
॥ १६ ॥ परंतथणमद्वाक्यंश्रुत्वाकुरुयथोचितम् ॥ अद्याहंनैवजीवामिसत्यमेतन्नसंशयः ॥ १७ ॥ सीतयासहितोरामःस्थितोमद्धृद
याकल ॥ अंतर्भक्त्यातुसंपूज्यकृतार्थोऽहंस्थितःप्रिये ॥१८॥ गतेतस्मिन्बहिर्मोसत्यंमरिष्येचनसंशयः ॥ इत्युक्त्वाहूयनृपतिर्मंत्रिणःपुत्र

मुत्तमम् ॥१९॥ उक्त्वासर्वमशेषेणदत्त्वाराज्यंसुतायवै ॥ ध्यात्वासीतापतिंचित्तेनृपोऽगात्परमपदम् ॥ २० ॥ तत्पत्नीतुमहाभागाब
भूवसहगामिनी ॥ दृष्ट्वैतत्परमाश्चर्य्यंसर्वेविस्मयमागताः ॥ २१ ॥ एवमंतःस्थिताभक्तिःसर्वेषांहितकारिणी ॥ इतिज्ञात्वाजनैःकार्य्या
भक्तिरेवसुखार्थिभिः ॥ २२ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येंऽतर्भक्तिराजचरितंनामसप्तसप्ततितमःसर्गः ॥ ७७ ॥ छ ॥ अथैकोमथुराग्रा
मेबभूववैष्णवोत्तमः ॥ एकाकीगतसंगस्तुभिक्षाशीदृढभक्तिमान् ॥ १ ॥ तस्यैवंवर्त्तमानस्यकुटीद्वारंसमागतः ॥ कृतोपवीतोविप्रस्य
पुत्रोबंधुविवर्जितः ॥ २ ॥ तंदृष्ट्वावैष्णवस्यासीन्महतीहृदयेदया ॥ कोऽसीत्युवाचतंबालंकथमत्रैवतिष्ठसि ॥ ३ ॥ श्रुत्वैतत्तस्यवचनं
बालःप्राहातिहर्षितः ॥ नाथाहंद्विजपुत्रोऽस्मिपितृमातृविवर्जितः ॥४॥ बाल्येएवमृतौतौतुग्रामीणैरस्मिपालितः ॥ दुर्भिक्षसमयेचात्र
त्वामहंशरणंगतः ॥ ५ ॥ इतिश्रुत्वावचस्तस्यबालस्यातिदयान्वितः ॥ आनीयस्वगृहेतंतुपुत्रतुल्यमवैक्षत ॥ ६ ॥ ज्ञात्वात्ममरणं
किंचिदाहूयब्राह्मणंगुरुम् ॥ उवाचाहंमरिष्येऽद्यशिष्योमेऽत्रनवर्तते ॥ ७ ॥ तावद्देतच्छरीरंभोरक्षणीयमिहैवमे ॥ आगतेमम
शिष्येतुवक्तव्यंवचनंमम ॥ ८ ॥ अथापिहरिभक्तिंचेन्ममशिष्यःकरिष्यति ॥ जीविष्यामितदैवाहमितिशिष्यंवदिष्यसि ॥
॥ ९ ॥ इत्युक्त्वातंद्विजंस्वामीममारदैवयोगतः ॥ अथापराह्णेशिष्योऽपिसमायातोऽतिभक्तिमान् ॥ १० ॥ दृष्ट्वामृतंगुरुंतत्र
निपपातशुचार्दितः ॥ रुरोदचभृशंतस्मैसविप्रोवाक्यमब्रवीत् ॥ ११ ॥ अहोऽत्रपश्यतोमेऽद्यमृतोऽयंवैगुरुस्तव ॥ यदुक्त्वा
शृणुतत्सर्वंयथावत्कथयामिते ॥ १२ ॥ इतिश्रुत्वावचस्तस्यशिष्यःप्राहकृतांजलिः ॥ वदविप्रगुरोर्वाक्यंकिमुक्त्वामेगुरुर्मृतः ॥ १३ ॥

तदोवाचसविप्रस्तेगुरुणोक्तंशृणुष्वतत् ॥ ममशिष्यायवक्तव्यंहरिभक्तिंकरोतिचेत् ॥ १४ ॥ जीवितःस्यांतदाहंतुतस्माद्भक्तिंकु
रुष्वभोः ॥ इतिशिष्योवचःश्रुत्वातत्रैवसंस्मरन्हरिम् ॥ १५ ॥ जजापपरमंमंत्रमेकाग्रहृदयःस्थितः ॥ रामेतिशिष्यस्तत्कालंजीवित्वा
चोत्थितोगुरुः ॥ १६ ॥ दृष्ट्वाशिष्यंरामनामजपंतंहर्षितोगुरुः ॥ उवाचशिष्यंवत्सेदंत्वंपश्यममजीवनम् ॥१७॥ एतादृशीहरेर्भक्तिर्भ
वतीत्यवधारय ॥ तस्मात्कुरुभवान्भक्तिंकुर्वन्निवससर्वदा ॥१८॥ तवभक्तिप्रसादेनजीवितोऽहंनसंशयः ॥ परंत्वहंनसंसारेवस्तुमिच्छा
मिपुत्रक ॥ १९ ॥ त्वमत्रैवहरेर्भक्तिंकुर्वन्निवससर्वदा ॥ एतद्वक्तुमहंवत्सस्वर्गलोकादिहागतः ॥ २० ॥ उक्त्वैवंशिष्यमात्मीयंसममार
गुरुस्तदा॥ततःशिष्योगुरुंतंतुसंचस्कारविधानतः ॥२१ ॥ संस्कृत्यविधिवत्तस्यकृत्वाचैवौर्ध्वदैहिकम् ॥ स्वयंतत्राश्रमेतस्थौविष्णुभ
क्तिपरायणः ॥ २२ ॥ तत्रैकाश्रममध्येत्ववस्थितःसतुचिंतयन् ॥ परमात्मानमाजीवमंतेप्रापपरंपदम् ॥२३॥ इतिश्रीभगवद्भक्तिमाहा
त्म्येगुरुभक्तिचरितंनामाष्टसप्ततितमःसर्गः ॥ ७८ ॥ ७ ॥ अथवक्ष्येमहाश्चर्यंभक्तिमाहात्म्यमुत्तमम् ॥ रामानुजस्यशिष्य
स्तुदेवाचार्य्यस्तथापरः ॥ १ ॥ हर्य्यानंदस्तथाभक्तोराधानंदेतिसंज्ञकः ॥ महामहिमसंज्ञस्तुतुर्य्यःशिष्योबभूवह ॥ २ ॥ राघवा
नंदशिष्यस्तुरामानंदोऽतिवैष्णवः ॥ शांतोदांतोदयायुक्तःश्रीकृष्णसेवनेरतः ॥ ३ ॥ शापानुग्रहकर्तासौमहाभक्तोबभूवह ॥ तस्यशि
ष्यामहाभक्तावैष्णवालोकविश्रुताः ॥ ४ ॥ भक्तिभावाद्भवांभोधेस्तारयामासवैजनान् ॥ कबीरोनृहरिश्चैवराजापीपाइतिश्रुताः ॥५ ॥
रविदासोभावानंदोधनाचसधनादयः ॥ तत्रादौरविदासस्यकथांवक्ष्येमनोरमाम् ॥ ६ ॥ यांश्रुत्वातुद्विजाःसर्वेविष्णुभक्ताभवंतिहि ॥

पूर्वजन्मनिशिष्योहिरामानंदस्यभक्तिमान् ॥ ७ ॥ ब्रह्मचारीस्थितस्तस्यगुरोःसेवापरायणः ॥ रामानंदस्यनियमइतिगेहात्तुभिक्षि
तम् ॥ ८ ॥ अन्नमल्पंसमानीयभोक्तव्यंहरयेऽर्पितम् ॥ एवमेवसशिष्यायप्राहवैब्रह्मचारिणे ॥ ९ ॥ सोऽपिशिष्यस्तथाकुर्वन्या
चित्वाप्रतिमंदिरम् ॥ आदायान्नंशुचिपक्वागुरवेतन्न्यवेदयत् ॥ १० ॥ गृहीत्वातद्गुरुर्भक्त्याश्रीकृष्णायनिवेद्यच ॥ रामानं
दोऽथबुभुजेसहशिष्येणभक्तिमान् ॥ ११ ॥ एवंगतेषुकालेषुकदाचिद्दैवयोगतः ॥ ब्रह्मचारीगतोभिक्षामागतंचातिवर्षणम् ॥
॥ १२ ॥ नशशाकप्रचलितुंब्रह्मचारीतदंतिके ॥ नास्तिकस्यगृहंदृष्ट्वातद्द्वारिसमुपागतः ॥ १३ ॥ ज्ञातस्तेनचशिष्योऽसौरामानं
दस्यभक्तिमान् ॥ उवाचतस्मैसुगतोनाद्यवृष्टिर्गमिष्यति ॥ १४ ॥ तस्माद्गृहाणमत्तोऽन्नंगत्वाभोजयवैगुरुम् ॥ इतिश्रुत्वाव
चस्तस्यतस्मैप्राहगुरोर्व्रतम् ॥ १५ ॥ नस्वीचक्रेतस्यभिक्षांवृष्ट्यभावंसमैक्षत ॥ एवंगतेतुमध्याह्नेवृष्ट्याधिक्येऽतिदुर्दिने ॥ १६ ॥
मुहुरुक्तोनास्तिकेनस्वीचक्रेऽन्नानितस्यसः ॥ गृहीत्वान्नंसमागत्यतंतुपक्त्वात्वरान्वितः ॥ १७ ॥ अन्नंसमर्पयामासगुरवेविष्णु
हेतवे ॥ गुरुरन्नंगृहीत्वातुसंप्रोक्ष्यविधिवच्छुचिः ॥ १८ ॥ ध्यात्वाकृष्णंसमर्प्यान्नंददर्शहृदिनोहरिम् ॥ पुनःसमाधायमनोदध्यौ
भक्त्याहरिंमुहुः ॥ १९ ॥ यदापूर्ववदेवासीच्छिष्यंप्राहातिविस्मितः ॥ कुतोऽन्नमिदमानीतंनगृह्णातिहरिःकथम् ॥ २० ॥ इति
श्रुत्वावचस्तस्याशिष्यःप्रोवाचसत्वरम् ॥ अद्यवृष्टिभयादेवनास्तिकस्यगृहेगतः ॥ २१ ॥ बहुकालंस्थितस्तत्रननिवृत्तंतुवर्षणम् ॥
ततोमुहुश्चार्थयित्वानास्तिकोऽन्नंददौमम ॥ २२ ॥ तदेवान्नमिहानीयपक्त्वातुभ्यंसमर्पितम् ॥ रामानंदस्तुतच्छ्रुत्वामहाक्रोध

वशंगतः ॥ २३ ॥ शशापतंप्रियंशिष्यंत्वंचर्मकारोभवेतिवै ॥ श्रुत्वाघोरंगुरोर्वाक्यंब्रह्मचार्य्यब्रवीद्वचः ॥ २४ ॥ प्रणम्यतंगुरुंभक्त्या
प्रार्थयन्करुणामयम् ॥ चर्मकारगृहेजन्मभविष्यतिनसंशयः ॥ २५ ॥ तत्रापिभवतोभक्तिर्दृढाभूयान्ममप्रभो ॥ किंचास्मिन्नग
रेचाहंजनिष्यामिनसंशयः ॥ २६ ॥ चर्मकारगृहेजातस्तवशापाद्दयानिधे ॥ नपास्यामिस्तनंमातुस्तवमंत्रंविनाप्रभो ॥ २७ ॥
तस्मात्त्वंसमुत्पन्नंमयिश्रीमत्कृपानिधे ॥ आगत्यमंत्रंदास्यामीत्येवंदेहिवरंमम ॥ २८ ॥ इत्युक्त्वाब्रह्मचारीतुबहिर्गत्वास्थितोऽ
भवत् ॥ रामानंदोऽतिचिंतार्तोजगर्हात्मानमात्मना ॥ २९ ॥ अथसब्रह्मचारीतुमृतोयमपुरंगतः ॥ तत्रास्यपुण्यनिचयंकिंचित्या
पमितिब्रुवन् ॥ ३० ॥ चित्रगुप्तउवाचैनंकिंभोक्ष्यतिपुरा भवान् ॥ तदोवाचसदृष्टस्तुपूर्वंभोक्ष्यामिपातकम् ॥ ३१ ॥ यमरा
जइतिश्रुत्वाप्राहतंब्रह्मचारिणम् ॥ चर्मकारकुलेजन्मप्राप्यपुण्यबलात्पुनः ॥ ३२ ॥ हरिभक्तिंसमासाद्यगमिष्यस्युत्तमांगतिम् ॥
चर्मकारकुलेजन्मप्राप्यपुण्यबलात्पुनः ॥ ३३ ॥ महागुरुप्रसादेनतरिष्यसिभवार्णवात् ॥ इत्युक्तस्तंयमंमूर्ध्नानमक्षणमेवसः
॥ ३४ ॥ उदरेचर्मकारिण्याःसमायातोविमोहितः ॥ नवमासंस्थितस्तत्रदशमेसमुपस्थिते ॥ ३५ ॥ संप्राप्यचर्मकारिण्यागृहेजन्म
गुरुंस्मरन् ॥ अथतत्रददौदुग्धंमाताजग्राहनैवतत् ॥ ३६ ॥ परंतुसुदृढोऽप्यग्र्योराजपुत्रइवाभवत् ॥ सर्वैरेवतदाज्ञातंजीविष्यतिशि
शुर्नहि ॥ ३७ ॥ मातातस्यचदुःखार्ताप्रपच्छरुदतीजनान् ॥ एवंगतमहोरात्रंद्वितीयेदिवसेपुनः ॥ ३८ ॥ दृष्टोबालस्तुताहग्वै
नग्लानिंप्रापकिंचन ॥ एवमाश्चर्य्यभूतंहिश्रुत्वासर्वेपुरस्थिताः ॥ ३९ ॥ समागत्यचतंद्रष्टुंजग्मुर्नृपसुतप्रभम् ॥ अथशुश्रावतद्वृ

त्तंरामानन्दोदयान्वितः ॥ ४० ॥ शिष्यमेकंसमादायचर्मकारगृहंययौ ॥ तत्रबालगृहेगत्वासर्वान्निष्कास्यदूरतः ॥ ४१ ॥
तस्यबालस्यकर्णेसरामेतिप्रददौमनुम् ॥ संप्राप्यराममंत्रन्तुप्रजहाससबालकः ॥ ४२ ॥ उवाचगुरुरप्येवंपिबदुग्धंसुखीभव ॥ इत्यु
क्त्वामोहवशगःस्मृत्वातंब्रह्मचारिणम् ॥ ४३ ॥ रामानन्दोरुदंस्तस्माद्गेहात्तूर्णंबहिर्ययौ ॥ अथबालस्यमातातुपुनरागत्यबालकम्
॥ ४४ ॥ क्रोडेकृत्वाददौस्तन्यंसपपौक्षुधितोयथा ॥ दृष्ट्वातत्परमाश्चर्य्यंजहर्षचर्मकारिणी ॥ ४५ ॥ अमन्यतगतक्लेशोरामानंद
प्रसादतः ॥बभूवोपानहौकृत्वाविक्रीयचयथारुचि ॥ ४६ ॥ तन्मूल्यंप्रददौमात्रेरविदासोमहामनाः ॥ प्राप्तेचैवाष्टमेवर्षेपत्नीश्रीकर
णेक्षमः ॥ ४७ ॥बभूवोपानहौकृत्वाविक्रीयचयथारुचि ॥ तन्मूल्यंप्रददौमात्रेसाधुभ्योऽपिददौमुदा ॥ ४८ ॥ अथकालेनतन्मातापि
तातद्भ्रातरश्चतम् ॥ स्वाश्रमात्तंपृथक्चक्रुर्वृथादत्तेह्युपानहौ ॥ ४९ ॥ रविदासोऽपिबंधुभ्योपृथग्भूयस्थितः क्वचित् ॥ भिक्षामादाय
बुभुजेनिर्मायोपानहौमुदा ॥ ५० ॥ दीनानाथदरिद्रेभ्योदत्त्वाह्यदिहरिंस्मरन् ॥ एकदासतुभिक्षायामटन्ग्रामांतरंगतः ॥ ५१ ॥ शा
लग्रामशिलांमार्गेसंप्रापशुभलक्षणाम् ॥ तामानीयातिमुदितोरामभक्तिपरायणः ॥ ५२ ॥ पूजयामासभवनेसंस्थाप्यातिप्रयत्नतः ॥
अंगणेतुलसीवृक्षंरोपयामासभक्तितः ॥५३॥ अथतत्याजस्वंकर्म्मबभूवातिववैष्णवः ॥ एकदातस्यभवनेसिद्धःसाधुः समागतः॥५४॥
रविदासस्यचरितंदृष्ट्वासोऽभूद्दयापरः ॥ प्रातरुत्थायसंपूज्यशालग्रामशिलांमुदा ॥ ५५ ॥ जगामभिक्षामानेतुंसायंकालेसमागतः ॥
संपूज्यातिथयेदत्त्वास्वयंभुंक्तेस्मनित्यशः ॥ ५६ ॥ एवंदृष्ट्वातितुष्टोऽभूत्सिद्धोनीत्वारहःस्थले ॥ रविदासमुवाचेदंशृणुमेवचनंहि

तम् ॥ ५७ ॥ एषस्पर्शमणिर्मेऽस्तिदीयतेत्वंगृहाणभोः ॥ वर्षमेकंतुस्वर्णानिकारयानेनभूरिशः ॥ ५८ ॥ आगमिष्याम्यहंपश्चाद्ग्रही
ष्यामिस्वकंमणिम् ॥ इत्युक्तस्तेनसिद्धेनरविदासोऽब्रवीद्वचः ॥ ५९ ॥ शालग्रामशिलाप्रांतेस्थापयित्वाव्रजप्रभो ॥ इत्युक्तः सगतः सि
द्धोरविदासोऽपिपूर्ववत् ॥ ६० ॥ भिक्षाशीदृढभक्तिश्चनपस्पर्शमणिंतुतम् ॥ विचार्य्यमनसानूनंधनंलोकेमदप्रदम् ॥ ६१ ॥ तस्माद्ग्रा
मेतियन्नामतत्सर्वस्वंममाव्ययम् ॥ एवंगतेसमस्तेऽब्देसिद्धस्तत्रागतः पुनः ॥ ६२ ॥ ददर्शतादृशंजीर्णंरविदासस्यमंदिरम् ॥ मनसा
चिंतयामासनास्यभाग्यंकरोमिकिम् ॥ ६३ ॥ तथाप्यस्योपकारंतुस्थित्वाकिंचित्करोम्यहम् ॥ इत्युक्त्वारविदासस्यसमीपेससमा
गतः ॥ ६४ ॥ उवाचकिमिदंसाधोदुःखमस्त्येवपूर्ववत् ॥ श्रुत्वातस्यवचः साधोरविदासोऽब्रवीन्मुदा ॥ ६५ ॥ नमेऽस्तिदुःखमधुना
नासीद्वैपूर्वमप्यहो ॥ त्वमस्मिन्खलुसंसारेदयावानसिवैष्णवः ॥ ६६ ॥ अतः सर्वाणिभूतानिदुःखितान्येवपश्यसि ॥ आगच्छेमंम
णिंस्वीयंगृहाणपूर्ववत्स्थितम् ॥ ६७ ॥ इत्युक्तः सतदागत्यशिलाग्रंतंददर्शह ॥ जग्राहोत्थाप्यसमणिंरविदासमुवाचह ॥ ६८ ॥ अहोकिय
द्दिनंसाधोस्थास्यामितवमंदिरे ॥ रविदासइति श्रुत्वाप्राहतंविनयान्वितः ॥ ६९ ॥ तवैवेदंगृहंनाथसनाथंकुरुमांविभो ॥ इतिश्रुत्वास्थि
तस्तत्रसोऽपिसिद्धोऽतिवैष्णवः ॥ ७० ॥ निर्मायकनकंनित्यंरविदासस्यमंदिरे ॥ कारयामासपूजार्थंविष्णोर्मंदिरमप्यसौ ॥ ७१ ॥ शालग्रा
मशिलांतत्रस्थापयामासभक्तितः ॥ रविदासस्तुभिक्षित्वाददौचबुभुजेस्वयम् ॥ ७२ ॥ एवंतत्रसमाजोऽभूद्वैष्णवानांनिरंतरम् ७३ ॥ ॥ ७ ॥
इति श्रीभगवद्भक्तिमाहात्म्येरविदासभक्तचरितंनामैकोनाशीतितमःसर्गः ॥ ७९ ॥ अथतत्रस्थितायेवैब्राह्मणाःक्षत्रियावि

शः ॥ शूद्राश्चापिचतेसर्वेगत्वाराजानमब्रुवन् ॥ १ ॥ रविदासश्चर्म्मकारोग्रामेऽस्मिन्नृपसत्तम ॥ शालग्रामशिलांगेहेसंस्थाप्यार्च्च
यतिस्वयम् ॥ २ ॥ इतिश्रुत्वावचस्तेषांराजाचुक्रोधवैभृशम् ॥ तत्कालंरविदासंतुसमानीयचतर्जयन् ॥ ३ ॥ किंकरोषिमहामूर्ख
शालग्रामशिलार्चनम् ॥ इदानीमेवतांदेहिब्राह्मणायममाज्ञया ॥ ४ ॥ इतिश्रुत्वावचस्तस्यरविदासोऽपिभूपतेः ॥ अतःपरंत्वहंराज
स्तांनस्पृशामिपाणिना ॥ ५ ॥ गृहाणकुंचिकामेतांदेवागारस्यमेविभो ॥ प्रयातुब्राह्मणस्तत्रगृहीत्वायातुतांशिलाम् ॥६॥ इतिश्रु
त्वावचस्तस्यरविदासस्यभूपतिः॥प्रसन्नोब्राह्मणंप्राहगच्छानयहरेःशिलाम् ॥ ७ ॥ अथादायद्विजश्चैकःकुंचिकामतिसत्वरम् ॥ गत्वो
द्घाट्यकपाटंसगृहीत्वातांशिलांशुभाम् ॥८॥ आगत्यस्वगृहेतांतुपंचगव्यादिनातदा॥स्नापयित्वार्चयित्वाचस्थापयामाससमंदिरे ॥ ९ ॥
रविदासोऽपिराजानंनमस्कृत्यययौगृहम्॥ अथरात्रौशिलासातुविप्रमंदिरतोययौ ॥ १० ॥ रविदासस्यवेश्मेतिदृष्ट्वाप्रातस्तदाजनाः ॥
गताराजसमीपंतेप्रत्युवाचाद्विजःसतु ॥ ११ ॥ राजन्संपूज्यभवनेस्थापितासाशिलामया ॥ नजानेकेनमार्गेणगतातन्मंदिरंपुनः
॥ १२ ॥ तत्रैकःप्राहराजानंरविदासोऽतिमांत्रिकः ॥ आकर्षयतिवस्तूनिकृष्टातेनततःशिला ॥ १३ ॥ श्रुत्वैतद्वचनंराजा
तमुवाचपुनर्द्विजम् ॥ द्रुतंगच्छगृहंतस्यसमानयपुनःशिलाम् ॥ १४ ॥ स्थापयस्वगृहेकिंचरविदासोममाज्ञया ॥ तिष्ठत्वत्र
बहिर्गेहेसुखंरात्रौयदृच्छया ॥ १५ ॥ तथाचकारविप्रस्तुरविदासोनिशामुखे ॥ समागत्यबहिर्गेहेतस्थौचित्तेहरिंस्मरन् ॥१६॥
अथरात्रौशिलासातुगतातत्रैवमंदिरे ॥ रविदासस्ययत्रासीत्सिंहासनगतापुरा ॥ १७ ॥ स्वप्नेराजाथविप्रोऽपिददर्शपरमाद्भुतम् ॥

विप्रएकःसमागत्यबभाषेक्रोधमूर्च्छितः ॥ १८ ॥ किमर्थंसाशिलाभूपनीयतेद्विजमंदिरे ॥ भक्तिप्रियोहरिस्तस्यशिलातदनुगा
मिनी ॥ १९ ॥ स्वयमेवहरिस्तत्रयातिकेयंशिलामठे ॥ हरेःसर्वंसमंभूपननीचंनापिचोत्तमम् ॥ २० ॥ इतिविज्ञायभूपत्वं
त्यजोद्योगंशिलांप्रति ॥ एवमेवद्विजाःसर्वेस्वप्नंतंददृशुर्निशि ॥ २१ ॥ अथप्रातःप्रबुद्धस्तुराजाचब्राह्मणाअपि ॥ परस्परं
निशास्वप्नंचोक्त्वाराजाथतंद्विजम् ॥ २२ ॥ प्राहचास्तिशिलागेहेराजन्नास्तीतिसोऽब्रवीत् ॥ ततस्तुरविदासंहिसमाहूयनृपोऽब्रवीत्
॥ २३ ॥ गच्छस्वभवनंसाधोरामस्तुष्टोऽस्तितेध्रुवम् ॥ कुरुभक्तिंयथापूर्वंनतेकिंचिद्वदिष्यति ॥ २४ ॥ इत्युक्तोरविदासस्तुययौस्व
भवनंमुदा ॥ शालग्रामशिलांदृष्ट्वाहर्षेणाश्रुपरिप्लुतः ॥ २५ ॥ पूजयामासभक्त्यातांपूर्ववद्वैष्णवैर्युतः ॥ एवंभक्तिवशःकृष्णस्तत्रा
प्यभिरतोऽभवत् ॥ २६ ॥ नासाध्यंविद्यतेभक्तेस्त्रिषुलोकेषुकिंचन ॥ अथतस्यैवराज्ञस्तुचित्तोरगढसम्भवा ॥ २७ ॥ आसीद्वैपट्टमहि
षीविष्णुभक्तिरताशुभा ॥ याभक्त्यारविदासायभोजनाच्छादनादिकम् ॥ २८ ॥ मुहुर्ददौस्वयंतत्रगत्वातंप्रणनामसा ॥ एवंदृष्ट्वाद्विजाः
सर्वेनिनिंदुस्तांनृपप्रियाम् ॥ २९ ॥ चर्मकारगृहंयातितंनमस्यातिसर्वदा ॥ ददात्यन्नंचवासांसितस्मादस्यागृहेवयम् ॥ ३० ॥ नभो
क्ष्यामःकदाप्येवंमतिंचक्रुःपरस्परम् ॥ एकदातुद्विजांस्तांस्तुभोजनायन्यमंत्रयत् ॥ ३१ ॥ तांराज्ञींतेद्विजाःप्राहुर्नवैभोक्ष्यामहेवयम् ॥
आमान्नंदेहिनोराज्ञिपक्त्वाभोक्ष्यामहेस्वयम् ॥ ३२ ॥ इत्युक्तासागतक्रोधातथैवादापयद्द्विजान् ॥ ब्राह्मणाअपिचामान्नंगृहीत्वैकत्रसं
स्थिताः ॥ ३३ ॥ पाकंविधायभुञ्जानाददृशुःपंक्तिमध्यगम् ॥ रविदासंचभुञ्जानंदृष्ट्वासर्वेविमोहिताः ॥ ३४ ॥ अथकोऽपिबाहिश्चक्रेर

विदासंक्रुधान्वितः ॥ पुनरन्यंचपंक्तिस्थंभुंजानंददृशुश्चतम् ॥ ३५ ॥ तदातेब्राह्मणाःसर्वेज्ञात्वाविष्णुविचेष्टितम् ॥ तस्यभक्तिंदृढां
मत्वानोचुःकिंचिदपिक्वचित् ॥ ३६ ॥ स्वधर्मरक्षणंकार्यंनिंद्यमानंपरस्यच ॥ कोवेदभगवान्विष्णुःकथंतुष्यतिसर्वगः ॥ ३७ ॥
नियोजिताःस्वधर्मेतुवयंतंकरवामहे ॥ इत्युक्त्वातेगृहीत्वातुदक्षिणांमुदिताययुः ॥३८॥स्वंस्वमालयमाश्चर्यंचिन्तयंतोद्विजाहृदि॥३९॥
इति श्रीभगवद्भक्तिमाहात्म्येरविदासचरितंनामाशीतितमःसर्गः ॥ ८० ॥ छ ॥ अथापरंप्रवक्ष्यामिरविदासस्यचेष्टितम् ॥ अमानुषंय
दाजातंप्रसिद्धंपृथिवीतले ॥ १ ॥ एकस्मिन्दिवसेगंगांस्नातुंतद्ग्रामवासिनः ॥ चलितास्तत्रचैकस्तुरविदासमुवाचसः ॥ २ ॥ यामो
भागीरथींस्नातुंगमिष्यतिभवान्किमु ॥ श्रुत्वाद्विजवचःप्राहरविदासोऽतिहर्षितः ॥ ३ ॥ धन्योऽसियदिदंब्रूषेमामप्यधमसम्भवम्॥कथं
यामिजराग्रस्तस्तस्मादेकंब्रवीमिते ॥ ४ ॥ करोषियदिभोब्रह्मंस्त्वामहंनौम्यनेकशः ॥ इतिश्रुत्वावचस्तस्यविप्रःप्रोवाचकथ्यताम् ॥
॥ ५ ॥ रविदासस्तथोत्थायपूगीफलयुगंददौ ॥ इदंफलद्वयंब्रह्मन्गंगायैत्वंसमर्पय ॥ ६ ॥ नागंतुंससमर्थोऽस्तिरविदासोददा
विमे ॥ इत्युक्त्वादेहिगंगायैकृतार्थंकुरुमांप्रभो ॥ ७ ॥ इत्युक्तःसतुविप्रोवैगृहीत्वातत्फलद्वयम् ॥ रविदासस्यभक्तस्यप्रातर्द
त्वाप्रजालयम् ॥ ८ ॥ गृहीत्वातत्फलद्वन्द्वंयदास्यतिसुरापगा ॥ तत्तस्मैरविदासायदातव्यंपुत्रकत्वया ॥ ९ ॥ इतिदृष्ट्वामहाश्चर्यं
स्वप्नेसद्विजसत्तमः ॥उक्त्वाशिष्टजनेभ्यस्तद्गृहीत्वाचफलद्वयम् ॥ १०॥ प्रातर्भागीरथींगंगांप्राहविप्रःकृतांजलिः ॥नागन्तुंससमर्थो
ऽस्तिरविदासोददाविमे ॥ ११ ॥ इतिब्रुवतिविप्रेतुगंगातोयात्करःशुचिः ॥ याचमानोबहिर्यातोरत्नकंकणभूषितः ॥ १२ ॥ त

तस्तस्मिन्करेविप्रोददौपूगीफलद्वयम् ॥ अथैकंकंकणंतस्माद्बहिरागत्यवारिणः ॥ १३ ॥ ब्राह्मणाग्रेसमायातंसर्वेषांचैवपश्यताम् ॥
ततःकरोजलेमग्नःकंकणंजगृहेद्विजः ॥ १४ ॥ हर्षाश्रुपरिपूर्णाक्षाबभूवुस्तत्रवैद्विजाः ॥ साधुसाध्वितिजल्पंतोरविदासंद्विजंचतम् ॥
॥ १५ ॥ अथागत्यद्विजस्तस्मैरविदासायभक्तिमान् ॥ उक्त्वासर्वमशेषेणकंकणंप्रददौकरे ॥ १६ ॥ दृष्ट्वातत्कंकणंभक्तोरविदा
सोऽतिहर्षितः ॥ ननर्तांगणमध्येतुमूर्ध्निकृत्वाचकंकणम् ॥ १७ ॥ आययौद्रष्टुकामासारविदासस्यमंदिरे ॥ दृष्ट्वाऽतिविस्मयंप्रापरा
ज्ञीकंकणमुत्तमम् ॥ १८ ॥ विस्मितांतांतुविज्ञायरविदासोनृपांगनाम् ॥ ददौतत्कंकणंतस्यैभक्तासीतिव्यचिंतयत् ॥ १९ ॥ परि
धायकरेसातुगतास्वभवनंमुदा ॥ पत्युःसन्दर्शयामासकंकणंचातिहर्षिता ॥ २० ॥ दृष्ट्वाराजापिमुमुदेनत्वाकंकणमब्रवीत् ॥ पत्नीं
धन्यासिकांतेत्वंयद्विदेव्याःकरेस्थितम् ॥ २१ ॥ कंकणंप्रददौभक्तोरविदासोदयान्वितः ॥ एवंप्रियोदितंश्रुत्वापरिधायचकंकणम् ॥
॥ २२ ॥ रूपसौभाग्यसंपत्त्याबभौदेवसुतोपमा ॥ एवंगतेषुकालेषुराज्ञीतंपतिमेकदा ॥ २३ ॥ प्रार्थयामासविनयाद्द्वितीयंकंकणंमु
दा ॥ श्रुत्वाराजाहसन्प्राहकिमिदंभाषसेप्रिये ॥ २४ ॥ रविदासप्रसादायगंगयातत्समार्पितम् ॥ एतादृशंद्वितीयंकमर्त्यलोकेभविष्य
ति ॥ २५ ॥ तस्मादेवंहठंत्यक्त्वायाचस्वान्यंददामिते ॥ इतिभर्तृवचःश्रुत्वानामन्यतनृपात्मजा ॥ २६ ॥ बहुधाप्रार्थ्यमानाऽपि
राज्ञातिप्रीतिपूर्वकम् ॥ सापुनःप्राहभर्तारंयावदेतादृशंपुनः ॥ २७ ॥ द्वितीयंकंकणंनाथनदास्यतिकरेमम ॥ तावन्मयानभोक्तव्यंश
पेत्वच्चरणाब्जयोः ॥ २८ ॥ इतिश्रुत्वावचोराज्ञ्याराजाशोकसमन्वितः ॥ नकिंचित्कुरुतेकर्म्मतूष्णींतस्थौयथातथा ॥ २९ ॥ सचिं

तयन्कथंचास्यद्वितीयंकंकणंभवेत् ॥ एवंचिंतयतस्तस्यदिनद्वयमथागमत ॥ ३० ॥ तृतीयेदिवसेप्राप्तेस्निग्धंमंत्रिणमाह्वयत् ॥ त
मुवाचनृपःसर्वंनिजसंतापकारणम् ॥ ३१ ॥ श्रुत्वामंत्रिवरःप्राहराजानंविनयान्वितः ॥ भूपतेताद्दशंनास्तिकंकणंधरणीतले ॥ ३२ ॥
अतोऽहंनैवपश्यामितदुपायंतुमानुषम् ॥ एकमायातिमेचित्तेलाभोपायंशृणुप्रभो ॥ ३३ ॥ तत्रगंतव्यमावाभ्यांरविदासस्यसन्निधौ ॥
तस्मैसर्ववदस्वाद्यसर्वंकिंचित्करिष्यति ॥ ३४ ॥ इतिमंत्रिवचःश्रुत्वाराजातत्कालमेवहि ॥ रविदासगृहंगत्वातस्मैप्रोवाचसर्वशः ॥
॥ ३५ ॥ रविदासमहाभक्तसत्यंशृणुवचोमम ॥ द्वितीयंकंकणंनोचेद्यताद्दग्भवेन्मम ॥ ३६ ॥ तदाराज्ञीम्रियेतैवमरिष्येऽहंततः
परम् ॥ तस्माद्यथाद्वितीयंतत्कंकणंस्यात्तथाकुरु ॥ ३७ ॥ इतिराजवचःश्रुत्वारविदासोऽतिचिंतितः ॥ किंकरोमिकथंगंगापुनर्दा
स्यतिकंकणम् ॥ ३८ ॥ सपत्नीकोनृपोऽयंतुमरिष्यतिनसंशयः ॥ मृतेराज्ञिममाप्यद्यजीविकानभवेत्खलु ॥ ३९ ॥ इतिसं
चिंत्यमनसाकाष्ठपात्रेजलंशुचि ॥ कृत्वातत्रैवगंगांसध्यायन्नाममुहुर्मुहुः ॥ ४० ॥ मनःपूतंयदिभवेज्जलंगंगैवसर्वतः ॥ इत्युक्त्वा
तत्रहस्तेननिजकंकणमर्पयन् ॥ ४१ ॥ सप्रापकंकणंतत्रजलेवैपश्यतांनृणाम् ॥ अथकाष्ठस्थितंवारिभूमियुक्तंतरंगवत् ॥ ४२ ॥
दृष्ट्वासर्वेमहाश्चर्यंगताधन्येतिवादिनः ॥ अथतत्कंकणंराज्ञेरविदासोददौमुदा ॥ ४३ ॥ नीत्वाप्रणम्यराजाऽपिसमायातोनिजंगृहम् ॥
कंकणंतद्ददौपत्न्यैसापिजग्राहवैमुदा ॥ ४४ ॥ तदाराजाऽपिराज्ञीचमुदितौभक्तितत्परौ ॥ बभूवतुर्महाभक्तौसाधुसेवनतत्परौ ॥ ४५॥
भुक्त्वाभोगानशेषेणजग्मतुःपरमंपदम् ॥ एवंभक्तस्तुमाहात्म्यंमहदाश्चर्यकारकम् ॥ ४६ ॥ शृण्वन्भक्तिमवाप्नोतिजनः श्रद्धास

मन्वितः ॥ ४७ ॥ ॥ इति श्रीभगवद्भक्तिमाहात्म्येरविदासचरितंनामैकाशीतितमःसर्गः ॥ ८१ ॥ ॥ कबीरभक्तिमाहात्म्यंकथयामि
यथाश्रुतम् ॥ यस्यश्रवणमात्रेणहरिभक्तिर्भवेन्नृणाम् ॥ १ ॥ आसीत्पूर्वभवेविप्रोवेदांताभ्यासतत्परः ॥ सर्वंमिथ्येतिविज्ञायसर्वंक
र्म्मजहौद्विजः ॥ २ ॥ स्त्रीपुत्रमोहवशगःशिल्पकार्य्येऽतिपंडितः ॥ एकदातंतुवायस्यजगामभवनेद्विजः ॥ ३ ॥ सूत्राण्यादायवस्त्रा
र्थंददौतस्मैसुशिल्पिने ॥ एवमेवंप्रदातव्यमित्युक्त्वागृहमागतः ॥ ४ ॥ तत्रागत्यज्वराविष्टोमृतःसद्विजसत्तमः ॥ परंतुदैवयोगेन
तंतुवायंस्मरन्मुहुः ॥ ५ ॥ नास्तिशिल्पीतंतुवायःकथंवासःकरिष्यति ॥ स्थितश्चेत्स्यादहंतत्रसम्यग्वासोभवेदिति ॥ ६ ॥ चिंत
यित्वामृतोविप्रोजातोऽसौतंतुवायकः॥तत्रापिबाल्यमारभ्यसाधुसंगतितत्परः ॥७॥ शिक्षितःपितृमातृभ्यांवस्त्रनिर्माणकर्मणि ॥ परंतु
पूर्वसंस्काराद्ब्रह्मज्ञानोदयोऽभवत् ॥८॥ जानन्नसारंसंसारंसदावयनतत्परः ॥ चिंतयामाससततंकोमेकाश्यांगुरुर्भवेत् ॥९॥ गुरुंविनावृ
थासर्वंनतरेतभवार्णवात्॥कर्णधारंविनापोतःसमुद्रइवनिश्चितम् ॥ १० ॥ इतिसंचिंत्यमनसासाधूनांसन्निधिंगतः ॥ दूरादुवाचतान्सा
धूंस्तंतुवायोऽस्मिवोनमः॥११॥इतिश्रुत्वावचस्तस्यवैष्णवाःप्राहुरागताः ॥कोऽसिकिंचेप्सितंतेऽत्रब्रहीत्युक्तउवाचतान्॥१२॥तंतुवायो
ऽस्मिजात्यावैकाश्यामेववसाम्यहम् ॥ शिष्योभवितुमायातोरामानन्दस्यसद्गुरोः ॥१३॥ इतिश्रुत्वावचस्तस्यहसंतस्तेतमब्रुवन् ॥ अरे
योनेच्छतिम्लेच्छंसकथंतेगुरुर्भवेत् ॥ १४ ॥ स्थानादस्मात्तुतद्गच्छद्रुतंनोचेत्तवैष्णवाः ॥ताडयिष्यंतिमूढत्वांयाहित्वंचयथासुखम् ॥
॥१५॥ इतितेषांवचःश्रुत्वाकबीरोगृहमागतः ॥पुनरन्यदिनेगत्वातत्रतानाहपूर्ववत् ॥१६॥ एवंबहुदिनंयातंकाश्यांसर्वांस्तुवैष्णवान् ॥

पप्रच्छमुहुरार्तःसप्रीतिसाधुसभांस्वयम् ॥१७॥ रामानंदइतिख्यातःसस्वामीस्यात्कथंगुरुः ॥ इतिपृच्छन्सबभ्रामवाराणस्यामितस्ततः
॥१८॥एकस्मिन्दिवसेचैकोदयालुत्वादुवाचतम्॥कबीरशृणुवक्ष्यामियथातेसगुरुर्भवेत् ॥ १९ ॥ रामानंदोरात्रिशेषेगंगांस्नातुंप्र
यात्यसौ॥तद्बहिर्द्वारिगत्वात्वैकपाटाधःस्थितोभव ॥२०॥ जाग्रच्छयानश्चेत्स्वामीसमागच्छन्बहिःस्वयम् ॥ निधास्यतितदापादंत
वोपरिदयान्वितः ॥२१॥ स्मरिष्यतिसयन्नामतत्तेमंत्रोभविष्यति ॥ नान्यथात्वांकदाचित्कःशिष्यंकर्तुमिहार्हति ॥ २२ ॥ इतिश्रु
त्वावचस्तस्यदयालोर्वैष्णवस्यसः॥जहर्षपरमप्रीतःकबीरस्तुननामच॥२३ ॥ उवाचत्वंगुरोर्लाभेगुरुर्जातोऽसिसांप्रतम् ॥ अतस्त्वं
प्रथमंपूज्योगुरुरेवनसंशयः ॥ २४ ॥ इत्युक्त्वासगतःक्वापिवैष्णवोऽपिययौक्वचित् ॥ कबीरस्त्वेकदापर्वज्ञात्वास्वामिगृहांतरं ॥२५॥
स्थित्वारात्रौनिशाभागेसुतलोकेसमागतः॥ बहिर्द्वारिकपाटस्यशिश्येऽधस्ताद्धरातले ॥२६॥ पादस्पर्शसमाकांक्षन्नबभूवसनिद्रितः ॥
अथोषसिसमुत्थायरामानंदोऽतिहर्षितः ॥ २७ ॥ प्रातःकृत्यादिकंकृत्वानीत्वादर्भतिलादिकम् ॥ स्नातुंसमाययौचक्रेकपाटोद्घटनं
स्वयम् ॥ २८ ॥ अथोद्घाट्यकपाटंतुददौपादंयदाबहिः ॥ पतितःसकबीरांगेतदास्वाम्यतिचिंतयन् ॥२९॥ उवाचरामरामेतिको
ऽसिरेऽत्रस्वपित्यहो॥इतिश्रुत्वावचस्तस्यकृतकृत्यःप्रणम्यतम् ॥ ३० ॥ कबीरःप्रययौतस्मात्स्थानात्तूष्णींगुरुंनमन् ॥ रामानंदोऽपि
तंवेदविक्षिप्तःकोऽप्यसाविति ॥ ३१ ॥ एवंलब्ध्वागुरोर्मंत्रंरामानंदस्यहर्षितः ॥ मालांचतिलकंचापिदधारस्वयमेवसः ॥३२॥
अन्यवैष्णववत्सोऽपिवाराणस्यांस्थितोऽभवत्॥अथज्ञात्वातुतंसर्वेवैष्णवाश्चुक्रुधुर्भृशम्॥३३॥कबीरमूचुःकिंनीचकुरूपकेनाशिक्षितः॥

इतिश्रुत्वावचस्तेषांकबीरोऽप्यब्रवीद्वचः॥३४॥रामानंदस्वामिनाम्नादत्तोमंत्रोमहोत्तमः॥तेनाहंवैष्णवोजातःसत्यमेतद्ब्रवीम्यहम् ॥३५॥
श्रुत्वातद्वचनंस्वामीरामानंदोऽतिकोपितः ॥ आनाय्यतंकबीरंसरुपापप्रच्छतर्जयन् ॥ ३६ ॥ ततोगुरुंप्रणम्याहरामानंदंकृतांजलिः ॥
नाथतेमंदिरद्वारिरात्रौसुप्तःस्थितोह्यहम् ॥ ३७ ॥ भवदागमनेस्नातुंपादश्चपतितोमयि ॥ ततोभवन्मुखाद्रामरामेतिविश्रुतंमया ॥३८॥
तदाकृतार्थःसंयातःक्षम्यतांमेदयानिधे ॥ इतिश्रुत्वाससस्मारसत्यमेतन्नसंशयः ॥ ३९ ॥ ज्ञात्वातस्यतुतांबुद्धिंप्राहभक्तिपरोभव ॥
अन्येऽपिवैष्णवास्तत्रजहुःक्रोधंहसन्मुखाः ॥ ४० ॥ एवंकबीरोभक्तोऽभूद्धृदिरामंव्यचिंतयन् ॥ ददावन्नंजनन्यैसतंतुवायेनकर्म्म
णा ॥ ४१ ॥ एकदावस्त्रमेकंतुनिर्मायनगरेगतः ॥ हट्टायांतद्विक्रयार्थंमाघेमासिहिमाकुलः ॥ ४२ ॥ कश्चिद्वृद्धोमुहुःप्राहशीते
नातीऽतिवेपितः ॥ वस्त्रंदेहिप्रियंतंमांवृद्धंशीतेनपीडितम् ॥ ४३ ॥ इतिश्रुत्वावचस्तस्यकबीरोऽतिदयान्वितः ॥ गत्वातस्यस
मीपंतुवस्त्रार्द्धंदातुमुत्सुकः ॥ ४४ ॥ तदावृद्धःपुनःप्राहसंपूर्णंदेहिमेऽनघ ॥ नार्धेनभविताकिंचिद्रामस्तेप्रीतिमेष्यति ॥ ४५ ॥
इतिश्रुत्वावचस्तस्यकबीरोऽतिदयान्वितः ॥ दत्त्वासमस्तंतद्वासोहट्टायांसंस्थितोऽभवत् ॥ ४६ ॥ अथमाताचपुत्रश्चपत्नीचापिगृ
हेस्थिताः ॥ कबीरागमनंसर्वेप्रतीक्षंतःक्षुधाकुलाः ॥४७॥ कबीरस्तुस्थितस्तत्रस्वगृहंहृदिचिंतयन् ॥ किंवदिष्यतिमेमा
ताकिंवादास्यामिभोजनम् ॥ ४८ ॥ अथैवंक्षुधितान्सर्वान्दृष्ट्वाश्रीभगवान्हरिः ॥ धनमादायतद्गेहेददौसाधुस्वरूपधृक् ॥ ४९ ॥
कबीरस्तुददौतुभ्यमित्युक्त्वासगतोहरिः ॥ ततस्तृतीयेदिवसेकबीरोऽपिजनैर्हठात् ॥ ५० ॥ आनीतोभवनेमात्राकथितंतद्धना

दिकम् ॥ श्रुत्वामेनेहरिःसाक्षाद्ददौमात्रेधनंमम ॥ ५१ ॥ इतिनिश्चत्यतत्सर्वंसाधुभ्यःप्रददौपुनः ॥ मेनेतांजननींधन्यांश्रीकृष्ण
स्यचदर्शनात् ॥ ५२ ॥ तदारभ्यसतत्याजस्वांवृत्तिंतांतुवायिकीम् ॥ विश्वंभरोवृत्तिदातेत्येवंनिश्चित्यमानसे ॥ ५३ ॥ अथैवंशुश्रु
वुःसर्वेकबीरायधनंबहु ॥ कोऽपिसाधुःसमागत्यददावितितदाजनाः ॥ ५४ ॥ अरेत्वयाधनंप्राप्तंतंतुवायवृथापुनः ॥ विनियुक्तंतुसर्वे
भ्योऽस्मभ्यंदास्यतिकिंनुतत् ॥५५॥ आयास्यामोवयंचाद्यत्वंतावद्भवनंव्रज ॥ इत्युक्त्वातेगताःसर्वेकबीरश्चिंतितोऽभवत् ॥५६॥ ना
स्तिगेहेकिमप्यद्यतेभ्योवक्ष्यामिकिंपुनः ॥ तस्मान्निलीयवस्तव्यंगेहादन्यत्रकुत्रचित् ॥ ५७ ॥ इतिनिश्चित्यमनसाक्वचिद्गत्वा
स्थितोऽभवत् ॥ अथतेब्राह्मणाश्चान्येसर्वेचागंतुमुत्सुकाः ॥ ५८ ॥ एतस्मिन्नंतरेतत्रभगवान्भक्तवत्सलः ॥ कृत्वाकबीररूपंतुधनमा
दायभूरिशः ॥ ५९॥ कबीरगृहमागत्यतस्थावाश्रमवत्स्वयम्॥अथागतास्तुतेसर्वेकबीरद्वारिनागराः ॥६०॥ दृष्ट्वातेभ्योमुदायुक्तोददौ
वित्तान्यनेकशः ॥गतास्तेयाचकाःसर्वेभगवान्विप्ररूपधृक् ॥६१ ॥ तिरोभूयास्थितोयत्रकबीरस्तमुवाचह ॥ अरेत्वंकिंकरोष्यत्रकबी
रस्यगृहेव्रज ॥६२॥ ददात्यभिमतंवित्तंयाचकेभ्योऽतिभक्तिमान् ॥इतिश्रुत्वाकबीरोऽपिसमायातोनिजंगृहम्॥६३॥ददर्शमुदितान्सर्वा
न्धनधान्यपुरस्कृतान् ॥ मेनेकृष्णस्यचरितंकबीरोहृदितंस्मरन् ॥ ६४ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येकबीरचरितेनामद्व्यशीतितमः
सर्गः ॥ ८२ ॥छ॥अथश्रुत्वाकबीरस्यदानंतेनागराजनाः ॥ धनंग्रहीतुमायाताअपिग्रामांतरस्थिताः ॥ १ ॥ तदाकबीरोविक्षिप्तइवमु
क्त्वाकरेणच॥वेश्यांधृत्वाननतार्थदद्दृशुस्तेतथाविधम् ॥२॥ संतोदुःखपराजाताविक्षिप्तोऽयंबभूवह ॥ असंतोजहसुस्तंवैनीचएवनवैष्ण

वः ॥ ३ ॥ इत्युक्तातेगताःसर्वेकबीरोवारयोपितः ॥ गृहीत्वोन्मत्तवच्चैवराजद्वारमुपागतः ॥ ४॥ राजापितादृशंदृष्ट्वाकबीरंह्यमन्यत॥
विक्षिप्तोऽयंबभूवेतिकबीरस्तदनंतरम् ॥५॥ तोयंपूर्वमुखोभूत्वाचिक्षेपांजलिनामुहुः॥दृष्ट्वाराजाहसन्प्राहकिंकरोषीदमत्रभोः॥६ ॥श्रुत्वा
राजवचःप्राहकबीरोनिर्भयोनृपम् ॥ जगन्नाथपुरेराजाप्रेषयामासवैचरान् ॥ ७॥ चरास्तत्रगतास्तस्मिन्दिनेतुपचतःपदोः ॥ द्विजस्य
पूजकस्याभूत्पतितंतप्तमोदनम् ॥ ८ ॥ तदाकबीरआगत्यजलमञ्जलिनावहत् ॥ शीघ्रंनिर्वापयामासतापंतस्यपदोस्तदा ॥ ९ ॥
इतिवृत्तंचराःपत्रेप्रतिख्याप्यसमागताः ॥ ददुःसभायांभूपायभूपोदृष्ट्वामहाद्भुतम् ॥ १० ॥ कबीरंसिद्धमेवाथराजामत्वाचमानसे ॥
राजासमाययौतस्यकबीरस्यनिकेतनम् ॥ ११ ॥ कबीरोनृपतिंदृष्ट्वा ह्यवदच्चातिहर्षितः ॥ महाराजकुतश्चेदंभवदागमनंमहत् ॥ १२ ॥
किंकरस्यचमेकिंचिद्यदिकार्यंभवेत्तव ॥ तदानाथप्रवक्तव्यंदासोऽहंतनसंशयः ॥ १३ ॥ इतिश्रुत्वावचस्तस्यराजाप्रांजलिरब्रवीत् ॥
अहोदुर्विषहंमेऽद्यक्षमस्ववैष्णवोत्तम ॥ १४ ॥ अजानतामयापूर्वमुपहासःकृतस्तव ॥ ब्रूहितेकिंप्रदास्यामिजीविकायैधनादिकम् ॥
॥ १५ ॥ इतिश्रुत्वावचस्तस्यकबीरोनृपमब्रवीत् ॥ राजन्काजीविकाकोऽहंजीवनंमरणंचाकिम् ॥१६॥ मूर्खत्वान्नैवजानामिराजन्नेच्छा
म्यतोधनम् ॥ किंचपश्यामिलोकेऽस्मिन्वैचित्र्यंतद्विचारय ॥ १७ ॥ वृत्तिमंतोम्रियन्तेवैक्षुधयाअपिपीडिताः ॥ अवृत्तिकानराःसर्वेम्रि
यंतेप्रलयेऽपिन ॥ १८॥ तस्माद्वृत्तिर्नमेयोग्यादेहितस्मैयइच्छति ॥ इतिश्रुत्वावचोराजासमायातोनिजंगृहम् ॥१९॥ ग्रामेसर्वानुवाचे
दंकबीरोऽतीवमेप्रियः ॥ यस्तंद्वेष्टिसमेशत्रुःस्वयमेतन्नसंशयः ॥ २० ॥ ततआरभ्यग्रामेऽपिनकबीरविरोधकः ॥ जनःकोऽपिबभूवाथस्मृ

त्वावैराजशासनम् ॥ २१ ॥ एकदातीर्थयात्रायांवैष्णवैःपरिवारितः ॥कबीरोमथुरांगत्वाजगामहस्तिनापुरम् ॥ २२ ॥ सिकंदरेतिना
म्नासीत्तत्रम्लेच्छोधरापतिः ॥ तंप्राहुर्दुर्जनाःसर्वेतंतुवायोऽयमागतः ॥२३॥ गृहीत्वावैष्णवंवेषंदंभेनपरवंचकः ॥ तच्छ्रुत्वावचनंतेषांम्ले
च्छोभृत्यानथाह्वयत ॥२४॥ तंतुवायंत्वरायुक्ताआनयध्वंममांतिकम् ॥ इत्थंनायातिचेद्बद्ध्वासमानयतमाचिरम् ॥२५॥ श्रुत्वैतद्वचनं
भृत्याःकबीरनिकटंगताः ॥ ऊचुःकबीरराजात्वांद्रष्टुमिच्छतिचैहिभोः ॥ २६ ॥ नोचेद्बद्ध्वावयंतत्रनेष्यामोराजशासनात् ॥ इतितेषांव
चःश्रुत्वाकबीरःप्राहवैहसन् ॥ २७ ॥ बंधनादीनितत्रैवभविष्यंतिनसंशयः ॥ यूयंकिमर्थंप्रथमंबंधयिष्यथमांवृथा ॥२८॥इत्युक्त्वाप्रह
संस्तत्रजगामनृपसन्निधौ ॥ तस्थौस्थाणुसमस्तंतुसर्वेप्राहुर्नमस्कुरु ॥२९॥ तेषांश्रुत्वावचःप्राहकबीरोनिर्भयोहसन् ॥ कोऽयंकोऽहंकःप्र
णामःकेयूयंनैववेद्म्यहम् ॥ ३० ॥ इतिश्रुत्वावचोराजाक्रुद्धःशृंखलयादृढम् ॥ बद्ध्वाकबीरंचिक्षेपयमुनागाधवारिणि॥३१॥जलेनिपति
तोदृष्टःकबीरःसकलैर्जनैः ॥ अदृश्यतपुनस्तीरेप्रव्रजन्मुदितोहसन् ॥ ३२ ॥ दृष्ट्वेदंमहदाश्चर्यंदुर्जनाम्लेच्छमब्रुवन् ॥ राजन्नयंक्षुद्रविद्यां
विजानात्यैंद्रजालिकीम् ॥ ३३ ॥ ततोजलाद्विनिर्गत्यव्रजतीतिनचाद्भुतम् ॥ततोमहानलेक्षिप्तस्तत्रापिसंस्थितोऽभवत् ॥ ३४ ॥ प्रात
र्निर्वापितेवह्नौददृशुर्भस्मनिस्थितम् ॥ तत्रापिदुर्जनाऊचुरग्निस्तंभंकरोत्यसौ ॥ ३५ ॥ ततोदिल्लीश्वरः क्रुद्धोहस्तिपादतलेरुषा ॥
कबीरंदापयामासहस्तीदृष्ट्वापलायितः ॥ ३६॥ सिंहोऽयमितिचीत्कृत्यततोहस्तिपकस्तुदन् ॥ अंकुशेनददर्शाग्रेकबीरंसिंहरूपिणम् ॥
॥ ३७ ॥ ततोम्लेच्छादयःसर्वेयेस्थितास्तत्रदुर्जनाः ॥ दृष्ट्वासिंहस्वरूपंतंबभूवुर्भयसंयुताः ॥३८॥ दिल्लीश्वरस्तदोत्थायन्यपतत्तत्पदां

बुजे ॥ क्षमापयन्स्वापराधंप्रणनाममुहुर्मुहुः ॥ ३९ ॥ कबीरःप्राहतंराजन्किंत्वयापकृतंमम ॥ यदेवंप्रार्थनाशीलःक्षमापयतिमां
वृथा ॥ ४० ॥ इत्युक्तःसगतोराजाम्लेच्छश्चिन्तासमन्वितः ॥ कबीरोऽपिततःकाशीमाजगामातिहर्षितः ॥ ४१ ॥ इतिश्रीभगवद्भ
क्तिमाहात्म्येकबीरचरितंनामत्र्यशीतितमः सर्गः ॥ ८३ ॥ छ ॥ ॥ इत्थंकाश्यांवसन्भक्तःसाधुसेवापरायणः ॥ जान
न्नसारंसंसारमात्मज्ञानपरोऽभवत् ॥ १ ॥ एकदादुर्जनास्तत्रकाश्यांतद्द्वेषकारिणः ॥ साधून्निमंत्रयामासुःकबीरस्यापिचाब्रुवन् ॥
॥ २ ॥ कबीरस्तु गतस्तस्मिन्दिने कुत्रापि कार्यतः ॥ सहस्रशः समायाता अथ तत्र बुभुक्षिताः ॥ ३ ॥ दृष्ट्वा कबीरशि
ष्यस्तान्महाचिन्तापरोऽभवत् ॥ अथांतरेसमायातोभगवान्भक्तवत्सलः ॥४॥ कबीरवेषमादायभोज्यान्यानीतवांस्तदा॥शिष्यंप्राहा
द्यसाधूनांभोजनार्थंगतःक्वचित् ॥ ५ ॥ इत्युक्त्वातांस्तुसर्वान्वैसर्वोपकरणैर्मुदा ॥ भोजयामासभगवान्कबीरस्यस्वरूपधृक् ॥
॥ ६ ॥ भोजयित्वाविसृज्याथस्वयमंतर्दधेहरिः ॥ ज्ञात्वायांतंकबीरंतंनिःसृत्यतद्गृहाद्बहिः ॥ ७ ॥ अथागतःकबीरोऽपितदाश्रमसमा
कुलः ॥ ददर्शांगणमध्येससमहोत्साहोयथाऽभवत् ॥८॥ दृष्ट्वातथाविधंवेश्मशिष्यंपप्रच्छसत्वरम् ॥ किमिदंदृश्यतेवत्समहोत्साहइवा
भवत् ॥ ९ ॥ इतिश्रुत्वावचस्तस्यशिष्यःप्राहातिविस्मितः ॥ किमिदंभाषसेनाथभ्रांतिमानिवसांप्रतम् ॥ १० ॥ सहस्रावधिविप्रान्वै
भोजयित्वासुभोजनैः ॥ इदानींत्वंबहिर्यातःपुनरागतवानसि ॥११॥ किमिदंभाषसेऽत्यर्थंसंशयोमेमहानभूत् ॥ इतिशिष्यवचःश्रुत्वा
बुबुधेहरिचेष्टितम् ॥ १२ ॥ मनसाभाग्यवंतंतंशिष्यंमुहुरमन्यत ॥ ततःप्रोवाचतंशिष्यंसत्यंभ्रांतिरभून्मम ॥१३॥ श्रमेणातिबुभुक्षाभू

तस्माद्भोजयमांद्रुतम् ॥ इतिश्रुत्वासशिष्यस्तुश्रीकृष्णानीतमुत्तमम् ॥१४॥ भोजनंभोजयामाससाधुभुक्तावशेषितम् ॥ भुक्त्वासचिं
तयामासहृदयेभक्तवत्सलम् ॥१५॥ततस्तेदुर्जनाःसर्वेदृष्ट्वातत्परमाद्भुतम् ॥ कबीरंतुष्टुवुर्हृष्टाःसत्यंत्वंभक्तिमानसि ॥ १६ ॥ कृतोऽप
राधस्तेऽस्माभिस्तवनाम्नानिमंत्रिताः ॥ साधवस्तेसमागत्यसहस्रादधिकाजनाः ॥ १७ ॥ त्वन्मंदिरेसुखंभुक्त्वास्तुवंतस्तेपुनर्ययुः ॥
इतिश्रुत्वावचस्तेषांधन्यायूयंनसंशयः ॥१८॥अनिच्छतामयाप्येवंयद्धर्मःकारितोऽधुना॥ इतिश्रुत्वातुतेसर्वेस्तुवंतस्तंययुर्गृहम्॥१९॥
कबीरोऽपिविशश्रामरामस्मरणतत्परः ॥ निजगेहेतदाकाचिद्वेश्यारूपकलान्विता ॥२० ॥ समायाताकबीरस्यगृहेप्रांजलिरब्रवीत्॥क
बीराहंभवद्गेहेवस्तुमिच्छामिसर्वदा ॥ २१ ॥ नृत्यगानोपभोगैस्तुतवतोपकरीसदा ॥ भविष्यामिनसंदेहःसत्यमेतद्ब्रवीमिते ॥ २२ ॥
दृष्ट्वातांरूपसंपन्नांनृत्यगीतकलावतीम् ॥ उवाचनाहंजानामिभोगंगानंचनर्तनम् ॥ २३ ॥ क्लीबंमामवगच्छत्वंनचाहंस्त्रीपुमानिति ॥
तथापित्वद्धितार्थायवक्ष्येकिंचिन्निशम्यताम् ॥ २४ ॥ अयंयोममगेहेऽस्तिभगवाञ्छ्रीहरिःप्रभुः ॥ सोऽतिरागीतथाभोगीतदग्रेनर्तनं
कुरु ॥ २५ ॥ भोगेतवयदीच्छास्यात्तदारात्रौहरिःस्वयम् ॥ त्वांभोक्ष्यतिनसंदेहःकृतार्थात्वंभविष्यसि ॥ २६ ॥ इतिश्रुत्वावचस्त
स्यसानारीचातिहर्षिता ॥ उवासतस्यनिलयेदेवाग्रेनृत्यतत्परा ॥ २७ ॥ जगामैकदिनेनारीवनमध्येयदृच्छया ॥ वनेसांतर्दधेबालान
दृष्टाकेनचित्क्वचित् ॥ २८ ॥ अप्सराःसेतिसर्वेषांतदाभून्निश्चयोमहान् ॥ एकदासकबीरस्तुकाश्यांशिष्यान्गृहेगृहे ॥ २९ ॥ प्रेष
यामाससर्वेभ्योवक्तव्यंमदुदीरितम् ॥ अद्याहंनिजलोकंतुगमिष्यामिनसंशयः ॥ ३० ॥ इतिश्रुत्वावचस्तस्यगुरोःशिष्याद्रुतंययुः ॥

सर्वानुक्त्वागताःसर्वेमणिकर्ण्यांत्वरान्विताः ॥ ३१ ॥ कबीरोऽपिगतस्तत्रद्रष्टुंसर्वेसमागताः ॥ कथंयातिनिजंलोकमितिविस्मितास्तत
सः ॥ ३२ ॥ कबीरस्तानुवाचाथपरंब्रह्मव्रजाम्यहम् ॥ तत्रगत्वामरिष्यामियदिभक्तिर्हितारिणी ॥ ३३ ॥ मगधेऽपितदामोक्षोभ
विष्यत्यसंशयम् ॥ ददामिप्रत्ययंयुष्मान्सर्वसंदेहनाशनम् ॥३४॥ अहंजात्याभवंम्लेच्छःकर्मणावैष्णवोऽभवम्॥ ततोममास्यदेहस्य
कःसंस्कर्ताभविष्यति ॥ ३५ ॥ इतिविज्ञायदेहस्यभूततत्त्वगुणानहम् ॥ प्रविलाप्यगमिष्यामिदेहोमिथ्येतिबोधयन् ॥ ३६ ॥ इतिश्रु
त्वावचस्तस्यसर्वेपारंगताजनाः ॥ अग्रेकृत्वाकबीरंतुद्रष्टुमाश्चर्य्यमुत्तमम् ॥ ३७ ॥ परंपारंकबीरस्तुगत्वाभून्मौनिराकुलः ॥ पुष्पाणो
परिवस्त्रंस्वंशिष्यैःप्रच्छादयत्नतः ॥ ३८ ॥ अतीतेघटिकायुग्मेवस्त्रंनीत्वातुमामकम्॥गम्यतांनिजगेहेवैस्थीयतांभक्तितत्परैः ॥३९॥
इत्युक्त्वाशयितोभूमौजातंतुघटिकाद्वयम् ॥ शिष्यावस्त्रंसमाहर्तुमुद्युक्तास्तत्रचागताः ॥ ४० ॥ द्रष्टुंकबीरदेहंचसर्वेतत्रसमागताः ॥
अथशिष्यास्तुतद्वस्त्रंजगृहुःपश्यतांनृणाम् ॥ ४१ ॥ ददृशुस्तत्रतद्भूमौनकिमप्यद्भुतंमहत् ॥ विलाप्यतत्त्वभूतानिकबीरोऽगात्परं
पदम् ॥ ४२ ॥ एवंभक्तस्तुमाहात्म्यंकोवावर्णयितुंक्षमः ॥ ककुविंदःकबीरोऽसौकृताद्दग्गमनंदिवि ॥ ४३ ॥ तस्माद्भक्तिवशीभूतो
भगवान्भक्तवत्सलः ॥ अकर्तव्यंहिकुरुतेभक्तार्थंकरुणामयः ॥ ४४ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येकबीरभक्तिचरितंनामचतुरशी
तितमःसर्गः ॥ ८४ ॥ ॥ ७ ॥ ॥ पीपाभक्तस्यमाहात्म्यंकथयामियथाश्रुतम् ॥ महाश्चर्य्यप्रदंनृणांहरिभक्तिप्रदाय
कम् ॥ १ ॥ नागरेनगरेऽवात्सीदुत्तरंहस्तिनापुरे ॥ तत्रपीपेतिनाम्नाभूद्राजाधर्म्मरतःशुचिः ॥ २ ॥ देवीपूजांप्रकुर्वाणोदेवीनाम

जपन्सदा ॥ राज्यंशशाससमुदितःपुत्रपौत्रसमन्वितः ॥ ३ ॥ निष्कामःसंस्तुवन्देवींपूजयामासभक्तितः ॥ ततोज्ञानंददौतस्मैदेवीसं
सारतारणी ॥ ४ ॥ प्रतिज्ञैषाहितस्यास्तुयोनिष्कामोभजेत्तुमाम् ॥ तारयिष्यामितंदत्त्वाज्ञानंयद्योगिदुर्लभम् ॥ ५ ॥ ततःसा
प्रददौतस्मैवैराग्यंमुक्तिदायकम् ॥ तदापीपानृपश्चित्तेसर्वंमिथ्येत्यमन्यत ॥ ६ ॥ कदामेदर्शनंविष्णोःस्यादित्येववरंहृदा ॥ प्रा
र्थयामासतांदेवींनान्यत्किंचिन्नृपोत्तमः ॥ ७ ॥ ततःप्रसन्नादुर्गासातन्मातृरूपधारिणी ॥ स्वप्नेप्रोवाचपीपास्त्वंशृणुमद्वचनंशुभम् ॥
॥ ८ ॥ देवतानांतुतद्रूपदर्शनंदुर्लभंभुवि ॥ तथापिकृष्णंद्रष्टासितन्मायाकल्पितोपरः ॥ ९ ॥ तवदृक्पथगोभावीसतेऽभीष्टंक
रिष्यति ॥ इतिदृष्ट्वातुसस्वप्नंप्रातरुत्थायहर्षितः ॥ १० ॥ देवींसंपूज्यभवनादागतोरंगमंडपे ॥ अथांतरेसमायातारामानंदस्यवै
ष्णवाः ॥ ११ ॥ तान्दृष्ट्वापरमप्रीतोभोजयित्वाथभूपतिः ॥ प्राहाहमपिभोभक्तारामानंदस्यसद्गुरोः ॥ १२ ॥ शिष्योभवितुमिच्छा
मिकथंशिष्यंकरिष्यति ॥ इतितस्यवचःश्रुत्वाभक्ताःप्रोचुर्नृपंतदा ॥ १३ ॥ तत्रगच्छमहाराजत्वांशिष्यंसकरिष्यति ॥ तवभा
ग्यवशात्तस्ययदिताहङ्मनोभवेत् ॥ १४ ॥ इतिश्रुत्वावचस्तेषांपीपास्तान्प्राहवैष्णवान् ॥ प्रातर्यास्याम्यहंतूर्णंप्रयागंगुरुसन्नि
धिम् ॥ १५ ॥ इत्युक्त्वाससमायातोरामानन्दस्यसन्निधौ ॥ पीपाश्चापिसमुत्थायप्रातराहूयमंत्रिणम् ॥ १६ ॥ उवाचयाम्यहंकाशी
मद्यसैन्यंनियोजय ॥ प्रेतेनद्वंद्वयुद्धेऽहंनिशिस्वप्नेपराजितः ॥ १७ ॥ ततोभीतःप्रयास्यामिकाशींभोमंत्रिणाद्रुतम् ॥ इत्युक्त्वा
सैन्यसहितःप्रतस्थेकाशिकांपुरीम् ॥ १८ ॥ आगत्यकाश्यांप्रययौरामानंदगृहांतिके ॥ ततोद्वारिसमागत्यस्थितःशिष्यैश्चवारितः

॥१९॥ रामानंदस्तुतच्छ्रुत्वापीपाइतिममांतिके ॥ नृपंतंशिष्यवक्रेणरामानंदोऽब्रवीद्वचः ॥ २० ॥ राजचिह्नानिसर्वाणिदत्त्वाया
तुममांतिकम्॥श्रुत्वाचैवंददौसर्वंचामरव्यजनादिकम् ॥२१॥ पुनराहनृपंशिष्यैःकूपेनिपतनिर्भयः ॥ श्रुत्वैवंपतितुंतत्रकूपस्यनिकटं
गतः ॥२२॥ निवारितस्तदाशिष्यैरामानंदेनशिक्षितैः ॥ आनीतस्तुतदापीपारामानंदांतिकंतुतैः ॥२३॥ ततस्तुशिष्यमकरोद्रामानं
दोदयान्वितः ॥ श्रीकृष्णंभजसाधूनांसेवनंभक्तितःकुरु ॥२४॥ इत्युक्तोनृपतिःपीपाःप्रणम्यगुरुमब्रवीत् ॥ एकदाममदासस्यगेहंगत्वा
पुनीहिनः ॥ २५॥ इतितद्वचनंश्रुत्वास्वीचक्रेसगुरुस्तदा॥पीपानृपःसमायातःसेनयासहितोगृहम् ॥ २६ ॥ तत्रागत्यहरेर्भक्तिंचक्रेसनृ
पसत्तमः॥राज्यंपुत्रायदत्त्वासमंत्रिणंविनियुक्तवान्॥२७॥स्वयंतुवैष्णवैःसार्द्धंहरिभक्तिरतोऽभवत्॥विक्षिप्तोऽयंबभूवेतिप्रजाः सर्वाअम
न्यत॥ २८ ॥ अथसंवत्सरेयातेगुरुंपत्रमलीलिखत्॥भवदागमनंचेत्स्यात्स्यामहंपुण्यवान्नरः ॥ २९ ॥ इतितत्पत्रमाकर्ण्यरामानंदोदया
न्वितः ॥ कबीररविदासाद्यैःसहितस्तत्रचागतः ॥३०॥ आगच्छंतंगुरुंज्ञात्वायोजनोपरिभूपतिः ॥ आदायशिबिकांसैन्यैरग्रेगत्वानना
मतम् ॥३१॥ गुरुंचबहुशिष्यांस्तुनमस्कृत्यमुदान्वितः ॥ आरोप्यशिबिकायांताननिनायाथमंदिरम् ॥३२॥ संपूज्यभोजयामासभ
क्तिपूर्वंनृपोत्तमः ॥ अथद्वित्रिदिनान्योष्यगुरुरागंतुमुत्सुकः ॥ ३३ ॥ ततःपीपाधनंभूरिदत्त्वाथगुरवेमुदा ॥ रविदासोहिशिष्येभ्यो
ददौधनमनेकधा ॥ ३४ ॥ प्रस्थितंतंगुरुंपीपाःप्राहभक्तिसमन्वितः ॥ त्वयासार्द्धमहंयामित्यक्तंराज्यमिदंमया ॥ ३५ ॥ हृष्टस्तन्निश्च
यंप्राहगुरुरागच्छभूपते ॥ श्रुत्वागुरुवचःपीपास्तत्कालंनिर्ययौगृहात् ॥ ३६ ॥ अथपत्न्यःस्थितास्तस्यचलितादादशापिताः ॥

अथतावारयामासराजपत्नीःप्रयत्नतः ॥ ३७ ॥ ययुःसर्वागृहंतासांमध्येसीतातुनोययौ ॥ त्यक्त्वालज्जांस्थितवतीपत्युरग्रेऽतिभक्तितः
॥ ३८ ॥ ततःपीपागुरुंप्राहनाथनेयमिहार्हति ॥ प्रापयैनांगृहंचेतिगुरुःश्रुत्वाद्विजायवै ॥ ३९ ॥ प्राहैनांप्रापयगृहमितिश्रुत्वाथसा
पुनः ॥ गुरुंप्राहमरिष्येऽहंयदिमांननयेदयम् ॥ ४० ॥ ततोगुरुर्नृपंप्राहनयेमांसाधुकारिणीम् ॥ पुत्रीववैष्णवानांनःसमाजेस्थास्यतिध्रु
वम् ॥४१॥ ततःसर्वेप्रचलिताद्वारकांद्रष्टुमुत्सुकाः ॥ तत्रगत्वाथतेसर्वेयात्रांकृत्वाविधानतः ॥४२॥ दत्त्वादानान्यनेकानिचलितानिज
मंदिरम्॥रामानंदेनसहितावाराणस्यांत्वरान्विताः ॥४३॥ इति श्रीभगवद्भक्तिमाहात्म्येपीपाचरितंनामपंचाशीतितमःसर्गः ॥ ८५ ॥
अथत्यक्त्वासमायाताद्वारकांतेऽथवैष्णवाः ॥ पीपास्तत्रैवसंतस्थौसीतयासहसुव्रतः ॥ १ ॥ एकस्मिन्दिवसेनौकामारुह्योद
धिमध्यगः ॥ निपपातोदधौ द्वारवतीं द्रष्टुमना मुदा ॥ २ ॥ अथ श्रीभगवान्कृष्णो भक्तरक्षणतत्परः ॥ विधायतादृशंरूपंपीपा
ग्रेससुपस्थितः ॥३॥ दर्शयामासनगरींद्वारकांभक्तवत्सलः ॥ दर्शयित्वाहरिःप्राहपीपाभक्तंदयान्वितम् ॥ ४ ॥ गच्छास्माकंबहिर्भ
क्तगृहीत्वेमास्तुमुद्रिकाः॥शंखचक्रगदापद्मलांछिताःपुण्यदानृणाम् ॥ ५ ॥ इतिश्रुत्वावचस्तस्यनगच्छामीत्युवाचतम् ॥ नृपंतम
ब्रवीत्कृष्णोनकार्योऽयंहठस्त्वया ॥६॥ कथयिष्यंतिलोकावैभक्तोमग्नोमृतोऽभसि॥द्वारावत्यामितिमहान्कलंकःस्यात्ततोव्रज ॥ ७ ॥
ततोनिमीलिताक्षश्चश्रीकृष्णवचनान्नृपः ॥ समुद्रतीरेशुष्कांगआययौपश्यतांनृणाम् ॥ ८ ॥ तंवीक्ष्यसीतारुदतीस्नेहात्पादेपपा
तह ॥ चक्रेमहोत्सवंसाध्वीलब्ध्वामृतमिवागतम् ॥ ९ ॥ ततःकियद्दिनंस्थित्वाचलितःस्वगृहंप्रति ॥ मार्गेम्लेच्छेनतत्पत्नीसीता

सापहृताभवत् ॥ १० ॥ ततस्तुभगवंतंसासस्माराति शुचाकुला ॥ तस्मिन्नेवक्षणेकृष्णोहयमारुह्यसत्वरम् ॥ ११ ॥ धृत्वाखड्गं
ह्यश्ववाहरूपंकृत्वासमागतः ॥ उवाचदूरादायातावयंकिंप्रकरोषिरे ॥ १२ ॥ इतिश्रुत्वावचस्तस्यम्लेच्छस्तुप्रपलायितः ॥ अश्व
वाहस्तुतांनीत्वापीपांतिकमुपागतः ॥ १३ ॥ अश्ववाहंनृपःप्राहभवान्धन्योनसंशयः ॥ यदेनांविपिनेदीनांचौरात्संत्रातवानसि ॥
॥१४॥ इत्युक्त्वाप्राहसीतांसगच्छाद्यापिगृहंशुभे ॥ किंमयासहदुःखानिभोक्तुमिच्छसिकानने ॥ १५ ॥ इतिश्रुत्वावचःपत्युः सीता
प्राहातिदुःखिता ॥ किंमुहुर्भाषसेनाथनत्वांत्यक्ष्यामिकर्हिचित् ॥ १६ ॥ भगवान्किंनमांरक्षेत्पश्याद्यैवयथाभवत् ॥ इत्युक्तस्तुत
यापत्न्याततोऽपिचलितोवने ॥ १७ ॥ कियद्दूरंसमागत्यव्याघ्रमेकंददर्शसः ॥ मार्गमारुह्यतिष्ठंतंव्यात्तास्यंभीषणाननम् ॥ १८ ॥
दृष्ट्वासीतातिसंत्रस्तातामाश्वास्यनृपोऽब्रवीत् ॥ गत्वासमीपंव्याघ्रस्यनिर्भयेनांतरात्मना ॥ १९ ॥ अहोव्याघ्रकरोषित्वंकिमिदंकर्म्मग
र्हितम्॥नत्वंव्याघ्रःस्थितःपूर्वंकर्मणेमांदशांगतः ॥ २० ॥ कतिधात्वमभूद्राजाकतिधापशुरप्यभूः ॥ इदानींकर्मणानेनव्याघ्रोभूत्वावने
स्थितः ॥२१॥ ॥ अतस्त्वंत्यजकर्मेदंशिष्योभवममाधुना ॥ शवमांसेनवृत्तिंस्वांयावज्जीवंकुरुष्वभोः ॥ २२ ॥ पश्यमांतुलसीमालां
कंठबध्नाम्यहंतव ॥ अद्यारभ्यप्राणिहिंसांत्यजरेशपथोहरेः ॥ २३ ॥ इतिश्रुत्वाततोव्याघ्रोभूत्वासौम्योऽथतत्पदोः ॥ निपत्यचलि
तोऽरण्येकृत्वातस्यप्रदक्षिणम् ॥ २४ ॥ अद्यापितद्वनेव्याघ्राःसंतिनैवभयानकाः ॥ मृतमांसंसमश्नंतिघ्नंतिनैवचजीवितम् ॥ २५ ॥
ततस्तस्मात्प्रचलितःपीपाबहिरुपागतः ॥ वनाद्ददर्शमार्गेतुमध्याह्नेजीर्णमंदिरम् ॥ २६ ॥ तत्रगत्वाददर्शैकंभक्तंचौधरसंज्ञक

म् ॥ चौधरस्तस्यपत्नीचदृष्ट्वातौमुदितस्तराम् ॥ २७ ॥ उत्थितोजलमादायप्रक्षाल्यतत्पदांबुजम् ॥ गृहीत्वाहस्तमानीयगेहे
तावुपवेश्यच ॥ २८ ॥ एकांतेपाकशालायांपत्नीमाहकरोमिकिम् ॥ अद्यभिक्षापिनायाताकिमाभ्यांभक्ष्यतेऽधुना ॥ २९॥ इतिचौ
धरवाक्यंसाश्रुत्वाप्राहार्थवित्तदा ॥ अन्यत्किंचिन्नगेहेऽस्तिपरिधानीयकंविना ॥ ३० ॥ तद्ददामिगृहाणत्वंविक्रियान्नंस्वमानय ॥
भोजयैतौत्वहंतावत्स्थास्यामिकोष्ठमध्यगा ॥ ३१ ॥ इत्युक्त्वाप्रददौवस्त्रंतदासोऽप्यग्रहीच्चतत् ॥ गत्वावस्त्रंतुविक्रीयत्वरितोऽन्नानिचा
नयत् ॥ ३२॥ सीतामाहप्रसादायकुरुपाकंयथारुचि ॥ आवाभ्यामपितत्रैवभोक्तव्यंनात्रसंशयः ॥ ३३ ॥ इतिश्रुत्वाततःसीताशीघ्रं
पाकमथाकरोत् ॥ जातेपाकेततःपीपाश्चौधरश्चेत्युभौपुनः ॥ ३४ ॥ अर्पयामासतुर्भक्त्याप्रसादंहरयेमुदा ॥ अर्पयित्वाप्रसन्नात्मापीपी
पाःप्राहाथचौधरम् ॥३५॥ त्वमप्यागच्छतेपत्नीक्वगतायातुसापिभोः॥ चतुर्भिरपिभोक्तव्यंयुगपच्चेतिमेमतिः ॥३६॥ श्रुत्वापीपावचः
प्राहचौधरोविनयान्वितः ॥ भोक्तव्यंप्रथमंसाधोयुवाभ्यांनात्रसंशयः ॥३७॥ भवद्भुक्तावशिष्टंतदावांभोक्ष्यावहेमुदा ॥ इतिश्रुत्वाततः
सीतापाकस्थानाद्बहिर्गता ॥ ३८ ॥ विचिन्वतीचौधरस्यपत्नींकोष्ठेददर्शह ॥ नग्नांनिलीयतिष्ठंतींप्राहसीताकिमित्यहो ॥ ३९ ॥
ततश्चौधरपत्नीतामाहेदंकतिधाह्यभूत् ॥ भक्तभोजनसिद्ध्यर्थंनासीदंगेंशुकंमम ॥ ४० ॥ ततःसीतास्ववस्त्रार्द्धंदत्त्वातस्यैमुदा
न्विता ॥ बहिर्निष्कृष्यजहसुःसर्वेतेमुदिताभृशम् ॥ ४१ ॥ अथसीतास्वमनसिचिन्तयंतीमुहुर्मुहुः ॥ धन्योऽयंचौधरोधन्यातस्ये
यंवल्लभासती ॥ ४२ ॥ यदेवंदुर्दशांप्राप्तासाधून्भोजयतेमुदा ॥ कामेभक्तियंदस्यावैभक्तिलेशोऽस्तिमेनहि ॥ ४३ ॥ इति

चिंतयमानासापतिंगत्वातमब्रवीत् ॥ श्रुत्वापीपाअपितथाचिंतयामाससूरिशः ॥ ४४॥ प्राहपत्नींकथंचास्यकुर्यांमुपकृतिंपुनः ॥ सी
ताप्राहपतिंनाथयद्रक्ष्यसिकरोमितत् ॥ ४५ ॥ सीतांप्राहततःपीपाहट्टंगत्वायथारुचि ॥ अन्यायेनापिसंप्राप्यधनमस्मैसमर्पय
॥ ४६ ॥ अहंतत्रैवगच्छामि भूत्वाकर्मकरःपुनः ॥ वेतनादिकमादायदास्याम्यस्मैनसंशयः ॥ ४७ ॥ इत्युक्त्वासगतःक्वापिसी
ताहट्टामुपागमत् ॥ भाग्यवद्वणिजोद्वारितस्थावन्नादिसन्निधौ ॥ ४८ ॥ तांदृष्ट्वासवणिक्प्राहकात्वंकमललोचने ॥ राजपुत्रीवमेभा
सिस्वैरिणीवकिमागता ॥ ४९ ॥ दृश्यतेऽन्योनतेकश्चित्त्वंनवेश्येतिमेमतिः ॥ किंजिघृक्षसितद्ब्रूहिगृहाणान्नादिकंपुनः ॥ ५० ॥
इत्युक्त्वाप्रददौवैश्योवस्त्रमन्नादिकंबहु ॥ विससर्जप्रशाम्याथसीतानोवाचकिंचन ॥ ५१ ॥ गृहीत्वासर्वमन्नादिचौधरस्यगृहंगता ॥
ददौतस्मैसमीपाच्चनलेभेवेतनंतदा ॥ ५२ ॥ भिक्षामादायचान्नादिवस्त्रंचापिमनोरमम् ॥ चौधरस्यगृहेदत्त्वातस्थौतत्रकियद्दिन
म् ॥ ५३ ॥ एकस्मिन्दिवसेपीपाःस्नातुंगच्छन्नचिंतयत् ॥ कथमस्यधनंभूरिदत्त्वायास्यामिकुत्रचित् ॥ ५४ ॥ अथापश्यद्धटं
ताम्रंमुद्रितास्यंनवंदृढम् ॥ गत्वोद्घाट्यददर्शासौस्वर्णमुद्राप्रपूरितम् ॥ ५५ ॥ तथैवस्थापयामासपरवित्तमितिस्मरन् ॥ स्ना
त्वागत्यविसस्मारदिनेरात्रौतुतंस्मरन् ॥ ५६ ॥ उवाचसीतांस्नानार्थंगतोऽहंसरसोंतिके ॥ घटमेकमपश्यंवैस्वर्णमुद्राप्रपूरितम् ॥
॥ ५७ ॥ दृष्ट्वातथैवसंस्थाप्यपरस्वादानभीतितः ॥ आगतोऽहंदिवेदानींस्मृतिर्मेसमुपागता ॥ ५८ ॥ इतिसर्वंगृहाद्बाह्येस्थितः
शुश्रावतत्परः ॥ गत्वातत्राद्भुतंतस्यमुखमुद्घाट्यदृष्टवान् ॥ ५९ ॥ महासर्पंततःशीघ्रंमुद्रयित्वापियत्नतः ॥ क्रोधाच्चौधरभक्त

स्यपीपाशयनमंदिरे ॥ ६० ॥ छिद्रंकृत्वोपरिष्टात्तुपातयामासतंघटम् ॥ घटेनिपतितेपीपाःप्राहहृष्टोघटस्तुसः ॥ ६१ ॥ द्रव्य
पूर्णोनसंदेहश्चौधरंकथयाधुना ॥ततःसीतासपत्नीकंचौधरंप्रातरानयत् ॥ ॥६२॥ तंघटंप्रददौपीपाश्चौधरायवदन्मुदा ॥ भवदर्थंघटमि
मंदत्तवान्भगवान्हरिः ॥६३॥ गृहाणभुंक्ष्वसाधुभ्योदेहिसाधोव्रजाम्यहम् ॥ इत्युक्त्वाचलितःपीपावारितोऽपिनसंशयः ॥ ६४ ॥ इति
श्रीभगवद्भक्तिमाहात्म्येपीपाभक्तिचरितंनामषडशीतितमःसर्गः ॥ ८६ ॥ ॥ छ ॥ अथपीपाःसमागच्छन्मार्गेराजातिभक्तिमान् ॥
शूरसेनइतिख्यातस्तस्थौतन्नगरेमुदा ॥ १ ॥ गतेदिनत्रयेराजाशुश्रुवेतंसमागतम् ॥ अनपत्योद्रष्टुकामःपीपासन्निधिमागतः ॥२॥दृष्ट्वा
तंप्रणिपत्याहनाथशिष्योभवाम्यहम् ॥ इतिश्रुत्वावचस्तस्यपीपास्तंप्राहभूपतिम् ॥ ३ ॥ ममाज्ञांकुरुषेत्वंचेत्तदाशिष्यंकरोम्यहम् ॥
इत्युक्तःस्वीचकारासौकुर्वाज्ञांकरवाण्यहम् ॥ ४ ॥ ततःपीपानृपंप्राहधनमर्पयमेऽखिलम् ॥ तुभ्यंसमर्पितंसर्वमित्युवाचनृपस्तदा ॥५॥
पत्नीमानयचात्रेतिश्रुत्वानिन्येतदासतीम् ॥ पीपाभक्तायचददौततःपीपाउवाचतम् ॥ ६ ॥ इयंमदीयापुत्रीचजातातिष्ठतुचात्रभोः ॥
निर्लज्जासाधुसदसिस्वीचकारतदप्यसौ ॥ ७ ॥ ततोराजजनाःसर्वेक्रोधसंरक्तलोचनाः ॥ निर्निंदुर्नृपतिंचातोविक्षिप्तोऽयंनसंशयः ॥
॥८॥ ततोमंत्रंददौराज्ञेसंसारार्णवतारकम् ॥ उपदेशानथोवाचयत्किंचित्प्रकरोषिभोः ॥९॥ सवकृष्णार्पितंकृत्वासुखीभवनिरामयः॥
पुत्रवत्पालयजनान्नीतिंनोल्लंघयेःक्वचित् ॥१०॥ हरौभक्तिंसतांसंगंसेवनंसर्वदाकुरु ॥ गृहाणेमांधर्मपत्नींकुरुराज्यमकंटकम् ॥ ११ ॥
एवंविसृष्टोगुरुणाराजाधनमथार्पयत् ॥ गुरवेसनजग्राहपीपानिस्पृहतारतः ॥ १२ ॥ अथराजागुरुंनत्वाजगामनिजमंदिरम् ॥ पीपा

स्तत्रैवकतिचिद्दिनानिस्थितवान्मुदा ॥ १३ ॥ एकदावृषभान्क्रेतुंवणिगेकःसमागतः ॥ तंप्राहुर्विहसंतस्तेग्रामीणादुर्जनावचः ॥ १४ ॥
पीपानामास्तिभक्तोऽत्रवृषभाःसंतितस्यवै ॥ सदास्यतिततस्तत्रगच्छत्वंनात्रसंशयः ॥ १५ ॥ इतिश्रुत्वावचस्तेषांधूर्तानांसवणि
क्तदा ॥ पीपासमीपमागत्यप्रोवाचविनयान्वितः ॥ १६ ॥ साधोऽहंवृषभाकांक्षीवणिगत्रसमागतः ॥ ग्राम्यैरुक्तंभवन्नामतस्मात्त्वंदेहि
मेवृषान् ॥ १७ ॥ मूल्यंतेषांगृहाणत्वंयथोचितमिदंप्रभो ॥ पीपाःश्रुत्वावचस्तस्यवैश्यस्योवाचसस्मितम् ॥ १८ ॥ अहोमेवृषभाः
संतिसत्यंनास्त्यत्रसंशयः ॥ सायंतेऽत्रागमिष्यंतिग्रहीष्यतिततोभवान् ॥ १९ ॥ इत्युक्तःसवणिक्तस्थौक्वचित्पीपागृहेगतः ॥ स
स्मारभगवंतंसमहाचिंतापरोऽभवत् ॥ २० ॥ सायंकालेसमायातोवृषभानतिदुर्हमान् ॥ नीत्वैकोवैष्णवःपीपागृहद्वारिसमागतः ॥
॥ २१ ॥ दृष्ट्वातान्वृषभान्पीपावैश्यंहर्षात्समाह्वयत् ॥ आगतायविशेतस्मैवांछितान्वृषभान्ददौ ॥ २२ ॥ मूल्यंजग्राहतेषांतुवृषचा
रंतुवैष्णवम् ॥ संपूज्यपीपाभक्त्यातंविससर्जातिहर्षितः ॥ २३ ॥ तत्कालंसतुपीपावैग्रामीणान्समुपाह्वयत् ॥ संपूज्यसाधून्सर्वान्वै
ददौतद्द्रव्यमुत्तमम् ॥ २४ ॥ अहोमेवृषभानीतावणिजैकेनसांप्रतम् ॥ दत्तंमूल्यमिदंतद्वैयुष्मभ्यंप्रददाम्यहम् ॥ २५ ॥ इत्युक्त्वाप्रद
दौतेभ्योधनंतेप्यतिविस्मिताः ॥ तुष्टुवुस्तंमहाभक्तमाश्चर्यपरमंगताः ॥ २६ ॥ एकदासतुपीपावैस्नातुंद्वारेक्वचिद्गतः ॥ राजदत्ताश्व
मारुह्यतत्रबद्ध्वाक्वचिद्धयम् ॥ २७ ॥ स्वयंस्नातुंगतोनद्यांधूर्तास्तद्ग्रामवासिनः ॥ चोरयित्वासमानीयबबंधुर्निजवेश्मनि ॥ २८ ॥
स्नात्वागंतुमनाःपीपाअश्वंतत्रददर्शह ॥ तादृशंतुततोवृद्धंतमारुह्यागतोगृहम् ॥ २९ ॥ अथतेदुर्जनादृष्ट्वातमारुह्यापथेति

किम् ॥ गत्वागृहेतमश्वंतुबद्धंसंददृशुस्तथा ॥ ३० ॥ मुहुरेवंसुनिश्चित्यनीत्वातंघोटकंजनाः पीपासमीपमागत्यप्रार्थयंतोऽब्रुव
न्वचः ॥ ३१ ॥ अहोऽस्माभिश्चोरयित्वानीतोऽयंघोटकस्तव ॥ गृहाणेमंमहासाधोक्षम्यतांदुर्नयोमम ॥ ३२ ॥ ततस्तूर्भौहयौपी
पाराज्ञेशीघ्रंसमर्पयत् ॥ एकदासतुकुत्रापिगतउक्त्वाप्रियांप्रति ॥ ३३ ॥ सायमेष्यामिसीतेत्वंमध्याह्नेसमुपागतान् ॥ भोजयि
ष्यतिसर्वान्वैकृत्वाकर्म्मापिनिंदितम् ॥ ३४ ॥ इत्युक्त्वासगतःपीपामध्याह्नेसमुमागते ॥ आगताःसाधवःपीपागृहेक्षुत्तृट्प्रपीडिताः
॥३५॥ सीतादृष्ट्वातुतान्सर्वान्मुदादत्त्वाजलादिकम् ॥ स्वयंजगामहट्टायांकस्यचिद्वणिजोगृहे ॥ ३६॥ उवाचवणिजंसाध्वीपतिवाक्यं
स्मरंत्यसौ॥ साधवोमेसमायातास्तिष्ठंतिचबुभुक्षिताः ॥३७ ॥ देहितद्भोजनायत्वंतंडुलादिकमुत्तमम् ॥इतिश्रुत्वावचस्तस्यादृष्ट्वाताम
तिसुन्दरीम् ॥ ३८ ॥ उवाचगृह्यतांसर्वमागमिष्यसिचेन्निशि ॥ इत्युक्त्वासाप्युवाचाथदेहिचान्नंतवांतिकम् ॥ ३९ ॥ आगमिष्यामि
रात्रौतुसत्यमेतद्ब्रवीम्यहम् ॥ इत्युक्तःसतुसीतायैददावन्नमनुत्तमम् ॥ ४० ॥ सीतागृहीत्वातत्सर्वंसमायातानिजंगृहम् ॥ पक्त्वा
तान्भोजयामासबुभुजेऽन्नंस्वयंतुतत् ॥ ४१ ॥ तादृशंतुपणंकृत्वातयानीतंवणिग्गृहात् ॥ अथभुक्त्वागताःसर्वेसायंपीपाःसमागतः ॥
॥ ४२ ॥ फलमूलादिकंतस्मैभोजयामासभक्तितः ॥ स्वयंभुक्त्वाततःसीतापतिंप्राहयथाकरोत् ॥ ४३ ॥ श्रुत्वातद्वचनंपीपाःप्राह
गच्छद्रुतंशुभे ॥ स्वीकृत्याहंसमेष्यामिनयास्यसिपुनर्यदि ॥ ४४ ॥ तदामहानधर्मःस्यात्तस्माद्गच्छतदंतिकम् ॥ इतिपत्युर्वचः
श्रुत्वागमनायोपचक्रमे ॥ ४५ ॥ तदावृष्टिःसमायातासीताप्राहकरोमिकिम् ॥ तदापीपाःप्रियांवस्त्रैराच्छाद्यस्वयमेवहि ॥ ४६ ॥

प्रापयामासवणिजोगेहेसीतांमहासतीम् ॥ स्वयंतुवणिजोद्वारिस्थितस्तांप्रापयन्गृहम् ॥ ४७ ॥ दृष्ट्वातांतुवणिक्ग्राहकथंवृष्टौसमा
गता ॥ अनार्द्रवस्त्रदेहात्वमितिश्रुत्वाब्रवीच्चतम् ॥ ४८ ॥ पतिर्मांवाससाच्छाद्यप्रापयित्वास्तितेबहिः ॥ इतिश्रुत्वावचस्तस्याबहि
रागत्यदृष्टवान् ॥ ४९ ॥ पीपांस्वतातद्रूपंचसंदिहानोगतोगृहे ॥ ततःसीतांस्वजननींददर्शसवणिक्तथा ॥ ५० ॥ महासंदेहपा
थोधौनिमग्नोमनसावदन् ॥ अहोमेपितरौकालेमृतौकथंचकश्चसः ॥ ५१ ॥ एवंमुहुर्बहिर्गत्वासमागत्यगृहेपुनः ॥ नानिश्चेतुंशशाका
सौतदाभूत्वाभयातुरः ॥ ५२ ॥ सीतायामातृरूपिण्याःपपातचरणाब्जयोः ॥ उवाचगच्छमातस्त्वंक्षंतुमर्हसिमत्कृतम् ॥ ५३ ॥
तत्रपीपाःसमागत्यवणिजंप्राहहृष्टवत् ॥ वैश्यान्नंतवनीत्वेयंगतास्वीकृत्यत्वद्वचः ॥ ५४ ॥ तत्रतेनैवपाप्मेतिश्रुत्वावैश्योऽब्रवीद्वचः ॥
त्वंपितेयंतुजननीसत्यंपश्यामितादृशौ ॥ ५५ ॥ क्षमस्वताततबालस्यतवैवान्नादिकंत्विदम् ॥ गच्छस्वभवनंसाधोकृपांकुरुममोपरि
॥५६॥ इतिवैश्यवचःश्रुत्वापीपाःपत्न्यासमागतः ॥ निजगेहंनदाप्रातः सवणिक्समुपागतः ॥ ५७ ॥ पीपागृहेमुहुर्नत्वाजगामस्व
गृहेपुनः ॥ एवंसेवापरंतंतुवणिजंभक्तिसंयुतम् ॥ ५८ ॥ कालेनचाकरोच्छिष्यंपीपाः सोऽप्यतिवैष्णवः ॥ बभूवभक्तमाहात्म्यात्साधु
सेवनतत्परः ॥ ५९ ॥ ॥ पीपास्तुस्वगृहंगत्वापत्न्यासाकंस्थितोऽभवत् ॥ ६० ॥ इति श्रीभगवद्भक्तिमाहात्म्येपीपाभक्तिचरितं
नामसप्ताशीतितमः सर्गः ॥ ८७ ॥ छ ॥ श्रुत्वेदंसकलंराजासीतावृत्तंमहाद्भुतम् ॥ शूरसेनश्चुकोपाथपौरानाज्ञापयत्तदा ॥ १ ॥
पीपागुरुर्मेसीतातुममनातानसंशयः ॥ तांचाभक्त्यावीक्ष्यमाणः प्रावदद्यः स दंडभाक्॥२॥इत्याज्ञांप्रददौसर्वान्पीपाःश्रुत्वानृपांतिके॥

गत्वाप्रोवाचराजानंपत्नीतेयात्वपुत्रिणी ॥ ३ ॥ तमानयममाग्रेचेत्युक्तःसनृपतिःस्वयम् ॥ जगामपत्नींप्रोवाचगुरुर्मेऽत्रागतोऽस्ति
वै ॥ ४ ॥ त्वांद्रष्टुकामः शीघ्रंत्वंतत्रागच्छमयासह ॥ इत्युक्त्वासतयासार्द्धंगुरोरंतिकमागमत् ॥ ५ ॥ तावत्पीपाव्याघ्ररूपोबभूवाति
भयंकरः ॥ दृष्ट्वाव्याघ्रंमहाघोरंसर्वेतत्रपलायिताः ॥ ६ ॥ राजातुकंपमानःसन्तस्थौराज्ञीतुनिर्भया ॥ व्याघ्रस्यापिपुरस्तस्थौव्याघ्रो
प्यंतर्दधेक्षणात्॥७॥राज्ञःक्रोडेबभूवैकः सद्योजातोऽथबालकः ॥ पीपाः स्वयंस्वरूपेणप्रादुर्भूयाब्रवीन्नृपम् ॥ ८॥ राजंस्तवैवपत्नीयंसु
भगातिपतिव्रता ॥ अपुत्रिणीतिज्ञात्वामेमहाशोकोबभूवह ॥ ९ ॥ ततस्तुभगवांस्तुभ्यंपुत्रमेकंददौस्वयम् ॥ तंगृहाणसुतंराजंस्त
ववंकशरंशुभम् ॥ १० ॥ इतिश्रुत्वाननंदाथराजाराज्ञीचतौमुदा ॥ प्रणिपत्यगुरोःपादौचक्रतुस्तौमहोत्सवम् ॥ ११ ॥ पीपाः स्वगृ
हमागत्यतस्थौसीतासहायवान् ॥ श्रीकृष्णंमनसाध्यायन्पूजयन्वैष्णवान्मुदा ॥ १२ ॥ एवंकर्मभिरत्युग्रैःप्रसिद्धोऽभूच्चतत्रसः ॥ पीपा
भक्तःप्राणिमात्रेतदानन्तत्यवैष्णवाः ॥ १३ ॥ पीपापरीक्षांकर्तुंवैसमायाताश्चधूर्तवत्॥तंचैकत्रगृहंनीत्वातत्रोषुःकपटान्विताः ॥ १४ ॥
एकस्मिन्दिवसेसायंतेषामेकःसमागतः ॥ पीपांप्राहातिथिस्तेऽहमस्यांरात्रौप्रियामिमाम् ॥ १५ ॥ मह्यंदेहिपुनःप्रातस्तवैवाहंददा
मिते ॥ इतिश्रुत्वावचस्तस्यपीपाश्चातीवहर्षितः ॥ १६ ॥ स्वीकृत्यपत्नींप्राहाशुसीतेतेनसहव्रज ॥ अस्यांरात्रौपतिस्तेऽयंयद्वदिष्य
तितत्कुरु ॥ १७ ॥ इतिश्रुत्वापतिवचःसीतातत्कालमुत्थिता ॥ तंभक्तमनुवव्राजनिर्गत्यस्वगृहाद्बहिः ॥ १८ ॥ गतःसधूर्तोभक्त
स्तुविसस्मारगृहंस्वकम् ॥ गृहमार्गंचसर्वत्रददर्शजनसंकुलम् ॥ १९ ॥ एवंबभ्रामनगरेसमस्तांरजनींजडः ॥ उषःकालेपरिश्रांतः

पीपाद्वारंसमागतः ॥ २० ॥ ततःप्रातरभूत्सीताग्रहतंकपटान्वितम् ॥ रात्रिरेषागतासाचोद्वितीयमिदमस्त्यहः ॥ २१ ॥ नातःपत्नी तवाहंभोक्ष्यतांयाम्यहंगृहम् ॥ इतिश्रुत्वासभक्तस्तुलज्जमानःपुरःस्थितः ॥ २२ ॥ सीताजगामभवनंपत्यैप्राहातिहर्षिता ॥ बहिः सोऽपिसमागत्यतंभक्तंप्राहसांत्वयन् ॥ २३ ॥ किमुदासीनवत्त्वंहिदृश्यसेभक्तवत्सल ॥ त्वयोक्तमनयाकिंनुनकृतंतद्वदस्वमे ॥ २४ ॥ इतिपीपावचःश्रुत्वाभक्तोऽतीवसुलज्जितः ॥साष्टांगंप्रणिपत्याहक्षम्यतांमेमहागुरो ॥ २५ ॥ ततःसलज्जितोभूत्वागतोयत्रचतेस्थिताः ॥ वैष्णवस्तान्समाचष्टनिशिस्वभ्रमणादिकम् ॥ २६ ॥ नामन्यंततततस्तेतुसर्वेपीपागृहंययुः ॥ सायंकालेऽब्रुवन्सर्वेपरीक्षांकर्तुमागताः ॥ २७ ॥ अहोतेगृहिणींसीतांदृष्ट्वाचातीवसुंदरीम् ॥ व्यथंतेनोमनस्तांतेभोक्तुमिच्छामहेवयम् ॥ २८ ॥ इतिश्रुत्वावचस्तेषांपीपा प्राहातिहर्षितः ॥ सीतेत्वयारंतुकामाआगताःसाधवस्त्विमे ॥ २९ ॥ तस्मादेतैरमस्वास्यांरात्रौममवचोबलात् ॥ कुरुष्वसर्व शृंगारंयथैषांस्याद्रतिःपरा ॥ ३० ॥ इतिश्रुत्वावचःपत्युःकृत्वाशृंगारसाधनम् ॥ गेहेगत्वास्थितापश्चात्तेऽपिगंतुंसमुत्सुकाः ॥ ३१ ॥ गतातद्गृहदेहल्यांददृशुस्तांमहासतीम् ॥ व्याघ्रींव्यात्ताननांघोरांदृष्ट्वातेप्रपलायिताः ॥ ३२ ॥ ततःपीपास्तानुवाचभवंतोविद्रु ताः कथम् ॥ सासीतैवनसंदेहोयूयंगच्छतवैगृहम् ॥ ३३ ॥ इतिसर्वेपुनस्तेतुतद्गृहद्वारमागताः ॥अथसीतासमुत्थायतदग्रेगंतुमुत्सुका ॥ ॥३४॥ ततस्तेऽपिचतांसीतांप्राहुस्तातक्षमस्वनः ॥अज्ञानात्तुपरीक्षार्थमागतावयमत्रवाम् ॥३५॥ तत्क्षंतव्यंयुवाभ्यांनोवयंशिष्यानसं शयः ॥इतिश्रुत्वावचस्तेषांपीपाः प्राहातिभक्तिमान् ॥ ३६ ॥ कोऽहंकेयंसतांदासौययोर्भक्तेःपरीक्षणम् ॥ कर्तुमागतवंतस्तुभवंतो

भगवत्प्रियाः ॥३७ ॥आवांधन्यौ परीक्षार्थमागतानांसतांहिनः ॥ दुर्लभंदर्शनंजातमावयोर्नात्रसंशयः॥३८॥इतिपीपावचःश्रुत्वासर्वे
तेवैष्णवाजनाः॥स्तुवंतःस्वालयंजग्मुर्निंदंतःस्वकृतंमुहुः ॥३९॥ एवंपीपानृपोजातोभगवद्भजनात्कलौ । महासिद्धोवैष्णवानांमुख्यो
भक्तिप्रभावतः ॥ ४० ॥ तस्माद्भक्तिसमांकिंचिन्नास्तिसंसारतारकम् ॥ इतिज्ञात्वासदाधीमान्भगवद्भक्तिमाचरेत् ॥४१॥ इति
श्रीभगवद्भक्तिमाहात्म्येपीपाचरितंनामाष्टाशीतितमः सर्गः ॥ ८८ ॥ ॥ छ ॥ अथापरंप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥
महाश्चर्य्यप्रदंनृणांसद्योभक्तिप्रदायकम् ॥ १ ॥ आसीद्वैमथुराप्रांतेआभीरकुलसंभवः ॥ धनानाम्नातिसरलोगोप्रचारणतत्परः ॥२॥
पितृमातृयुतः पुत्रभार्याभ्यामपिसंयुतः ॥ प्रातरुत्थायगांनीत्वाचारयित्वादिवावने ॥३॥ सायंस्वगृहमानीयनिशिसुष्वापनित्यशः॥
एवंतस्यतुगोपस्यगतमर्द्धंवयोमुदा ॥ ४ ॥ तस्यद्वारेचैकदातुद्विजएकः समागतः ॥ स्नानपूजादिकंकर्तुंविचिन्वन्स्थलमुत्तमम् ॥५॥
दृष्ट्वागोष्ठंधनद्वारितस्थौतत्रद्विजोत्तमः ॥ उपलिप्यस्थलंतत्रचक्रेविष्णोःप्रपूजनम् ॥ ६ ॥ धनागोपस्तुतद्दृष्ट्वाशालग्रामशिलार्च्चन
म् ॥ संकल्पयामासचित्तेयक्ष्येऽहमपिताद्दृशम् ॥ ७ ॥ मुक्त्वाप्रस्थातुमुद्युक्तेविप्रेगोपोऽब्रवीद्धनाः ॥ कृतांजलिपुटोभक्त्याप्रणम्य
विनयान्वितः ॥ ८ ॥ ब्रह्मन्नेकंतुमेदेहिभगवंतंकृपांकुरु ॥ पूजयिष्याम्यहमपिलग्नंचातीवमेमनः ॥ ९ ॥ एवंपुनःपुनःप्राहभूत्वा
विप्रोऽपितद्वशः ॥ आर्यवत्प्रस्तरंत्वेकंस्थितंतंप्रददौहसन् ॥ १० ॥ गृहीत्वाप्रस्तरंगोपःप्रणिपत्यमुहुर्मुहुः ॥ हृदिसंयोज्यनेत्रेचव
स्त्रखंडेबबंधतत् ॥११॥ विप्रवत्स्वगलेबद्धास्वागाश्चारयितुंगतः ॥ गृहीत्वागोटिकादीनिभोक्ष्येतत्रेतिचिंतयन् ॥ १२ ॥ गत्वावनेनदी

तीरेस्नात्वापुष्पाणिचानयत् ॥ पंत्रंतत्प्रस्तरंकृत्वापूजयित्वाजलादिना ॥१३॥ रोटिकाःखंडशःकृत्वाशाकंदत्त्वाचभक्तितः ॥ प्रस्तराग्रेनिवेद्याथवस्त्रेणाच्छाद्यचाब्रवीत् ॥ १४ ॥ अहोभुंक्ष्वेदमन्नंमेभगवंस्त्वांनमाम्यहम्॥इत्युक्त्वावस्त्रमुद्घाट्यददर्शाभुक्तमेवतत् ॥१५॥ तदामन्यतदुग्धादिनास्तितस्माद्भुनक्तिन ॥ततोऽब्रवीत्प्रभोदुग्धंदधिप्रातर्भविष्यति ॥१६॥ अद्यनासीद्गृहेसत्यंकथयामिनसंशयः ॥ तस्माद्भुंक्ष्वमहाराजन्क्षुत्तृड्भ्यांपीडितोऽस्यलम् ॥ १७ ॥ इत्युक्त्वाचपुनर्ज्ञात्वाभुक्तंनैवचकिंचन ॥ तदामेनेनमेस्नानंप्रायःसम्यग्बभूवह ॥ १८ ॥ इतिसंचिंत्यसुस्नातोपुनरन्नंसमाहरत् ॥ ततआगत्यवस्त्रेणसंछाद्यान्नमुवाचतम् ॥ १९ ॥ अहोभुंक्ष्वहरेनाथशपथस्तेममाधुना ॥ इत्येकाग्रमनाभूत्वाप्रार्थयामासभक्तितः ॥ २० ॥ ततःश्रीभगवान्कृष्णोभक्तानुग्रहतत्परः ॥ प्रस्तराद्बुभुजेऽन्नंतदाविर्भूयकृपामयः ॥ २१ ॥ बिभ्रद्गोपालबालस्यरूपंचातिमनोहरम् ॥ कृष्णभुक्तावशिष्टंतुतदन्नंबुभुजेधनाः ॥ २२ ॥ एवंकतिपयैर्जातैर्दिनैःसब्राह्मणोत्तमः ॥ कार्यंकृत्वाधनाद्वारेसायमागतवान्पुनः ॥ २३ ॥ धनादृष्ट्वातुतंविप्रंसाष्टांगंप्रणनामह ॥ उवाचविप्रधन्योऽसिसम्यग्दत्तोहिमेप्रभुः ॥ २४ ॥ वनेभुंक्तेमयासाकंममगाश्चारयत्यलम् ॥ तस्मात्त्वंब्राह्मणश्रेष्ठयदिच्छसिकरोमितत् ॥ २५ ॥ इतिश्रुत्वामहाश्चर्यंवचःप्राहद्विजोत्तमः ॥ शपथंकुरुमेगोपकरिष्यासिमदीरितम् ॥ २६ ॥ तदाहंकथयिष्यामिस्वाभीष्टंतेनसंशयः ॥ इतिश्रुत्वाधनाःप्राहशपथस्तेगुरोर्मम ॥ २७ ॥ करिष्यामिवचस्तेऽहंनसंदेहंकुरुप्रभो ॥ इतिश्रुत्वावचस्तस्यविप्रःस्वाभीष्टमाहतम् ॥ २८ ॥ यदायातिहरिर्भोक्तुंत्वयासाकंवनेतदा ॥ तंमांदर्शयगोपालबालवेषंममप्रियम् ॥ २९॥ इतिश्रुत्वाधनाःप्राहप्रातस्त्वत्कथया

म्यहम् ॥ ततस्त्वांदर्शयिष्यामितंप्रभुंनात्रसंशयः ॥ ३० ॥ इत्युक्त्वासगतःप्रातर्वनेगाश्चारयन्धनाः ॥ समर्प्यान्नंभोजयित्वागोपाल
मिदमब्रवीत् ॥३१ ॥ नाथागतोगुरुर्मेद्यत्वांद्रष्टुंसोऽभिवांछति॥ धनावचनमाकर्ण्यभगवान्गोपवेषधृक् ॥ ३२॥ उवाचनैवंवक्तव्यंवि
हरस्वयथारुचि ॥ शालग्रामस्वरूपेणसमांपश्यतिनित्यशः ॥ ३३ ॥ इतिगोपालवचनंश्रुत्वाप्राहधनाःपुनः ॥ अहोमयाकृतस्तस्य
शपथोनात्रसंशयः ॥ ३४ ॥ भवतोदर्शनंतस्ययदिनस्यात्तदामम ॥ गुरुद्रोहसमंपापंसंप्राप्स्येजीवनेनकिम् ॥ ३५ ॥ तस्मात्त्वंदर्शनं
देहितस्मैश्रीगुरवेमम ॥ नोचेदद्यमरिष्यामितवाग्रेनात्रसंशयः ॥ ३६ ॥ इतिभक्तवचः श्रुत्वागोपालःपुनरब्रवीत् ॥ त्वंमाशोचस्वत
स्यापिदर्शनंमेभविष्यति ॥ ३७ ॥ त्वदर्चासमयेदूरंसमागत्यसवैद्विजः ॥ संमुखेसंस्थितोभूत्वामांपश्यतुनसंशयः ॥ ३८ ॥ इतिश्रु
त्वावचस्तस्यमुदितोऽभूद्धनाभृशम् ॥ आगत्यभवनेरात्रौगुरुंप्राहतदीरितम् ॥३९ ॥ अथप्रातर्धनागत्वारण्येगाश्चारयन्मुदा ॥ मध्या
ह्नेपूजयामासगोपालंभक्तिसंयुतः ॥ ४० ॥ ततःसभगवान्बालोगोपालस्यस्वरूपतः ॥ प्रादुर्बभूवतस्याग्रेश्यामःकमललोचनः
॥ ४१ ॥ दृष्ट्वातंश्रीहरिंविप्रोमोहितस्तस्यमायया ॥ तत्कालंवेदकोऽप्यस्यबालोगेहात्समागतः ॥ ४२ ॥ परंतुतस्यरूपेणमोहि
तःप्रेमतत्परः ॥ निर्निमेषदृशाविप्रोददर्शमुदितश्चिरम् ॥ ४३ ॥ अथश्रीभगवान्मुक्त्वाजगामस्वेच्छयाहरिः ॥ ब्राह्मणस्तुतदामेने
यातिवेश्मास्यकोप्यसौ ॥ ४४ ॥ ततोगतेहरौविप्रंद्रष्टुकामोधनागुरुम् ॥ विचिन्वन्नविदूरेतुदृष्ट्वातत्संनिधिंगतः ॥४५॥ गुरुंप्राहागतो
देवोदृष्टवानसितंप्रभुम् ॥ इतिश्रुत्वावचस्तस्यगुरुराहातिविस्मितः ॥ ४६ ॥ अहोसएवभगवान्श्यामः कमललोचनः ॥ बालरूपीम

याद्दष्टोयस्त्वेंतिकमुपागतः ॥ ४७ ॥ इतिश्रुत्वावचस्तस्य धनाःप्राहगुरुंपुनः॥सएवभगवान्विप्रयस्त्वयामेऽर्पितःपुरा ॥ ४८ ॥ पाषाण
स्तुततोदेवःप्रादुर्भूयान्वहंतथा ॥ भुंक्तेमयार्पितंचान्नंमदर्थंचापियच्छति ॥४९॥ तन्मयाभुज्यतेनित्यंयथायद्दष्टवानसि ॥ श्रुत्वेदंवच
नंविप्रोमहाविस्मयमागतः ॥ ५० ॥ उवाचवंचितोऽहंभोहरिणानात्रसंशयः ॥ एतस्मिन्समयेचाभूत्ताद्दशोमतिविभ्रमः ॥ ५१ ॥ इत्यु
क्त्वासद्विजस्तंतुप्राहधन्योऽसिपुत्रक ॥ यत्तवोपरिदेवेशएवंभूतोदयापरः ॥५२॥ भाग्यवानसिवत्सत्वंप्रसन्नोऽहंव्रजाम्यतः ॥ स्वगृहंग
च्छसाधूनामेवंसेवार्च्चनंकुरु ॥ ५३ ॥ इत्युक्त्वासगतोविप्रोधनाःस्वगृहमागतः ॥ तदारभ्यातिथीनांसमहासेवापरोऽभवत् ॥ ५४ ॥
यदाकदाचिद्भिक्षार्थीसमायातस्तुकुत्रचित् ॥ धनास्तस्मिन्क्षणेतत्रतोषयामासतंमुदा ॥ ५५ ॥ एकदामहदाश्चर्य्यंजातंतस्यब्रवीमि
तत ॥ पित्रासंप्रेषितःक्षेत्रेगोधूमवपनायसः ॥५६॥ धनागृहीत्वागोधूमंगच्छन्मार्गेऽथसज्जनान् ॥ क्षुधाकुलान्ददर्शाथयाचमानांश्चभो
जनम् ॥ ५७ ॥ तदाधनाःप्रसन्नात्माप्राहतान्वैष्णवान्मुदा ॥ तिष्ठंतुक्षणमात्रंतुभवंतोऽत्रनिराकुलाः ॥ ५८ ॥ आनयित्वाददाम्येवंच
र्व्वणंनात्रसंशयः॥इत्युक्त्वात्वरितंभ्राष्ट्रेगोधूमांश्चातिभर्ज्यसः ॥ ५९ ॥ कृत्वापिष्टंतुतत्रैवनीत्वासर्वमुपागतः ॥ तेषामेवतुपात्राणिगृही
त्वाजलमानयत् ॥ ६० ॥ भोजयामासतान्सर्वान्वैष्णवान्परयामुदा ॥ तेवैष्णवाःसुसंतुष्टाःप्रशंसंतोधनांययुः ॥६१॥ धनाअपिपितु
र्भीत्यानीत्वामूषकमृत्तिकाः ॥क्षेत्रेसंवापयामासपश्यतांतत्रवैनृणाम् ॥ ६२ ॥ वापयित्वातथागेहंसमायातोधनामुदा ॥ अथतत्रतुयैर्द्द
ष्टात्प्तामूषकमृत्तिकाः ॥ ६३ ॥ तेसर्वेऽपिसमागत्यधनापितरमब्रुवन् ॥ अनेनतवपुत्रेणचोप्त्वामूषकमृत्तिका ॥ ६४ ॥ गोधूमान्भोज

यामासवैष्णवान्नात्रसंशयः ॥ इत्युक्तस्तत्पिताप्राहकिंकृतरेधनास्त्वया ॥ ६५ ॥ किंभविष्यतिमेक्षेत्रेमृत्तिकावपनेकृते ॥ इतिश्रुत्वा
पितुर्वाक्यंधनाःप्राहवचोमुदा ॥ ६६ ॥ अहोतातकिमेतेषांशृणोषिवचनंमृषा ॥ कोऽपिकुत्रापिवपतिक्षेत्रेमूषकमृत्तिकाम् ॥ ६७ ॥
इतिश्रुत्वाधनावाक्यंपितातूष्णींस्थितोऽभवत् ॥ अनुयातंकतिपयेदिनेक्षेत्रंधनापिता ॥ ६८ ॥ द्रष्टुंगतोददर्शासौगोधूमांकुरसंचय
म् ॥ दृष्ट्वाजहर्षवैतत्रविस्मयंपरमंगतः ॥ ६९ ॥ अथतत्क्षेत्रेनिकटेयेषांक्षेत्राणियानिवै ॥ तेभ्योऽधिकाधनाक्षेत्रेगोधूमादशधाभवन् ॥
॥ ७० ॥ इतिदृष्ट्वामहाश्चर्यंसर्वेविस्मयमागताः ॥ धनापितातिमुदितोऽमन्यतश्रीहरेःकृपाम् ॥ ७१ ॥ एवंभक्तेस्तुमाहात्म्यंकोवावर्ण
यितुंक्षमः ॥ नासाध्यंविद्यतेलोकेहरेर्भक्तानुकंपिनः ॥ ७२ ॥ इति श्रीभगवद्भक्तिमाहात्म्येधनाभक्तिचरितंनामैकोननवतितमः
सर्गः ॥ ८९॥ ॥ छ ॥ अथान्यत्संप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥ परमाश्चर्यजनकंहरिभक्तिप्रवर्धनम् ॥ १ ॥ आसीद्बुंदेलख
ण्डेवैनृपोरामइतिश्रुतः ॥ अत्रापिबांधवगढेनिवासस्तस्यविश्रुतः ॥ २ ॥ धर्मात्मादानशीलश्चदेवतातिथिपूजकः ॥ एकनारीव्र
तरतःसंग्रामविजयीसदा ॥ ३ ॥ तस्यैकोनापितोनित्यंतैलाभ्यंगादिकर्मकृत् ॥ नाम्नासेनेतिविख्यातःप्रीतिपात्रंनृपस्यवै ॥ ४ ॥
सतुबाल्यंसमारभ्यसाधुसेवापरायणः ॥ सेनालब्ध्वाधनंसर्वंदीनेभ्यश्चददौसदा ॥ ५ ॥ राजसेवांविधायासौयत्रयत्र
हरेःकथा ॥ तत्रतत्रस्थितःशृण्वन्महानन्देममज्जह ॥ ६ ॥ दीनानांकेशवपनं श्रांतानांपादमर्दनम् ॥ अंगोद्वर्तनकर्मादिचक्रे
ऽसौवेतनंविना ॥ ७ ॥ एवंभक्तिपरःसेनानापितोराजसेवकः ॥ एकदाप्रातरुत्थायगच्छन्सराजसन्निधिम् ॥ ८ ॥ अभ्यंगादिविधाना

यमार्गेऽपश्यत्सवैष्णवान् ॥ बुभुक्षितान्याचमानानन्नंसेनाःप्रणम्यतान् ॥ ९ ॥ आनीयस्वगृहेतेषांपरिचर्य्यापरोऽभवत् ॥ विसस्मार
सराजानमात्मनश्चापिदासताम् ॥ १० ॥ भगवद्भक्तसेवायामेकचित्तोबभूवह ॥ तेषांसेवावशात्तस्यमध्याह्नःस्वगृहेऽभवत् ॥ ११ ॥
राजारामस्तुभवनेप्रातरुत्थायचाह्निकम् ॥चिकीर्षुर्बहिरागत्यदंतधावनमाचरत् ॥ १२ ॥ अथाभ्यंगस्यसमयोजातस्तस्यमहीभुजः॥
तदासेनास्वरूपेणभगवान्भक्तवत्सलः ॥ १३ ॥ प्रेषयामासपुरुषंकिंचिन्मायाविनिर्मितम् ॥ सेनाभक्तस्यनृपतेःकोपोमाभूदिति
स्मरन् ॥ १४ ॥ अथासौकृत्रिमःसेनानीत्वातैलादिभाजनम्॥अभ्यंजयामासनृपंकुशलीबहुसौख्यदम् ॥१५॥ राजाथाभ्यंगजंसौख्यं
तादृशंनापकर्हिचित् ॥ मुमुदेमनसात्यर्थंज्ञात्वातस्यातिकौशलम् ॥१६॥ अभ्यज्यभूपतिंमायासेनाःकोष्ठाद्बहिर्गतः ॥ नगराद्बहिराग
त्यतत्रैवांतर्बभूवह ॥ १७ ॥ अथसेनास्तुतान्भक्तान्भोजयित्वातिभक्तितः ॥ विसृज्यनृपतिंरामंसस्माराातिभयाकुलः ॥ १८ ॥ तत
स्तुत्वरितंराजद्वारे गत्वातिशंकितः ॥ तस्थौनराजसविधेभयाद्गंतुंशशाकसः ॥ १९ ॥ अथान्योभृत्यवर्गस्तुसेनांप्राहकुतोभवान् ॥
तिष्ठत्यत्रैवनृपतेःसंनिधिंनैवगच्छसि ॥ २० ॥ इतिश्रुत्वाततःसेनास्तंप्राहातिभयाकुलः ॥ अद्याहंसापराधोऽस्मिसेवांकर्तुंनचागतः ॥
॥२१॥ किंकरिष्यतिमांदृष्ट्वाराजेत्येवंभयाकुलः ॥ तिष्ठाम्यत्रततोभ्रातस्त्वंगच्छनृपसन्निधिम् ॥२२॥ मदर्थंसतुविज्ञाप्यस्त्वयाभूमिप
तिः प्रभुः॥यथाक्षमेतमेभ्रातरपराधंतथाकुरु ॥ २३ ॥ इत्युक्तःसतुभृत्योवैगत्वानृपतिसन्निधिम् ॥ प्रांजलिःप्रार्थयामासप्रभोसेनाःसना
पितः ॥ २४ ॥ सेवार्थमद्यनायातस्ततोद्वारिभयातुरः ॥ अनुग्रहंप्रार्थयतितत्राज्ञायादृशीभवेत् ॥ २५ ॥ इतिश्रुत्वावचस्तस्यराजा

प्राहातिविस्मितः ॥ अरेप्रातःसमागत्यकृत्वाभ्यंगादिकंमम ॥ २६ ॥ सेनागतःपुनश्चैवंभाषतेभ्रांतवत्कथम् ॥ आनयस्वममाग्रेतं दत्तंतदभयंमया॥२७॥इतिश्रुत्वाततोभृत्यःसेनामुक्त्वानिनायसः ॥ समागत्यततःसेनानत्वाभूपंकृतांजलिः ॥ २८ ॥ तस्थौभूपस्ततःप्राहसेनास्तेकिमभूदिदम् ॥ प्रातरभ्यंगकर्मादिकृत्वात्वंगतवानसि ॥ २९ ॥ पुनरेवंवचोब्रूषेकारणंनात्रवेद्म्यहम् ॥ इतिराजवचःश्रुत्वासेनाप्राहकृतांजलिः ॥ ३० ॥ राजन्नद्यभवत्सेवांकर्तुमागतवान्पथि ॥ अवश्यंभगवद्भक्तान्नीत्वातांश्चपुनर्गृहम् ॥ ३१ ॥ गत्वातत्सेवनासक्तोनागतोऽहंतवांतिके ॥ अतोऽपराधाद्भवतांभीत्याद्वारिस्थितोऽभवम् ॥ ३२ ॥ इतिश्रुत्वावचस्तस्यराजाचातीवविस्मितः ॥ उवाचान्यानपिजनान्युष्माभिरयमीक्षितः ॥ ३३ ॥ ममाभ्यंगस्यसमयेसेनाःसेवापरायणः ॥ तैरुक्तंभोमहाराजदृष्टोऽस्माभिरयंकिल ॥ ३४ ॥ ततोराजातथान्येचभगवत्कृपयास्यवै ॥ कृत्वारूपंसमागत्यतन्मायाकल्पितःपुमान् ॥ ३५ ॥ अकार्षीत्सेवनंमेऽद्यनात्रकार्याविचारणा ॥ इतिनिश्चित्यराजातुसेनांभक्तममन्यत ॥ ३६ ॥ सेनांप्राहातिभक्त्यावैभूपतिर्नम्रयागिरा ॥ अहोऽद्यारभ्यसेनास्त्वंत्यजसेवांनणामिह ॥ ३७ ॥ ममापिसेवनंत्यक्त्वाकुरुसाधुसमर्चनम्॥ ददामिजीविकांतुभ्यंग्राममेकंप्रसन्नधीः॥३८॥ तदुत्पन्नैर्धनैःसाधस्तोषयन्ममसन्निधौ ॥ गुरुवत्तिष्ठनगरेत्यजवृत्तिंनिजांपुनः ॥ ३९ ॥ इतिश्रुत्वाततःसेनाःप्रणम्यनृपतिंमुदा ॥ समायातोनिजंवेश्मस्थितोभक्तिपरायणः ॥४०॥ राजाचान्येऽपितेसर्वेयैर्दृष्टंमहाद्भुतम् ॥ तेसर्वेऽपिमहाभक्ताजाताःसाधुसमागमात् ॥ ४१ ॥ एवंभक्तिप्रसादेनगताःसर्वेपरंपदम् ॥ तस्माद्भक्तिसमंकिंचिन्नास्तिलोकहितंनृणाम् ॥४२॥ इति श्रीभगवद्भक्तिमाहात्म्येसेना

भक्तिचरितंनामनवतितमःसर्गः ॥९०॥ अथापरंप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम्॥यस्यश्रवणमात्रेणहरिभक्तिर्भवेन्नृणाम् ॥१॥ रामा
नंदस्यशिष्योयः सुखानंदइतिस्मृतः ॥ महाभक्तोऽवसत्सर्वगानविद्याविशारदः ॥ २ ॥ साधुसेवनसंसक्तोनिस्पृहोविषयेसदा ॥ ती
र्थाटनरतः शांतः श्रीकृष्णध्यानतत्परः ॥३॥ यदावीणांसमादायश्रीकृष्णचरितंमुदा ॥ गायतिस्मवनेतत्रहरिणाश्चित्रवत्स्थिताः॥४॥
अन्येऽपिपशवोऽरण्येगायंतंश्रीहरेर्गुणान् ॥ सुखानन्दंसमावव्रुर्लिहंतःसाश्रुलोचनाः ॥ ५ ॥ एकदामथुरायांतुराधामंदिरसन्निधौ ॥
वैष्णवानांसमूहोऽभूत्सुखानंदः समागतः ॥६॥ वीणांनिनादयन्गायन्श्रीकृष्णचरितंमुदा॥दृष्ट्वातंवैष्णवास्सर्वेनेमुरुत्थायसादरम्॥७॥
सुखानंदोऽपितान्नत्वाकचित्तत्रोपविष्टवान् ॥ अथसर्वैर्विष्णुभक्तैः सुखानंदःसमर्थितः ॥८॥ कृष्णेगतेद्वारकायामत्रगोप्यःसमुत्सुकाः॥
विरहिण्योजगुः कीदृक्तथागानंकुरुप्रभो ॥९॥ इतिश्रुत्वासुखानंदोराधाकृष्णौविचिंतयन् ॥ विप्रयोगंतयोर्भक्त्यासगायतिमनोहरम्
॥ १०॥ तस्मिन्गायतिवैतत्रबभूवुश्चित्रवन्नराः॥केचिद्रुरुदुःसंतस्थुःकेचिन्मूर्च्छांप्रपेदिरे ॥११॥ तदारभ्यगृहंकेचित्त्यक्त्वाहंसवदास्थि
ताः ॥ निःस्पंदतनवोजाताःसुखानंदेप्रगायति ॥ १२ ॥ राधायामंदिरेयासीत्प्रतिमातिमनोहरा॥ चकंपेसापिरुदतीमुंचत्यश्रूदृशोर्बहु
॥ १३ ॥ इत्येवंपरमाश्चर्यंजातंतस्मिन्प्रगायति॥निष्कंपास्तरवोजाताजीवमात्रंचनिश्चलम् ॥ १४ ॥ अथज्ञात्वातुतान्सर्वान्सुखानं
दोऽतिमोहितान्॥गानान्निववृतेतत्रस्वयमुत्थाययत्नतः ॥ १५॥ उत्थाप्यमोहितान्सर्वान्नानालौकिकभाषया॥तेसर्वेऽपिसमुत्थायसस्मे
रुर्लब्धचेतनाः ॥ १६ ॥ गीतश्रवणतोजातमानंदंपरमाद्भुतम्॥सुखानंदंप्रणेमुस्तेवैष्णवाभक्तिसंयुताः॥१७॥ धन्योऽसिभगवद्भक्तिःपू

थिव्यांनास्तित्वत्समा॥एवंतैःसंस्तुतोभक्तःसुखानंदोयदृच्छया ॥ १८ ॥ गायञ्छ्रीकृष्णचरितंप्रतिकुंजेचचारह॥ एवंसंस्मृत्यसंस्मृत्य
गायन्कृष्णविचेष्टितम् ॥ १९॥ कृत्वातीर्थान्यनेकानिमथुरायांसमागतः॥पूर्णायुर्यमुनातीरमासाद्यैकदिनेस्वयम् ॥२०॥ गायञ्छ्रीकृ
ष्णचरितंययौतत्पदमुत्तमम्॥दुष्प्राप्यमपिदेवानांयोगिनामपिदुर्लभम् ॥२१॥ तत्त्रापससुखानंदोभगवद्गुणनामतः ॥ २२ ॥ इति
श्रीभगवद्भक्तिमाहात्म्येसुखानंदचरितंनामैकनवतितमःसर्गः ॥ ९१ ॥ ॥ रामानंदस्यशिष्योयःसुरसरानंदविश्रुतः ॥ महावै
राग्यसंयुक्तःश्रीकृष्णध्यानतत्परः ॥१॥ कृत्वासर्वाणितीर्थानिजगन्नाथंगतोमुदा॥शिष्यैःसार्द्धंमहाभक्त्यातत्रोवासकियद्दिनम् ॥ २ ॥
ततोनत्वाजगन्नाथंप्रास्थितःकाशिकांप्रति ॥ शिष्यैःपरिवृतोमार्गेपुरीतोबहिरागतः ॥ ३॥ दृष्ट्वायांवटकाञ्छुभ्रान्ददर्शैकेनरक्षितान् ॥
तत्रस्थित्वास्वयंप्राहतंवैवटकरक्षकम् ॥ ४ ॥ किमिदंभोमहाभागमहोज्ज्वलतरंपुनः ॥ स्थाप्यतेतन्ममाचक्ष्वज्ञातुमिच्छतिमेमनः
॥ ५ ॥ इतिश्रुत्वावचस्तस्याब्रवीद्वटकरक्षकः ॥ महामूर्खइतिज्ञात्वाउपहासपरायणः ॥ ६ ॥ जगन्नाथप्रसादोऽयंकिंभोक्ष्यसिगृहाण
भोः ॥ इत्युक्त्वावटकंत्वेकंददौवटकरक्षकः ॥ ७ ॥ मुदासुरसरानंदोगृहीत्वाबुभुजेस्वयम् ॥ ततस्तस्यैकशिष्योऽपिबुभुजेवटकंततः
॥ ८ ॥ दृष्ट्वासुरसरानंदःशिष्यंप्राहातिकोपतः ॥ अरेत्वयाकथंभुक्तमन्नंनीचेनपाचितम् ॥ ९ ॥ अतस्त्वंतुबहिस्तिष्ठपंक्तितो
नात्रसंशयः ॥ ततस्तत्रस्थितायेवैतेसर्वेभक्तमब्रुवन् ॥ १० ॥ भवद्भुक्तंविलोक्यायंबुभुजेतत्रकिंभवान् ॥ कुरुतेपंक्तितोबाह्यं
तवशिष्यंनिरागसम् ॥ ११ ॥इतिश्रुत्वावचस्तेषांजनानांसोऽब्रवीद्वचः ॥ अहोमहाप्रसादोऽयमितिनिश्चितबुद्धिना ॥ १२ ॥ भुक्तंम

यानसाबुद्धिरस्यदानींहिवतत ॥ इत्थसुरसुरानंदवचःश्रुत्वातुनागराः ॥ १३ ॥ आहुःकथंविजानीमोभवतस्तादृशीमतिः ॥ तस्यनैवेतिवचनश्रुत्वाभक्तोऽब्रवीद्वचः ॥ १४ ॥ दर्शयाम्यावयोर्बुद्धिविशेषंनागराअहो ॥ इत्युक्त्वातमुवाचासौशिष्यंत्ववमनंकुरु ॥ १५ ॥ अहंचापिकरोम्येववमनंवःप्रपश्यताम् ॥ इत्युक्त्वागुरुशिष्यौतौवमतुश्चपृथक्पृथक् ॥ १६ ॥ शिष्यस्तुवटकंयत्नादुज्जगारातियत्नतः ॥ गुरुःसुतुलसीपत्रमुद्गीर्यादर्शयच्चतान् ॥ १७ ॥ उवाचचततस्तांस्तुनिश्चयस्यफलंत्विदम् ॥ मयाप्रसादबुद्ध्यैवभुक्तमेतेनवैपुनः ॥ १८ ॥ मयाभुक्तमितिज्ञात्वापक्वान्नस्यधियापुनः ॥ तस्मादयंपंक्तिबाह्योयावत्काशींगमिष्यति ॥ १९ ॥ प्रायश्चित्तंद्विजप्रोक्तंकृत्वाशुद्धोभविष्यति ॥ ततोवयंतुभोक्ष्यामःसहानेननसंशयः ॥ २० ॥ इत्थंसुरसरानंदचरितंपरमाद्भुतम् ॥ दृष्ट्वासर्वेमहाश्चर्यंप्रीत्यानेमुश्चतंमुदा ॥ २१ ॥ ततःसुरसरानंदःसमागत्यचकाशिकाम् ॥ प्रायश्चित्तंददौतस्मैशुद्धंकृत्वाविधानतः ॥२२॥ बुभुजेऽन्नंततस्तेनसाकंशिष्यसमन्वितः ॥ एवंसुरसरानंदोमहाभक्तोबभूवह ॥ २३ ॥ इति श्रीभगवद्भक्तिमाहात्म्येसुरसरानंदभक्तचरितंनामद्विनवतितमःसर्गः ॥ ९२ ॥ रामानंदस्यापरोभूच्छिष्यःसुरसुरिःशुभः ॥ तस्यभक्तंस्तुचरितंप्रवक्ष्यामियथाश्रुतम् ॥१॥ सुरसुरिर्महाभक्तोविरक्तोविषयेष्वभूत् ॥ स्त्रीपुत्रधनमित्रादौनस्नेहोममतानच ॥ २ ॥ ग्रामेविविक्तदेशस्याभावाद्वनमुपागतः ॥ पत्नीतस्यातिसुभगासतीधर्मपरायणा ॥ ३ ॥ पत्यासहवनंयातापतिसेवाचिकीर्षया ॥ अरण्येऽपिचभक्तःसफलमूलादिनासुदा ॥ ४ ॥ सज्जनान्भोजयामासमहासेवापरायणः ॥ एवंगतेषुकालेषुदुष्टएकःसमागतः ॥ ५ ॥ सुरसुरेर्गृहेसायंहर्तुंसुरसुरेःस्त्रियम् ॥ सुरसुरि

स्तुतभक्त्यामुदापरिचचारह ॥ ६ ॥ अथार्द्धरात्रसमयेसमुत्थायसदुर्ज्जनः ॥ सुरसुरिंनिहत्येमांग्रहीष्यामिपतिव्रताम् ॥ ७ ॥ इति
निश्चित्यस्वगृहाद्बहिर्यातोयदातदा ॥ सुरसुरिस्तुसस्मारश्रीकृष्णंविजनेवने ॥ ८ ॥ तत्क्षणात्तत्रसुमहान्व्याघ्रोऽतीवभयंकरः ॥ स
मागत्यगृहीत्वातंदुष्टंकपटरूपिणम् ॥ ९ ॥ गत्वावनेचखादाशुततःसुरसुरिःस्वयम् ॥ बहिरागत्यतंदुष्टमाजुहावातिभीतवत् ॥ १० ॥
कुतोगतोऽयंपापात्माकुरुतेकिंमहानिशि ॥ इतिचिंतापरोभूत्वापुनःशयनमाविशत् ॥ ११ ॥ ततःप्रभातेसंजातेतंदुष्टमुटजांतिके ॥
व्याघ्रेणनिहतंदृष्ट्वाचिंतयामासवैभृशम् ॥ १२ ॥ कस्मादेषसमायातोममवेश्मन्यसौपुनः ॥ व्याघ्रेणनिहतःस्वेनकर्मणानात्रसंशयः ॥
॥ १३ ॥ अहोकर्मगतिश्चित्रादुर्निवार्यामरैरपि ॥ यद्वशोलभतमर्त्यःसुखदुःखेअपारिते ॥ १४ ॥ इत्थंसुरसुरिर्भक्तश्चिंतयंस्तंचदुर्जनम् ॥
आगत्यस्वगृहेतस्थौश्रीकृष्णध्यानतत्परः ॥ १५ ॥ इति श्रीभगवद्भक्तिमाहात्म्येसुरसुरिभक्तिचरितंनामत्रिनवतितमःसर्गः ॥ ९३ ॥
अथापरोबभूवैकोनाम्नानरहरिःशुभः ॥ परानंदस्यशिष्योऽसौतद्भक्तिंकथयाम्यहम् ॥ १ ॥ नरहरिर्महाभक्तोविरक्तोविषयेऽभवत् ॥
ग्रामाद्बहिःकुटींबद्ध्वातस्थौचित्तेहरिंभजन् ॥ २ ॥ परंतुस्वगृहेसायंसमायाताञ्जनान्मुदा ॥ अकर्तव्यमपिप्रेम्णाकृत्वासंतर्पयन्स्थि
तः ॥ ३ ॥ एकदातस्यभवनेसमायाताश्चवैष्णवाः ॥ तेषांभोजनसिद्ध्यर्थंनासीत्तस्यैंधनंक्वचित् ॥ ४ ॥ यावच्चस्वगृहेकाष्ठंदग्धुंयो
ग्यंस्थितंतुतत् ॥ सर्वमिंधनमेवासौचकारपरयामुदा ॥ ५ ॥ तस्मिन्दिनेनरहरिर्नलब्ध्वावेश्मनींधनम् ॥ विचिंत्यसगतोग्रामाद्वाह्येन
प्रापकिंचन ॥ ६ ॥ तत्रासीद्ग्रामदेव्येकादुर्गाजाग्रत्स्वरूपिणी ॥ तस्यागृहंददर्शासौजीर्णकाष्ठचयान्वितम् ॥ ७ ॥ तत्रगत्वान

स्कृत्यसंप्रार्थ्यग्रामदेवताम् ॥ इंधनानिसमाहृत्यतद्गृहात्स्वगृहंययौ ॥ ८ ॥ तेनेंधनेनतेषांवैसंपाद्यान्नंप्रहृष्टवत् ॥ भोजयामासता
न्सर्वान्नस्वार्थंपाकमाचरत् ॥ ९ ॥ ततोभगवतीतुष्टानिशितंस्वप्नमादिशत् ॥ अरेनरहरेतेऽहंतुष्टास्मिशृणुमेवचः ॥ १० ॥
अद्यारभ्यतवाकस्मादिंधनंवैभविष्यति ॥ नमेमंदिरकाष्ठानिग्राह्याणीहत्वयापुनः ॥ ११ ॥ इत्थंनरहरिर्दृष्ट्वास्वप्नंप्रातःसमुत्थितः ॥
ददर्शचांगणेबद्धंशुष्ककाष्ठचयंस्थितम् ॥ १२ ॥ अमन्यततदास्वप्नंसत्यंदेव्याप्रभाषितम् ॥ एवंद्वित्रिदिनेजातेज्ञाततत्केनचित्पु
नः ॥ १३ ॥ सामाजिकेनतेनापिरात्रौदुर्गागृहस्थितम् ॥ काष्ठंनीतंचपाकार्थममाप्येवंभविष्यति ॥ १४ ॥ एवंसंचिंत्यतत्काल
मारभ्यास्यशिरोव्यथा ॥ महतीसंबभूवाथसमुमूर्षुरभूत्क्षणात् ॥ १५ ॥ अथतस्मैनिशिस्वप्नंददौदेव्यतिकोपिनी ॥ अरेत्वंमेस्वभव
नात्काष्ठमानीतवानसि ॥ १६ ॥ इंधनार्थंततस्त्वांतुसकुलंनाशयाम्यहम् ॥ यदिचत्वंममवचोनकरिष्यस्यतःपरम् ॥ १७ ॥ आ
स्तेनरहरिर्भक्तोयोऽसौग्रामेममप्रियः ॥ तस्मैशुष्केंधनंबद्धाप्रत्यहंदेहिवेश्मनि ॥ १८ ॥ नकरिष्यसिचेद्वाक्यंमदुक्तंमोहतोयदा ॥
तदात्वांसकुलंचाहंहनिष्यामिनसंशयः ॥ १९ ॥ इतिसस्वप्नमालोक्यप्रातरुत्थाययत्नतः ॥ शुष्ककाष्ठचयंबद्धाधृत्वाशिरसिभक्ति
तः ॥ २० ॥ ददौनरहरेर्गेहेदुर्गादेवींस्मरन्मुदा ॥ तत्कालादेवतस्यापिशिरःपीडान्यवर्तत ॥ २१ ॥ प्रत्यहंसतदारभ्यगत्वानर
हरेर्गृहम् ॥ प्रददाविंधनंभक्त्यादेव्यावाक्यंस्मरन्भयात् ॥ २२ ॥ तदारभ्यचभक्तस्यसाधोर्नरहरेर्गृहे ॥ नाभूदिंधनवैकल्यंबभूवा
त्यंतमद्भुतम् ॥ २३ ॥ एवंभक्तेर्विलसितंमहाश्चर्यकरंपरम् ॥ असाध्यमपिसिध्येतलोकेभक्तिमतांनृणाम् ॥ २४ ॥ इति

श्रीभगवद्भक्तिमाहात्म्यनरहरिभक्तिचरितनामचतुर्नवतितमः सर्गः ॥ ९४ ॥ कबीरस्यचशिष्योऽभून्नाम्नापद्मइतिस्मृतः ॥ सतुनामैव
जग्राहरामेत्यक्षरयुग्मकम् ॥ १ ॥ अजामिलादिपापिष्ठसमुद्धरणकारणम् ॥ श्रुत्वाकबीरवदनान्नामैवपरमंमनुम् ॥ २ ॥ सतुकाश्यां
वसन्भक्तोरामनामपरायणः ॥ साधुसेवासमासक्तोगुरुशुश्रूषणेरतः ॥ ३ ॥ एकदाचाविमुक्तेतुवणिगेकोमहाधनः ॥ कुष्ठरोगातुरोमर्तुं
गंगातीरमुपागतः ॥ ४ ॥ महाभारंगलेबद्ध्वाप्रस्तरंजाह्नवीजले॥ निमज्ज्याहंमरिष्यामीत्येवंनिश्चित्यचेतसा ॥ ५ ॥ अथतत्रसमाया
तःपद्मनामातिभक्तिमान् ॥ पप्रच्छवणिजंत्वंभोःकिमर्थंमर्तुमिच्छसि ॥ ६ ॥ वणिगाहस्ववृत्तांतंश्रुत्वापद्मोऽब्रवीत्पुनः ॥ अहोमयोच्य
तेयत्तेतत्कुरुष्वाद्यमेवचः ॥ ७ ॥ अद्यैवनिरुजंदेहंगच्छकिंमर्तुमिच्छसि ॥ इतिश्रुत्वावचस्तस्यपद्मस्यचवणिक्पुनः ॥ ८ ॥ प्रण
म्यपद्मंप्रोवाचनाथतद्ब्रूहिमेवचः ॥ इतिवैश्यवचःश्रुत्वापद्मोवचनमब्रवीत् ॥ ९ ॥ इदानींजाह्नवीतोयेमणिकर्ण्यांप्रविश्यच ॥ स्ना
त्वारामेतिनामैवत्रिधोच्चारयभक्तितः ॥ १० ॥ तदापूतःकुष्ठरोगान्मुक्तोभवितुमर्हसि ॥ इतिश्रुत्वावचस्तस्यवणिक्तत्कालमेवहि ॥
॥ ११ ॥ भृत्यैर्धृतकरोगंगातोयेभक्त्याविवेशह ॥ ततस्त्रिर्मज्जनंकृत्वानिमील्यनयनेसतु ॥ १२ ॥ त्रिधारामेतिनामैवप्रोवाचाप्य
तिहृष्टवत्॥तदैवनीरुजौहस्तौपादौतस्यबभूवतुः॥ १३ ॥ निर्व्यथंचसमस्तांगमंगुलीनांप्ररोहणम् ॥ दृष्ट्वावणिक्प्रमुदितोनत्वापद्मं
मुहुर्मुहुः ॥ १४ ॥ जगामभवनंपद्मांपश्यतांसर्वदेहिनाम् ॥ अन्येयेसंस्थितास्तत्रतेऽप्याश्चर्यंपरंययुः ॥ १५ ॥ एवंपद्मोहरेर्भक्तोनाम
निष्ठोबभूवह ॥ तस्यनाम्नैवसंजातंदिव्यंज्ञानमनुत्तमम् ॥ १६ ॥ ननामसदृशंकिंचिदिहामुत्रफलप्रदम् ॥ १७ ॥ इतिश्रीभगवद्भक्तिमा

हात्म्येपद्महरिभक्तिचरितंनामपंचनवतितमःसर्गः ॥ ९५ ॥ छ ॥ दक्षिणस्यांमुभौजातौतत्त्वाजीवेतिनामतः॥भ्रातरौसाधुपूजायांनियु
क्तौक्षत्त्रवंशजौ ॥ १ ॥ कर्ममात्रमजानंतौवैष्णवाराधनेरतौ ॥ कांक्षंतौसद्गुरुंचित्तेशिष्यौस्यावचकस्यवै ॥ २ ॥ एवंविचारवंतौतौ
साधुरेकःसमागतः ॥ तेनोक्तौतौभवद्वारिशुष्कोऽयंवर्ततेतरुः ॥ ३ ॥ यस्यपादोदकेनास्यतरोःशाखाप्ररोहणम् ॥ सएवसद्गुरुःशिष्यौ
तस्यवैभवतंयुवाम् ॥ ४ ॥ एवंश्रुत्वावचस्तस्यताभ्यामपिसुनिश्चितम् ॥ योऽयंसमागतःसाधुस्तस्यपादोदकंस्वयम् ॥ ५ ॥ गृही
त्वाशुष्कवृक्षंतंभक्त्यासिषिंचतुर्मुदा ॥ एवंगतेषुकालेषुनाभूच्छाखाप्ररोहणम् ॥ ६ ॥ तदातौचिंतयाविष्टौगुरुर्नैकोभविष्यति ॥ एवं
चिंतयतोस्तत्रसाधुसेवांप्रकुर्वतोः ॥ ७ ॥ कबीरःपर्यटन्देशेतयोर्द्वारमुपागतः ॥ सायंकालेऽथतौदृष्ट्वाकबीरंश्रुतनामकम् ॥ ८ ॥ आति
थ्यंपरयाभक्त्यास्नात्वापादोदकंतदा ॥ ददौशुष्कतरोर्मूर्ध्निशाखारोहाभिकांक्षया ॥ ९ ॥ ततःकबीरंसंभोज्यरात्रौसुषुपतुर्गृहे ॥ प्रात
रुत्थायतौवृक्षंरूढशाखंनिरीक्ष्यवै ॥ १० ॥ मुदितौतस्यनिकटेकबीरस्यसमागतौ॥ऊचतुस्तंकबीरंचगमनायोद्यतंमुदा ॥ ११॥अत्रैवह
तिष्ठभक्तस्त्वंकुरुनौवांछितंप्रभो ॥ यथेष्टंप्रातरेवातोगमिष्यसिनसंशयः ॥ १२ ॥ इतिश्रुत्वातयोर्वाक्यंकबीरस्तावुवाचह॥ ब्रूतंयुवांवां
छितंयन्ममाग्रेतत्करोम्यहम् ॥ १३ ॥ इतितद्वचनंश्रुत्वाप्रोचतुस्तौनिजेप्सितम् ॥ कबीरोऽपिततःप्राहनाहंयोग्योगुरुर्हिवाम् ॥ १४ ॥
ज्ञात्वाम्लेच्छोऽस्मियुवयोःकथंस्यांक्षत्त्रजन्मनोः ॥ इतिश्रुत्वाकबीरस्यवचस्तौपुनरूचतुः ॥ १५ ॥ नावांज्ञातिवशौभक्तत्यक्त्वासर्व
मशेषतः ॥ गृहीतौवैभवत्पादौसर्वसत्यंनसंशयः ॥ १६ ॥ कबीरंनकथंचित्तौयदातत्यजतुस्तदा ॥ सोऽपिरामेतिनामैवतावप्युपदि

देशह ॥ १७ ॥ प्राहतौयुवयोःकष्टंयदाज्ञातिकृतंभवेत् ॥ तदामत्सन्निधौकाश्यामागंतव्यंनसंशयः ॥ १८ ॥ तदोपायंकरिष्यामि
भवतोःकष्टवारणे ॥ इत्युक्त्वातुगतःकाशींकवीरोज्ञानिनांवरः ॥ १९ ॥ तावपिस्वगृहेरामनामस्मरणतत्परौ ॥ निवसंतौततःका
लेज्ञातौज्ञातिजनैरपि ॥ २० ॥ तत्त्वाजीवित्युभौशिष्यौकवीरस्यसम्भवतुः ॥ तदातिरस्कृतौसर्वैर्ज्ञातिभिश्चप्रकोपितैः ॥ २१ ॥
भवंतौम्लेच्छशिष्यौयज्जातौक्षत्रियवंशजौ ॥ ततोज्ञातेर्बहिर्भूतौतिष्ठतोनीचजातिवत् ॥ २२ ॥ इत्युक्त्वातौपरित्यज्यसर्वेतद्ग्रा
मवासिनः ॥ निंदंतस्तौतिरश्चक्रुस्तत्त्वाजीवित्युभावपि ॥ २३ ॥ ततस्तौपरमक्लिष्टौग्रामेसर्वैस्तिरस्कृतौ ॥ कन्यापुत्रविवाहोनौकथं
स्यादितिदुःखितौ ॥ २४ ॥ एकस्यैकासुतान्यस्यपुत्रएकस्तयोःकथम् ॥ भविष्यतिविवाहोऽत्रग्रामेत्वितिविचिंत्यतौ॥ २५ ॥स्मृत्वा
गुरुवचःकाशींगतौपरमदुःखितौ ॥ कबीरंप्राहतुर्भक्त्याकष्टंज्ञातिजनैःकृतम् ॥ २६ ॥ कन्यापुत्रविवाहोवैकथंस्यादित्यवोचताम् ॥
श्रुत्वातयोर्वचःकष्टंकबीरः प्राहतौमुदा ॥ २७ ॥ कन्यैकायुवयोर्मध्येपुत्रश्चैकश्चवर्तते ॥ तयोरेवविवाहस्ययोगः कार्य्योऽविचा
रतः ॥ २८ ॥ ततस्तेज्ञातयःसर्वेरामचन्द्रकृपाबलात् ॥ स्वयंनिवर्तयिष्यंतिग्रहीष्यंतिस्वयंतुतौ ॥ २९ ॥ इतिश्रुत्वाकबीरस्यवचनं
तौमुदान्वितौ ॥ आगत्यस्वगृहेकन्यापुत्रयोरुभयोस्तयोः ॥ ३० ॥ विवाहस्यचचक्रातेसमुद्योगंप्रहर्षितौ ॥ ततोज्ञातिजनैर्ज्ञा
तोविवाहस्तूभयोस्तयोः ॥ ३१ ॥ आगत्यप्रत्यषिध्यंतकुरुथःकिंजुगुप्सितम् ॥ तदातौप्राहतुर्ज्ञातीन्किंकुर्वोयत्पृथक्कृतौ ॥ ३२ ॥
भवद्भिश्चततोम्लेच्छधर्ममेवाश्रयावहे ॥ इतिश्रुत्वाततःसर्वेप्राहुर्ज्ञातिजनास्तुतौ ॥ ३३ ॥ गत्वास्वभवनेसर्वेविचार्य्यप्रातरेवहि ॥ वदि

ष्य मोवयंयद्वांयुवांतद्वैकरिष्यथः ॥ ३४ ॥ इत्युक्त्वातेगताःसर्वेज्ञातयोनिजमंदिरे ॥ नविचारेसमायातंतयोःसंग्रहणंतदा ॥ ३५ ॥
रात्रौस्वप्नेऽथहनुमांस्ताञ्ज्ञातीनिदमब्रवीत् ॥ तत्त्वाजीवेत्युभौभक्तौश्रीरामस्यनसंशयः ॥ ३६ ॥ मंत्रंजगृहतुम्लेच्छात्तेनत्या
गमहोगतौ ॥ प्रातस्तुतद्गृहेयोवैनभोक्ष्यतिममाज्ञया ॥३७॥ तमहंनाशयिष्यामिभक्तनिंदापरायणम् ॥ एवंदृष्ट्वातुतेस्वप्नंप्रातरुत्था
यसंस्थिताः ॥ ३८ ॥ एकत्रमंत्रयामासुर्गंतव्यंनात्रसंशयः ॥ इतिनिश्चित्यमनसासर्वेतेज्ञातयस्तदा ॥ ३९ ॥ तत्त्वाजीवागृहेऽभ्ये
त्यप्रोचुश्चविनयान्विताः ॥ अहोयुवाभ्यांनैवेदंकर्तव्यंकर्मनिंदितम् ॥ ४० ॥ आयातावयमत्राद्यसंग्रहीतुंनसंशयः ॥ युवयोर्नैव
दोषोऽस्तिपापमस्माकमेवहि ॥४१ ॥ युवांविनापराधेनयज्ज्ञातिभ्योबहिष्कृतौ ॥ भोजयास्मानिदानींत्वंक्षम्यतांदुष्कृतंहिनः ॥
॥ ४२ ॥ इतितेषांवचःश्रुत्वाज्ञातीनांप्रेमवर्द्धनम् ॥ तत्त्वाजीवौप्रमुदितौप्रोचतुस्तान्विनीतवत् ॥ ४३ ॥ तिरस्कृतौभवद्भिश्चपुनरेवा
नुकंपितौ ॥ आवामाज्ञाकरौनित्यंयुष्माकंनात्रसंशयः ॥ ४४ ॥ इत्युक्त्वास्वगृहेपाकंकारयित्वाथतान्पुनः ॥ भोजयामासतुर्ज्ञा
तींस्ततस्तौतेऽब्रुवन्वचः ॥ ४५ ॥ अतःपरंवांसुतयोर्विवाहोऽस्माभिरुच्यते ॥ यत्रतत्रैवकर्तव्यःकुरुतंनान्यगर्हितम् ॥ ४६ ॥ इति
श्रुत्वावचस्तेषांतत्त्वाजीवौप्रहर्षितौ ॥ युष्माकंतनयावेतौयथेच्छथतथाऽस्तुभोः ॥४७॥ इत्युक्त्वाज्ञातिवचनात्कन्यकायाःसुतस्यच ॥
विवाहोऽभून्महोत्साहाद्यथायोग्यकुलेनतु ॥४८॥ एवंतौरामभक्तौतुतत्त्वाजीवेतिनामकौ ॥ यावज्जीवंसाधुसेवानिरतौवैष्णवोत्तमौ ॥
॥ ४९ ॥ अंतेसंप्रापतुःस्वर्गंरामनामप्रसादतः ॥ निवसंतावपिगृहेभक्तिरेवहिकारणम् ॥ ५० ॥ इति श्रीभगवद्भक्तिमाहात्म्येतत्त्वा

जीवचरितंनामषण्णवतितमःसर्गः ॥ ९६ ॥ ७ ॥ ॥ अथमाधवदासस्यकथांवक्ष्यमनोरमाम् ॥ यस्यस्मरणमात्रेणकृष्णभक्तिमवाप्नु
यात् ॥ १ ॥ बभूवचोत्कलेदेशेविप्रोमाधवसंज्ञकः ॥ स्त्रीपुत्रधनमित्रादौमहासक्तःसमाकुलः ॥ २ ॥ निनायबहुवर्षाणिवयसासजरांग
तः ॥ एकदासगतःक्वापिकार्यार्थंनगरांतरे ॥ ३ ॥ कृत्वाकार्य्यमथैकाकीसमागच्छन्पथिस्थितः ॥ तरुच्छायामुपाश्रित्यश्रमापनय
नायसः ॥ ४ ॥ अथदैववशात्तस्यसमुत्पन्नामहाव्यथा ॥ उदरेतत्क्षणेनैवमूर्च्छांप्रापसवैद्विजः ॥५॥ निश्चेष्टोनिपतन्भूमौमुहूर्तादुत्थितः
पुनः ॥ अहोकिंजातमितिसचिंतयामासचेतसि ॥ ६ ॥ अद्यास्मिन्निर्जनेस्थानेक्वमेपुत्राःसुहृत्स्त्रियः ॥ दुःखितस्यचसाहाय्यंकर्तुम
त्रसमागताः ॥ ७ ॥ प्राग्जन्मकर्म्मणैवाहंजीवितोनात्रसंशयः ॥ अथवापश्यतां तेषांमयियद्भावितद्भवेत् ॥ ८ ॥ नत्वस्यवारणंकोऽपि
कर्तुमर्हतिभूतले ॥ मयिपश्यतिमेपुत्राःकतिधादुःखमाप्नुवन् ॥ ९ ॥ किंचावश्यंहिकर्तव्यमेकस्मिन्दिवसेमया ॥ तदाक्वमेसुताः क्वाहं
क्वायंस्नेहोगमिष्यति ॥१०॥ अपिचाद्यावधिकृतंसुखंवैषयिकंतथा ॥ जरयाशक्यतेनैवकर्तुंतदपिवैमया ॥ ११ ॥ तस्माद्वृथैवमो
होऽयंकदर्थयतिमामिह ॥ इतोऽपिस्थविरावस्थायदायास्यतिमेपुनः ॥१२॥ तदामंदादरोभूत्वाशोचिष्येनात्रसंशयः ॥ दृश्यंतेहिमहा
वृद्धाःसर्वत्रशिथिलादराः ॥ १३ ॥ तस्माद्द्यैवभवनाद्बहिर्गत्वाक्वचित्स्थितः ॥ परलोकहितार्थायकरिष्येस्मरणंहरेः ॥ १४ ॥ इति
निश्चित्यविप्रोऽसौमाधवःस्वगृहंगतः ॥ स्नात्वाभुक्त्वासुतान्पत्नींसुहृदःप्राहहृष्टवत् ॥१५॥ अहोशृणुतमेवाक्यंभवंतोऽतीवमेप्रियाः ॥
तस्मान्मदुक्तमेवात्रस्वीकर्तव्यंमदाज्ञया ॥१६॥ अद्यावधिगृहेस्थित्वायुष्मदर्थंमयाकृतम् ॥ शुभाशुभफलंकर्ममोहग्रस्तेनचेतसा ॥१७॥

अतःपरंतुस्वहितंकरिष्यामिनसंशयः॥जगन्नाथंस्मरिष्यामिस्थित्वाहंकुत्रचिद्वने ॥ १८ ॥ मृतेमयिनयूयंमेनयुष्माकमहंपुनः ॥ जीवं
तोऽप्युपकुर्वंतुकिंचिन्नैवपरस्यच ॥ १९ ॥ तस्मादद्यवगच्छामियूयंतिष्ठतस्वेगृहे ॥ इत्युक्त्वामाधवोविप्रःप्रतस्थेनिजमंदिरात् ॥
॥ २० ॥ अथतेबांधवाःसर्वेवारयन्तस्तमन्वयुः ॥ नामन्यतसकस्यापिगतएवयदृच्छया ॥२१॥तेऽपिसर्वेपरावृत्यसमायातानिकेत
नम्॥माधवोऽपिप्रहृष्टात्मानीलाचलमुपागतः ॥२२॥ तत्रगत्वाद्रिपार्श्वस्थगुहायामास्थितोऽभवत् ॥ निराहारोदकोदेवंजगन्नाथंविचिं
तयन् ॥ २३ ॥ जातेदिनत्रयेतस्यनिराहारोदकस्यच ॥ तदातुष्टोजगन्नाथःप्रसन्नोऽभूद्द्विजस्यसः ॥ २४ ॥ चतुर्थेदिवसेप्राप्तेनि
शायांशयनक्षणे ॥ लड्डुकानिसुवर्णस्यस्थाल्यांकृत्वाहिपूजकाः ॥ २५ ॥ जगन्नाथायदत्त्वातेमुद्रयित्वाकपाटकम् ॥ सुषुपुः
स्वगृहेसर्वेयथान्यदिवसेतथा ॥ २६ ॥ अथश्रीभगवाँल्लक्ष्मीमुवाचकरुणामयः ॥ इदंलड्डुकनैवेद्यंनीत्वानीलाचलेत्वहम् ॥ २७॥
दातुंमाधवभक्तायगत्वायास्यामिसांप्रतम् ॥ सतुसर्वंपरित्यज्यस्त्रीपुत्रधनबांधवम् ॥२८॥ दिनत्रयंनिराहारःस्मरतेमामनन्यभाक् ॥
तस्मात्तस्यैवदातव्यमिदमस्मिन्क्षणेमया ॥ २९ ॥ इतिश्रुत्वावचस्तस्यलक्ष्मीःप्राहकृतांजलिः ॥ नाथाहमेवगच्छामिदत्त्वायास्या
मिवैद्रुतम् ॥ ३० ॥ इत्युक्त्वास्वर्णपात्रंतत्सलड्डुकंकरेणसा ॥ गृहीत्वास्त्रीस्वरूपंचकृत्वातत्रययौरमा ॥ ३१ ॥ गत्वामाधवदास
स्यसमीपंप्राहसादरम् ॥ गृहाणेदंसलड्डुकंपत्याहंप्रेषिताद्रुतम् ॥ ३२ ॥ तवभोजनदानायेत्युक्त्वातद्भाजनंरमा ॥ लड्डुकपूर्णंतस्या
ग्रेप्रणिधायसमागता ॥ ३३ ॥ तदामाधवदासोऽपिमत्वाह्लादिहरेःकृपाम् ॥ बुभुजेतानिसर्वाणिपात्रंतत्रैवसंस्थापितम्॥३४॥अथप्रातःस

मुत्थायजगन्नाथस्यपूजकाः ॥ पूजांकर्तुंमठेजग्मुर्ददृशुर्नैवभाजनम् ॥ ३५ ॥सलड्डूकंतदोद्विग्नाःकश्चौरोऽत्रसमागतः॥कपाटस्तादृशो लग्नस्ताभिरुद्घाटितस्तथा ॥ ३६ ॥ कथंचौरःसमायातोमहाश्चर्य्यमभूदिदम् ॥ सर्वमेतत्तथाराज्ञेदुःखिताअब्रुवञ्जनाः ॥३७॥ राजापि चारान्सर्वत्रप्रेषयामासचिंतितः ॥ पूजकाअपिसर्वत्रचौरंज्ञातुंसमंततः॥ ३८॥ गताअन्वेषमाणास्तेवनेग्रामेचपर्वते ॥ नीलाचलगताः केचिच्चौरदर्शनकांक्षिणः॥३९॥ददृशुःपर्वतेतत्रमाधवंमीलितेक्षणम् ॥ तदग्रेस्वर्णपात्रंतद्दृष्ट्वासर्वेऽतिहर्षिताः ॥४०॥ अहोऽनेनैवतुहृतंपात्रं देवस्यनान्यथा ॥ इत्युक्त्वाजगृहुःपात्रंबबंधुर्माधवंरुषा ॥ ४१ ॥ नीत्वायाताःस्वनगरेताडयामासकोऽपितम् ॥ माधवस्तुततस्तूष्णीं स्थितःप्राक्कर्मजंस्मरन् ॥४२॥ पृष्ठेभग्नास्त्वचस्तस्यशोथःसंताडनादभूत्॥दयालुरेकस्तन्मध्येवारयामासताडनम् ॥ ४३ ॥ अथसायं जगन्नाथंतपर्यन्तोजनास्तदा ॥पृष्ठेमूर्तेस्त्वचोभग्नाःशोथंचैवददृशुर्हरेः ॥ ४४ ॥ दृष्ट्वासर्वेमहाश्चर्य्यंचिंत्यमानाभयान्विताः॥किंजातमि तिशोकेनत्यक्त्वाशनजलानिशि ॥४५॥ सुषुपुःखिन्नमनसस्ततःश्रीपुरुषोत्तमः ॥ स्वप्नेतान्प्राहभोविप्रामाधवोऽतीवमेप्रियः ॥ ४६ ॥ नीलाचलेस्थितस्तस्मैसलड्डूकंतुभाजनम् ॥ मयैवप्रेषितंतस्मान्नायंचौरोहिमाधवः ॥४७॥ तस्ययत्ताडनंपृष्ठेकृतंयुष्माभिरत्रभोः॥ते नमेपृष्ठदेशेऽपिशोथोभेदस्त्वचामभूत् ॥ ४८॥ नान्यःकोऽपिचमेजातोदोषःपृष्ठक्षतप्रदः ॥ एवंदृष्ट्वानिशिस्वप्नंपूजकास्तत्क्षणंशुभम् ॥ ॥ ४९ ॥ उत्थायतंमहाभक्तंमुमुचुर्बंधनाद्द्रुतम् ॥ मुक्त्वाप्रणेमुस्तेसर्वेस्नापयित्वाशुभांभसा॥५०॥ भोजयित्वातिभक्त्यातंददुरास्तर णंशुभम् ॥ उपचारान्प्रचक्रुस्तेशोथक्षतनिवृत्तये ॥ ५१ ॥ एवंमाधवदासस्तुभक्तस्तत्रबभूवसः ॥ उवास श्रीजगन्नाथक्षेत्रेचैकातिचि

द्दिनम् ॥ ५२ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येमाधवदासचरितंनामसप्तनवतितमःसर्गः ॥ ९७ ॥ ॥ छ ॥ एकदानिशिपूजायांज
गन्नाथस्यसन्निधौ ॥ गतोमाधवदासस्तुदध्यौस्थित्वाक्वचिन्मठे ॥ १ ॥ अथतेपूजकाःसर्वेतमदृष्ट्वातुमाधवम् ॥ द्वाराद्बहिःसमागत्य
कपाटंप्रददुर्मठे ॥ २ ॥ अथमाधवदासस्तुध्यानशेषेसमुत्थितः ॥ बहिर्गंतुंमनश्चक्रेतत्रद्वारंचमुद्रितम् ॥ ३ ॥ निवृत्यतन्मठेएवभू
मौसुष्वापहृष्टवत् ॥ अथतस्यमहाशीतमभूत्कंपोबभूवह ॥ ४ ॥ दृष्ट्वातंवेपमानंचजगन्नाथःकृपामयः ॥ वैष्णवस्यस्वरूपेणस्ववं
स्त्रंतूलगर्भितम् ॥ ५ ॥ तस्योपरिददौप्रीत्यामाधवस्यत्वरान्वितः ॥ ततोमाधवदासस्तुसुखंसुष्वापवैनिशि ॥ ६ ॥ प्रातःसमाग
ताःसर्वेपूजकाददृशुश्चतम् ॥ कोऽसिरेभगवद्वस्त्रंसमासाद्यस्वपिष्यहो ॥ ७ ॥ इत्युक्तःप्रोत्थितःसोऽपिदृष्ट्वापूजकमब्रवीत् ॥ निजपू
जाक्षणेऽहंतुमठेएवस्थितोऽभवम् ॥ ८ ॥ मुद्रयित्वामठद्वारंभवंतस्तुगताद्रुतम् ॥ ततोऽत्रैवमयासुप्तंशीतंलग्नंमहन्मम ॥ ९ ॥ ततए
कोऽतिपुण्यात्मावैष्णवस्तूलिकामिमाम् ॥ तूष्णींप्रच्छाद्यमेऽगानिनिर्जगामयदृच्छया॥१०॥शीतवारणतोऽहंतुनजानेनिद्रयान्वितः॥
भवद्भिरेवदानींतुसहसोत्थापितोऽस्मिभोः ॥ ११ ॥ इतिश्रुत्वावचस्तस्यज्ञात्वातंमाधवंतथा ॥ प्रणम्योचुर्नतेऽसाध्यंकिंचिन्नःक्षम्यतां
प्रभो ॥ १२ ॥ इत्युक्त्वातेऽर्चनंचक्रुर्माधवोऽपिमठाद्बहिः ॥ जगामविचरंस्तत्रस्वेच्छयामठसंनिधौ ॥ १३ ॥ एवमेकदिनेजातमपरं
शृणुतस्यवै ॥ भक्तिमाहात्म्यमखिलंशृण्वतांभक्तिवर्धनम् ॥ १४ ॥ एकदासययौदैवान्माधवोहीतरस्थले ॥ शूलरोगःसमुत्पन्नस्त
स्यातीवसुदारुणः ॥ १५ ॥ आमशूलेनतेनासौव्यथितोऽभून्मुहुर्मुहुः ॥ बभूवरेचनंतस्यदौर्बल्यात्पतितोभुवि ॥ १६ ॥ भूमौनि

पतितस्तस्य दिनं सर्वं समभ्यगात ॥ निशायामथसस्मारजगन्नाथंकृपामयम् ॥१७॥ म्रियेहमितिबुद्ध्यासजगन्नाथस्तदास्वयम् ॥ सत्व
रंजलमादायसमायातस्तदंतिके ॥१८॥ प्रक्षाल्यांगंजलेनास्यभोजयित्वान्नमुत्तमम् ॥नेतुंमठसमीपेतुयत्नवानभवद्धरिः ॥१९॥ अथमा
धवदासस्तुप्राहज्ञात्वातिभक्तितः ॥ अहोकिमेवंकुरुषेममांगपरिशोधनम् ॥२०॥ इतिश्रुत्वावचस्तस्यप्राहभक्तस्वरूपिणम् ॥ अहोत्वं
तुममैवात्माशरीरंतेपरंमम ॥२१॥स्वदेहशोधनंसर्वैःक्रियतेतत्रकाघृणा ॥ इतिश्रुत्वापुनःप्राहमाधवोभक्तरूपिणम् ॥ २२ ॥ यद्येवंमन्य
सेनाथकथंदुःखंददासिमे ॥यतस्त्वयानकर्तव्यंक्रियतेकर्ममत्कृते ॥२३॥ तदाश्रुत्वावचःप्राहभक्तरूपधरोहरिः ॥ अद्यावधिस्थितंदुः
खंप्रारब्धंतेपुराकृतम् ॥२४॥तस्यभोगोयमभवन्नतेदुःखमतःपरम् ॥ भविष्यतिनसंदेहःसमागच्छमयासह ॥२५॥ ततोमाधवदासस्तु
बलवानभवत्क्षणात ॥ तेनैवसाकमागत्यसमायातोमठांतिके ॥२६॥ तत्रैवनिवसन्देवंचिंतयानोदिवानिशम् ॥ निनायबहुवर्षाणिप
लवन्मुदितात्मना ॥२७॥एकदामाधवोभक्तोनिवसन्नत्रवैपुरे ॥ भिक्षामादायभोक्तव्यमितिकृत्वाव्रतंतुसः ॥२८॥ पर्यटन्नगरेनित्यंभिक्षा
मादायसर्वतः ॥भुक्त्वोवाससुखीनत्रचैकस्मिन्दिवसेसतु ॥ २९ ॥ स्थितैकातत्रनगरेमहाचंडातिकर्कशा ॥ महाधनवतीदुष्टादानभोगवि
वर्जिता ॥ ३० ॥ तस्यागृहंगतोभक्तोमाधवोऽन्नंचभिक्षितुम् ॥ भिक्षांचमेप्रदेहीतिप्रोच्चचाराविदूरतः ॥३१॥ श्रुत्वापिनचशुश्राव लिंपती
चांगणंनिजम् ॥पुनःप्रोवाचदेहीतिश्रुत्वासाथप्रदुद्रुवे ॥ ३२ ॥ उत्थाप्यदक्षिणंहस्तंलेपिन्यासहितंरुषा ॥ ततोदृष्ट्वातुतांचंडींहंतुकामां
भयंकरीम् ॥३३॥ पलायित्वागृहद्वाराद्बहिरागत्यसंस्थितः ॥ तत्रापिसासमायाताहंतुंतंसोऽपिचद्रुतम् ॥३४॥ पलायनंचकाराथसा

तुतामेवलेपिनीम्॥ तमुद्दिश्यप्रचिक्षेपसागताथतदंतिकम् ॥ ३५ ॥ माधवस्तुततःशीघ्रंपरावृत्यसलेपिनीम् ॥ गृहीत्वादुद्रुवेभक्तःकर्क
शापिन्यवर्तत ॥ ३६ ॥ गालिदानंप्रकुर्वंतीक्रोधेनस्फुरिताधरा ॥ अथमाधवदासस्तुसाधुभावात्सतांस्त्रियम् ॥३७॥ उपकर्तुंमनश्चक्रेग
त्वोदधितटेस्वयम् ॥ प्रक्षालनैश्चबहुभिःशुक्लीकृत्यचलेपिनीम्॥३८॥शोषयित्वातपेवर्तीर्विधायबहुशस्ततः ॥ विक्रीयकतिचित्तस्य
क्रीत्वाज्यारार्तिकांस्ततः ॥३९॥ दीपान्निर्मायसंध्यायांश्रीजगन्नाथमंदिरे ॥ प्रज्वाल्यप्रददौप्रेम्णासंकल्पंमनसाकरोत् ॥४०॥ तस्या
स्त्वंभोजगन्नाथसुप्रसन्नोभवप्रभो ॥ अज्ञानतिमिरांधायाज्ञानंभवतुनिर्भयम् ॥४१॥ दानेतस्यामतिर्भूयादिहजन्मनिसर्वदा ॥ उपभो
गोधनस्यास्यदीपदानप्रसादतः ॥ ४२ ॥ एवंसंकल्प्यप्रददौदीपांस्तत्रमठेद्विजः॥ तत्क्षणाद्देवतस्यास्तुपश्चात्तापोमहानभूत् ॥ ४३ ॥
उत्पन्नंहृदिविज्ञानंवृथैवेदंधनंमम ॥ नददामिहिशिष्टेभ्योनभुंजामिस्वयंपुनः ॥ ४४ ॥ अथैकःसाधुरायातस्तस्मैगालिमदाम
हम् ॥ अतोमत्सदृशीलोकेनान्यादुर्भाग्यशालिनी ॥ ४५ ॥ धिङ्मांमूर्खांयद्वेतावद्धनंप्राप्यापिपुष्कलम् ॥ नदीयतेभुज्यतेवात
स्माज्जन्मैवमेवृथा ॥ ४६ ॥ इतिचिंतापरारात्रौलेभेनिद्रांनकर्कशा ॥ प्रातरुत्थायसंमार्ज्यगृहद्वारंतथांगणम् ॥ ४७ ॥अन्नादि
वस्त्रद्रव्याणिनिष्कास्यस्वगृहात्तुसा ॥ दीनानाथदरिद्रेभ्यःसाधुभ्योददतीमुदा ॥ ४८ ॥ चिंतयामाससमनसाकदापश्यामिता
दृशम् ॥ यस्मैगालिर्मयादत्तायाचमानायसाधवे ॥ ४९ ॥ मिलिष्यतियदादैवात्तोषयिष्यामिसर्वथा ॥ एवं ॥
चित्तेचिंतयंतीद्वारदेशंसमागता ॥ ५० ॥ अथमाधवदासस्तुज्ञातुंतच्चेष्टितंपुनः ॥ आयातस्तेनमार्गेणकर्कशापिददर्श

तम् ॥ ५१ ॥ दूरादागत्यन्यपतत्पादयोरतिभक्तितः ॥ क्षमस्वाद्यापराधान्मेमूर्खायास्त्वंदयानिधे ॥ ५२ ॥ यत्पूर्वेंद्युर्मयाद
त्तागालयस्तेनिरागसः ॥ अद्यागच्छगृहेनाथदयांकुरुममोपरि ॥ ५३ ॥ इत्युक्त्वातंकरेधृत्वानिनायनिजमंदिरे ॥ सोऽपिम
त्वादीपदानमाहात्म्यंतद्गृहेगतः ॥ ५४ ॥ तद्दिनेसर्वमन्नादिस्वीकृत्यप्रददौस्वयम् ॥ उवाचतस्यैमातस्त्वंसाधुसेवा
परायणा ॥५५॥हरिभक्तिरताभूत्वासमुद्धरकुलंनिजम् ॥ इत्युक्त्वानिर्ययौतस्यागेहात्समाधवोद्विजः ॥ ५६ ॥ ब्राह्मणीसापिसत्कर्म्म
निरताभक्तिमत्यभूत् ॥ मुक्त्वाभोगानशेषांश्चमृताहरिपुरंययौ ॥ ५७ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येमाधवदासचरितंनामाष्टनवति
तमःसर्गः ॥ ॥ ९८ ॥ ॥ अपरंभक्तिमाहात्म्यंवक्ष्यामिपरमाद्भुतम्॥श्रीमन्माधवदासस्यशृण्वतांप्रीतिवर्द्धनम् ॥ १ ॥ एकदामा
धवोयात्रांकुर्वन्काशीमुपागतः ॥ तत्रकृत्वाऽखिलांयात्रामुवासकतिवत्सरान्॥ २ ॥ एकदातत्रचायातःशास्त्रीकोऽप्यतिहर्षितः ॥ मया
पराजिताःसर्वेकाशींजेतुमितोगतः ॥ ३ ॥ इत्येवंभाषमाणस्सपंडितानांसदोगतः ॥ तत्राप्युवाचसर्वांस्तान्पंडितानतिगर्वितः ॥ ४ ॥
अहंजेतुंसमायातोयुष्मान्नैवात्रसंशयः॥विवदध्वंमयासार्द्धंनोचेत्पत्रंप्रयच्छथ ॥५॥ इतिश्रुत्वावचस्तस्यमहाहंकारसंयुतम् ॥ उपहा
सपराःसर्वेपंडितास्तमथाब्रुवन् ॥ ६ ॥ अहोनैवत्वयासार्धंसर्वेविवादितुंक्षमाः॥अस्त्येकःपंडितःकाश्यांविंदुमाधवसन्निधौ ॥७॥ नाम्ना
माधवदासस्तुसिद्धःसर्वज्ञएवसः ॥ तत्रतेन विवादेतुयदितस्यपराजयः ॥ ८ ॥ तदावयंजिताएवभवतानात्रसंशयः ॥तस्मात्तन्निकटेग
च्छमाधवस्यद्विजोत्तम ॥९॥इतिश्रुत्वावचस्तेषांपंडितानांसवैद्विजः ॥ययौमाधवदासस्यसन्निधिंतत्रचाब्रवीत् ॥ १० ॥ अहंजित्वा

खिलांपृथ्वींकाशींजेतुमिहागतः ॥अत्रत्याःपंडितास्सर्वेत्वामाहुःशास्त्रवित्तमम् ॥११ ॥त्वज्जयेजयिनःसर्वेविजितास्त्वत्पराजय ॥अत
स्त्वंविवदस्वाद्ययथाशक्तिमयासह॥१२॥ नोचेत्पराजितोऽनेनपंडितेनेतिपत्रकम् ॥लिखित्वादेहिमेयामिदर्शयित्वाचतान्गृहम्॥१३॥
श्रुत्वामाधवदासस्तुतदुक्तमतिहर्षितः ॥ लिखित्वाजयपत्रंवैतस्मैपंडितमानिने ॥१४॥ अयच्छत्सोऽथनीत्वातद्दर्शयामासताञ्जनान् ॥
सर्वेतत्रतुविद्वांसोददृशुःपत्रमुत्तमम् ॥ १५ ॥ जितोमयापंडितोऽयमित्यक्षरपरिस्फुटम् ॥ ततस्तेजहसुःसर्वेतंद्विजंप्राहुरादरात् ॥१६॥
अहोऽत्रलिखितंचान्यद्भवान्ब्रूतेतदन्यथा ॥ इतिश्रुत्वावचस्तेषांनीत्वापत्रंद्विजःसतु ॥ १७ ॥ परावृत्त्यगतस्तत्रयत्रासीन्माधवः सतु॥
दृष्ट्वामाधवदासंतुभर्त्सयन्निदमब्रवीत्॥१८॥अहोधैर्य्यंसमालंब्यकिमिदंवंचितस्त्वया॥विपरीतप्रलेखोऽयंलिखितोयस्त्वयापुनः॥१९॥
तस्यदंडंप्रदास्यामिभवतोनात्रसंशयः ॥विवादःक्रियतामद्यपणस्तत्रनिशम्यताम् ॥२०॥ यश्चावयोर्विवादेतुन्यायतःस्यात्पराजितः ॥
गर्दभारोहणंतस्यपणश्चातःपरंध्रुवम् ॥२१॥ श्रुत्वामाधवदासस्तुद्विजंप्राहविनीतवत् ॥भवदुक्तंकरिष्यामिसर्वंनास्त्यत्रसंशयः ॥२२॥
परंस्नात्वातुगंगायामागमिष्याम्यहंद्रुतम् । इत्युक्त्वामाधवोभक्तोजगन्नाथंस्मरन्हृदि ॥२३॥ जगामजाह्नवीतोयेस्नातुंचिंतासमाकुलः॥
अथमाधवदासस्यशिष्यरूपधरोद्विजः ॥ २४ ॥ हरिरेवागतस्तत्रविवादायद्विजेनवै ॥ खरारोहपणंकृत्वाविवादमकरोद्विजः ॥ २५॥
अथतत्रसमायाताःकतिचित्पंडिताजनाः ॥ मध्यस्थास्तेतयोर्वादंदृष्ट्वापरमविस्मिताः ॥ २६ ॥ साधुसाध्वितितेप्रोचुर्ज्ञात्वोभौशा
स्त्रवित्तमौ ॥ अथमाधवदासस्यशिष्यरूपधरेणच ॥ २७ ॥पराजितोद्विजः शास्त्रीयःकाशींजेतुमागतः ॥ स्वयंचापिसमेनेचजितोऽहं

नात्रसंशयः ॥ २८ ॥ खरमारोढुमुद्युक्तोद्विजस्तत्कालमेवहि ॥ श्रीमन्माधवदासस्तुस्नात्वायातोददर्शतम् ॥ २९ ॥ द्विजंनिवारया
मासगर्दभारोहणात्स्वयम् ॥ भर्त्सयामासशिष्यंचकिंविप्रमवमन्यसे ॥ ३० ॥ इत्युक्तः सोऽथशिष्यस्तुतूष्णींस्थित्वाबहिर्गतः ॥
अंतर्दधेसभगवांस्तस्यशिष्यस्तुयःस्थितः ॥ ३१ ॥ सोऽपितत्रसमायातः श्रुत्वाद्रष्टुंमहाद्भुतम् ॥ अथसर्वेसमायातामहच्छ्रुत्वैतदद्भु
तम् ॥ ३२ ॥ द्रष्टुंमाधवदासस्यशिष्यंशास्त्रविदंजनाः ॥ ददृशुस्तंमहामूर्खंशिष्यंप्राहुर्जनास्तुतम् ॥ ३३ ॥ कथंत्वया
जितःशास्त्रीकुत्रवादोबभूवते ॥ इतिपृष्टस्तुतैःसर्वैःप्राहशिष्योहसन्निव ॥ ३४ ॥ किंब्रुवंतिभवंतोवैभ्रांताइवविचेतसः ॥ योऽहमा
जन्मतोनैवजानेऽक्षरमपिध्रुवम् ॥ ३५ ॥ सोहमेतस्यशास्त्रस्यविषयःस्यांकथंपुनः ॥ इतिश्रुत्वावचःसर्वेसत्यंमत्वातिविस्मिताः ॥
॥ ३६ ॥ मत्वामाधवभक्तस्तुमाहात्म्यंस्वगृहंययुः ॥ सोऽपिविप्रस्तुतत्कालंज्ञात्वैतत्परमाद्भुतम् ॥ ३७ ॥ स्तुत्वामाधवदासं
तुजगामनिजमंदिरम् ॥ एवंमाधवदासस्यभक्त्याश्रीपुरुषोत्तमः ॥ ३८ ॥ वशीभूत्वास्थितोनित्यंसदावैसत्सहायनः ॥ श्यामः
कमलपत्राक्षोभक्तानांदृष्टिगोचरः ॥ ३९ ॥ परंतुमाधवोनैवतंददर्शहरिंदृशा ॥ एकदामथुरायांससमागच्छन्पथिस्थितः ॥ ४० ॥
विश्रामायतरोर्मूलेतस्थौसोऽतिपिपासितः ॥ तत्रैकांसमहावृद्धांददर्शातिदयान्विताम् ॥ ४१ ॥ वैष्णवींपथिकेभ्यस्तुददतीमन्न
मंबुच ॥ साहृष्ट्वातंमहाभक्तंपरिश्रांतंक्षुधार्दितम् ॥ ४२ ॥ तंचापिश्यामलंबालंपद्माक्षंचपिपासितम् ॥ शीघ्रंजलंसमादायददौ
तस्मैसुचर्वणम् ॥ ४३ ॥ अथतंबालकंदृष्ट्वाशुशोचातीवदुःखिता ॥ कस्यास्त्वंमंदभाग्यायाइहक्पुत्रोवियोजितः ॥ ४४ ॥

कथंजीवतिसावत्सयस्यास्त्वंचसुहृत्सुतः ॥ इत्येवंशोचमानांतांमाधवोवाक्यमब्रवीत् ॥ ४५ ॥ किंशोचसिमहावृद्धेकथयस्वममा
ग्रतः ॥ इतिश्रुत्वाब्रवीद्वृद्धायस्याएषसुतःशुभः ॥ ४६ ॥ त्वयावियोजितोभक्ततांशोचाम्यतिदुर्भगाम् ॥ इतितस्यावचःश्रुत्वामिथ्या
मत्वासमानसे ॥ ४७ ॥ विवेदैषाजरादोषादसम्यग्भाषतेवचः ॥ इतिनिश्चित्यभक्तःसमाधवोनिजसंमुखे ॥ ४८ ॥ दत्त्वासनंजग
न्नाथमुपवेश्यजलंददौ ॥ पादप्रक्षालनंचक्रेमनसातुसमाधवः ॥ ४९ ॥ भोजनार्थंसपात्रंचतदग्रेसंन्यवेशयत् ॥ ततोवृद्धार्पितंतत्र
चर्वणंहरयेमुदा ॥ ५० ॥ अर्पयामासमनसासबालोबुभुजेमुदा ॥ सावृद्धातुपुनर्दृष्ट्वाबालंसकरुणंद्विजम् ॥ ५१ ॥ प्रोवाचमाध
वंभक्तराजंस्तुतिपुरःसरम् ॥ तत्साधुनात्रसंदेहोयत्पूर्वंशिशवेऽधुना ॥ ५२ ॥ सर्वंसमर्प्यतत्पश्चात्स्वयमन्नादिभुज्यते ॥ एवंसाश्री
हरेर्मायामोहिताजरतीहृदि ॥ ५३ ॥ अमन्यततुवृद्धायादत्तमन्नंसवैष्णवः ॥ भुक्त्वाशुहरिणासार्द्धंययौतत्स्थलतोऽग्रतः ॥ ५४ ॥
इति श्रीभगवद्भक्तिमाहात्म्येमाधवदासचरितेनामनवनवतितमःसर्गः ॥ ९९ ॥ ॥ छ ॥ ॥ अथतस्माद्व्रजन्स्थानान्माधवोदि
वसांतरे ॥ मध्याह्नेकुत्रचिद्ग्रामेसमायातोजलांतिके ॥ १ ॥ उपवेश्यहरिंतत्रसंपूज्यान्नंसमर्पयत् ॥ चलितोवैश्यएकस्तुवैष्णवस्त
मुवाचह ॥ २ ॥ साधोममगृहेकिंचिद्भुक्त्वागंतुंततोऽर्हसि ॥ इत्युक्त्वात्वरितंगंतुंसवैश्योनिर्य्ययौततः ॥ ३ ॥ दैवान्मार्गेराजभृ
त्यैर्नीतोऽसौराजमंदिरे ॥ सवैमाधवदासस्तुसमायातोवणिग्गृहे ॥ ४ ॥ तत्रवैश्यसतीदृष्ट्वामाधवंवैष्णवोत्तमम् ॥ हस्तंगृहीत्वानि
न्येसागृहमध्येऽतिभक्तितः ॥ ५ ॥ तत्रैकश्चास्थितोभक्तोवणिजारक्षितोगृहे ॥ तमाहवैश्यपत्नीसासाधुरेकःसमागतः ॥ ६ ॥ इतिश्रु

त्वावचःतस्याःसाधुराहसतांस्त्रियम् ॥ नात्रस्थलंद्वितीयस्ययोग्यमस्तीतिसाधुनः ॥ ७ ॥ श्रुत्वाचुकोपमनसामाधवंप्राहभक्तितः ॥
अत्रैवभगवंस्तिष्ठहरयेभोगमर्पय ॥८॥ इतिश्रुत्वावचस्तस्यामाधवस्तामुवाचह ॥ नमेभोक्तुंमनोभद्रेपयःकिंचित्समर्पय ॥ ९ ॥
इत्युक्तासापयोदत्त्वाकृतांजलिपुटास्थिता ॥ माधवोऽपिपयःपीत्वाकथयित्वास्वनामच ॥ १० ॥ जगाममथुरामार्गंदत्त्वातस्यैसदा
शिषम् ॥ त्वंसाध्विपुत्रिणीभूयाःसुभगाधर्म्मतत्परा ॥ ११ ॥ अथवैश्योऽपिसंप्राप्तःश्रुत्वापत्नीमुखाद्भुतम् ॥ गृहस्थितेनभक्तेनसहग
त्वाप्रसादयन् ॥ १२ ॥ निवर्तयितुमारेभेननिवृत्तोबभूवसः॥पुत्रेतवसमुत्पन्नेसमेष्यामिनसंशयः ॥१३॥ कृत्वाहंमथुरायात्रांदृष्ट्वाश्रीकृ
ष्णमद्भुतम्॥आगमिष्यामितेवैश्यसत्वंयाहिनिजंगृहम्॥१४॥इत्युक्त्वासगतोभक्तोमाधवस्तुयदृच्छया ॥वैश्योऽपिगृहमागत्यसाधुसे
वापरोऽभवत् ॥१५॥ संप्राप्यचाशिषंतस्यजन्मवंध्यापिवैश्यजा ॥ सुषुवेवैष्णवंपुत्रंवैश्यवंशेयशस्विनम्॥१६॥अथमाधवदासस्तुमथु
रायांगतःसुखी॥दृष्ट्वातांमथुरांरम्यांमहानंदेसमज्जह ॥१७॥ स्नात्वातद्भगवन्मूर्तेःससमीपेस्थितोऽभवत् ॥अथतत्रागतःकश्चिद्वैष्णवोऽती
वभक्तिमान् ॥१८॥ भर्जितंचणकान्नंससर्वेभ्यःप्रददन्मुदा॥ददौमाधवदासायसोऽपिजग्राहभक्तितः ॥१९॥ नीत्वातद्यमुनातीरेगत्वापा
दौविशोध्यच॥सोपानोपरिसंविश्यश्रीकृष्णायार्पयच्चतत् ॥ २० ॥ अथतस्मिन्क्षणेभक्तःपूजकस्तुहरेर्मठे ॥ निवेद्यचमहाभोगबहिरा
गत्यसंस्थितः ॥२१॥ तावन्माधवदासेनचणकान्नंनिवेदितम् ॥स्थाल्यांप्राप्तंचतत्तत्रबुभुजेभक्तवत्सलः ॥२२॥ किंचित्स्थाल्यांस्थितं
भुक्तशेषंचणकसंयुतम् ॥ अथतेपूजकाःसर्वेसमागत्यमठेपुनः ॥ २३ ॥ ददृशुश्चणकंस्थाल्यांभर्जितंपरमाद्भुतम् ॥ दृष्ट्वासंशयमापन्नाः

कस्मादेतदिहागतम् ॥ २४ ॥ इतिचिंताकुलस्तेषांप्रधानःपूजकोद्विजः ॥ त्यक्त्वातंचणकंचैवसुष्वापनिशिचिंतितः ॥२५॥अथस्वप्ने
तुश्रीकृष्णस्तमुवाचहसन्निव ॥ विप्रमाकुरुचिंतांत्वंशृणुतच्चणकागतम् ॥२६॥ नीलाचलादिहायातोममप्राणप्रियोद्विजः ॥ नाम्नामा
धवदासस्तुतेनतत्समयेक्वचित् ॥ २७ ॥ संप्राप्तंचणकंमह्यंसमर्पितमहंतुतम् ॥ भुक्त्वासर्वंततःकिंचित्स्थाल्यांरक्षितवानहम् ॥ २८ ॥
जानीहिसत्यमेतत्त्वंनतेदोषोऽस्तिकश्चन ॥इतिस्वप्नंनिरीक्ष्यासौपूजकःप्रातरुत्थितः ॥२९॥उक्त्वास्वप्नंपूजकेभ्योगतोमाधवसन्निधौ॥
तमानीयस्वगेहंसपूजकःप्रत्यपूजयत् ॥ ३० ॥ महाप्रसादतःसर्ववस्तुमाधवशर्मणे ॥ दत्त्वास्वयंतुबुभुजेपरिवारसमन्वितः ॥ ३१ ॥
तदामाधवदासंतेऽमन्यंतातिप्रियंहरेः ॥ भक्तिंचक्रुःसुमहतींमाथुरावैष्णवाजनाः ॥ ३२ ॥ अथैकस्मिन्दिनेभक्तोमाधवः पर्यट
न्वने ॥ भांडीरवृक्षनिकटेसमागत्यस्थितोऽभवत् ॥ ३३ ॥ तत्रासीत्खेमनामैकोभक्तःसिद्धइवापरः॥ तदंतिकेसमागत्यतस्थौतेनच
सत्कृतः ॥ ३४ ॥ अथतत्रददर्शासावन्नमाच्छादितंदृढम् ॥ उवाचमाधवःखेमंकिमेतद्दृढमुद्रितम् ॥ ३५ ॥ इत्युक्तःखेमनामापि
प्राहतंमाधवंद्विजम् ॥ भगवन्नन्नमेतन्मेभोक्तुंदत्तंचसाधुभिः ॥ ३६ ॥ मुद्रयित्वादिवातन्मेस्थाप्यतेनिशिभुज्यते ॥ इतिश्रुत्वा
पुनः प्राहमाधवोवाक्यमद्भुतम् ॥ ३७ ॥ अहोएवंनकर्तव्यंदिवैवभोजनंकुरु ॥ उद्धृत्यतस्मात्साधुभ्योदत्त्वातदवशेषितम् ॥ ३८ ॥
स्वयंभुंक्ष्वनचेदेतदन्नंतुकृमयोध्रुवम् ॥ नमन्यसेचेत्पश्याद्यसमुद्घाट्यपिधानकम् ॥ ३९ ॥ इतिश्रुत्वावचस्तस्यखेमोऽपिस्वयमुत्थि
तः ॥ उद्घाट्यान्नंददर्शाथकृमीनतिविगर्हितान् ॥ ४० ॥ तदासमेनेखेमोऽपिस्वकर्म्मत्वतिनिंदितम् ॥तत्याजतादृशींवृत्तिंदिवान्नंप्राप्य

मिक्षवे ॥ ४१ ॥ दत्त्वाभक्त्याथबुभुजेतदारभ्यातिभक्तिमान् ॥ स्वेमोमाधवदासस्यभक्तिंचक्रुतवान्पराम् ॥ ४२ ॥ एवंमाधवदा
सस्तुमथुरायांकियद्दिनम् ॥ उषित्वावनयात्रायांहरिमन्नगरादिषु ॥ ४३ ॥ शृण्वञ्छ्रीकृष्णचरितमुवासकतिचिद्दिनम् ॥ ततः
कृत्वाखिलांयात्रांनीलाचलमथागमत् ॥ ४४ ॥ मार्गेतस्यतुवैश्यस्यसमागत्यगृहेस्वयम् ॥ कृतार्थीकृत्यतंवैश्यंपुरुषोत्तमपुरं
ययौ ॥ ४५ ॥ तत्रनीत्वाखिलंजन्ममृतोऽगान्मंदिरंहरेः॥हरिभक्तिप्रसादेनयत्सुरैरपिदुर्लभम् ॥ ४६ ॥ इति श्रीभगवद्भक्तिमाहात्म्ये
माधवदासचरितंनामशततमःसर्गः ॥ १०० ॥ छ ॥ अथापरंप्रवक्ष्यामिभक्तिमाहात्म्यमुत्तमम् ॥ यस्यस्मरणमात्रेणह
रिभक्तिर्भवेद्दृढा ॥ १ ॥ राजासीदुत्कलेदेशेधर्मिष्ठोवैष्णवोत्तमः ॥ तस्यासीत्तनयश्चैकोरघुनाथइतिश्रुतः ॥ २ ॥ बाल्यादेवसभक्त्या
न्वैपूजयामासभक्तितः ॥ अथकालेनकियतारघुनाथोयुवाऽभवत् ॥ ३ ॥ युवराजंविधातुंसराजास्वमनसाकरोत् ॥ रघुनाथस्तुतच्छ्रु
त्वापितरंप्रत्यबोधयत् ॥ ४ ॥ किंमेराज्येनभोतातदेह्यन्यस्मैसुतायतत् ॥ इत्युक्त्वासपरित्यज्यसर्वराज्यंपितुर्धनम् ॥ ५ ॥ श्रीजग
न्नाथनिकटेसिंहद्वारिस्थितोऽभवत् ॥ अयाचितंसमालभ्यास्थितोहृदिहरिंभजन् ॥ ६ ॥ तस्थौश्रीमज्जगन्नाथमंदिरेसिंहसन्निधौ ॥
एकदामाधवेमासेरघुनाथोमहानिशि ॥ ७ ॥ सुप्तंलोकेऽथशीतार्तोवेपमानोऽपतद्भुवि ॥ तदाश्रीमज्जगन्नाथोमहावैष्णवरूपधृक् ॥८॥
समागत्यस्वकंवस्त्रंशीतत्राणंददौस्वयम् ॥ प्रातरुत्थायतत्रत्याददृशुस्तन्महाद्भुतम् ॥ ९ ॥ ऊचुस्तंभोकुतश्चैतद्वस्त्रंप्राप्तंवदस्वतत् ॥
श्रुत्वाप्रोवाचतान्सर्वान्रघुनाथोहसन्निव ॥ १० ॥ अहोरात्रौतुशीतार्तंज्ञात्वामांकोऽप्यदादिदम् ॥ श्रुत्वातद्वचनंसर्वेजगन्नाथस्यचेष्टि

तम् ॥ ११ ॥ मत्वाप्रणेमुस्तंसर्वेरघुनाथंचवैष्णवाः ॥ सएकदासमायातोमथुरायांजनैःसह ॥ १२॥ राधाकुंडेस्थितोनित्यमयाचित
व्रतंवहन् ॥ श्रीकृष्णंमनसाध्यायन्कुर्वन्मानसपूजनम् ॥ १३ ॥ तस्थौबहुदिनंतत्रराधाकुंडेऽतिभक्तिमान् ॥ एकदामानसार्चायांदुग्धं
चातिघनंचतत् ॥ १४ ॥ बहुलंहरयेदत्त्वामनसातत्पुनःस्वयम् ॥ बुभुजेसर्वमेवैतन्महाभक्तिपुरःसरम् ॥ १५ ॥ अथतस्मिन्दिनेतस्य
रघुनाथस्यचोदरे ॥ उत्पन्नामहतीपीडाततोवैद्यमथानयत् ॥ १६ ॥ वैद्यस्तुनाडिकांधृत्वाजीर्णरोगमुवाचतम् ॥ तत्रापिपयसोनूनं
फेनीभूतशृतस्यच ॥ १७ ॥ श्रुत्वातद्भिषजोवाक्यंरघुनाथोऽब्रवीद्वचः ॥ निश्युपोषितएवाहंनाद्यकिंचिदखादिषम् ॥ १८ ॥ कथ
मेतदजीर्णंमेमहाश्चर्यंवदस्वभोः ॥ इतिश्रुत्वाततोवैद्योरघुनाथमुवाचसः ॥ १९ ॥ भुंक्ष्वेदमौषधंसद्योऽजीर्णंदुग्धंतवोदरात् ॥
निपतिष्यतिचात्रैववमनेनतवोदरात् ॥ २० ॥ इत्युक्त्वाप्रददौचूर्णंरघुनाथश्चखादतत् ॥ अथक्षणेनतत्रैवफेनीभूतं पयः शृतम् ॥
॥ २१ ॥ निपपातोदरात्तस्यतदौषधबलात्ततः ॥ दृष्ट्वैतत्परमाश्चर्यंसर्वेविस्मयमागताः ॥ २२ ॥ किमिदंमहदाश्चर्यमित्यूचुस्तंमुदा
जनाः ॥ अथतस्मिन्क्षणेकश्चिदायातोवृद्धवैष्णवः ॥ २३ ॥ श्रुत्वातदद्भुतंप्राहरघुनाथंहसन्निव ॥ अर्पयित्वातुहरयेपयःफेनी
कृतंबहु ॥ २४ ॥ अदत्त्वावैष्णवेभ्यस्तत्स्वयंभुक्तंपयोयतः ॥ ततोजीर्णंनखिन्नोभूःसत्यंवदतितेभिषक् ॥ २५ ॥ श्रुत्वैतत्सा
धुवाक्यंसरघुनाथउवाचतम् ॥सत्यमेतन्नसंदेहोऽजीर्णमेपयसस्तथा ॥ २६ ॥ मानसेनोपचारेणपूजायांयादृशंपयः ॥ समर्प्यभुक्तंसर्वं
तददत्त्वैवतुलोभतः ॥२७॥ सत्यमेतन्नसंदेहोनान्यत्किंचिन्मुखेऽर्पितम् ॥ श्रुत्वैतद्वचनंतस्यरघुनाथस्यवैजनाः ॥२८॥ वृद्धसाधोरपि

तदाविस्मयंपरमंययुः॥एवमादीनिकर्म्माणिराधाकुंडेऽनुभूयसः ॥२९॥ जगामहरिसान्निध्यमंतेयोगिसुदुर्लभम् ॥३०॥ इतिश्रीभगवद्भ क्तिमाहात्म्येरघुनाथचरितंनामैकोत्तरशततमःसर्गः ॥ १०१॥ अथापरोत्रभूवैकोगौडदेशेद्विजोत्तमः ॥ नित्यानंदेननाम्नासनित्यानंद मयःसदा ॥१॥ भूत्वाब्रह्मकुलेऽधीत्यवेदशास्त्राणिचद्विजः॥अध्यापयामाससुदाशिष्यान्पुत्रानिवौरसान् ॥२॥ दृष्ट्वाभागवतंशास्त्रंविप्र स्त्वेकदिनेक्वचित् ॥ पूर्वपुण्यप्रभावेणलब्धंचातीवतत्प्रियम् ॥३॥ तदाप्रभ्यद्विजःसोऽपिनित्यानंदोऽतिपंडितः ॥ पठन्भागवतंनित्यं चिंतयामासवैहरिम् ॥ ४ ॥ एवंचिंतयतस्तस्यपश्यतःपुस्तकंरहः ॥ दिव्यज्ञानंसमुत्पन्नंश्रीनित्यानंदशर्म्मणः ॥ ५ ॥ सर्वंकृष्ण मयंविश्वमन्यत्तद्धदिस्वयम् ॥ श्रीकृष्णमात्मानमपिमत्वानंदमयोऽभवत् ॥ ६ ॥ इष्टानिष्टमिदाशून्योबभूवातीवतन्मयः ॥ मृते जातेऽथवापुत्रेमित्रेशत्रौसमःसदा ॥ ७ ॥ शीतोष्णानलतोयेषुनाभूद्भेदमतिःक्वचित् ॥ क्षुत्पिपासाविनिर्मुक्तोबभूवातिसुखीतदा ॥८॥ सर्वंकृष्णमयंजानन्वारुणीमदमत्तवत् ॥ भाषतेनातिहसतिवदतिस्मयथातथा ॥ ९ ॥ एकदासबहिर्ग्रामेशुष्केतृणचयेस्थितः ॥ अ कस्मात्तत्रदावाग्निर्लग्नोवायुसमीरितः ॥ १० ॥ तस्यासनतलेप्राप्तोलग्नःशुष्कतृणेऽनलः ॥ समुत्तस्थौमहाज्वालानित्यानंदंचसावृ णोत् ॥ ११ ॥ तयासमावृतोभक्तोनचचालततःक्वचित् ॥ दृष्ट्वातत्परमाश्चर्य्यंसर्वेयेतत्रसंस्थिताः ॥ १२ ॥ धावित्वांतिकमा यातास्तावदग्निः शमंययौ ॥ नित्यानंदस्तुतत्रैवस्थितोऽतीवमुदान्वितः ॥ १३ ॥ अथोऽपविशतस्तस्याधस्ताच्छुष्कंतृणंतुयत्॥ नतुदग्धंतथैवासीत्तदंगस्पर्शतोध्रुवम् ॥ १४ ॥ एवंभरतयोगीवबभूवद्विजसत्तमः ॥ भुक्त्वाप्रारब्धमखिलंययौश्रीकृष्णमेवसः ॥१५॥

इति श्रीभगवद्भक्तिमाहात्म्ये नित्यानंदचरितंनामद्व्युत्तरशततमः सर्गः ॥ १०२ ॥ छ ॥ अथापरोवंगदेशेयोवैभक्तिमतांवरः ॥ कृष्ण
चैतन्यनाम्नाभूद्गौडदेशेद्विजोत्तमः ॥१॥ येनसंस्थापिताभक्तिर्हरेर्गौडेऽपिशाश्वती॥गृहस्थएवविप्रोऽसौविद्याह्यभ्यस्यचाखिलाः ॥ २ ॥
कृतदारोहरिंभक्त्यापूजयन्संस्थितोगृहे ॥ श्रीकृष्णोऽहमितिध्यायंस्तद्रूपोऽभूद्द्विजोत्तमः ॥ ३ ॥ परिणिन्येसदारान्वैबहुशोऽतिप्रतिष्ठि
तः ॥ तैर्दारैःसहश्रीकृष्णलीलामनुचकारसः ॥ ४ ॥ कृत्वाकुंजंनदीतीरेस्त्रीभिर्वंशींनिनादयन् ॥ एवंभावग्रहस्तस्यकृष्णोऽहमिति
निश्चयात्॥५॥प्रययुःकतिवर्षाणिनिरुद्योगस्यवृत्तये ॥ तदैकोदुर्जनस्तत्रचिंतयामासचेतसि ॥ ६ ॥ अहोनायात्ययंक्वापिनचायाति
चकुत्रचित्॥कुर्वन्बहुव्ययंनित्यंविहरत्येषनिर्भयः ॥७॥ कस्माद्स्येदृशीसंपदागच्छतिनिरंतरम् ॥ इतिज्ञातुंयतिष्येऽद्ययदिदंभितोऽ
स्तिचेत्॥ ८ ॥ तदादंडंज्ञापयिष्येकथयित्वानृपायतत्॥इतिसंचिंत्यमनसागत्वाराजसमीपतः ॥ ९ ॥ प्राहतंनृपतिंधूर्तोराजंस्तवपुरेम
हान् ॥ अनर्थोजायतेतंत्वंनिवारयितुमर्हसि ॥ १० ॥ दंडंप्रयच्छधूर्तानांप्रजांपालयधर्म्मतः ॥ एषश्रीकृष्णचैतन्यनामायोऽत्रास्ति
वैष्णवः ॥ ११ ॥ सोऽतिधूर्तोदुराचारोवंचयित्वाखिलंजनम् ॥ आत्मानंपूजयत्येषमिथ्याचारेणपापकृत् ॥ १२ ॥ शिष्यांश्चकार
सर्वान्सनगरेधनलोभतः ॥ स्वयंप्रतिनिशंस्त्रीभिःक्रीडत्येषमहाकुलः ॥ १३ ॥ नजानातितदाकिंचिज्जनानांतत्तदागमम् ॥ तस्मा
च्छाधिमहाराजधूर्तंदंभरतंशठम् ॥१४॥ नोचेत्सर्वामहामोहेनिपतिष्यंतितेप्रजाः ॥ श्रुत्वेदंतद्वचोराजाप्रोवाचातिप्रयत्नवान् ॥१५॥
अहोश्रुतंमयाप्येतद्वैष्णवोऽतीवभक्तिमान् ॥ नाम्नाश्रीकृष्णचैतन्योमत्पुरेवर्ततेऽधुना ॥ १६ ॥ परंतुनैवंजानामिदुराचारंकरोतिसः ॥

तस्मादद्यनिशाभागेत्वयासहतदालयम् ॥ १७ ॥ अहंप्रच्छन्नरूपःसन्गमिष्यामिनसंशयः ॥ तदातच्चरितंसर्वंसाक्षात्पश्याम्यहंदृशा
॥ १८ ॥ तथातथाकरिष्यामिनिग्रहंवाप्यनुग्रहम् ॥ इतिनिश्चित्यधूर्तेनसाकंराजासमुत्थितः ॥ १९॥ धूर्तोऽपिस्वगृहंगत्वारात्रौराज
गृहंययौ ॥ अथराजापितंधूर्तंनीत्वारात्रौमहानिशि ॥२०॥ वीरमेकंपदातिंचकृत्वानुचरमाययौ ॥ कृष्णचैतन्यभवनेदूरात्तंदद्दृशुश्चते
॥२१॥ परमाश्चर्य्यरूपंतंहरिभक्तिप्रसादतः ॥ धूर्तस्तुतंचतुर्बाहुंशंखचक्रगदाधरम् ॥२२॥ भ्रुकुटीकुटिलाक्षंचदृष्ट्वातीवविमोहितः ॥
उक्तानृपंमहाराजपश्येदंपरमाद्भुतम् ॥ २३ ॥ चतुर्भुजोऽयदृष्टोऽयंयश्चासीत्षष्टिहायनः ॥ द्विभुजःप्राकृतोविप्रःसोऽयंजातोमहाप्रभुः
॥ २४ ॥ एवंकथयतस्तस्यधूर्तस्यनृपसन्निधौ ॥ ब्रह्मांडंस्फुटितंतत्रतत्क्षणात्सममारह ॥ २५ ॥ ततोराजातिसंदिग्धोददर्शद्वि
जमद्भुतम् ॥ द्विभुजंपुंडरीकाक्षंश्यामंवंशीनिनादिनम् ॥२६॥ प्रसन्नंवनिताभिश्चसाक्षाद्देवीभिरावृतम् ॥ पदातिरपितंतत्रददर्शद्विभुजं
नरम् ॥ २७ ॥ वृद्धंश्रीकृष्णचैतन्यंस्त्रीसहायंचपूर्ववत् ॥ ततोराजातिभक्त्यातंप्रणिपत्याद्भुतंततः ॥ २८ ॥ मृतंधूर्तंसमुत्थाप्य
स्वमंदिरमुपागतः ॥ तत्राप्याश्चर्य्यतोराजानसुष्वापचतांनिशाम् ॥ २९ ॥ उवाचपत्न्यैतत्सर्वंकृष्णचैतन्यचेष्टितम् ॥ अथप्रभाते
चोत्थायराजासर्वानथाह्वयत् ॥ ३० ॥ ग्रामवृद्धान्मंत्रिणश्चपंडितांश्चपुरोहितान् ॥ तद्धूर्तगमनंरात्रौस्वकीयगमनंपुनः ॥ ३१ ॥
कृष्णचैतन्यभक्तस्यददर्शपरमाद्भुतम् ॥ धूर्तब्राह्मणवाक्यंचतस्यब्रह्मांडभेदनम् ॥ ३२ ॥ मरणंचापितत्रैवपदातेर्दर्शनंतथा ॥
दृष्ट्वास्वयंयथार्थंचसर्वंसर्वानुवाचसः ॥ ३३ ॥ श्रुत्वासर्वेराजवाक्यंमेनिरेपरमाद्भुतम् ॥ नममन्यंतश्रीकृष्णचैतन्यस्यमहा

प्रभोः ॥ ३४ ॥ शिष्योभवामिचाद्यैवभवद्भिश्चानुमोद्यताम् ॥ इतिश्रुत्वावचस्तस्यराज्ञस्तेऽपिविचारतः ॥ ३५ ॥ अन्व
मन्यंतसर्वेतंप्रशंसंतोऽथवैष्णवम् ॥ अथराजाचतेसर्वेतस्मिन्नेवदिनेतदा ॥३६॥ कृष्णचैतन्यभवनमाजग्मुश्चातिभक्तितः ॥राजाप्रणम्य
श्रीकृष्णचैतन्यंपरमादरात् ॥ ३७॥ उक्त्वासर्वमशेषेणयद्यज्जातंमहानिशि ॥ ततःप्रोवाचनृपतिःकृतांजलिपुटःपुनः ॥ ३८ ॥
गुरोक्षमस्वमूर्खस्यशाधिमांशरणागतम् ॥ इदंराज्यमिमेदाराइमेपुत्राबलंत्विदम् ॥ ३९ ॥ तुभ्यमर्पितवानस्मीत्युक्त्वापादौप्रणम्य
सः ॥ तथैवमंत्रिणःसर्वेपुरोधाश्चबभाषिरे ॥ ४० ॥ श्रुत्वासर्वेरितंकृष्णचैतन्योवाक्यमब्रवीत् ॥ वस्तुतोगुरुशिष्येतिव्यवहारोभ्रमो
नृणाम् ॥ ४१ ॥ तथापितवबुद्धिश्चेत्करिष्येत्वांनिजंनृप ॥ इत्युक्त्वाप्रददौमंत्रंराज्ञेसिद्धिमवापसः ॥ ४२ ॥ उवाचस्वीयधर्म्मेणकु
रुराज्यमकंटकम् ॥ श्रीकृष्णंमनसाध्यायन्नभिमानविवर्जितः ॥ ४३ ॥ जीवमात्रेदयांकुर्वन्देहिदानंनिरंतरम् ॥ यद्दत्तमखिलंनीत्वापु
नस्तुभ्यंसमर्पितम् ॥४४॥ इत्युक्त्वाविररामासौगुरुर्वैष्णवसत्तमः ॥ राजापिसचिवैःसार्द्धंकृतार्थोऽगात्स्वमंदिरम् ॥ ४५ ॥ अथश्री
कृष्णचैतन्योराज्ञार्पितधनंबहु ॥ ब्राह्मणेभ्यश्चसाधुभ्यःसर्वंप्रादाच्चतत्क्षणात् ॥ ४६ ॥ ततःस्वयंचिदानंदेमग्नस्तस्थौचपूर्ववत् ॥ एवं
श्रीकृष्णचैतन्योमहाभक्तोबभूवसः ॥ ४७ ॥ वंगेऽपिस्थापितायेनवैष्णवीभक्तिरुत्तमा ॥ अद्यापितस्ययेशिष्यास्तद्दृष्टास्तिष्ठंतिवैष्णवाः
॥ ४८ ॥ प्रतिष्ठितागौडदेशेविष्णुभक्तिप्रवर्तकाः ॥ ४९ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येश्रीकृष्णचैतन्यप्रभुचरितंनामत्र्युत्तरशततमः
सर्गः ॥ १०३ ॥ छ ॥ अथवक्ष्येकथांरम्यांशूरदासस्यविश्रुताम् ॥ परमाश्चर्य्यजननींहरिभक्तिप्रदायिनीम् ॥ १ ॥ श्रीकृष्णस्य

सखाकश्चिच्छूरसेनकुलोद्भवः ॥ कृष्णेनैवसमंसोऽपिद्वारकांप्रययौपुरीम् ॥ २ ॥ परंतुतस्यहृदयंवृंदावननिवासजम् ॥ स्मृत्वानंदंदुनो
तिस्ममुहुःकृष्णमुवाचह ॥ ३ ॥ कदागमिष्यसित्वंभोमथुरायांमयासह ॥ कदाद्रक्ष्यामिभांडीरंकालिंदींतंचपर्वतम् ॥ ४ ॥ इत्यह
र्निशमेवासौमहोत्कंठसमन्वितः ॥ नलेभेद्वारकायांसयावज्जीवंतथासुखम् ॥ ५ ॥ अथकालेनश्रीकृष्णोद्वारवत्यांयदून्स्वयम् ॥ नी
त्वाजगामवैकुंठंतत्रापिसतुयादवः ॥ ६ ॥ वृंदावनंदिदृक्षुःसन्महोत्कंठसमन्वितः ॥ कदाकृष्णगमिष्यामित्वयासहमधोःपुरे ॥ ७ ॥
इतिश्रुत्वाथतद्वाक्यंश्रीकृष्णःप्रहसन्वचः ॥ प्रोवाचतंमहोत्कंठंमथुरागमनायसः ॥ ८ ॥ अहोनाहंगमिष्यामिपूर्ववन्मथुरापुरीम् ॥
किंतुतत्रैवतिष्ठामिपरिवारसमन्वितः ॥ ९ ॥ राधयासहितोनित्यंप्रतिकुंजंनसंशयः ॥ मथुरानगरीसत्यंवैकुंठादपिमेप्रिया ॥ १० ॥
नतांत्यक्त्वासुखंक्वापिसर्वप्राप्स्याम्यहंतथा ॥ शंकरस्याविमुक्ताख्यापुरीवाराणसीयथा ॥ ११ ॥ तथाममापिमथुराब्रह्मांडेनात्र
संशयः ॥ स्मराम्यद्यापियत्राहंबाल्येभूत्वास्थितःपुरा ॥ १२ ॥ मृत्तिकाभक्षणादीनिकृतवान्बाललीलया ॥ पूतनामरणंचैवशकट
स्यचभंजनम् ॥ १३ ॥ यमलार्ज्जुनभंगंचबकासुरवधस्तथा ॥ अघासुरस्यनिधनंकालियस्यमदक्षयः ॥ १४ ॥ ब्रह्मसंमोह
नंतद्वद्वृंदावननिवेशनम् ॥ प्रलंबधेनुकारिष्टहननंगिरिपूजनम् ॥ १५ ॥ गोवर्द्धनाचलोद्धारोरासक्रीडनमेवच ॥ केशिनो
मरणंतद्वच्चाणूरस्यचमर्द्दनम् ॥ १६ ॥ कंसस्यमारणंचापिवसुदेवस्यमोचनम् ॥ एवमादीनिकर्म्माणिस्मृत्वाखिद्येऽहमप्यहो
॥ १७ ॥ कदातथाविधास्यामीत्येवमुत्कंठितोऽस्म्यहम् ॥ यस्तुतत्रममप्रेम्णाममलीलांकरोतिवै ॥ १८ ॥ अहमेवस

मंतव्योनात्रकार्याविचारणा ॥ ममजन्मोत्सवंतत्रस्थित्वायाकुरुतेसती ॥ १९ ॥ तांयशोदासमांमत्वामांयात्यत्रनसंशयः ॥
पुरुषोयस्तुमज्जन्मदिनेव्रतपरायणः ॥ २० ॥ बालरूपंयजेन्मांसमामेवाप्नोतिनिश्चितम् ॥ यथाकथंचिच्चेत्तत्रयोवाकोवापि
मानवः ॥ २१ ॥ मथुरायांगतोनामगृह्णातिसतुमेप्रियः ॥ त्वंचेज्जिगमिषुस्तत्रशृणुमेवचनंहितम् ॥ २२ ॥ यथातत्रगतस्त्वंवै
तथैवानुभविष्यति ॥ कलेःसंध्यांतसमयेमथुरायाःसमीपतः ॥ २३ ॥ भूत्वाविप्रकुलेत्वंभोगत्वातांमथुरांपुरीम् ॥ गायन्ममैवलीलांत्वं
तादृक्सुखमवाप्स्यसि ॥ २४ ॥ मल्लीलांप्राकृतैःपद्यैर्गास्यसित्वंस्फुटंतदा ॥ श्रुत्वाऽन्येऽपिमयिप्रेमकरिष्यंतिजनाःकलौ ॥ २५ ॥
तेऽपिभक्ताभविष्यंतिचोद्धरिष्यामितानहम् ॥ परंतुजातमात्रस्त्वंनेत्रहीनोभविष्यसि ॥ २६ ॥ अंधत्वाज्जननीमातापोषयिष्यति
केवलम् ॥ अन्येत्वौदास्यमापन्नानतेकुत्रापिसौहृदम् ॥ २७ ॥ एवमुक्त्वाततःकृष्णोविररामाथयादवः ॥ प्रणम्यप्रार्थयंश्चित्तेसमयं
तंतथावसत् ॥ २८ ॥ अथागतेतुसमयेतस्मिन्सयादवस्तदा ॥ बभूवविप्रभवनेमथुरायाःसमीपतः ॥ २९ ॥ जातमात्रोबभूवांधो
बालोमात्रानिरीक्षितः ॥ नातिहर्षवतीजातादृष्ट्वांधंतंशिशुंतदा ॥ ३० ॥ अन्येऽपिदृष्ट्वातंचांधमुदासीनाःसुहृज्जनाः ॥ नतथासमभा
षंतजनन्यापोषितःपरम् ॥ ३१ ॥ अथाष्टमेऽब्देपित्रासावुपनीतोयथाविधि ॥ सूरदासइतिख्यातोनगरेऽसौबभूवह ॥३२॥ सएकदा
जनैःसार्द्धंमथुरामाजगामह ॥ पितृभ्यांसहितोबालःसूरदासोऽतिभक्तितः ॥ ३३ ॥ तत्रागत्याखिलांयात्रांकृत्वातौपितरौगृहम् ॥
चलितौसूरदासंतंबालंप्राहतुरेहिभोः ॥ ३४ ॥ श्रुत्वातद्वचनंपित्रोःसूरदासउवाचतौ ॥ युवाभ्यांतत्रगंतव्यंनाहंगच्छाम्यतोगृहम् ॥

॥ ३५ ॥ गृहकर्मासमर्थोऽहंनोपकुर्वेकिमप्यथ ॥ गत्वातत्रकरिष्यामियुवयोःकिंसमीहितम् ॥ ३६ ॥ अथेयंमथुरासाक्षाद्यत्रकृष्णो
ऽस्तिसर्वदा ॥ भक्तानुग्रहकर्तासौपालयिष्यत्यसंशयम् ॥ ३७ ॥ तस्मान्नाहंगमिष्यामिपितरौभवतोर्गृहम् ॥ इतिश्रुत्वावचस्तस्य
सूरदासस्यतौपुनः ॥ ३८ ॥ पुत्रस्नेहसमासक्तौरुदंताविदमूचतुः ॥ अरेत्वमंधोबालोनौत्वांविनावांकथंपुनः ॥ ३९ ॥ व्रजावो
मंदिरंवत्सेत्येतस्मिन्नंतरेतदा ॥ साधुरेकःसमायातोवृद्धोऽतीवदयान्वितः ॥ ४० ॥ सप्रोवाचातिमुदितोवचनंतौप्रहर्षयन् ॥ गच्छ
तंभोयुवांविप्रौनिःसंदेहौसुतंप्रति ॥ ४१ ॥ एषमद्भवनेबालःस्थास्यत्यतिसुखेनवै ॥ अहमेनंगृहीत्वातुयास्यामिनिजमंदिरम् ॥
॥ ४२ ॥ अथतस्यससाधोर्वैगृहेतुनिवसन्मुदा ॥ श्रीकृष्णचरितंगीतंसूरः शुश्रावसर्वदा ॥ ४३ ॥ स्वयंतैर्वैष्णवैःसाकंनृत्यन्गी
तंजगौमुदा ॥ कृष्णलीलांसूरदासःशुश्रावसकलांमुदा ॥ ४४ ॥ पूर्वानुभूतंतत्सर्वंचरितंश्रीहरेस्तथा ॥ अन्वभून्मथुरायांसक्षु
त्पिपासाविवर्जितः ॥ ४५ ॥ अथस्वयं सूरदासःकृत्वापद्यान्यनेकशः ॥ कुंजेकुंजेजगौप्रेम्णासर्वलोकमनोहरम् ॥ ४६ ॥ एवंसम
थुरायांतुनिवसन्भक्तसत्तमः ॥ सूरदासःप्रसिद्धोऽभूत्सर्वदेशेषुचोत्तमः ॥ ४७ ॥ पद्यानितस्यगायंतिनिर्मितानिहरेर्जनाः ॥ गायंतो
भक्तिसंयुक्ताजातास्तेऽतीववैष्णवाः ॥ ४८ ॥ यत्रयत्रजगामासौगायन्गीतंहरेर्यशः ॥ तत्रतत्रस्वयंकृष्णःप्रेम्णातुचलतिस्मतम्॥४९॥
साक्षात्पश्यन्हरिंचित्तेगोवत्सानांतुवारकम् ॥ महानंदनिमग्नोऽभून्नसस्मारात्मनोगतेः ॥५०॥ अथमार्गेव्रजन्कूपेपतनंवैयदाभवत् ॥
तदासभगवान्कृष्णोगोपवेषधरोहरिः ॥ ५१ ॥ सूरदासंकरेधृत्वान्यवारयतकूपतः ॥ अथतंसूरदासोऽपिदधारदृढमुष्टिना ॥ ५२ ॥

२०

ततोहरिर्हसन्मुष्टिंमोचयित्वाबहिर्गतः ॥ ततःसूरोऽब्रवीत्तंतुश्रीकृष्णंभक्तवत्सलम् ॥ ५३ ॥ तत्करस्पर्शजानंदवारिमुंचन्दृगंबुजात् ॥
मोचयित्वाकरंयन्मेदुर्बलस्यगतोह्यसि ॥ ५४ ॥ हृदयाच्चेद्बहिर्यासितदात्वांपुरुषंब्रुवे ॥ इत्याकर्ण्यहरिस्तुष्टोददौनेत्रेसुनिर्म्मले॥५५॥
सूरदासस्तमद्राक्षीत्कृष्णंकमललोचनम् ॥ गाश्चारयंतंगोपालंबालवेषंसुयंत्रितम् ॥ ५६ ॥ साष्टांगंप्रणिपत्याहसूरदासोऽतिहर्
षितः ॥ श्रीकृष्णमाययामुग्धोमत्वातंगोपबालकम् ॥ ५७ ॥ अहोत्वयाऽहंकिंकूपात्पतन्निहनिवारितः ॥ अतस्त्वांनौमिगोपालं
प्रेम्णामेरक्षितस्त्वया ॥ ५८ ॥ अतस्त्वंकोऽसिकुत्रासिकिंनामासिवदस्वमे ॥ इतितेनतदापृष्टःसूरदासेनमुह्यता ॥ ५९ ॥ उवाचप्र
हसन्वाक्यंश्रीकृष्णोगोपवेषधृक् ॥ गोपालोऽस्म्यहमत्रैवमथुरायांवसाम्यहम् ॥ ६० ॥ गाश्चारयन्निहायातोदृष्ट्वात्वामन्धचक्षुषम्॥कूपे
निपतितंभक्तंतदाहंत्वांन्यवारयम् ॥ ६१ ॥ इतोयथेष्टंगच्छत्वंयाम्यहंयांतिधेनवः ॥ इत्युक्त्वासतुगोपालस्ततोदुद्रावगोदिशि ॥
॥ ६२ ॥ कियद्दूरंगतेतस्मिन्पादपांतरितेप्रभौ ॥ दृष्ट्वाततःपुनःसूरोनददर्शार्थकिंचन ॥६३॥ ततोऽतिखिन्नःपप्रच्छजनान्पथिसमाग
तान् ॥ दृष्टस्त्वयैकोगोपालश्चारयन्गावनेरहः ॥ ६४ ॥ वनमालापरिक्षिप्तोवेत्रपाणिःस्मिताननः ॥ श्रुत्वासूरस्यवचनंपथिकःप्राह
तंपुनः ॥ ६५ ॥ अहोभ्रांतोऽसिकिंब्रूषेनास्तिगोपोऽत्रकानने ॥ वर्ततेक्वापिनोगावस्तस्माद्व्रजगृहंस्वकम् ॥६६॥ पथिकस्यवचःश्रुत्वा
सूरदासोऽतिविस्मितः ॥ विचिन्वन्विपिनंसर्वंनप्रापतंक्वचिद्वने ॥ ६७ ॥ श्रांतोबभूवचात्यर्थंतस्थौतरुतलेक्वचित् ॥ ६८ इति श्री
भगवद्भक्तिमाहात्म्येसूरदासचरितंनामचतुरुत्तरशततमःसर्गः ॥ १०४ ॥ ॥ छ ॥ अथतत्रोपविष्टस्यसूरदासस्यखिद्यतः ॥ रात्रिः

समागतातत्रसूरदासोऽपिसंस्थितः ॥ १ ॥ वनेऽपिपर्य्यटन्क्लेशात्तद्रूपात्माभवत्तदा ॥ ग्रामेगंतुंमनोनैवचक्रेतद्गतमानसः ॥ २ ॥
अथरात्रौददर्शासौस्वप्नेकृष्णंतुतादृशम् ॥ दृष्ट्वासोऽयमितिज्ञात्वाप्रणनाममुहुर्मुहुः ॥ ३ ॥ अथसूरंसमाचष्टश्रीकृष्णः प्रहस
न्निव ॥ अहोऽहमेवदिवसेकूपाद्रक्षितवानिति ॥ ४ ॥ नेत्रेमयैवतेदत्तेरूपसंदर्शनायमे ॥ नात्रगावोनवागोपस्त्वमद्राक्षीर्वनेतुय
त् ॥ ५ ॥ मन्मायाकल्पितंसर्वंतवदर्शनहेतवे ॥ तस्मादुत्थायमथुराग्रामेगच्छयथासुखम् ॥ ६ ॥ पूर्ववद्विचरल्लोकेमद्यशोगान
माचर ॥इतिश्रुत्वावचस्तस्यसूरदासोऽब्रवीत्तदा ॥७॥ अहोधन्योऽस्मिलोकेऽस्मिन्यस्त्वंदृष्टोमयाप्रभुः ॥ अतःपरंनमेकिंचिद्वांछितंव
र्ततेभुवि ॥ ८ ॥ परंतुत्वत्स्मृतिस्तादृग्वर्ततांममसर्वदा ॥ मायानबाधतांनाथत्वदीयामांजनार्दन ॥ ९ ॥ किंचयाभ्यांभवान्दृष्टोने
त्राभ्यांपद्मलोचन ॥ नताभ्यांजगदेतद्वैद्रष्टुमिच्छाम्यहंपुनः ॥ १० ॥ तस्मादंधत्वमेवस्यात्पूर्ववन्ममकेशव ॥ इतिस्वप्नगतोवा
क्यमुक्त्वातूष्णींबभूवसः ॥ ११ ॥ ततःसभगवान्स्वप्नेप्राहैवंसर्वमस्तुते ॥ इतिस्वप्नेवरंलब्ध्वाजगामांतर्हितःप्रभुः ॥ १२ ॥ स्मृ
त्वास्वप्नंतथांध्यंचज्ञात्वाहर्षसमन्वितः ॥ जगौकल्पितपद्येनकृष्णस्यचरितानिसः ॥ १३ ॥ अथप्रभातेसंजातेसूरदासस्तुतद्वनात् ॥
आगत्ययमुनातीरेतस्थौगायन्हरेर्गुणान् ॥ १४ ॥ तत्रत्यैःपूर्ववत्तत्रभोजनाच्छादनादिभिः ॥ संमानितोमुदावात्सीद्यावज्जीवं
हरिंभजन् ॥ १५ ॥ एकदाम्लेच्छभूपेनादिल्लीशेनातिभक्तितः ॥ समाहूतःसूरदासोययौगायन्हरेर्यशः ॥ १६ ॥ तत्रागतंसू
रदासंदृष्ट्वादिल्लीश्वरोनृपः ॥ उत्थायप्रणनामासौमहाभक्तिपुरस्सरम् ॥ १७ ॥ उपवेश्यशुचौदेशेप्रांजलिर्वाक्यमब्रवीत् ॥ भग

वंस्त्वंहरेर्भक्तस्तत्सखायादवोऽस्तिहि ॥ १८ ॥ इतिसर्वेवदंत्यत्रजानेऽहमपितादृशम् ॥ तस्मादेकंवदत्वत्रभवान्प्रश्नोत्तरंमम ॥ १९ ॥
ममसंतिस्त्रियोबह्व्यस्तासांकापिचयादवी ॥ तांवैकथयमह्यंमोदयांकृत्वाममोपरि ॥ २० ॥ इतिश्रुत्वावचस्तस्यसूरदासोऽब्रवीद्वचः ॥
अहोयाःसंतितेपत्न्योगृहेतास्त्वयिपश्यति ॥ २१ ॥ अत्रागत्यचमांदृष्ट्वाप्रत्येकंताव्रजंत्वतः ॥ तन्मध्येयापरिचितामामस्यात्सा
तुमामिह ॥ २२ ॥ त्यक्तलज्जातिविनयात्सहसासंवदिष्यति ॥ परन्तुसातदैवोक्त्वात्यक्त्वादेहंगमिष्यति ॥ २३ ॥ इत्युक्त्वाम्ले
च्छनृपतिःस्त्रियःसर्वाअजिज्ञपत् ॥ प्रत्येकंसूरदासंतुप्रणम्येतोव्रजंत्विति ॥ २४ ॥ अथताम्लेच्छनृपतेःपत्न्यःप्रत्येकमागताः ॥ प्रण
म्यसूरदासंतुगताःसर्वाःस्वमंदिरम् ॥ २५ ॥ पश्चादेकासमायाताप्रेयसीम्लेच्छभूपतेः ॥ दूराद्दृष्ट्वातुसासूरंहर्षादुत्फुल्ललोचना ॥२६ ॥
अहोकुतःसमायातोभवाञ्जानातिमांकिमु ॥ इत्युक्तःसोऽब्रवीत्तांतुजानेऽहंत्वांनसंशयः ॥ २७ ॥ अथसांतिकमागत्यधृत्वापादौनना
मतम् ॥ तदैवतस्याब्रह्मांडंपुस्फोटाथममारसा ॥ २८ ॥ अथतांनृपतेर्दास्यःसमुत्थापयितुंगताः ॥ दृष्ट्वातदासंरुरुदुर्भूपोऽपिविम
नाअभूत् ॥ २९ ॥ तथापिधैर्य्यमालंब्यभूपःपप्रच्छतंपुनः ॥ कासीदियंपरिचितातवभक्तवदाशुमे ॥ ३० ॥ इतिश्रुत्वाव
चस्तस्यसूरदासउवाचतम् ॥ शृणुष्वास्यामहाराजपूर्वजन्मसमुद्भवम् ॥ ३१ ॥ मथुरायामियंपूर्वमासीद्वेश्यानराधिप ॥
सुलोचनेतिनाम्नावैनृत्यगीतविशारदा ॥ ३२ ॥ दृष्टामयाऽपिबहुशोनृत्यंतीराजसंसदि ॥ नासीदस्याःसमाकाचिद्गीतनृत्यकलाप
कृत् ॥३३॥ एकदातुतदाकोऽपिवैश्योधनसमृद्धिमान् ॥ अत्रायातोगृहीत्वेमांपुत्रपाणिग्रहोत्सवे ॥ ३४ ॥ इयमत्रसमागत्य

नृत्यगीतैर्मनोहरैः ॥ मोहयामाससकलान्पुरवासिजनान्नृप ॥३५॥ एकदातत्रनृपतिःश्रुत्वेमांसोऽनयन्मुदा ॥ प्रनर्तयामासनृत्यैस्तुष्टो
धनमदाद्बहु ॥ ३६ ॥ इयंतुनृत्यसमयेददर्शनृपमंदिरे ॥ राज्ञींमहार्हरत्नाढ्यांदासीगणनिषेविताम् ॥३७॥ तदेयंमनसाचक्रेमनोरथ
मकल्मषा ॥ अहोकथमहंत्वेवंमहासुखसमागमम् ॥ ३८ ॥ प्राप्स्यामिकेनतपसादानेनाथकरोमितत् ॥ इतिनिश्चित्यमनसिजगर्हा
त्मानमात्मना ॥ ३९ ॥ अथैषापट्टमहिषींदिव्यस्त्रीचात्रभक्तितः ॥ दीनानाथदरिद्रेभ्योद्विजेभ्योऽदाद्धनंमुदा ॥४०॥ यथेयंसुखमश्ना
तितथास्यांध्रुवमप्यहम् ॥ एवंसंकल्पयामासमनसैतत्त्वियम् ॥ ४१ ॥ दैवाद्बभूवदुःखार्ताज्वररोगेणतद्दिने ॥ ततःपंचत्वमाप
न्नानीतेयंयमकिंकरैः ॥ ४२ ॥ तत्रभुक्त्वाबहुदिनंदुःखंसेयंदिवंगता ॥ तत्रस्थित्वाप्सरोलोकेगीतनृत्यसमुद्भवे ॥ ४३ ॥ महानंदेनि
मग्नाभूदियंमन्मथुरापुरि ॥ पूर्वंननतदेवाग्रेपश्चादन्यत्रवृत्तये ॥ ४४ ॥ तत्कर्मसुकृतेनेयंजातास्वर्गेसुरगृहे ॥ तत्रस्थित्वाबहुदिनंत
न्मनोरथसिद्धये ॥४५॥ क्षीणेपुण्येमहाराजमर्त्यलोकेभवद्गृहे ॥ आगत्यबुभुजेपूर्वसंकल्पितसुखंसती ॥४६॥ त्वयासहमहीपालसे
दानीमायुषःक्षयं ॥ त्यक्त्वादेहंगतादेवीवैकुंठभवनंमुदा ॥ किंचयादेववंशस्ययाःस्त्रियः पुरुषाश्चये ॥ ४७ ॥ नतेमनुष्याज्ञातव्या
देवांशाःसमुपागताः ॥ कृष्णेनसहतल्लोकंगतानास्त्यत्रसंशयः ॥ ४८ ॥ इत्युक्त्वासूरदासोऽपिभूपसाभाष्यचोत्थितः ॥ चलितुंम
थुरायांवैततोराजाददौधनम् ॥ ४९ ॥ सूरदासोनजग्राहप्राहमेकिंधनेनभोः ॥ दिल्लीशोऽपिसमुत्थायतंप्रणम्यन्यवर्त्तत ॥ ५० ॥ एवं
ससूरदासोऽभूद्भक्तिमान्पृथिवीतले ॥ अंतेत्यक्त्वातनुंतत्रमथुरायांहरिंस्मरन् ॥ ५१ ॥ जगामकृष्णभवनंमुमोदसचपूर्ववत् ॥ इति

श्रीभगवद्भक्तिमाहात्म्येसूरदासचरितंनामपंचोत्तरशततमःसर्गः ॥ १०५ ॥ ॥ छ ॥ ॥ छ ॥ अथैषांमथुरायांवैबभूवुर्भ
क्तसत्तमाः ॥ तेषांनामानिचरितंवक्ष्यामीहयथाश्रुतम् ॥ १ ॥ अथात्रापिचयेभक्तानामतः कर्म्मतश्चये ॥ कथयिष्यामिसर्वा
न्वैयथामतियथाश्रुतम् ॥ २ ॥ परमानंदनामासीद्भक्तःसारंगरागवित् ॥ तेनैवतोषयामासराधाकृष्णौनिरंतरम् ॥ ३ ॥
तथाकाश्मीरदेशेतुकेशवःपंडितोऽभवत् ॥ भट्टोपनामाविदुषोजित्वातन्मार्गमागतान् ॥ ४ ॥ श्रीभट्टोऽपितथाजातोभक्तिमान्यदु
नंदने ॥ तथादिवाकरोजातोदिवाकरइवापरः ॥ ५ ॥ हरिव्यासोबभूवैकोब्राह्मणोभक्तसत्तमः ॥ सपर्यटन्धरातीर्थयात्रायामे
कदाद्विजः ॥ ६ ॥ चटयावलिनाम्नासीद्ग्रामस्तत्रबुभुक्षितः ॥ जगामशिष्यसहितआरामंसंददर्शतम् ॥ ७ ॥ वनच्छाया
द्रुमाकीर्णंविमलोदजलाशयम् ॥ नानाकुसुमगंधाढ्यंमुमुदेभक्तसत्तमः ॥ ८ ॥ शिष्यमाहात्रयक्ष्येऽहंदेवंत्वंपाकमाचर ॥ ए-
वंवामेददर्शाग्रेमठेदेवींशिलामयीम् ॥ ९ ॥ तत्रच्छागांश्चमेषांश्चबलिंवितरतोजनान् ॥ दृष्ट्वादयार्द्रचित्तःसतानुवाचविनीतवत् ॥
॥ १०॥ पायसादिबलिंत्यक्त्वाकिंजीवान्हथकामतः ॥ हतेजीवेऽपिजातोऽपियुष्मत्कामोऽतिनश्वरः ॥११॥ तस्माद्यतुदेव्यर्थंपायसा
दिप्रयच्छत ॥ इतिश्रुत्वातुतेसर्वेजहसुस्तंमदान्विताः ॥ १२ ॥ तदग्रेएवखड्गेनघातयामासुराजकम् ॥ दृष्ट्वाचुकोपचात्यर्थंहरि
व्यासोऽतिभक्तिमान् ॥ १३ ॥ शिष्यंनिवारयामासक्रुद्धःपाकादिकर्म्मतः ॥ अद्यदेवींतोषयित्वाजीवहिंसांनिवार्य्यच ॥ १४ ॥
स्वयंदेवींहिसंस्तुत्यहरिव्यासउदैरयत् ॥ जीवहिंसावताकिंतेदुःखितेनांतरात्मना ॥ १५ ॥ भद्रकालिमहामायेत्वमद्यारभ्यसर्वदा ॥

गृहाणपायसादीनिबलिंर्जीवबलिंत्यज ॥ १६ ॥ नोचेत्प्रातरहंतुभ्यंस्वकीयंमस्तकंशिवे ॥ छित्त्वाखड्गेनदास्यामिसत्यमेतन्न संशयः ॥ १७ ॥ इत्युक्त्वासभवान्यग्रेस्थितश्चित्तेहरिंभजन् ॥ शिष्योऽपितद्वचःश्रुत्वाहरिंसस्मारचिंतितः ॥१८॥ अथरात्रिः समायाताहरिव्यासोऽतिनिर्भयः ॥ सुष्वापमंदिरस्याग्रेशिष्यःसुप्तस्तदाज्ञया ॥ १९ ॥ अथरात्रेश्चतुर्थांशेतृतीयांशेगतेतदा ॥ मंदिरादेत्यजल्पंतींददर्शनिजमातरम् ॥ २० ॥ अरेमुंक्ष्वनचाद्यापिपशुघातोभविष्यति ॥ यास्यामिनगरेसर्वान्निवारयितुमप्यहम् ॥ २१ ॥ एवंरात्रौतदाग्रामेदृदृशुःस्वप्नमद्भुतम् ॥ गृहादागत्यवदतीकाचिद्दिव्यांबराबला ॥ २२ ॥ अद्यापिपायसान्नेनबलिदानंममाज्ञया ॥ देव्यैदेयंपरित्यज्यपशुघातंममांतिके ॥ २३ ॥ तेनैवसर्वकामानांसिद्धिर्वःसंभविष्यति ॥ येमोहात्तुकरिष्यन्तितान्नेवंघातयाम्यहम् ॥ २४ ॥ एषमेपरमोभक्तोहरिव्यासोऽतिवैष्णवः ॥ एतस्यैववरोदत्तोनहिंसात्रभविष्यति ॥ २५ ॥ एवंदृष्ट्वानिशिस्वप्नंतेसर्वेप्रातरुत्थिताः ॥ एकत्रीभूयतांवार्तामूचुःपरमविस्मिताः ॥ २६ ॥ ततःसर्वेसमाज्ञाप्यहरिव्याससमीपतः ॥ प्रार्थयित्वाहुरखिलंनहिंसात्रभविष्यति ॥ २७ ॥त्वत्कृतेयंव्यवस्थात्रचिरंस्थास्यतिवैष्णव ॥ हरिव्यासोऽपिश्रुत्वैवंसमुत्थायातिहर्षितः ॥२८॥ स्वकीयमपिसस्मारस्वप्नंदेवीप्रसादजम् ॥ स्नात्वासंपूज्यमुक्त्वाचययौस्वैरगतिर्द्विजः ॥ २९ ॥ तदारभ्यचतत्रापिसर्वेशाक्ताश्चवैष्णवाः ॥ शाक्ताचारविरोधेनभेजिरेजगदंबिकाम् ॥ ३० ॥ वस्तुतस्तुनभेदोऽस्तिगंतव्यस्यचवस्तुनः ॥गंतृभेदेनपंथावैदृश्यतेऽनेकधाबुधैः ॥ ३१ ॥ इति श्रीभगवद्भक्तिमाहात्म्येहरिव्यासचरितंनामषडधिकशततमःसर्गः ॥ १०६ ॥ ॥ यः पूर्ववल्लभाचार्यः

संप्रदायप्रवर्त्तकः ॥ प्रोक्तस्तस्यसुतोनाम्नाविठ्ठलेतिबभूवह ॥ १ ॥ महाभक्तोजितक्रोधोविजितेंद्रियसंचयः ॥ मथुरायांकलौयेनब्धापरः
प्रकटीकृतः ॥ २ ॥ सोऽपिकृष्णाज्ञयादारपरिग्रहमथाकरोत् ॥ तस्यपुत्राश्चसप्तासन्नामान्येषांब्रवीम्यहम् ॥ ३ ॥ रघुनाथोघनश्यामो
यदुनाथस्तथैवच ॥ श्रीमद्गोकुलनाथश्चबालकृष्णस्तथैवच ॥ ४ ॥ श्रीगोविंदोगिरिधरःसर्वेतेवैष्णवोत्तमाः ॥ पित्राज्ञयोषुःसर्वेते
स्थानंकृत्वानिजंनिजम् ॥ ५ ॥ वज्रनाभकृतामूर्तीःसप्तसप्ताप्यपूजयन् ॥ तासांनामानिवक्ष्यामिसर्वपापहराणिवै ॥ ६ ॥ गोविंददे
वःश्रीनाथस्तथागिरिधरःस्मृतः ॥ चतुर्भुजेतिविख्यातोहरिदेवस्तथवच ॥ ७ ॥ श्रीमत्केशवदेवश्चतथावंशीधरोऽपरः ॥ एतन्नाम्ना
पूजयंतोनिजाचारप्रवर्तकाः ॥ ८ ॥ सर्वेबभूवुर्विख्याताअद्यापिपृथिवीतले ॥ अथविठ्ठलशिष्यस्यकायस्थस्यकथांब्रुवे ॥ ९ ॥ नाथ
द्वारेऽतिविख्यातापश्चिमेवैष्णवीपुरी ॥ तत्रश्रीनाथदेवोऽस्तिभुक्तिमुक्तिप्रदायकः ॥ १० ॥ श्रीमत्त्रिपुरदासोऽभूत्तत्रैकोराजकार्य्य
कृत ॥ कायस्थःसमहाभक्तःपूजयामासवैष्णवान् ॥ ११ ॥ श्रीनाथस्वामिनेसोऽथप्रतिवर्षनवंनवम् ॥ तत्तत्कालोचितंवस्त्रंमहार्घंप्रददौ
सदा ॥ १२ ॥ अथकालेनकियतात्रिपुरोनिर्द्धनोऽभवत् ॥ शोचयित्वासदुःखेनव्रतसंरक्षणायच ॥ १३ ॥ यथाकथंचिदानीयंयेनके
नाप्युपायतः ॥ ददच्छ्रीनाथभक्तायवासःस्थूलतरंददौ ॥ १४ ॥ पूजकेनतदादृष्टंवस्त्रंतत्स्थापितंक्वचित् ॥ नयोग्यमितिमत्वान्यत्र
ददौवस्त्रमुत्तमम् ॥ १५ ॥ अथरात्रौमहाशीतेतुषारैराकुलेजने ॥ ददर्शपूजकःस्वप्नेश्रीनाथंतादृशंगृहे ॥ १६ ॥ अहोशीतातुरोऽस्म्य
द्यनैतैर्वस्त्रैः सुखंमम ॥ त्रिपुरेणतुयद्दत्तंतदर्पयममोपरि ॥ १७ ॥ तदासुखीस्यांनोचेद्वैशीतंमांबाधतेभृशम् ॥ दृष्ट्वापिस्वप्नंनोत्तस्थौ

महाशीतभयेनसः ॥ १८ ॥ पुनः सुप्तस्तथैवासीदपश्यत्पूजकोनिशि ॥ ततउत्थायसहसात्रिपुरार्पितमंशुकम् ॥ १९ ॥ ददौश्रीरंग
नाथस्यशरीरेसतुपूजकः ॥ मत्वाश्चर्य्यंसभक्तस्तुप्रातरुत्थायभक्तितः ॥ २० ॥ श्रीमत्त्रिपुरदासस्यसत्कारंकृतवान्स्वयम् ॥ एवंभ
क्तिवशोदेवोभक्तदत्तमभीप्सति ॥ २१ ॥ इति श्रीभगवद्भक्तिमाहात्म्येत्रिपुरदासचरितंनामसप्तोत्तरशततमःसर्गः ॥ १०७ ॥ छ ॥
अथैवंमथुरावासीकृष्णदासोऽतिभक्तिमान् ॥ कथामस्यप्रवक्ष्यामिमहाश्चर्य्यप्रदायिनीम् ॥ १ ॥ कृष्णदासोमहाप्रेम्णाश्रीकृष्ण
स्यससेवकः ॥ यद्यत्प्रियंभोज्यवस्तुतत्कृष्णायददौमुदा ॥ २ ॥ एकस्मिन्दिवसेदिल्ल्यांगच्छन्वृंदावनंपथि ॥ हट्टायांसंदद
र्शसौशुभ्रकुंडलिकाःशुभाः ॥ ३ ॥ तत्रक्रीत्वाततःप्रेम्णाताःकृष्णायददौपुनः ॥ तस्मैकुंडलिकामूल्यंददौयत्तेनभाषितम्
॥ ४ ॥ अथास्मिन्समयेकृष्णंमथुरायांतुपूजकः ॥ पूजयित्वार्पयामासनैवेद्यंबहुमोदकम् ॥ ५ ॥ निवद्धमन्दिरद्वाद्वासमागत्यास्थि
तोऽभवत् ॥ दत्त्वाकपाटंस्थित्वातुकंचित्कालंविचिंतयन् ॥ ६ ॥ निवेदितंमयायद्यत्तद्भुक्तेभगवानिति ॥ पुनःकपाटमुद्घाट्यमंदिरांत
र्गतोमुदा ॥ ७ ॥ ददर्शतत्रपात्रेषुशुभ्राःकुंडलिकाःसतु ॥ भुक्तावशिष्टाःकाश्चित्तुखंडिताःकतिचित्तथा ॥ ८ ॥ दृष्ट्वैतत्परमाश्च
र्यंभक्तश्चिंतापरोऽभवत् ॥ कस्मादिमाःकुंडलिकाआयातानार्पितामया ॥ ९ ॥ इतिसंचिंत्यनैवेद्यंनीत्वास्वभवनंययौ ॥ सर्वांस्तद्द
र्शयामासपरमाश्चर्य्यकारकम् ॥ १० ॥ अथसर्वेऽपिचिंतातार्तालेभिरेनैवतेसुखम् ॥ तदारात्रौहरिःस्वप्नेसर्वानाहसुचिंतितम् ॥ ११ ॥
यूयंचिंतांत्यजध्वंमोवक्ष्येकुण्डलिकागमम् ॥ कृष्णदासेनमेदिल्ल्यांदत्ताःकुंडलिकाःशुभाः ॥ १२ ॥ मुक्तामयातितोषेणाशिष्टाःपात्रे

स्थिताःक्वति ॥ संदेहोनात्रकर्तव्यःसचातीवममप्रियः ॥ १३ ॥ एवंदृष्ट्वातुतैःस्वप्नमुत्थायतुपरस्परम् ॥ ऊचुःस्वप्नकथांसर्वेसा
श्चर्य्योत्फुल्ललोचनाः ॥ १४ ॥ अथमध्याह्नसमयेकृष्णदासोऽपिचागतः ॥ पप्रच्छुस्तंमहाभक्त्यापूर्वेद्युःक्वस्थितंत्वया ॥ १५ ॥
किमर्पितंभगवतेसत्यंतद्ब्रूहिनःप्रभो ॥ इतिश्रुत्वासतूवाचदिल्ल्यांहट्टास्थितेनच ॥ १६ ॥ मयाकुंडलिकादृष्टासैवप्रेम्णासमर्पिता ॥
श्रुत्वैतद्वचनंतस्यसर्वेतंतुष्टुवुर्मुदा॥१७॥उक्त्वाकुंडलिकावार्तांनैवेद्येषुयदागताम् ॥ रात्रिस्वप्नंचसर्वेषां श्रुत्वासोऽपिजहर्षच ॥ १८ ॥
एवंप्रभावोभक्तस्तुकृष्णदासस्यविश्रुतः ॥ अपरंभक्तिमाहात्म्यंतस्यैवकथयाम्यहम् ॥ १९ ॥ एवमेकदिनेदिल्ल्यांसमागच्छत्क्व
तोऽपिसः ॥नृत्यंतींसुंदरीं वेश्यांददर्शातिमनोहराम् ॥ २० ॥ इयंचेन्ममतस्याग्रेश्रीमत्कुंजविहारिणः ॥ नृत्यंकुर्य्यात्ततिष्येऽहंकिंमेलो
कःकरिष्यति ॥ २१ ॥ इतिनिश्चित्यमनसातदग्रेसमुपागतः ॥ तामुवाचातिविनयान्मयासहगमिष्यसि ॥ २२ ॥ यत्रगच्छाम्य
हंतत्रप्रभुर्मेरसिकोमहान् ॥ प्रार्थयिष्यसियच्चत्वंतत्तत्प्राप्स्यस्यसंशयम् ॥२३॥ इति श्रुत्वातुसावेश्यास्वीकृत्यचलिताततः ॥ कृष्ण
दासस्तयासार्द्धंनृत्यगीतपरायणः ॥ २४ ॥ शृण्वन्नपिपरीवादंमथुरामाजगामह ॥ तत्रसाकृष्णमूर्तिंतुपूजयित्वाप्रयत्नतः ॥ २५ ॥
गायन्तीमूर्तिमालीनागोपीवतत्रतत्क्षणात् ॥ इत्याश्चर्यपरंदृष्ट्वातुष्टुवुस्तांतुमाथुराः ॥ २६ ॥ कृष्णदासस्तुमुदितस्तस्थौतत्रहरिंभज
न् ॥ २७ ॥ इति श्रीभगवद्भक्तिमाहात्म्येकृष्णदासचरितंनामाष्टोत्तरशततमःसर्गः ॥ १०८ ॥ एवमन्यौमहाभक्तौवल्लभाचार्य्य
शिक्षितौ ॥ गंगलोवर्द्धमानश्चेत्युभौवैष्णवसत्तमौ ॥ १ ॥ नित्यंभागवताभ्यासनिर्मलीकृतमानसौ ॥ दीनानाथदरिद्रेषुदयावंतौ

बभूवतुः ॥ २ ॥ दृष्ट्वादुष्टजनानांचनिर्म्मलंचक्रतुर्मनः ॥ तौगायमानौभक्तंस्तुश्रेष्ठ्यमित्थमुदीरितम् ॥ ३ ॥ एवंरवेमेतिविख्यातोरा
मभक्तोऽतिवैष्णवः॥रामनामजपासक्तोहनुमत्कृपयायुतः ॥४॥ अथापरोबभूवैकोमाथुरोविठ्ठलोद्विजः ॥ कथामस्यप्रवक्ष्यामिशृण्वतां
प्रीतिवर्द्धिनीम् ॥५॥ तत्पितातत्पितृव्यश्चेत्युभौराजपुरोहितौ ॥ परस्परंयुध्यमानौमृतौकालवशंगतौ ॥ ६॥ आसीदेकस्यपुत्रस्तुनाम्ना
विठ्ठलमाथुरः॥सोऽतिभक्तोहरेरग्रेननर्तातिमनोहरम् ॥७॥ जगौगीतानिरम्याणिवाद्यवादनतत्परः ॥ नृत्यतस्तस्यविप्रस्यनात्मान्यवि
षयोऽभवत् ॥ ८ ॥ अथैकदानृपोराजातंसस्मारपुरोहितम् ॥ तदाविठ्ठलमाहूयपूजयामासभक्तितः ॥ ९ ॥ एवंकतिपयेजातेदिनेचै
कादशीव्रतम् ॥ कुर्वन्नेवहरेरग्रेनृत्यगानपरायणः ॥ १० ॥ ततोविद्वेषिणःप्राहूराजानंविठ्ठलस्यतु ॥ नृत्यगानादिसौंदर्यंराजा
श्रुत्वातमब्रवीत् ॥ ११ ॥ अद्यजागरणंरात्रौकुरुनृत्यंहरेःपुरः ॥ सोऽपिस्वीकृतवानाज्ञावचनंविठ्ठलोद्विजः ॥ १२ ॥ अथदुष्टैस्तु
प्रासादस्योपरिष्टात्स्थलंकृतम् ॥ नृत्यस्यतत्रश्रीकृष्णमूर्तिंसम्यक्प्रतिष्ठितम् ॥ १३ ॥ तत्ररात्रौसमायातएनंभूयोऽब्रवीन्मुदा ॥
विठ्ठलोऽपिसमायातःसाधुभिःपरिवारितः ॥ १४ ॥ तमाहराजाश्रीकृष्णप्रतिमाग्रेतुनर्तने ॥ नदोषंपश्यन्नृत्यामीत्युक्तःसोऽप्युत्थितो
द्रुतम् ॥ १५ ॥ गायन्ननर्तदेवाग्रेदृष्ट्वाराजाविमोहितः ॥ अथायंविठ्ठलोनृत्यन्विसस्मारात्मनोगतिम् ॥ १६ ॥ पपातोर्व्यांततोरा
जाहाहाकृत्वासमुत्थितः ॥ तत्राजगामतंदृष्ट्वागतप्राणमिवद्विजम् ॥ १७ ॥ गालीर्ददौनृपस्तेभ्यःखलेभ्यश्चातिकोपतः ॥ अथतं
साधवःसर्वेनीत्वातद्गृहमागताः ॥ १८ ॥ राजापिभृत्यान्संप्रेष्यदत्त्वाबहुधनंतथा ॥ सेवयामासतंविप्रंतृतीयेदिवसेतथा ॥ १९ ॥

संज्ञामवापतंमातापतनादीन्यथाब्रवीत् ॥ श्रुत्वातूष्णींस्थितस्तस्यांमथुरायांनिजाश्रमे ॥ २० ॥ एकस्मिन्दिवसेरात्रौसमुत्थायाश्रमाद्बहिः ॥ स्थित्वासर्वंमुदेत्येवंविचार्य्यचलितोगृहात् ॥ २१ ॥ छटीकरइतिख्यातोग्रामोवैष्णवसंकुलः ॥ आसीद्गरुडगोविंदनाम्नामूर्तिर्हरेःशुभा ॥ २२ ॥ तत्रागत्यस्थितोराधाकृष्णौहृदिविचिंतयन् ॥ मातरंवनितांत्यक्त्वाएकाकीसुखमावसत् ॥ २३ ॥ अथमाताचपत्नीचविठ्ठलस्यातिदुःखिते॥अन्वेषयंत्यौशोकेनभृशंरुरुदतुस्तथा ॥ २४ ॥ एवंनृपोऽन्वेषयितुंबहून्भृत्यान्नियुक्तवान् ॥ तेषांनमिलितःक्वापिततस्तज्जननीस्वयम् ॥ २५ ॥ स्नुषयासहतत्रागाच्छ्रुत्वावार्तांसुतस्यसा ॥ समागत्याब्रवीत्पुत्रंचलवेश्मेतिपापकृत् ॥ २६ ॥ नामन्यतततःसापिमातास्वस्नुषयासह ॥ तत्रैवोवासमोहेनत्यक्त्वासर्वंगृहादिकम् ॥ २७ ॥ विठ्ठलोभक्तिसंपन्नःसुखदुःखसमःस्वयम् ॥ मातुःपत्न्यामहादुःखमन्नादीनामभावतः ॥ २८ ॥ ततःस्वप्नेतुगोविंदोविठ्ठलायेदमब्रवीत् ॥ गच्छस्वगृहमेताभ्यांगृहिधर्मेणमांयज ॥ २९ ॥ एवंवारत्रयंदृष्ट्वाविठ्ठलोऽतिमुदान्वितः ॥ आजगामनिजंगेहंजगृहेऽन्योगृहीगृहम् ॥३०॥ जातिभिश्चपरित्यक्तस्ततःस्वग्रामसन्निधौ ॥ तत्रैकोभक्तिमानासीत्पूर्वमित्रमितिस्मरन् ॥ ३१ ॥ जगामतद्गृहंमात्रापत्न्यासहसविठ्ठलः ॥ सोऽतिसत्कारपूर्वंतंस्थापयामाससंमंदिरे ॥ ३२ ॥ अथैकदाविठ्ठलस्यपत्नीगर्भवतीसती ॥ अधोमुखीनखाग्रेणखनतीभूमिमादरात् ॥ ३३ ॥ निधानकलशस्याग्रंदृष्ट्वात्यर्थंचखानसा ॥ उत्पाटयकलशंकृष्णमूर्तिमप्यतिशोभनाम् ॥ ३४ ॥ अथस्वामिनमाहूयश्वश्रूंचवरवर्णिनी ॥ दर्शयामासदृष्ट्वासातत्क्षणंविठ्ठलोद्रुतम् ॥ ३५ ॥ आहूयदर्शयामासगृहाणेदंधनंनिजम् ॥ ततस्त

साब्रवीत्सर्वंतवैवेदंनसंशयः ॥ ३६ ॥ अहंमदीयायेसंतिसर्वेदासानसंशयः ॥ इतिश्रुत्वावचस्तस्याविठ्ठलोऽतीवहर्षितः ॥ ३७ ॥
कृष्णमूर्तिंप्रतिष्ठाप्यतदाराधनतत्परः ॥ अक्षय्यभांडाद्वसुभिःदानभोगंसमाचरन् ॥ ३८ ॥ महादाताप्रसिद्धोऽभूज्ज्ञातिभिश्चापिस
त्कृतः ॥ लेभेपुत्रंमहाभक्तंरंगिलालेतिनामकम् ॥ ३९ ॥ सोऽपिनृत्यादिकुशलोभक्तिमानतिवैष्णवः ॥ एवंतत्रवसंतस्तेबभूवुर्भक्तस
त्तमाः ॥ ४० ॥ गतेषुबहुकालेषुनटीचैकासमागता ॥ कृष्णमूर्तिपुरस्तात्तुनर्तयामासविठ्ठलः ॥ ४१ ॥ नृत्यंदृष्ट्वातिसंतुष्टोददौरत्ना
न्यनेकशः ॥ तथापिनैवदित्सातंमुमोचविठ्ठलंद्विजम् ॥ ४२ ॥ ततोविचार्यसर्वेभ्योयत्प्रियंतद्ददाम्यहम् ॥ इत्युक्त्वारंगिलालंतंवे
श्यायैप्रददौमुदा ॥ ४३ ॥ सागृहीत्वातुतद्दत्तंदृष्ट्वाप्रोच्चलितागृहम् ॥ अथराज्ञीरंगिलालमितिश्रुत्वाब्रवीच्चसा ॥ ४४ ॥ राज्ञितुष्टेनके
नापिदत्तोऽयंमेप्रियंधनम् ॥ तथाहमपिदृष्ट्वैवदास्याम्येतन्नसंशयः ॥ ४५ ॥ अन्यथाबहुभिश्चापिधनैरपिददाम्यहम् ॥ तस्मादेकदिने
राज्ञीश्रीकृष्णप्रतिमाग्रतः ॥ ४६ ॥ नर्तयित्वातितुष्टाहदास्याम्येनंनसंशयः ॥ इति श्रुत्वातुसाराज्ञीनर्तयामासतांनटीम् ॥ ४७ ॥
आनीयदोलिकायांवैस्त्रीवेषमतिसुन्दरम् ॥ नर्तयामाससावेश्यापश्यंतीचातिहृष्टवत् ॥४८॥ ततःसानर्तकीतुष्टागृहीत्वांकेऽतिभक्तितः ॥
अर्पयामासकृष्णायराज्ञींप्राहार्पितोमया ॥ ४९ ॥ श्रीकृष्णायातिसन्तुष्टायुक्ताराज्ञीतयापुनः ॥ समुत्तस्थौगुरुंतत्रतंग्रहीतुंमुदान्विता॥
॥ ५० ॥ रंगिलालस्ततोराज्ञीमाहमांनस्पृशाधुना ॥ जातोऽहमद्यकृष्णस्यपश्ययामितदंतिकम् ॥ ५१ ॥ इत्युक्त्वारंगिलालस्तुनृ
त्यञ्छ्रीकृष्णसन्निधौ ॥ प्राप्यतन्मयतांकायंतत्याजपश्यतांनृणाम् ॥ ५२ ॥ एवंविठ्ठलनाम्नाभून्माथुरोभक्तसत्तमः ॥ तत्संसर्गात्तु

सावश्यासातुराज्ञीपतिव्रता ॥ ९३ ॥ निर्वेदंपरमंप्राप्यजग्मतुःकृष्णसन्निधौ ॥ एवमन्येऽपितद्दंशेबभूवुर्बहवोजनाः ॥ ९४ ॥ इति
श्रीभगवद्भक्तिमाहात्म्येमाथुरविठ्ठलचरितंनामनवोत्तरशततमःसर्गः ॥ १०९॥ छ ॥एवमेकोहरीरामोहठीलेत्युपनामकः ॥महाभक्तोव
भूवाथसख्यमेतन्नृपेणच ॥ १॥एकस्मिन्दिवसेसाधोर्भूमिर्वृत्तिकरीस्थिता ॥ साकेनापिचदुष्टेनमिथ्यासंन्यासिनानृपम् ॥२ ॥नास्यभू
मिरितिप्रोच्यरोधिताचापिवैष्णवः ॥ आगत्योवाचराजानंसतंदूरीचकारह॥ ३ ॥ दुष्टसंन्यासिवाक्येनततोऽसौवैष्णवोरुदन्॥आजगा
महरीरामंवृत्तंसर्वमुवाचह ॥४॥ श्रुत्वासआहतंभक्तंयाम्यहंराजसन्निधिम् ॥ त्वमप्यागच्छपश्चाद्धोयथायोग्यंभविष्यति ॥५॥ ततस्त
स्मिन्गतेभक्तेजगामराजसन्निधिम् ॥ विनयात्प्राहराजानंराजाश्रुत्वाचुकोपह ॥ ६ ॥ हरिरामस्ततोभूपंप्राहसाधोर्जिघृक्षसि ॥ श्रुत्वा
राजा ततोवाचंनास्यभूमिर्हिवर्तते ॥ ७ ॥ इतिमांप्राहसंन्यासीततोनीतामयाधरा॥ श्रुत्वेदंराजवचनंततोरामोऽब्रवीद्वचः ॥ ८ ॥ राज
न्सत्यमिदंब्रूषेपरंतुशृणुमेवचः ॥ अत्रागत्यससंन्यासीब्रूयादेतन्ममाग्रतः ॥ ९ ॥ यदिसत्यंतदातस्यमुखाद्वाणीभविष्यति ॥ अस
त्यंचेत्ततोमूको भविष्यतिनसंशयः ॥ १० ॥ पश्यदमद्भुतंराजन्राधाकृष्णविचेष्टितम् ॥ शीघ्रमानयतंदुष्टंयःसाधोर्वृत्तिमाहरत् ॥११॥
प्रह्लादरक्षणार्थाययःस्तंभात्समवातरत् ॥ सकिंदयालुर्भगवानेतावन्नकरिष्यति ॥१२॥ हरिरामस्तुसस्मारश्रीकृष्णंकरुणामयम् ॥ प्रा
र्थयामासमनसासाधुकार्यंकुरुप्रभो ॥ १३ ॥ ससंन्यासीतदातूष्णींतस्थौराजसमीपगः ॥ मुहुःप्रोवाचतंराजासंन्यासिनमतिक्रुधा ॥
॥ १४ ॥ वचनाभिनयेनासौबोधयामासभूपतिम् ॥ शक्नोमिनाहंकथितुंवाग्भिःशक्तिर्नचास्तिमे ॥ १५ ॥ ज्ञात्वैतद्वचनंराजा

परमाश्चर्यमागतः ॥ हरिरामंनमस्कृत्यददौभूमिंससाधवे ॥ १६ ॥ गृहीत्वानिजभूमिंसभक्तोऽगान्निजमन्दिरम् ॥ हरिरामःस्ववे
श्माथसंन्यासीचाप्यभाषत ॥ १७ ॥ राजातमाहसत्यंमेयदभूद्दस्तिवानवा ॥ तदोवाचससंन्यासीद्वेषादेवंकृतंमया ॥ १८ ॥ इति
श्रुत्वासराजानंजगर्हाथातिभक्तिमान् ॥ हरिपूजापरोभूत्वाजीवन्मुक्तोबभूवह ॥ १९ ॥ कमलाकरभट्टोऽपिएवमासीन्महायशाः ॥
मध्वसिद्धांतसंचारीतत्त्वज्ञानपरायणः ॥ २० ॥ शास्त्रज्ञानेनसंपन्नोज्ञानविज्ञानपारगः ॥ श्रीमद्भागवताभ्यासान्मुक्तिमायाति
दुर्लभाम् ॥ २१ ॥ नारायणेतिनाम्नाभूदेकोभट्टोपनामकः ॥ मथुरायांवसंस्तत्रस्थानानिकथितानिसः ॥ २२ ॥ प्रकाशयामाससुदा
पुराणोक्तानिसर्वशः ॥ संदेहस्तेनयत्रासीत्तत्स्वप्नेहरिमब्रवीत् ॥ २३ ॥ एकस्मिन्दिवसेमाघेप्रयागंगंतुमुत्सुकाः ॥ जनास्तमाहु
र्यास्यामस्त्वंगमिष्यसिवानवा ॥ २४ ॥ श्रुत्वासआहतान्सर्वान्प्रयागोऽप्यत्रवर्तते ॥ आगच्छतमयासार्द्धंत्रिवेणींदर्शयामिवः ॥२५॥
इत्युक्त्वाससमुत्थायकियद्दूरंगतस्ततः ॥ उच्चग्रामंसमागत्यतत्रोच्चस्थानमारुहत् ॥२६॥ तत्रस्थोदर्शयामासत्रिवेणींपरमोज्ज्वलाम् ॥
दृष्ट्वासर्वेऽतिमुदिताःसाधुसाध्वितितुष्टुवुः ॥२७॥ व्रजवल्लभनामाभूद्भक्तोऽस्यैवकुलेमहान् ॥ योरासलीलांसततंकुर्वन्मुक्तोबभूवह॥२८॥
इतिश्रीभगवद्भक्तिमा०हरिरामकमलाकरभट्टचरितंनामदशोत्तरशततमःसर्गः ॥ ११० ॥ छ ॥ रूपःसनातनश्चोभौभ्रातरौगौडसंभ
वौ ॥ तयोःकथांप्रवक्ष्यामिपरमाश्चर्यदायिनीम् ॥ १ ॥ उभौस्वदेशादागत्यवृंदावनमुपागतौ ॥ गोपेश्वरस्यनिकटेह्यूषतुःपरमादरात्
॥ २ ॥अयाचितव्रतंनीत्वायथालाभेनजीविकाम् ॥ कुर्वंतौनिर्ममेरूपःकृष्णलीलामृतंशुभम् ॥ ३ ॥ नंदग्रामेसमागत्यतत्स्थौगायन्हरे

र्यशः ॥ महाप्रसिद्धस्तत्रासौबभूवायाचितव्रती ॥ ४ ॥ एकदातंसमायातोद्रष्टुंभ्रातासनातनः ॥ दृष्ट्वातंभ्रातरंरूपोमनसाचिंतयत्त
दा ॥ ५ ॥ अथदुग्धंयदिभवेत्तदाहंपायसंशुभम् ॥ समर्प्यहरयेभ्रात्रेदत्तंस्याद्भोजनंमया ॥ ६ ॥ एवंचिंतयतस्तस्यगोपीकाचित्स
मागता ॥ साक्षाल्लक्ष्मीवरूपेणनीत्वादुग्धंकरेणसा ॥ ७ ॥ सुगंधितण्डुलान्सम्यग्धृत्वाचशर्करामपि ॥ आहरूपमहाभक्तगृहाणेदं
मयार्पितम् ॥ ८ ॥ मयाप्रतिश्रुतंपूर्वंयदागौः सोष्यतेसुखम् ॥ तदाऽस्यास्तुपयःपूर्वंदास्यामिभवतेइति ॥ ९ ॥ तेनपायससिद्ध्य
र्थंतंडुलादिकमर्पये ॥ श्रुत्वेदंसोऽतिहर्षेणसर्वंजग्राहतत्करात् ॥ १० ॥ परंतुदृष्ट्वातद्रूपमलौकिकमुवाचताम् ॥ सनातनोऽतिभक्त्या
वैमाताकातेपिताक्वसः ॥ ११ ॥ इतिश्रुत्वातदोवाचवृषभानुसुतास्म्यहम् ॥ भुंजानंपायसंरूपःसनातनमथाब्रवीत् ॥ १२ ॥ त्व
य्यागतेमनोमेऽभूद्भवेत्पायसमद्यचेत् ॥ तदाकस्मात्समागत्यगोपीसर्वंददाविदम् ॥ १३ ॥ श्रुत्वेदंवचनंभ्रातुःसनातनउवाचतम् ॥
अहोलोभोनकर्तव्यःसर्वथातीर्थवासिभिः ॥ १४ ॥ लोभात्तपश्च्युतिस्तस्मादभक्तिस्तेनतंत्यजेत् ॥ किंचेयंनैवगोप्यासीद्वयादत्त
मिदंतव ॥ १५ ॥ साक्षाद्राधामहाराज्ञीमातास्नेहाद्ददाविदम् ॥ एवंवदंतौतौभुक्त्वासमुत्थायातिभक्तितः ॥ १६ ॥ नंदग्रामेगतौ
तौतुदिदृक्षूतांतुगोपिकाम् ॥ वृषभानुगृहंतौतुपप्रच्छतुरितस्ततः ॥ १७ ॥ सर्वैरुक्तंनचात्रास्तितन्नाम्नाकापिनिश्चितम् ॥ ततआ
गत्यतौगेहेरूपमाहसनातनः ॥ १८ ॥ तवलोभेनजननीराधाप्राप्नोतिवैश्रमम् ॥ तस्मादेवंकदाप्यंगनकर्तव्योमनोरथः ॥ १९ ॥
इत्युक्त्वातुगतःस्थानंस्वकीयंससनातनः ॥ अथैकस्मिन्दिनेरूपोरासनृत्यंविलोकयन् ॥ २० ॥ मठभित्तिंसमालंब्यलीनोमृतइव

भवत् ॥ तत्रासौकर्णपूराख्यः श्रीकृष्णस्यसपूजकः ॥ २१ ॥ आगत्यतमचेष्टंतुज्ञात्वातत्सन्निधिंगतः ॥ मृतोवाजीवतीत्येतज्ज्ञातुंह
स्तंददौनासि ॥ २२ ॥ अग्निज्वालेवसंलग्नः श्यामस्तस्यकरस्तदा ॥ क्षिप्वाकरंविवेदासौजीवतीत्यद्भुतंमहत् ॥ २३ ॥ एकदातस्य
सुप्तस्यस्वप्नेऽभूत्परमाद्भुतम् ॥ गोविंददेवआगत्यचास्माद्ग्रामाद्बहिस्त्विह ॥ २४ ॥ तिष्ठंतियत्रवैगावस्तत्रभूमिगतोऽस्म्यहम् ॥ गौ
रेकातत्रचागत्यदुग्धंत्यजतिनित्यशः ॥ २५ ॥ ज्ञात्वातत्रखनित्वामां बहिःकृत्वाप्रपूजय ॥ तदाप्रातःसमुत्थायरूपोगत्वाथसज्ज
नान् ॥ २६ ॥ उक्त्वास्वप्नंददर्शाथगांक्षरंतींपयःस्वयम् ॥ खानयामासतत्स्थानंकियद्दूरेधरातले ॥ २७ ॥ गोविंददेवोमिलितः
सर्वेमुमुदिरेजनाः ॥ रूपस्तंसंप्रतिष्ठाप्यपूजयामासभक्तितः ॥ २८ ॥ अद्यापिपूज्यतेसावैमूर्तिर्जयपुरांतगा ॥ राज्ञानीतातिभ
क्त्यावैम्लेच्छोपद्रवभीतितः ॥ २९ ॥ जयसिंहेनतत्कालमारभ्यपूज्यतेचसा ॥ एवमेकदिनेनंदग्रामंगच्छन्सनातनः ॥ ३० ॥
जटायुग्यष्टिमान्कृष्णंचिंतयानोवनंगतः ॥ तत्रकंटकिवृक्षाणांगृहीतःकंटकैर्जटाः ॥ ३१ ॥ तस्थौतत्रैवतूष्णींसप्रभोराज्ञैवमेवमे ॥
इतिसंचिंतितस्यासीद्दिनद्वयमथस्वयम् ॥ ३२ ॥ तृतीयेदिवसेदुग्धंनीत्वागोपालबालकः ॥ मनोहरशरीरःसन्पाययामासतंपयः
॥ ३३ ॥ कंटकेभ्योजटास्तस्यपृथक्चक्रेस्वपाणिना ॥ दृष्ट्वातद्रूपममलंतंपप्रच्छसनातनः ॥ ३४ ॥ कोऽसित्वंकुत्रतेसंतिभ्रात
रःकतितद्वद ॥ इतितस्यवचःश्रुत्वागोपवेषउवाचतम् ॥ ३५ ॥ गोपोऽहंभ्रातरः संतिचत्वारोऽत्रवसाम्यहम् ॥ नंदग्रामेऽतिवि
ख्यातेइत्युक्त्वासययौक्वचित् ॥ ३६ ॥ सनातनोऽपितत्रेत्यनंदग्रामेऽतिविस्मितः ॥ अन्वेषयामाससमुहुर्नलब्धःसतुकुत्रचि

२१

त् ॥ ३७ ॥ तदाज्ञातस्तुतेनापिभगवानेवसंस्थितः ॥ पश्चात्तापंचकारोच्चैरुरोदससनातनः ॥ ३८ ॥ अथागत्यचरूपस्यवंधोगृहमु
वासस्ः ॥ एकदाराधिकावर्णीमनसासार्प्पणीमिव ॥ ३९ ॥ मत्वावर्णयितुंचक्रेमनोरूपश्चतत्क्षणात् ॥ सनातनस्तुतज्ज्ञात्वाकुरुका
व्यंमनोहरम् ॥ ४० ॥ ततोरूपश्चिकीपुस्तत्सरस्तीरमुपागमत् ॥ कदंबवृक्षशाखायांदृष्ट्वातच्चरणद्वयम् ॥ ४१ ॥ किमिदंत्विवतिविभ्रां
तचित्तोऽभ्येत्यास्थितोगृहे ॥ सनातनस्तुतंज्ञात्वातादृशंभ्रांतमानसम् ॥ ४२ ॥ किंभ्रांतोऽसिवृथातस्याश्चरणावेवचिंतय ॥इतिश्रुत्वात
द्रूपःपरमाश्चर्यमाप्तवान् ॥४३ ॥ तदादिचरणध्यानंचक्रेहृदिनिरंतरम् ॥ एवंतौगौडदेशीयौविप्रौरूपसनातनौ ॥ ४४ ॥ बभूवतु
र्महाभक्तावलौकिककथास्पदौ ॥ ४५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येरूपसनातनचरितंनामैकादशाधिकशततमःसर्गः ॥ १११॥ ॥छ॥
हरिवंशेतिनाम्नैवंगोस्वामीभक्तिमानभूत् ॥ राधाकृष्णजपासक्तोमनसातत्प्रपूजकः ॥ १ ॥ चेतसातुतयोर्नित्यंसर्वदासन्निधौस्थितः ॥
भोजितोवुभुजेऽन्नंसपायितश्चैतपपौजलम् ॥ २ ॥ बहिःशरीरबुद्धिस्तुनासीत्तस्यातियोगिनः ॥ च्युतोविधिनिषेधाभ्यांराधाकृष्णौस्म
न्मुदा ॥३॥ एकदातत्रनगरेकंचिद्विप्रंनिशात्यये॥कृष्णःस्वप्नेऽब्रवीद्वाक्यंवारंवारंतथैवच ॥ ४ ॥हरिवंशायभक्तायसुतांदेहिममाज्ञया ॥
श्रुत्वाविप्रोऽतिसंदिग्धःपत्नींप्राहातिविस्मितः ॥५॥ तयोक्तंदेहितस्मैतांहरेराज्ञागरीयसी ॥ तद्वंशेतुमहाभक्ताः सिद्धाएवाभवञ्जनाः
॥ ६ ॥ आसाधीरेतिनाम्नासीद्विप्रोगुर्जरसंभवः ॥ तस्यपुत्रोऽतिविख्यातोहरिदासइतिश्रुतः ॥ ७ ॥ महाभक्तोऽतिरसिकोराजभिः
परिसेवितः ॥ यद्यदाप्नोतिभोज्यंसमर्कटेभ्योददौस्वयम् ॥ ८ ॥ सर्वंकृष्णमयंज्ञात्वापशुपक्षिमृगादिकम् ॥ समर्प्यविष्णवेपूर्वंततः ॥

सर्वानभोजयत् ॥ ९ ॥ एकस्मिन्दिवसेभक्तोयमुनातीरमास्थितः ॥ तत्रैकोनृपसंबंधीतंद्रष्टुंसमुपागतः ॥ १० ॥ आदायाथसुगंधं
चतैलंचातिमनोहरम् ॥ प्रददौहरिदासायनत्वातस्थौतदग्रतः ॥ ११ ॥ हरिदासस्तुतन्नीत्वातैलंगंधवदुत्तमम् ॥ राधाकृष्णौस्म
रंश्चित्तेचिक्षेपतीरसन्निधिम् ॥ १२ ॥ दृष्ट्वातद्राजसंबंधीउद्विग्नोमनसाभवत् ॥ बहुमूल्यमिदंतैलंवृथाभूमौसमर्पितम् ॥ १३ ॥
इतितस्याभवच्चित्तेहरिदासोऽपिवेदतत् ॥ शिष्यमाज्ञापयामासनयेमंदेवसन्निधौ ॥ १४ ॥ इत्युक्तस्तंनृपजनंनीत्वाशिष्योजगामह ॥
आगत्यचप्रणम्यासीज्जिघ्रेतत्रमनोहरम् ॥ १५ ॥ तमेवगंधंकृष्णांगेलग्नंचापिददर्शह॥मत्वाश्चर्य्यंततोहृष्टोहरिदासांतिकंगतः ॥१६ ॥
तंप्रणम्यातिभक्त्यासगृहीत्वाज्ञांगृहंययौ ॥ उवाचसर्ववृत्तांतंयद्दृष्टंपरमाद्भुतम् ॥ १७ ॥ एवमेकदिनेतत्रकालिंद्याःपुलिनेस्थि
तः ॥ एकःसमागतःकोऽपिकृत्वातीर्थान्यनेकशः ॥ १८ ॥ नीत्वास्पर्शमणिंतस्मैहरिदासायदत्तवान् ॥ हरिदासोगृहीत्वातं
चिक्षेपयमुनांभसि ॥ १९ ॥ ततःसोऽतीवचिंतार्तस्तूष्णींतस्थौतदंतिके ॥ ततःसहरिदासोऽपिज्ञात्वातन्मनसोव्यथाम् ॥ २० ॥
उत्थाययमुनायांसगत्वातत्रत्यशर्कराः ॥ हस्ताभ्यांबहुशोनीत्वादर्शयित्वाब्रवीद्वचः ॥ २१ ॥ मणिःसएषहस्तेनगृह्यता
मविशंकितम् ॥ दृष्ट्वातत्परमाश्चर्य्यंसभक्तोऽतीवविस्मितः ॥ २२ ॥ प्रणम्यहरिदासस्यशिष्योऽभूदतिभक्तितः ॥ सेवमानस्तम
त्यर्थंकृष्णतुल्यममन्यत ॥ २३ ॥ एवमुच्छाग्रामवासीनाम्नाव्यासोद्विजःस्थितः ॥ गृहीविरक्तःसस्त्रीकोवृंदावनमुपागतः ॥ २४ ॥
अथतत्रत्यराज्ञापिप्रार्थितोभजनायसः ॥ नजगाममहाभक्तोराधाकृष्णैकचिंतनः ॥ २५ ॥ एकदाराससमयेराधायाःपादकिंकि

णी ॥ भग्नैकातत्क्षणेव्यासोजग्रन्थयज्ञसूत्रतः ॥ २६ ॥ उवाचैतद्यज्ञसूत्रंधृतंबहुदिनान्मया ॥ अद्यकार्यायसंजातमित्युवा
चातिहृष्टवत् ॥ २७ ॥ ततस्तत्रनवंयज्ञसूत्रंतत्क्षणमेवहि ॥ व्यासस्कंधेसमायातंसर्वेषांपश्यतांनृणाम् ॥ २८ ॥ एवमेकदिनेकृष्णमू
र्तिंपरिचरन्स्थितः ॥ शिरसोवेष्टनंस्वर्णसूत्रंपीतमनुत्तमम् ॥ २९ ॥ श्रीकृष्णमूर्तेःशिरसिबद्धुंतदुपचक्रमे ॥ शिरोऽतिचिक्कणंवस्त्रंतस्थौ
नैवकथंचन ॥ ३० ॥ मुहुर्मुहुःसमुत्तिष्ठन्नबबंधस्थिरंह्यभूत् ॥ ततोऽतिदुःखितःकिंचित्प्रेमकोपसमन्वितः ॥ ३१ ॥ अग्रेसंस्थाप्यचो
वाचबध्नीहिस्वयमेवहि॥याम्यहंबहिरित्युक्त्वाबहिरागत्यतस्थिवान् ॥ ३२ ॥ तावत्स्वयंहरिर्वस्त्रंबबंधातिमनोहरम् ॥ सतूष्णींघटि
कामात्रंस्वकोपंपरिगर्हयन् ॥ ३३ ॥ केनाप्यन्यंनभक्तंनसाकंतद्भवनंगतः॥ददर्शमूर्तिमूर्द्धस्थंशिरोवेष्टनमद्भुतम् ॥ ३४ ॥ हर्षा
श्रुगद्गदःप्राहकथंमत्कृतमीदृशम् ॥ भवेदित्येवविज्ञायमद्धस्तान्नस्थिरीकृतम् ॥३५॥ इत्येवंपरमाश्चर्यंदृष्ट्वासोऽतीवविस्मितः॥भक्तो
ननामतंभक्त्यासाधुसाध्वितितुष्टुवे ॥ ३६ ॥ एवमेकदिनेभुंजन्स्थितःसाधुजनैःसह॥ददतीतस्यपत्न्येवसर्वेभ्योऽन्नादिकंमुदा॥३७॥स
र्वेभ्यःप्रददौदुग्धंतत्सारंव्यासभोजने॥अनिच्छयागतंदृष्ट्वाव्यासःपत्न्यैचुकोपह ॥३८ ॥किमिदंचार्पितंमूढदुग्धंसारतरंमम ॥ विहाय
सकलान्साधून्पतिस्नेहांधयात्वया ॥ ३९ ॥ अनेनाहंयुवांकिंस्यांशृण्वेतस्यतुयत्फलम्॥महानर्थकृतंपापंऋषिभिःपरिकीर्तितम् ॥४०॥
एकपंक्त्यांयएकस्मैमिष्टमन्नंप्रयच्छति॥भुंक्तेवाताबुभौघोरेपच्यतेनरकेचिरम् ॥ ४१ ॥ तस्मात्त्वंनासिसाधूनांसेवायोग्यातिपापिनी॥
बहिर्गच्छेत्युवाचाथसाश्रुत्वान्यगृहेगता ॥४२॥निराकृतांनिजांज्ञात्वानागृह्णात्सलिलंसती॥एवंदिनद्वयेजातेतृतीयेदिवसेनिशि ॥४३॥

व्यासःस्वप्नेददर्शैकंसाधुंकमललोचनम् ॥ अहोत्वयाऽपराधेनविनापत्नीतिरस्कृता ॥ ४४ ॥ अकस्मात्तवपात्रेतुसारभूतमुपाग
तम् ॥ तांत्वंसत्कुरुनोचेत्त्वगृहेभोक्ष्याम्यहंनहि ॥ ४५ ॥ परंदृष्ट्वातुसस्वप्नंपत्न्याःसन्निधिमागतः ॥ प्रेम्णोवाचनतेदोषःसत्यंज्ञातंमया
पिभोः ॥ ४६ ॥ अकस्मादपियज्जातंतेनशंकाममाभवत् ॥ अतःपरमलंकारंसर्वंदत्त्वातिहार्षिता ॥ ४७ ॥ साधुभ्यःपाकशालायां
समेत्यकुरुपूर्ववत् ॥ अनिच्छतोऽपिचेत्पापंजातंविधिवशाद्यदि ॥ ४८॥ प्रायश्चित्तंतुतत्रापिकर्तव्यमितिवैस्मृतिः ॥ सापिश्रुत्वामुदा
युक्ताचक्रेसर्वंयथोदितम् ॥ ४९ ॥ पूर्ववत्तत्प्रियाभूत्वासेवयामासवैष्णवान् ॥ अथैकस्मिन्दिनेतत्रसमायातास्तुसाधवः ॥ ५० ॥
अपराह्णेबुभुक्षूंस्तान्दृष्ट्वाव्यासोऽतिहार्षितः ॥ तस्मिन्नेवदिनेरात्रौकन्यापरिणयःस्थितः ॥५१॥तदर्थंबंधुभिःकृत्वामिष्टान्नंस्थापितंगृहे ॥
तत्सर्वंभोजयामाससाधूनतिमुदान्वितः ॥ ५२ ॥ भुक्त्वातेऽपिस्थितारात्रौविवाहार्थंवरोऽभ्यगात् ॥ बहुभिःस्वजनैःसार्द्धंततस्तेऽति
थिसाधवः ॥ ५३ ॥ चिंतयामासुरत्यर्थंमिष्टान्नंस्यात्कथंपुनः ॥ ततोव्यासस्तुतानाहयावदस्तिगृहेमम ॥ ५४ ॥ नीत्वेमान्भो
जयध्वंनोहरिःपूर्णंकरिष्यति ॥ तथैवजातंसर्वैस्तुभुक्तंगेहेस्थितंपुनः ॥ ५५ ॥ पूर्वतोऽप्यधिकंदृष्ट्वासर्वेविस्मयमागताः ॥ एकस्मि
न्दिवसेतस्यगेहेसाधुःसमागतः ॥ ५६॥लोकवार्तानभिज्ञःसभक्तिमान्गरुडध्वजे॥स्थित्वादिनद्वयंतस्माच्चलितोव्यासआहतम् ॥५७॥
प्रातर्यास्यसिसाधोत्वमित्युक्तःसोऽपिचावसत्॥अथरात्रौस्वयंतस्यशालग्रामशिलांनिजे ॥ ५८॥ शालग्रामशिलास्थानेनिधायैकंचप
क्षिणम् ॥ तत्संपुटेनिधायाथरात्रौसुप्तश्चपूर्ववत् ॥५९॥ प्रातरुत्थायचलितःपुनःसाधुस्तमब्रवीत् ॥ साधोऽग्रेयोजनादग्रेजलमस्त्यतिसुं

दरम् ॥६०॥ स्नानंतत्रैवकर्तव्यंपाथेयंगृह्यतामिदम् ॥ गृहीत्वापथिकःशीघ्रंचलितस्तत्रचागतः ॥६१॥ स्नात्वापूजयितुंदेवंसमुद्युक्तोऽथसं पुटम् ॥ उद्घाटयामासतदापक्षीचोड्डीयनिर्गतः ॥ ६२ ॥ अथसाधुस्तुसंदिग्धःशून्यंदृष्ट्वातुसंपुटम् ॥ प्रायस्तथैवगतवाण्ठाकुरोनात्रसं शयः ॥६३॥ इतिनिश्चित्यतत्कालंसमायातोविशंकितः ॥ व्यासायसर्वंप्रोवाचश्रुत्वासोऽप्यतिहृष्टवत् ॥६४॥ गत्वापश्यागतश्चेत्स्या न्मिलिष्यतिनसंशयः ॥ इत्युक्तःसगतस्तत्रशालग्रामंददर्शतम् ॥६५॥ व्यासंहर्षादुवाचासावागतोऽत्रैवमेप्रभुः ॥ ततोव्यासोऽपितंप्राह निवसात्रकियद्दिनम् ॥ ६६ ॥ तथैवास्तितवस्वामिन्श्रीकृष्णस्यमनोगतम् ॥ ततउड्डीयमार्गात्तुसमायातोऽत्रसप्रभुः ॥६७॥ इतिश्रु त्वासोऽपिसाधुरुवासव्याससन्निधौ ॥६८॥ व्यासभक्तिपरीक्षार्थमेकदाकोऽपिवैष्णवः ॥ मध्याह्नेसमुपागत्यश्रावयामासचाब्रवीत् ॥बु भुक्षितोऽहमत्यर्थंकदान्नंमेप्रदास्यसि ॥६९॥ आहकश्चित्तंदेवंदत्त्वातुभ्यंप्रदास्यति॥व्यासःश्रुत्वावचःसवशीघ्रमुत्थाययत्नतः ॥७०॥ आनीयान्नंसर्वंसंपुरस्तस्यददौस्वयम् ॥ सतुभुक्त्वाकतिपयान्ग्रासाञ्शीघ्रंसमुत्थितः ॥ ७१ ॥ उदरव्यथयाभोक्तुंशक्यतेनेतिचा ब्रवीत् ॥ततोव्यासोमहाभक्त्यातदुच्छिष्टंतुपत्रकम् ॥ ७२ ॥ स्वयमुत्थापयामासअहोभाग्यमितिब्रुवन् ॥ ततःससाधुर्व्यासस्यपति त्वापादयोर्मुदा ॥७३॥ क्षमापयामासनिजंकृतंकपटमब्रवीत् ॥ एवंतंपूर्णपुरुषंज्ञात्वामृत्युंततःसुतान् ॥ ७४ ॥ आहूयप्रददौसर्वंकृत्वा भागत्रयंस्वयम् ॥ धनमेकत्रचैकत्रकृष्णमूर्तिंतथैवच ॥ ७५ ॥ मुद्रातिलकमेकत्रपुत्रानाहप्रगृह्यताम् ॥ तदैकेनतुसर्वस्वंपरेणप्र तिमाहरः ॥ ७६ तृतीयेनतुमुद्रादिगृहीतंभक्तिपूर्वकम् ॥ एवंव्यासोमहाभक्तोबभूवातिदयान्वितः ॥ ७७ ॥ सनाढ्यब्राह्मणःख्यातः

सर्वभक्तशिरोमणिः ॥ ७८ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येव्यासचरितेनामद्वादशाधिकशततमःसर्गः ॥ ११२ ॥ एवंरूपस्यशिष्योऽ
भून्नाम्नाजीवंतिविश्रुतः ॥ गोस्वामीतिचविख्यातोराधाकृष्णौजजापसः ॥ १ ॥ करामलकवत्सर्वयस्यशास्त्रमभूत्किल ॥ सर्वसंदेहसंछे
त्तातत्त्वज्ञानीमहाशयः ॥ २ ॥ एकदाकेनचित्तस्मैदत्तंभोज्यमनुत्तमम् ॥ चिक्षेपयमुनायांससर्वंतत्स्वयमेवहि ॥ ३ ॥ तदैकःप्राहतंशि
ष्यःस्वामिन्नेतत्तुरक्ष्यताम् ॥ एतेनसाधुसेवांवैकरिष्येभवदाज्ञया ॥ ४ ॥ इतिशिष्यवचःश्रुत्वाजीवःप्राहातिभक्तिमान् ॥ नयोग्यंसा
धुसेवायांवर्ततेकोऽपितेऽन्तिके ॥ ५ ॥ त्वंचिकीर्षसिचेत्सर्वंगृहीत्वाकुरुसेवनम् ॥ इतिश्रुत्वातदाशिष्यःसाधुसेवापरोऽभवत् ॥६॥ सतु
शिक्षांददौतस्मैशिष्यायातिप्रयत्नतः ॥ नगर्वःसाधुसेवायांकर्तव्यःसर्वदात्वया ॥ ७ ॥ एवंगोपालभक्तोऽभूद्राधाकृष्णप्रपूजकः ॥
सर्वभूतसुहृद्दोषत्यागीवक्तागुणस्यच ॥ ८ ॥ भगवानपिनाम्नाभूद्भक्तचाल्युपनामकः ॥ सीतारामस्वरूपंतुगृहीतंगुरुभक्तितः ॥ ९ ॥
एकदामथुरायांससमायातोदिदृक्षया ॥ राधाकृष्णौतत्रदृष्ट्वातद्रूपंचेतसाधृतम् ॥ १० ॥ तथैवरासनृत्यादिलीलाःकुर्वन्नहर्निशम् ॥
तस्थौगुरुरथायातोभगवंतंददर्शह ॥ ११ ॥ अन्यैवरीतिरस्याभूदितिशंकामवापसः ॥ भगवानपितंज्ञात्वागुरोरंतर्गतांमतिम् ॥ १२ ॥
वृंदावनेतदैकांतेगुरुंनत्वाब्रवीत्स्वयम् ॥ भवत्प्रसादादेषावैबुद्धिःप्रादुर्बभूवमे ॥ १३ ॥ गुरुस्तमाहकिंतेनराधाकृष्णौतुयाविह ॥
तावेवसीतारामौत्वंज्ञात्वामामेवपूजय ॥१४॥ इत्युक्त्वाप्रययौसोऽपिगुर्वाज्ञातोगुरुर्ययौ॥एवमेकोमहाभक्तोद्विजोविपुलविह्वलः॥१५॥
गुरुंश्रीकृष्णमेवासौमन्यमानोऽर्चयन्स्थितः ॥ एकदासगुरुस्तस्यमृतोदैवाद्धरिंस्मरन् ॥ १६ ॥ तदारभ्यसशोकेनतूष्णींगेहेस्थितो

ऽभवत् ॥ अथशोकापनोदायतंरासस्समयंजनाः ॥ १७ ॥ वैष्णवानिन्युरेकस्मिन्दिनेसोऽपिसमागतः ॥ दृष्ट्वानृत्यंहरेरग्रेतनुंतत्या
जलीलया ॥ १८ ॥ कृष्णचैतन्यशिष्योऽभूल्लोकनाथेतिविश्रुतः॥कृष्णलीलांजगौनित्यंतत्त्वज्ञानपरायणः ॥ १९ ॥ माथुरोगोस्वामि
नाथोभक्तोऽतीवविलक्षणः ॥एकदासतुशुश्रावमथुरायांनिरंतरम् ॥ २० ॥ कृष्णस्तिष्ठतिचेत्येवमागतोमथुरांपुरीम् ॥प्रतिकुंजंप्रतिवनं
प्रतिह्रदंप्रतिक्षणम् ॥ २१ ॥ विचिन्वन्सतुबभ्रामपरित्यक्ताशनोदकः ॥ एवंदिनद्वयेजातेतृतीयेदिवसेतदा ॥ २२ ॥ दुर्बलोयमुनातीं-
रंगच्छन्वंशीवटंप्रति ॥ दृष्ट्वातंगोपवपुंतुश्यामंकमललोचनम्॥ २३ ॥द्रुतमागत्यतंप्रेम्णादधारांकेऽतिहृष्टवत् ॥ ततस्तंभगवानाहमोह
यन्निजमायया॥ २४ ॥ कोऽसिगृह्णासिमामेवंकिमर्थंभ्रांतिमानिव ॥ तदोवाचमधुस्वामी कृष्णबुद्ध्याधृतोऽसिभोः॥ २५ ॥ परंत्वा
मिदानींतुगोपंजानामिसुंदरम् ॥ इत्युक्त्वातंसतत्याजपुनर्यातोयदृच्छया॥ २६ ॥अथरात्रौहरिःस्वप्नेप्रोवाचैनंहसन्निव ॥ ध्यायंस्तद्रू
पममलंममसन्निधिमेष्यसि ॥ २७ ॥ ततःसोऽतिकृतार्थोमाथुरोगोस्वामिनामकः ॥ मरणांतंतुतत्रैवस्थित्वाविष्णुंजगामसः
॥ २८ ॥ कृष्णदासब्रह्मचारीशिष्योरूपस्यसत्तमः ॥ गुर्वाज्ञयार्चयन्राधाकृष्णौमुक्तोबभूवह ॥ २९ ॥ यःस्वशिष्योमहानासीद्भक्तो
नारायणाभिधः॥एवंद्वितीयःशास्त्रज्ञःकृष्णदासोऽतिभक्तिमान्॥ ३० ॥ भूगर्भेतिचविख्यातोगोस्वामीचातिभक्तिमान् ॥ मृतोजगाम
श्रीकृष्णसन्निधिंयोगिदुर्लभम्॥ ३१ ॥इतिश्रीभगवद्भक्तिमाहात्म्येभक्तरूपकादिचरित्रकथनंनामत्रयोदशाधिकशततमःसर्गः ॥११३॥
मुरारिनाम्नाभक्तोऽभूद्रसिकेत्युपनामकः ॥ कथामस्यप्रवक्ष्यामिपरमाश्चर्य्यकारिणीम् ॥ १ ॥निधायकुंडेसर्वेषांभक्तानांचरणोदकम्॥

तस्यैवपूजांतत्पानंचक्रेतंनैवमार्ज्जनम् ॥ २ ॥ एवंतस्यव्रतंनित्यंनासीद्भक्तस्यदुर्लभम् ॥ एकदासचभक्तस्तुगुरोःक्षयदिनेबहून् ॥ ३ ॥
भक्तान्निमंत्रयामाससमायातास्तुवैष्णवाः ॥ तत्रैकस्तत्परीक्षार्थंगलत्कुष्ठमवैष्णवम् ॥४॥ मालातिलकमुद्राभिर्योजयित्वासमानयत्
॥ मुरारिस्तंप्रणम्याहशिष्यंसाधुपदांबुजम् ॥ ५ ॥सर्वस्मादुदकंनीत्वाचानयस्वातिसत्वरम् ॥ इतिश्रुत्वाततःशिष्यस्त्वरितंसाधुसंस
दि ॥ ६ ॥ गत्वाप्रक्षाल्यचरणौजलंनीत्वामुरारये ॥ ददौमुरारिस्तात्किंचिद्गृह्णन्छिरसिभक्तितः ॥ ७ ॥ आगत्यभक्तवृन्देतुदृष्ट्वाकुष्ठि
नमब्रवीत् । आगतोऽसिकुतोभक्तसकुष्ठीतमथाब्रवीत्॥ ८ ॥ मालांमुद्रांवहन्सत्यंब्रवीम्यहमुपागतः । ततःस्वयंसमुत्थायकुंडस्यांतिक
मागतः ॥ ९ ॥ स्वयंप्रक्षाल्यचरणौतत्पादोदकमादरात् । साधुपादोदकंमत्वापपौतद्भक्तिपूर्वकम् ॥ १० ॥ ततस्तस्यैवकुष्ठस्य
तत्करस्पर्शमात्रतः ॥ शरीरमभवत्सम्यक्कुष्ठरोगविवर्जितम्॥ ११ ॥ दृष्ट्वासर्वेतदाश्चर्य्यंमुरारिंतुष्टुवुर्जनाः ॥ द्वादशाहमसौसाधून्भोज
यामासयत्नतः॥ १२ ॥आरामेवसतस्तांस्तुसत्कर्तुंस्वयमागतः॥अथतेषांतुसाधूनामेकोधूमंपिबन्स्थितः ॥ १३ ॥ दृष्ट्वामुरारिंतद्यंत्रंना
रिकेलंतिरोदधे ॥ स्वयंदृष्ट्वामुरारिस्तुतदंतिकमुपागतः ॥ १४ ॥ संभाष्यसर्वान्संतुष्टोमिथ्यारागीवचोऽब्रवीत् ॥ अहोममोदरेपीडासमु
त्पन्नाततः क्वचित्॥ १५॥ वर्ततेधूमपानायनारिकेलंतदर्पय ॥ इतिश्रुत्वातुसंहृष्टः समुत्थायददौस्वकम् ॥१६ ॥ उद्घाट्यनारिकेरंसगृ
हीत्वायोजयन्मुखे॥मिथ्यारोगंविधायाथसमुत्तस्थौगृहंप्रति ॥ १७ ॥ नोद्वेगः स्याच्चसाधूनामित्येवंकृतवान्स्वयम् ॥ एकदासाधवस्त
त्रसमायाताबुभुक्षिताः ॥ १८ ॥ तान्भोजयन्सशिष्यस्तुकेनचित्साधुनार्थितः ॥ योमदीयोऽस्तिदंडोऽयंतदर्थंयंत्रमर्पय ॥१९॥ सर्वो

पकरणंतस्मैप्रददेसोऽब्रवीन्मुहुः ॥ ततःशिष्योनचोवाचसर्वेभ्योऽन्नंददौस्थितः ॥ २० ॥ ततस्तुदंडवान्साधुश्चुकोपस्फुरिताधरः ॥
स्वोच्छिष्टपात्रमादायमुरारेःसन्निधौगतः ॥ २१ ॥ गत्वातन्मस्तकेक्रोधाच्चिक्षेपातिरुषाशिवे ॥ मुरारिस्तुततोहृष्टोममभाग्य
मितिब्रुवन् ॥ २२ ॥ पत्रावलींगृहीत्वातांनत्वानेत्रेनिधायच ॥ शिष्यंनिर्भर्त्सयामासतस्मैशिक्षांददौपुनः ॥ २३ ॥ अरेदंडाय
भवताकुतोनैवार्पितंवद ॥ गत्वास्वयंतंनिकटंदत्त्वादंडायभूरिशः ॥ २४ ॥ प्रार्थयामासतंसाधुंक्षमस्वेतिवदन्मुहुः ॥ दृष्ट्वैतत्परमाश्च
र्य्यंसर्वेतेसाधवस्तदा ॥ २५ ॥ मुरारिंतुष्टुवुर्हृष्टादंडवानतिलज्जितः ॥ अथैकस्मिन्दिनेतस्यश्यामानन्दोगुरुःस्थितः ॥ २६ ॥ तस्यै
कोजीविकाग्रामोहृतोम्लेच्छेनभूभुजा ॥ ततोमुरारयेपत्रंलिलेखनगुरुस्तदा ॥ २७ ॥ पत्रंदृष्ट्वास्थितोयादृक् तथैवहिममाग्रतः ॥
भुक्त्वाशोधयितुंपाणिंचलितस्तादृदर्शह ॥ २८ ॥ गुरोःपत्रंतथैवासौचलितोगुरुसंनिधिम् ॥ तत्रागत्यगुरुंनत्वाश्रुत्वासर्वंगुरोर्मु
खात् ॥ २९ ॥ तदैवम्लेच्छनृपतेर्ग्रामसन्निधिमागतः ॥ नृपतेःसचिवास्तस्यश्रुत्वासर्वंतमागतम् ॥ ३० ॥ आजग्मुर्भक्तिपूर्वंते
तमूचुरतिविस्मिताः ॥ महाम्लेच्छोऽयमस्तीहनेमंद्रष्टुंत्वमर्हसि ॥ ३१ ॥ अस्माभिरेवभवतःकार्य्यंसपाद्यतंसुखम् ॥ इतिश्रुत्वापिना
सौतदमन्यतवचस्ततः ॥ ३२ ॥ सचिवाआगताराजसन्निधौनृपतिस्तुतान् ॥ प्रपच्छाद्यकुतश्चासीद्विलंबोभवतामिह ॥ ३३ ॥ इतिरा
जवचःश्रुत्वासचिवाआहुरादरात् ॥ राजन्नोगुरुरायातस्तद्गुरोर्जीविकाहृता ॥ ३४ ॥ भवदीयेनतत्रासौभवंतंवक्तुमागताः ॥ इ
तिश्रुत्वाब्रवीद्राजातमानयंतुमांप्रति ॥ ३५ ॥ कीदृशीवर्ततेशक्तिस्तांमेदर्शयितुंस्वयम् ॥ इत्युक्तास्तेऽपिसचिवागुरुमाजुहुवुस्तदा ॥ ३६ ॥

राजद्वारिमहामत्तंस्थापयामासतंगजम् ॥ स्वयंतदुपरिष्टात्तुप्रासादेसंस्थितोऽभवत् ॥ ३७ ॥मुरारिरपिचायातोदोलायांगजसन्निधौ ॥
दृष्ट्वादोलांततोहस्तीमत्तश्चीत्कृत्यदुद्रुवे ॥ ३८ ॥ दृष्ट्वातद्दोलिकावाहाःपलायित्वादिशोदश ॥ जग्मूरुदंतोदोलातोमुरारिर्बहिरागतः ॥
॥ ३९ ॥हरेकृष्णहरेकृष्णराधाकृष्णेतिसंजपन् ॥इतिश्रुत्वाततोहस्तीमुरारेश्चरणांबुजे ॥४०॥संयोज्यमस्तकंतस्थौमुरारिरपितत्क्षणात्॥
राधाकृष्णेतिमन्त्रंसतत्कर्णेप्राहनिर्भयः॥ ४१ ॥ गलेऽथतुलसीमालांगजायदत्तवान्स्वयम् ॥ गोपालदासइत्येतन्नामचक्रेऽतिहर्षितः ॥
॥ ४२ ॥ श्रुत्वेमंसर्ववृत्तांतंप्रासादस्थोमहीपतिः ॥ तंग्रामंदत्तवान्सद्योग्रामानन्यान्समर्पयत् ॥४३॥ रत्नवस्त्रादिकंचान्यद्दत्त्वातुष्टंव्य
सर्ज्जयत् ॥ अथगोपालदासस्तुगजराजोवभूवयः ॥ ४४ ॥ससाधून्पृष्ठआरोप्यचचाराथतदिच्छया ॥ राजकार्य्येमहामत्तोनागतोनां
कुशादपि ॥४५॥ एवंवणिग्गृहेगत्वागोधूमादिप्रपूरितम् ॥नीत्वादरिद्रसाधुभ्योददौनित्यंस्वयंगतः ॥४६॥ ततस्तेवणिजःसर्वेमुरारेर्नि
कटेगताः ॥आहुर्हस्तिकृतंसर्वंश्रुत्वासोऽप्याजगामह ॥४७॥ तंगजंप्राहकिमिदंकुरुषेत्वंजुगुप्सितम्॥एतांस्तुदुःखितान्कृत्वापरस्मैयत्प्र
यच्छसि ॥ ४८ ॥ न्यवर्त्ततततोहस्तीवणिजांवस्तुलुंठनात् ॥ स्वपृष्टोद्वहनेनैवसाधुसेवांचकारसः ॥ ४९ ॥ इत्येवंपरमाश्चर्यंश्रुत्वादि
ल्लीश्वरोनृपः ॥ वैष्णवंप्रेषयित्वातमानिनायाथहस्तिनम् ॥ ५० ॥ दृष्ट्वासपरमाश्चर्य्यंप्राप्यतस्मैगजायवै ॥ददौमिष्टान्नपानादिनजग्रा
हसकिंचन ॥५१॥ एवंदिनत्रयेजातेदिल्लीशश्चातिचिंतितः ॥ प्राप्यमद्भवनंनैवभुक्तेतस्मादिमंगजम् ॥ ५२ ॥ गंगायांस्नापयंत्वद्यततो
भोक्ष्यतिचेदयम्॥ अथतेवैष्णवास्तस्यपृष्ठाद्भुविसमास्थिताः ॥ ५३ ॥हस्तीगंगांप्रविश्यासौसम्यक्स्नात्वातिभक्तितः ॥ तीरेस्थित्वा

ततःप्राणान्मुमुचेपश्यतांनृणाम् ॥५४ ॥ इत्येतत्परमाश्चर्य्यंश्रुत्वादिल्लीश्वरादयः॥तुष्टुवुर्भक्तिमाहात्म्यंसाधुसाध्वितिवादिनः॥ ५५ ॥
एवमन्येमहाभक्ताबभूवुर्मथुरापुरि ॥ साकाशीवतथाचैवत्रिलोचनइतिश्रुतः ॥५६ ॥ आशाधरोदेवराजइत्याद्यावैष्णवोत्तमाः ॥ नाम्ना
चकीर्तिताश्चैतेहरिभक्तिप्रदायकाः ॥ ५७ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येहरिदासचरितंनामचतुर्दशाधिकशततमःसर्गः ॥ ११४ ॥
सदनेतिमहाम्लेच्छवंशजोभक्तिमानभूत् ॥ कथामस्यप्रवक्ष्यामिपरमाश्चर्य्यकारिणीम्॥१ ॥पूर्वजन्मनिविप्रोऽसौधनवृत्त्युपजीवकः ॥
दानधर्म्मादिरहितोनिजकर्म्मच्युतःसदा ॥२ ॥परंत्वेकंव्रतंतस्यनकदाचिदभूच्च्युतम्॥शालग्रामशिलापूजामकृत्वानैवभोजनम् ॥ ३ ॥
एकदावृत्तिलोभेनददौम्लेच्छायवैधनम् ॥ मांसविक्रयिणेविप्रोजातेकियतिवत्सरे ॥ ४ ॥ नप्रापतद्धनंतस्मादथकालममारसः ॥ स्मर
न्तमधमर्णंयत्प्राणांस्तत्याजसद्विजः ॥ ५ ॥ ततस्तस्यैवम्लेच्छस्यपुत्रोऽभूत्कर्मबंधनात् ॥ तत्रतेनातिधनिनाह्येकपुत्रेणपा
लितः ॥ ६ ॥ सदनेत्यकरोन्नाममहाधनसमृद्धिमान् ॥ सदनोऽपिचकालेनजातोद्वादशवार्षिकः ॥ ७ ॥ शालग्रामशिलापूजा
नियमोयः स्थितःपुरा ॥ तेनतस्यैकदाकस्मादरण्येमिलितःस्वयम् ॥ ८ ॥ शालग्रामोऽतिविपुलःसेटकेनमितःशुभः ॥ तंगृही
त्वातिहृष्टःसन्समागत्यस्वमंदिरम् ॥ ९ ॥ तेनैवसेटकेनासौमांसंविक्रीतवान्सदा ॥ परंतुहिंसारहितोदयावाञ्जीवमात्रके ॥१०॥ अथ
तस्यपितामाताभ्रातरश्चापियेस्थिताः ॥ मृताःसर्वेतदातेचधनस्वामीबभूवसः ॥ ११ ॥ एकदातेनमार्गेणजगन्नाथदिदृक्षया ॥ आ
गतावैष्णवास्तत्रतन्मध्येकोऽपिचागतः ॥ १२॥ सदनस्यगृहद्वारिशालग्रामंददर्शसः ॥ मत्वाश्चर्य्यंसदुःखार्तःसदनंप्राहनम्रतः ॥१३॥

अहोममास्तिदेवोऽयंदीयतांमेकृपांकुरु ॥ नैवकिंचित्फलंचास्यतवसत्यंब्रवीम्यहम् ॥१४॥ इत्युक्तःसदनःप्रादाच्छालग्रामंतुसाधवे ॥
गृहीत्वासोऽतिहर्षेणययौवैष्णवसंसदि ॥१५॥पंचगव्येनसंस्नाप्यततोगंगोदकेनच॥पूजयित्वासमभ्यर्च्यान्नंस्वयंभुक्त्वासुखीस्थितः॥१६॥
अर्धरात्रेतदाविष्णुःस्वप्नेवैष्णवरूपधृक् ॥ तंसाधुमब्रवीद्वाक्यंकोपतश्चातिनिष्ठुरम् ॥ १७ ॥ अहोमांनयतत्रैवम्लेच्छस्यनिकटेद्रु
तम् ॥ नोचेत्तेसर्वनाशंवैकरिष्यामिनसंशयः ॥ १८ ॥ एवंदृष्टमुभाभ्यांतुस्वप्नंनिशिभयप्रदम् ॥ उत्थायभ्रमएवायमितिमत्वास्वप
न्पुनः ॥ १९ ॥ पुनर्ददर्शचोत्तस्थौपुनःसुप्त्वाददर्शतत् ॥ अथप्रातःसमुत्थायगुरुःशिष्यमुपाह्वयत ॥ २० ॥ शालग्रामोयतोनीतस्त
स्मैदेहिद्रुतंतुतम् ॥ श्रुत्वाशिष्योऽपितत्कालंसदनायददौशिलाम् ॥ २१ ॥ उवाचाहोतवैवायंपूजांवांछतिनोमम ॥ गृहाणतांनिजा
मेतांशालग्रामशिलांशुभाम् ॥ २२ ॥ ततस्तुसदनोहृष्टोगृहीत्वातांशिलांस्वयम् ॥ धनंसर्वंतुसाधुभ्योदत्त्वाप्रचलितःस्वयम्
॥ २३ ॥ एवंजातेक्वचित्कालेभिक्षार्थीकस्यचिद्गृहे ॥ तत्रैकांयुवतिंदृष्ट्वाययाचेतांतुभोजनम् ॥ २४ ॥ दृष्ट्वा सा सदनं गेहे युवानं
सुंदरंतदा ॥ अहोत्वंनिवसात्रैवकृत्वालग्नंमनोमम ॥ २५ ॥ इदंगृहमिदंवित्तमहंचैवतवैवहि ॥ नमांत्यजरमस्वात्रमयातिप्रिय
याप्रिय ॥ २६ ॥ श्रुत्वैतद्वचनंतस्याःसदनःप्रत्युवाचताम् ॥ मातःकथमिदंब्रूषेवचनंचातिगर्हितम् ॥ २७॥ नमेवित्तेनगेहेन
स्त्रियावास्तिप्रयोजनम् ॥ तवापिपतिरस्त्येवतेनसाकंरमस्वभोः ॥ २८ ॥ इत्युक्तासातिपापिष्ठामत्पतेर्भयतःस्वयम् ॥ एवंवदति
चेत्येवंचिंतयित्वागृहंगता ॥ २९ ॥ छित्त्वापत्युःशिरःप्राहसदनंपुनरागता ॥ मयाहतःपतिःपश्यत्वयिप्रेमयतोमम ॥ ३० ॥ अतःप

रंनगंतव्यंनिःशंकोनिवसात्रवै ॥ इत्युक्तःसदनःशीघ्रंनिर्ययौभयविह्वलः ॥ ३१ ॥ अथसापृष्ठतस्तस्यबहिरागत्यतत्क्षणात् ॥ महास्वरेणरुदतीसामाजिकमथाह्वयत् ॥ ३२ ॥ अहोसर्वेसमायांतुद्रुतंपश्यंतुमेदशाम् ॥ ततःसर्वेसमागत्यधृत्वातंसदनंक्रुधा ॥ ३३ ॥ताडयंतोनृपस्थानेनिन्युर्बद्धातिकोपनाः ॥ राजापिदृष्ट्वातंसाधुरूपिणंप्राहकोपत ॥ ३४ ॥ छित्त्वाहस्तौबहिष्कार्यःपुराद्दुष्टोऽतिपामरः ॥ ततआगत्यचांडालश्छित्त्वाहस्तौतमत्यजत् ॥ ३५ ॥ ततःससदनोमत्वापूर्वकर्म्मफलंनिजम् ॥ निर्भर्त्सितोऽपितैःसर्वैःसाकमेवंययौपुनः ॥ ३६ ॥ भिक्षावृत्तिश्छिन्नहस्तःपुरीसन्निधिमागतः ॥ अथरात्रौजगन्नाथः स्वप्नेप्रोवाचपूजकम् ॥ ३७ ॥ यश्छिन्नहस्तआयातिवैष्णवैःसहतेऽतिके ॥ शिबिकायांसमारोप्यप्रातःशीघ्रंसमानय ॥ ३८ ॥ अथप्रातःसमुत्थायपूजकोऽभ्येत्यतत्रतु ॥ सर्वेषांपश्यतांतंतुसदनंप्राहपूजकः ॥ ३९ ॥ जगन्नाथाज्ञयासाधोआरुह्यशिबिकामिमाम् ॥ तत्रगच्छेतिश्रुत्वासप्राहनार्हामिदोलिकाम् ॥ ४० ॥ पूजकेनपुनःप्रोक्तस्ततस्तंप्रणनामसः ॥ तस्यप्रणामसमयेहस्तौजातौतुपूर्ववत् ॥ ४१ ॥ अथशोभनहस्तः ससमारुह्यतुशिबिकाम् ॥ जगन्नाथसमीपेऽगात्तत्रतस्थौसमाःकति ॥ ४२ ॥ नीलाचलाद्व्रजंगत्वाकृष्णभक्त्यादिवंगतः ॥ एवंसोऽभूद्दयारामोरामदासादयस्तथा ॥ ४३ ॥ नामदासस्तथैवाभूद्विमलानंदनामकः ॥ पतिरामस्तथाश्यामोदह्वपद्मनोरथाः ॥ विष्णुभक्तिरताःसर्वेनृताजग्मुर्हरेःपदम् ॥ ४४ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येसदनभक्तचरितंनामपंचदशाधिकशततमःसर्गः ॥ ११५ ॥ षोजीनामबभूवैकोभक्तोऽतीवसुसत्तमः ॥ स्वगुरुंकृष्णवत्पश्यन्पूजयामासभक्तितः ॥ १ ॥ एकदातंगुरुःप्राहबद्धाघंटांक्वचित्स्वयम् ॥ ममप्रस्थानसमयःसमायातोऽतिकेऽधुना ॥ २ ॥

मृतोऽहंयदिकृष्णस्यदूतैर्नीतस्तदंतिके ॥नदाकस्मात्स्वयंघंटानादःसत्यंभविष्यति ॥३॥ अन्यथान्यत्रगमनंममैतन्निश्चितंमनः ॥ इति
श्रुत्वावचःसर्वेजातास्तज्ज्ञातुमुत्सुकाः ॥ ४ ॥ अथैकस्मिन्दिनेपोजीप्रेषितोगुरुणाक्वचित् ॥ तस्मिन्नेवदिनेतस्यगुरुरत्यंतदुःखितः
॥ ५ ॥ स्वांगणेस्थापितःशिष्यैस्ततोनशयनेस्थितः ॥ मृतंव्यलोकयन्नूर्ध्वंघंटायांनाभवद्ध्वनिः ॥६॥ नीत्वातस्यशरीरंतुशिष्याः
संचस्करुस्तदा ॥ द्वितीयेदिवसेपोजीसमायातोनिजंगृहम्॥ ७॥ श्रुत्वागुरुंमृतंभक्त्यारुरोदोच्चैःस्वरेणसः ॥प्रबोधितोऽन्यशिष्यैस्तुपो
जीपप्रच्छतान्पुनः ॥ ८ ॥ तऊचुराम्रवृक्षस्यतलेऊर्ध्वमुखोमृतः ॥ ततः पोजीसमुत्थायतथासुप्त्वाविलोकयन् ॥९॥ उपरिष्टाद्ददर्शैकं
पक्वमाम्रफलंशुभम् ॥ उत्थायतद्गृहीत्वासचिच्छेदचशनैःशनैः ॥१०॥ तन्मध्यान्निर्गतःकीटोघंटाध्वनिरभूत्तदा ॥ ततःसर्वेसमागत्य
किमिदंत्वितिचाब्रुवन् ॥११॥ प्राहपोजीततःसर्वाञ्छृणुध्वंचात्रकारणम् ॥ गुरोर्मेमृत्युसमयेमनश्चास्मिन्फलेगतम् ॥१२॥ उत्तानशा
यिनोदृष्ट्वाततःकीटोबभूवसः ॥ गत्वाग्रेवुभुजेपश्चात्तस्मान्निष्कासितोमया ॥ १३ ॥ जगामहरिसान्निध्यंघंटाध्वनिरभूत्तदा॥यामतिः
सागतिश्चांतेएवंसंबोधयन्स्वयम् ॥१४॥ मनोनिवेश्यचाम्रेऽस्मिन्कीटोभूत्वाव्यबोधयत॥ इतिसर्वेसमाकर्ण्यसाधुसाध्वितिचाब्रुवन् ॥
॥ १५ ॥ मनोजेतव्यमित्येवसर्वशास्त्रविनिश्चयः ॥ वर्तितेतत्रकर्तव्योयत्नोनित्यंमुमुक्षुभिः ॥ १६ ॥ एवंपरस्परालापंकृत्वासर्वे
जहुःशुचम् ॥ पुंडरीकपुरेरंकानाम्नाशूद्रोबभूवह ॥ १७ ॥ बंकानाम्नीचतत्पत्नीरंकातोऽपिदृढव्रता ॥ अकस्मादुभयोर्भक्तिर्ब
भूवातीववैष्णवी॥ १८ ॥ यथालाभेनसंतुष्टौधनतृष्णापराङ्मुखौ ॥ अरण्येशुष्ककाष्ठानिगृहीत्वानगरेपुनः ॥ १९ ॥ विक्री

यान्नादिकंतस्यक्रीत्वातौजीवतःसुखम् ॥ विठ्ठलेत्येवजल्पंतौस्मरन्तौहृदिविठ्ठलम् ॥ २० ॥ तन्मनस्कौतदात्मानौमहाभक्तौ
बभूवतुः ॥ रंकानुगामिनीसाचबंकायत्रसगच्छति ॥ २१ ॥ तत्रतत्रतुसाचापिगच्छत्येवनिरंतरम् ॥ एवंगतेषुकालेषुनामदेवोऽ
ब्रवीद्धरिम् ॥ २२ ॥ विठ्ठलंदययास्वामिन्दंहित्वंत्वेतयोर्धनम् ॥ विठ्ठलस्तुततःस्वप्नेनामदेवमुवाचह ॥ २३ ॥ प्रातर्वनेसमागच्छद्यस्यदा
स्याम्यहंधनम् ॥ भक्तेनकेनचिच्चैवसाकंतिष्ठवनेऽप्यहो ॥ २४ ॥ अथप्रातःसमुत्थायरंकाबंकेतिदंपती ॥ चलितौस्वगृहात्तत्राहर्तु
मिंधनसंचयम् ॥ २५ ॥ नामदेवःपुरातत्रगत्वाभक्तंददर्शह ॥ ताभ्यांदातुंधनंतस्मैनामदेवायचाब्रवीत् ॥ २६ ॥ पश्यदास्यामिवि
त्तानिमार्गंचावांनिलीयवै ॥ तिष्ठावोऽत्रागतावेतौसंतौकिंवाकरिष्यतः ॥ २७ ॥ इत्युक्त्वासधनंसर्वंमार्गेसंस्थाप्यसन्निधौ ॥ तिरोभूय
स्थितःसाकंनामदेवेनयत्नतः ॥ २८ ॥ अथरंकाःसमायातोदृष्ट्वाबहुधनंपथि ॥ मत्वातृणसमंकिंचिच्चलितःप्रत्यगात्पुनः ॥ २९ ॥
धूलिभिःपूरयामासपश्यन्पत्नीमुपागताम् ॥ साप्यागत्यचपप्रच्छकिमत्रकृतवान्भवान् ॥ ३० ॥ रंकाआहततःपत्नींधनमत्रस्थितं
बहु ॥ तद्दृष्ट्वातेनलोभःस्यादितिप्रच्छादितंमया ॥ ३१ ॥ श्रुत्वैतत्पतिवाक्यंसात्वहोकिंतद्धनंजनैः ॥ उच्यतेतस्यकिंकार्यंदर्शयित्वा
वदस्वतत् ॥ ३२ ॥ ततोरंकास्तुनिःसार्य्यधूलिस्तामब्रवीत्प्रिये ॥ पश्येदमेवतुधनंग्रहणेऽस्यफलंशृणु ॥ ३३ ॥ महामोहोमहाशोको
महाक्रोधश्चजायते ॥ एतदर्थंनिहत्याशुभ्रातरंपितरंगुरुम् ॥ ३४ ॥ पत्नींपतिःपतिंहंतियल्लाभेलोभतोभुवि ॥ तद्धनंनैवगृह्णीयाद्भक्तिमा
र्गस्यकंटकम् ॥ ३५ ॥ इतिश्रुत्वातदाबंकागृहीत्वापाणिनापतिम् ॥ पलायित्वाद्रुतंतस्मान्निर्ययौव्याघ्रभीतिवत् ॥ ३६ ॥ दृष्ट्वेदंच

रितंनामदेवोऽसौवैष्णवस्तथा ॥ गत्वाग्रेशुष्ककाष्ठानिस्थापयामासतुर्वने ॥ ३७ ॥ अपरिश्रमतःकाष्ठमेतयोःस्यादितीच्छया ॥ तौ
तुतत्संचितंत्यक्त्वातौविचिक्यतुरन्यतः ॥ ३८ ॥ नामदेवस्ततस्तेनभक्तेनगृहमागतः ॥ रंकाबंकेअपितथाभवनंसमुपागते ॥ ३९ ॥
पुनःसनामदेवस्तुतेनभक्तेनसंस्तुतः ॥ रंकागृहेसमायातोदातुंवासोधनानिच ॥ ४० ॥ आगत्याग्रेप्रददृतंदृष्ट्वाबंकातिकोपिनी ॥
किमर्थमेतद्दुष्टंमेगृहेसंस्थापितंधनम् ॥ ४१ ॥ नीत्वागच्छगृहात्स्वामिन्नोचेद्गच्छाम्यहंत्वितः ॥ इत्युक्त्वासापतिंनीत्वाचलितातदृष्ट्वा
हाद्भुतम् ॥ ४२ ॥ अथतांनामदेवस्तुवारयामासयत्नतः ॥ वस्त्रमेकंप्रयत्नेनरंकाजग्राहतत्करात् ॥ ४३ ॥ एवंतच्चरितंदृष्ट्वावि
ष्णुर्वैष्णवरूपधृक् ॥ नामदेवेनसहितोमुमुदेभक्तवत्सलः ॥ ४४ ॥ यावज्जीवमुभावेवंनिःस्पृहौविठ्ठलेतिवै ॥ जपंतौश्रीहरेर्धामजग्म
तुर्वपुषःक्षये ॥ ४५ ॥ एवंलक्ष्मणदासोऽभून्महाभक्तोऽतिविश्रुतः ॥ लड्डूभक्तोवभूवैकःकथयिष्यामितत्कथाम् ॥४६॥ तीर्थया
त्रांभ्रमन्सोऽथबहुदूरंगतःक्वचित् ॥ तत्रैकाराजपूज्यासीद्देवीमूर्तिर्विलक्षणा ॥४७॥ राजाज्ञयामनुष्यस्यबलिस्तस्यैस्थितोऽन्वहम्॥अयं
यस्यगृहेयातस्तस्यदेवीबलिःस्थितः ॥४८॥ लड्डूभक्तंगृहस्थस्सनीत्वाराज्ञेसमर्प्पयत्॥तंगृहीत्वाततोराजाआहूयबलिदायकम्॥४९॥
देवीमंदिरमागत्यबलिंदापयितुंस्थितः॥स्नापयित्वाप्यलंकृत्यमूर्तेरग्रेनिधायतम् ॥५०॥ लड्डूभक्तशिरच्छेत्तुंबलिदातासमुत्थितः ॥ म
द्वधादेकमेवात्रचिरंजीवतुकश्चन ॥५१॥ इतिसंतोषितस्तूष्णींतस्थौनोवाचकिंचन ॥ देवीमूर्तिस्ततस्तंतुबलिदातारमच्छिनत् ॥ ५२ ॥
पलायितस्ततोराजाहृष्ट्वातत्कदनंमहत् ॥ लड्डूभक्तस्तुतुष्टावभद्रकालीमनन्यधीः ॥ ५३ ॥ वरंब्रूहीतिसातुष्टादेवीप्राहाथसोऽब्रवीत् ॥

जगदंबनरंत्यक्त्वागृहाणपायसंबलिम् ॥ ५४ ॥ तेनैवराज्येनृपतौप्रजायांवरदाभव ॥ पुनराहवरंब्रूहीत्युक्तःप्राहकृतांजलिः ॥ ५५ ॥
हरिभक्तिर्दृढामेऽस्तुत्वत्प्रसादान्महेश्वरि ॥ वरद्वयंददौश्रुत्वादेवीचांतर्दधेतदा ॥ ५६ ॥ रात्रौस्वप्नेमहामायातंराजानंचतत्प्रजाम् ॥
आहाद्यादिनरंत्यक्त्वापायसादिकमर्पय ॥ ५७ ॥ इतिदृष्ट्वातदास्वप्नंप्रातरुत्थायभूपतिः ॥ लड्डूभक्तस्यशिष्योऽभूत्पायसादिभिरे
वताम् ॥ ५८ ॥ पूजयामासकासारंपरंविस्मयमागतः ॥ एवंतस्यप्रसन्नाभूज्जगदंबापिभक्तितः ॥ ५९ ॥ इति श्रीभगवद्भक्तिमाहा
त्म्येलड्डूभक्तचरितंनामषोडशाधिकशततमःसर्गः ॥ ११६ ॥ छ ॥ संतनामाबभूवैकःकुटुंबीवैष्णवोत्तमः ॥ भिक्षयान्नंगृहीत्वासभो
जयामासवैष्णवान् ॥१॥ नकश्चिद्विमुखोगच्छेन्मद्गृहादितिमेव्रतम् ॥ एकदासतुभिक्षार्थंगतोग्रामांतरेक्वचित् ॥२॥ अथतद्भवनंसाधु
रेकस्मिन्दिवसेगतः ॥ पत्नींपप्रच्छकुत्रास्तिसंतभक्तोवदाशुमे ॥ ३ ॥ श्रुत्वासाचातिकोपेनसाधुंप्राहातिनिष्ठुरम् ॥ चुल्ल्यांगतोऽसौश्रु
त्वातद्वाक्यंसाधुस्तुतत्क्षणात् ॥ ४ ॥ उत्थायचलितस्तस्मात्स्थानादुद्विग्नमानसः ॥ अथमार्गेसंतभक्तोदृष्ट्वातंचबुभुक्षितम् ॥ ५ ॥
प्रणम्योवाचसाधोत्वमागच्छागच्छमेगृहम् ॥ मुक्त्वायथेष्टंगच्छत्वंततःसाधुरुवाचतम् ॥ ६ ॥ तवगेहेगतः पूर्वंसकुत्रास्तीतिमेवचः ॥
श्रुत्वाचुल्ल्यांगतःसेतित्वत्पत्नीप्राहमांरुषा ॥ ७ ॥ अतोनगंतुमिच्छामितवगेहेऽस्तिकर्कशा ॥ इतितद्वचनंश्रुत्वासंतभक्तोऽब्रवीच्चत
म् ॥ ८ ॥ नमेऽस्तिकर्कशास्वामिन्सत्यमुक्तंवचस्तया ॥ चुल्लीसिद्ध्यर्थमेवाहमागतोऽत्रास्मिनिर्धनः ॥ ९ ॥ तस्मादागच्छभोःस्वा
मिन्कृपांकृत्वाममोपरि ॥ आनीयस्वगृहंतंतुभोजयित्वाव्यसर्जयत् ॥ १० ॥ तदादितस्यगेहेतुअक्षयान्नादिकंह्यभूत् ॥ भगवत्कृ

पयानासीद्धानिःकस्यापिवस्तुनः ॥ ११ ॥ एवंत्रिलोकनामाभूत्स्वर्णकारोऽतिभक्तिमान् ॥ अलंकारादियत्तस्यवेतनाद्यद्धवर्द्धनम् ॥ १२ ॥ तत्सर्वंप्रददौसद्भ्योबंधुभ्योऽनिच्छयाकिंचित् ॥ एकदानृपतेःकन्याविवाहःसमुपागतः ॥ १३ ॥ तदाराजात्रिलोकंतुसमाहूयददौस्वयम् ॥ सुवर्णमस्यशीघ्रंत्वंकुर्वलंकरणंशुभम् ॥ १४ ॥ सगृहीत्वासुवर्णंतुहृष्टःस्वंगृहमागतः ॥ संस्थाप्यतत्सुवर्णंससाधुसेवनतत्परः ॥ १५ ॥ विसस्मारत्वलंकारनिर्माणमथभूपतिः ॥ दिनद्वयेऽवशिष्टेतुविवाहस्यतदानृपः ॥ १६ ॥ पदातिनात्रिलोकंतंधृत्वासन्निधिमानयत् ॥ अरेऽलंकरणंजातमित्युक्तःसोऽब्रवीन्नृपम् ॥ १७ ॥ किंचिदस्तितुकर्तव्यंकृत्वाद्यैवददाम्यहम् ॥ इत्युक्त्वागृहमागत्यराजभीत्यापलायितः ॥ १८ ॥ वनंगत्वानिलीयासौचिंतयज्जगदीश्वरम् ॥ अस्यश्रीभगवान्कृष्णोभक्तानुग्रहकारकः ॥ १९ ॥ स्वयंत्रिलोकरूपेणकृत्वालंकरणंशुभम् ॥ क्षणादेवसराजाग्रेनीत्वालंकरणंददौ ॥ २० ॥ राजालंकरणंदृष्ट्वामहासुंदरमद्भुतम् ॥ त्रिलोकरूपिणेतस्मैददौबहुधनंमुदा ॥ २१ ॥ पारितोषिकमादायनत्वाभूपंत्रिलोकवत् ॥ गृहमागत्यचोत्साहंचक्रेनृपधनैरपि ॥ २२ ॥ ज्ञातीन्संभोजयामाससाधुभ्योऽन्नंददौमुदा ॥ अथत्रिलोकभवनेमहोत्साहंकरोतिसः ॥ २३ ॥ गृहीत्वान्नंत्रिलोकंतुवनंगत्वाब्रवीद्वचः ॥ गृहाणकिंचिदेतस्मान्मिष्टान्नंगच्छतत्रवै ॥ २४ ॥ इतिश्रुत्वात्रिलोकस्तुभुक्त्वामिष्टंतुतत्करात् ॥ शनैःशनैर्गृहेगत्वादृष्ट्वातत्रमहोत्सवम् ॥ २५ ॥ पत्नींपप्रच्छकिमिदंकुरुषेयन्महोत्सवम् ॥ श्रुत्वापत्नीतुतंप्राहचिंतितापतिवाक्यतः ॥ २६ ॥ किमेतद्भाषसेनाथभ्रांतिमानिवमांप्रति ॥ पूर्वेद्युर्नृपतेर्गेहान्नीत्वाभूरिधनंत्वया ॥ २७ ॥

पारितोषिकमादायतस्योत्सवइतिप्रभो॥इतिपत्नीवचःश्रुत्वात्रिलोकश्चातिविस्मितः ॥ २८ ॥ श्रीहरेःकृपयाचेदंसर्वंजातममन्यत ॥
ज्ञात्वैवंनिजभक्तस्यरक्षणंकुरुतेहरिः ॥ २९ ॥ ततोऽतिदृढभक्तोऽभूद्ययावंतेहरेःपदम् ॥ एवमन्येबभूवुर्येभक्तास्तानत्रनामतः ॥ ३० ॥
कीर्तयिष्यामितेसर्वेकीर्तिताभक्तिदायकाः ॥ सोमदासोभीमदासस्त्रिविक्रमरघूतथा ॥ ३१ ॥ मुकुंदश्चापिगोपालभक्तश्चैवगणेश्वरः ॥
वाल्मीकिनामाचतथावृद्धव्यासस्तथैवच ॥ ३२ ॥ जगतोविठ्ठलाचार्य्योडंडभोलातथैवच ॥ हरिदासस्तथालाषच्छीतरश्चोद्धवस्त
था ॥ ३३ ॥ कपूरीभक्तइत्येकोदेवानंदस्तथैवच ॥ नरहर्य्यानंदइतिमुकुंदाख्योमहामतिः ॥ ३४ ॥ संतरामस्तथाखेमःश्रीरंगो
नंदइत्यपि ॥ विष्णुश्रीनमइत्येषद्वारकादासमाधवौ ॥ ३५ ॥ रूपदामोदरश्चैवमंडनोनृहरिस्तथा ॥ लोहांगःकेशवश्चैवभगवान्पाल
कंधरः ॥ ३६ ॥ प्रयागदासोगोपालोबद्रीनाथस्तथैवच ॥ केशवोहरिनाथश्चभीमखेमातथैवच ॥३७॥ गोविंदोब्रह्मचारीतिबालकृष्णा
भिधस्तथा ॥ जडपूर्वश्चभरतोगोपीनाथश्चयाचकः ॥३८॥ गजपतिर्मुकुंदश्चेत्येतेऽभूवंश्चसाधवः॥एवंप्रतापरुद्रोऽभूद्राजानीलाचलस्य
सः ॥३९॥ शिष्योऽभूत्कृष्णचैतन्यप्रभोरेकदिनेसतु॥कृष्णचैतन्यनिकटेसमागत्यस्थितस्तदा ॥४०॥ राजानंकृष्णचैतन्योमहाक्रोधे
नसंयुतः॥प्रतिज्ञामकरोत्तंतुनद्रक्ष्यामिपुनर्नृपम् ॥४१॥ प्रज्ञायरुद्रआयातोभूयोभूयोऽपिभक्तितः ॥ नतंददर्शश्रीकृष्णचैतन्यस्तंमहाप्र
भुः ॥ ४२ ॥ तदाचोत्कंठितोराजाकथंद्रक्ष्यतिमांगुरुः॥एवंचिंतापरोराज्यंपुत्रायप्रददौस्वयम्॥४३॥विष्णुभक्तस्यरूपेणजगन्नाथमुपा
गतः॥रथयात्रादिनेतत्ररथाग्रेनृत्यमाचरन् ॥ ४४॥अथश्रीकृष्णचैतन्यप्रभुस्तत्रसमागतः॥प्रतापरुद्रंदृष्ट्वासतुतोषतत्क्षणात्प्रभुः ॥४५॥

आलिंग्यतमुवाचासौगतस्तेराज्यतोमदः ॥ अतःपरंमेशिष्योऽभूर्हरिभक्तिर्दृढास्तुते ॥ ४६ ॥ इत्याकर्ण्यगुरोर्वाक्यंराजानत्वापुनः
पुनः ॥ ननर्तातीवहर्षेणजीवन्मुक्तइवाभवत् ॥ ४७ ॥ एवमन्येबभूवुर्येभक्तास्तान्कीर्तयाम्यहम् ॥ वहोरनोब्रह्मदासोविहारीचतुरादि
कः ॥ ४८ ॥ गंगारामश्चगोविंदोलालदासस्तथैवच ॥ प्रियादासस्तथातत्रमहाभक्तोबभूवह ॥ ४९ ॥ रसिकश्चग्रंथकर्तामहारसिकसत्तमः ॥
भक्तःकेशवदासेतिबभूवातिमहायशाः ॥ ५० ॥ इतिश्रीभगवद्भक्तिमाहात्म्येत्रिलोकादिचरितंनामसप्तदशाधिकशततमःसर्गः ॥ ११७ ॥
गोविंदस्वामिनामाभूद्भक्तस्तत्पूजकात्मजः ॥ कथामस्यप्रवक्ष्यामिपरमाश्चर्य्यकारिणीम् ॥ १ ॥ मथुरायांस्थितोविप्रोगोविंदस्यच
पूजकः ॥ तस्यपुत्रोबभूवैकोनाम्नागोविंदइत्यसौ ॥ २ ॥ बाल्येगोविंदपूजांसपश्यंस्तद्भक्तिमानभूत् ॥ दृष्ट्वागोविंदमूर्तिंसबालोऽयमि
त्यमन्यत ॥ ३ ॥ यथाबालोऽन्यबालेनक्रीडत्येवव्रजौकसः ॥ गोविंदमूर्त्याचिक्रीडबालभावान्निरंतरम् ॥ ४ ॥ अथश्रीभगवांस्तत्र
चिक्रीडेबालरूपधृक् ॥ तंसपश्यतिगोपालोनान्यःकोऽपिचमानुषः ॥ ५ ॥ एकस्मिन्दिवसेबालोमठाद्बहिरुपाह्वयत् ॥ अथगोविं
ददेवस्तुशिशुवेषमुपागतः ॥ ६ ॥ चिक्रीडतुदण्डखण्डदंडाभ्यांतौपरस्परम् ॥ भूमिंखनित्वासंस्थाप्यदंडखंडंततःपरम् ॥ ७ ॥ किं
चिन्निहत्यदंडेनपुनःशीघ्रंनिहंतियः ॥ सजयीचापरस्तेनजितोरिंगतितत्पुनः ॥ ८ ॥ एवंपरस्परंक्रीडन्गोविंदोजितवान्हरिम् ॥
अजितोऽपिहिभक्तेनाजितोभक्त्यावशीकृतः ॥ ९ ॥ तदासभगवान्बालोदंडखंडंतुसत्वरम् ॥ गृहीत्वास्वमठेशीघ्रंप्रययौतद्भयादिव ॥
॥ १० ॥ अथपूजकपुत्रोऽपिग्रहीतुंतमनुद्रुतः ॥ मठद्वारिगतस्तत्रपूजकैर्विनिवारितः ॥ ११ ॥ अथागत्यमठद्वारात्संमुखेभुविसंस्थितः ॥

रुदन्गालिंददौतस्मैगोविंदायमुहुर्मुहुः ॥ १२ ॥ बहिरेष्यसिचेदद्यत्वांतुद्रक्ष्याम्यहंपुनः ॥ एवंब्रुवन्रुदन्भूयोददद्गालिंस्थितोबहिः ॥
॥ १३ ॥ अथसाकमभूत्तस्यमातानिन्येगृहंतुतम् ॥ तत्रापिनासौबुभुजेतमेवहृदिसंस्मरन् ॥ १४ ॥ अथगोविंददेवस्तुस्वप्नेपूजकमब्र
वीत् ॥ गोविंदोबालकोयोऽसौममातीवप्रियोऽस्तिभोः ॥१५॥ नभुंक्तेतेनमद्दोषान्मयाप्यद्यनभक्षितम् ॥ अतःप्रातस्तमानीयभोजयि
त्वासमर्प्पय ॥ १६ ॥ महाप्रसादमित्येवंदृष्ट्वास्वप्नात्समुत्थितः ॥ गोविंदशिशुमानीयभोजयामासयत्नतः ॥ १७ ॥ भगवानपितद्रूपो
बहिरेत्यपुनःस्वयम् ॥ क्रीडयित्वाद्रुतंतेनबालेनसहितोद्रुतम् ॥ १८ ॥ एवमेकदिनेबालोरुदन्नेकांतभूमिगः ॥ अर्कवृक्षफलेनाथगो
विंदेनप्रताडितः ॥ १९ ॥ सोऽप्युत्थाप्यफलंनीत्वादुद्रावातित्वरान्वितः ॥ अटंस्त्वतिचिरेणासौधृतोनीतोगृहेचयः ॥ २० ॥ दत्तंतु
भोजनंभोक्तुंसयदासमुपस्थितः ॥ तदासस्मारशौचन्तुनकृतंतदुपद्रवात् ॥ २१ ॥ जनन्यैप्राहगोविंदोमामर्कस्यफलेनसः ॥ संता
ड्योद्वेजयामासनशौचंकृतमित्यहो ॥ २२ ॥ ततस्तज्जननीचित्रंमत्वातद्भाषितेनच ॥ हसन्तीजलमादायददौतंशौचमाचरत् ॥२३॥
एवमेकदिनेश्रीमद्गोविंदस्यचपूजने ॥ नीत्वासर्वरसंचान्नंपूजकश्चलितोमठे ॥ २४ ॥ गोविंदशिशुरभ्येत्यरुद्धामार्गेस्थितोऽब्रवीत् ॥
अहोमह्यंपुरादेहिततोऽस्मैत्वंसमर्प्पय ॥ २५ ॥ भुक्त्वाऽयंप्रथमंयातिततःकष्टान्निमिलिष्यति ॥ भुज्यतेचेन्मयापूर्वंतदायास्याम्यहंस
ह ॥ २६ ॥ इत्युक्तःपूजकःक्रुद्धोगत्वातत्पितुरंतिके ॥ उवाचपूजकंस्वामिन्गृह्णतांनकरोम्यहम् ॥ २७॥ अयंतेतनयोनाम्नायोवैगोविंद
उच्यते ॥ करोत्यनर्थंमार्गेचरुद्धावदतिनिर्भयम् ॥ २८ ॥ देहिमेप्रथमंभोक्तुंततश्चास्मैप्रयच्छभोः ॥ इतिश्रुत्वापितातस्यतत्रागत्या

ब्रवीत्सुतम् ॥ २९ ॥ किमिदंकुरुषेऽनर्थंश्रुत्वासोऽतीवनिर्भयः ॥ प्रोवाचपितरंसोऽपिपिताप्रोवाचतंपुनः ॥ ३० ॥ नगमिष्यामि
चाद्यत्वंबहिर्मुंक्ष्वमठेतुसः ॥ भुक्त्वागमिष्यतिबहिस्त्वयासहनसंशयः ॥ ३१ ॥ तथास्वीकृत्यबाह्येसबुभुजेपूजकोददौ ॥ मठेऽन्नंवि
ष्णवेसोऽथभुक्त्वाबहिरुपागतः ॥३२॥ तंदृष्ट्वाशिशुगोविंदस्त्यक्त्वाऽन्नंससमुत्थितः ॥अहोऽयंप्रथमंयातिवनंत्यक्त्वातुमामिह॥३३॥
अतोमयानभोक्तव्यंसहानेनव्रजाम्यहम् ॥ इत्युक्त्वाप्रययौशीघ्रंसर्वेदृष्ट्वातिविस्मिताः ॥ ३४ ॥ किंवदत्येवबालोऽयमुन्मत्तइतिदृ
श्यते ॥ इतिसंचिंतयंतस्ते ययुःकार्यार्थमातुराः ॥३५॥ अतोऽस्मैप्रथमंदेहिततोमह्यंसमर्प्पय ॥ तदादितस्मैशिशवेपूजकोऽन्नंददौमुदा
॥ ३६ ॥ एवंगोविंदबालःसबाल्यादेवातिभक्तिमान् ॥ गृहीधर्मेण श्रीकृष्णंपूजयामासभक्तितः ॥ ३७ ॥ लोकेभुक्त्वाखिला
न्कामाञ्छ्रीकृष्णस्यप्रसादतः ॥आयुषोंऽतेजगामासौवैकुंठंयोगिदुर्लभम् ॥३८॥ एवंश्रीरघुनाथाख्योगोपीनाथस्तथैवच ॥ रामभद्रेति
विख्यातःसर्वेवैष्णवसत्तमाः ॥ ३९ ॥ इति श्रीभगवद्भक्तिमाहात्म्येगोविंदस्वामिचरितंनामाष्टादशाधिकशततमःसर्गः ॥११८॥ छ ॥
गुंजामालीबभूवैकःपश्चिमेविष्णुभक्तिमान् ॥ लाडाहरइतिख्यातेग्रामेधनसमृद्धिमान् ॥ १ ॥ तस्यैकतनयोऽकस्माद्युवामृत्युमुपा
गतः ॥ गुञ्जामालीततोगेहाद्विरक्तोऽभूदतिव्यथः ॥ २ ॥ धनंसर्वंद्विधाकृत्यपत्नीपुत्रस्त्रियोस्तथा ॥ दत्त्वोवाचगृहाणेदंयाम्यहंमथुरापु
रीम् ॥ ३ ॥ अथस्नुषाप्रणम्याहकिमनेनधनेनमे ॥ भोगायधनमिच्छंतिनाहंभोगाधिकारिणी ॥ ४ ॥ सहत्वयैवयास्यामिकुर्वती
तवसेवनम् ॥ गुंजामालीतिवचनंश्रुत्वापत्न्यैददौधनम् ॥ ५ ॥ कियन्नीत्वाधनंपुत्रस्त्रियासहसमागतः ॥ मथुरायांव्रजन्नेकोमठोजीर्ण

श्चिरंतनः ॥ ६ ॥ तन्मध्येकृष्णमूर्तिश्चस्थित्वातस्यमठस्यसः ॥ समीपेसकुटीकृत्वातस्थौतत्रापिभक्तितः ॥७॥ स्नुषापितस्यसद्बुद्धि
र्ब्रह्मचर्य्यपरायणा ॥ शुश्रूषयन्तीश्वशुरंपितृवद्भक्तितत्परा ॥ ८ ॥ पूजयामासकृष्णस्यतांमूर्तिंचातियत्नतः ॥ गुंजामालीस्नुषा
नित्यंब्रह्मचर्य्यपरायणा ॥ ९ ॥ यदानिवेद्यचान्नंसाबहिरायातिवैक्षणम् ॥ तदान्नंव्यक्तमेवाभूदंगुलीभिस्तुखंडितम् ॥ १० ॥
एवंप्रत्यहमाश्चर्य्यंतयोर्भक्तिप्रभावतः ॥ एकदाशिशवस्तत्रक्रीडितुंसमुपागताः ॥ ११ ॥ धूलीभिरिष्टकाभिश्चकिरंतश्चपरस्परम् ॥
भगवन्मूर्तिमपितांधूल्यासञ्छादयंतिहि ॥ १२ ॥ गुंजामालीस्नुषादृष्ट्वाधूलीभिर्धूसरंहरिम् ॥ ततस्तेशिशवःसर्वेतयानिर्भर्त्सितागं
ताः ॥ १३ ॥ ततोनैवेद्यमादायमूर्त्यग्रेप्रददौस्नुषा ॥ बहिरेत्यस्थिताद्वारंविधायतदनंतरम् ॥ १४ ॥ गृहेगत्वाददर्शान्नमच्छिन्नं
चिंतिताभवत् ॥ गुंजामालिनमाहान्नंनभुक्तंहरिणाविभो ॥ १५ ॥ सोऽपिदृष्ट्वाविचिंत्यातोहरेर्दत्त्वापिधानकम् ॥ मुहुःक्षमापयि
त्वाथगत्वादृष्ट्वातथास्थितम् ॥ १६ ॥ बहिरागत्यतूष्णींसतस्थौचिंतासमन्वितः ॥ स्नुषांप्राहपुनर्मोहात्त्वंभुंक्ष्वान्नमहंतुन ॥ १७ ॥
तावद्भोक्ष्यामियावन्नोभोक्ष्यतिश्रीहरिःस्वयम् ॥ श्रुत्वासाप्राहनैवाहमपिभोक्ष्यामिकिञ्चन ॥ १८ ॥ ततस्ताभ्यांक्षुधार्ताभ्यांनैवभु
क्तंतुकिञ्चन ॥ नैवेद्यंश्रीहरेरग्रेदत्त्वासुषुपतुर्निशि ॥ १९ ॥ उभौस्वप्नेहरिःप्राहदिवायेशिशवःस्थिताः ॥ तेऽतीवमेप्रियायस्माद्युवाभ्यां
यद्बहिष्कृताः ॥ २० ॥ ततोभुक्तंननैवेद्यंतस्मादानयतंतुतान् ॥ इतिदृष्ट्वातुसास्वप्नंश्वशुरेणसहस्नुषा ॥ २१ ॥ उत्थायतंहरिंप्राह
प्रातरेष्यंतितेऽर्भकाः ॥ धूल्यामेवयदिप्रेमभवतेप्रददाम्यहम् ॥ २२ ॥ किंत्विदंधूलिभिर्दुष्टंभविष्यतिततोऽधुना ॥ भुंक्ष्वप्रातस्तु

दास्यामिधूलिस्तेशिशुभिःसह ॥ २३ ॥ इति श्रुत्वाततोदेवःसुप्रीतोबुभुजेतुतत् ॥ नैवेद्यंससमागत्यदृष्ट्वाभुक्तंयथापुरा ॥ २४ ॥
मुमुदेश्वशुरस्तस्यागुंजामालीननर्तह ॥ एवंतौभगवद्भक्तौदेहांतेमुक्तिमापतुः ॥ २५ ॥ एवंविठ्ठलनामाभून्महाराष्ट्रेऽतिभक्तिमा
न् ॥ मुरलीरघुनाथश्चतथैवयदुनंदनः ॥ २६ ॥ हरिदासोमुकुंदश्चविष्णुदासश्चतुर्भुजः ॥ दण्डप्रणामकर्ताचकेशवश्चातिभक्तिमान्
॥ २७ ॥ एवंस्त्रियोभक्तिमत्योबभूवुःकथयामिताः ॥ दत्त्वादांभिककन्यैकासीतानामेतिविश्रुता ॥ २८ ॥ उमागंगातथागौरीगो
पालेत्येवमादयः ॥ एवंगणेशदेवीतिराज्ञीभक्तावभूवह ॥ २९ ॥ कथामस्याःप्रवक्ष्यामिशृण्वतांप्रीतिवर्द्धनीम् ॥ गणेशदेवीश्रीकृष्णं
पूजयंत्यथवैष्णवान् ॥ ३० ॥ महाभक्त्याचर्चयामासज्ञात्वाश्रीकृष्णसेवकान् ॥ एकदाकोऽपिदुष्टात्माभूत्वावैष्णवरूपधृक् ॥ ३१ ॥
जनयामासराज्ञ्यैभक्तिंतकपटचेष्टितैः ॥ ततःसधूर्तभक्तस्तुराज्ञोविश्वासवानभूत ॥ ३२ ॥ अंतःपुरेऽपिसंयातिस्वेकालेसहतिष्ठति ॥
राजापिवैष्णवंमत्वानकिंचित्तमुवाचह ॥ ३३॥ एकस्मिन्दिवसेराज्ञीतस्थावेकांतमंदिरे ॥ धूर्तभक्तोगतस्तत्रक्षुरिकांप्रतिगृह्यच ॥३४॥
राज्ञींजघानजंघायांशक्त्याचैवंवदन्बली ॥ कथंनवर्तसेमह्यंदेहीत्येवंवदन्मुहुः ॥ ३५ ॥ निःससारततोरक्तंदृष्ट्वातद्धूर्तवैष्णवः॥त्रस्तःप
लायितस्तस्मात्स्थानात्प्राणरिरक्षया॥३६॥अथराज्ञीसमुत्थायबबंधतत्क्षणंस्वयम् ॥ राजातत्रगतोगेहेशय्यायांगंतुमास्थितः ॥३७॥
ददर्शशोणितंवस्त्रेसंदेहान्नाब्रवीत्प्रियाम् ॥ किमिदंदृश्यतेरक्तमितिश्रुत्वाब्रवीन्नृपम् ॥ ३८ ॥ स्त्रीधर्मेणेदमभवन्नात्रागच्छसमांतिकम्॥
श्रुत्वातद्वचनंराजापरावृत्यागतोबहिः ॥ ३९ ॥ चतुर्थेदिवसेराजाकामुकोमंदिरंगतः ॥ पत्नीसमीपमागत्यदृष्ट्वातामतिदुःखिता

म् ॥ ४० ॥ ततःपप्रच्छतांराजादुःखंकिंवर्ततेतव ॥ ततोराज्ञीनृपंप्राहधूर्तभक्तस्यचेष्टितम् ॥ ४१ ॥ तस्मिन्नेवदिनेशक्त्याजंघा
यांविनिहत्यसः॥मत्तोधनंजिघृक्षुःसन्दष्ट्वामेशोणितंत्विदम् ॥ ४२ ॥ प्रपलाय्यगतोगेहान्नजानेऽत्रास्तिवानवा ॥ साधुर्लोभवशादेवं
तस्यदंडोभवेदिति ॥ ४३ ॥ ज्ञातंमयानभवतेप्रोक्तंतस्मिन्दिनेतथा ॥ इतिश्रुत्वापतिस्तस्याभक्तिधैर्याच्चुतोषह ॥ ४४ ॥ सत्यं
तयार्थप्रिययाभुक्त्वाराज्यमकंटकम् ॥ अंतेजगामनृपतिःश्रीकृष्णपदमुत्तमम् ॥ ४५ ॥ एवमन्यास्तथाजाताःप्रियाभक्ताब्रवीमि
ताः ॥ कलालसासत्यभामाकोलीमानयतीतथा ॥ ४६ ॥ यमुनाकमलादेवामृगाहीरम्बदेवकी ॥ एवमाद्यामहाभक्ताबभूवुर्योषितोऽपि
च ॥ ४७ ॥ इति श्रीभगवद्भक्तिमाहात्म्येगुंजमालीगणेशदेवीचरितंनामैकोनविंशत्यधिकशततमःसर्गः ॥ ११९ ॥छ॥ अंतर्वेदेकान्य
कुब्जग्रामस्यतुसमीपतः ॥ भूमिग्रामोऽस्तितत्राभून्नरवाहननामतः ॥ १ ॥ सभक्तोनौकयावैश्यव्यापारंकृतवांस्ततः ॥ अन्नवस्त्रादि
नासाधूंस्तोषयामासयत्नतः ॥ २ ॥ एकदातस्यनौःसर्वसामग्रीसहितावलात् ॥ केनाप्यपहृतातस्यलुंटाकेनबलीयसा ॥ ३ ॥ आ
नीतोभवनेतेनबद्धासौनरवाहनः ॥ ततोलुंटाकभवनसमीपान्नरवाहनः ॥ ४ ॥ तत्रस्थितोहरिंचित्तेस्मरन्दिव्त्रिदिनोत्तरम् ॥ नरवा
हनायलुंटाकदास्यन्नंदातुमागता ॥ ५ ॥ दृष्ट्वातंसाधुरूपंसानरवाहनमब्रवीत् ॥ अहोऽयंहरिवंशस्यशिष्योभूत्वात्रतिष्ठति ॥ ६ ॥
अतस्तमुच्चैःश्रीराधावल्लभेतिध्वनिंकुरु ॥ श्रुत्वापृच्छतिकस्त्वंभोतदातस्मैवदद्भुतम् ॥ ७ ॥ गोस्वामिहरिवंशस्यशिष्योऽहमितितं
वद ॥ श्रुत्वातन्नामसत्कृत्यसर्वदास्यतितेधनम् ॥ ८ ॥ ततोदासीवचःश्रुत्वाचक्रेसर्वंतदुक्तवत् ॥ लुंटाकस्तंमहाभक्त्यासंपूज्यप्र

ददौधनम् ॥ ९ ॥ नैवंकुत्रापिवक्तव्यमित्युक्त्वाप्रददौधनम् ॥ ततस्तंचापिलुंटाकंशिक्षित्वानरवाहनः ॥ १० ॥ महाभक्तंवि
धायाथनीत्वास्वीयधनंमुदा ॥ तदातंचापिस्वगृहमाजगामातिहर्षितः ॥ ११ ॥ अंतेहरिंजगामैवंश्रीगोविंदजनार्दनौ ॥ दामोद
रश्चेश्वरश्चमायानंदस्तथैवच ॥ १२ ॥ गुंठलस्तुलसीदासोगौरीदासस्तथापरः ॥ जटीआनपुरेभाऊदाजीभक्तोबभूवह ॥ १३ ॥
बंदीवेश्योरामदासोभगैतेमोहनस्तथा ॥ माडौटेजगदीशोऽभूल्लक्ष्मणश्चरथावलौ ॥ १४ ॥ तथासोमपथग्रामेभगवानितिविश्रुतः ॥
सलखानपुरेतद्वद्गोपालोऽभून्महायशाः ॥ १५॥ योवनेरपुरेऽथान्योगोपालोभक्तिमानभूत् ॥ कुटुंबीसकलत्रादियुक्तोऽप्यंतस्तुनिःस्पृ
हः ॥ १६ ॥ अथैकदिवसेतस्यवंशारण्यंगतःपुरा ॥ विरक्तःसतुगोपालंश्रुत्वाभक्तंसमागतः ॥ १७ ॥ तत्परीक्षांजिघृक्षुःस्मगो
पालोद्वारमागतः ॥ विचार्यतंनजानामिभक्तोऽयंकोऽन्यपूर्वकः ॥ १८ ॥ सामान्यवैष्णवधियासत्कृत्यभक्तिपूर्वकम् ॥ उवाचा
गच्छभवनेश्रुत्वोवाचसपूर्वकः ॥ १९ ॥ अहोममैषनियमोनपश्याम्यबलामुखम् ॥ त्वंकुटुंबीतवगृहेकथंयास्याम्यहंव्रती ॥ २० ॥
श्रुत्वातमाहगोपालःस्त्रियःस्थास्यंतिकुत्रचित् ॥ इत्युक्त्वातास्तिरोधायविरक्तंगृहमानयत् ॥ २१ ॥ अथागत्यविरक्तस्तुदृष्ट्वाकस्या
श्चिदाननम् ॥ क्रुद्धोगोपालवदनेनिजघानचपेटया ॥ २२ ॥ अरेत्वयादर्शितंमेस्त्रीमुखंकथमद्यभोः ॥ इतिजल्पंस्तदातस्मैगोपालः
प्राहहृष्टवत् ॥ २३ ॥ अहोभाग्यमभूदस्यकपोलस्यनसंशयः ॥ द्वितीयमपिचैवेदंकृतार्थंस्यात्तदातुसत् ॥ २४ ॥ ययातुभवने
भक्तदर्शितंस्वमुखंहठात् ॥ तस्यादंडःप्रवक्तव्यःकरोम्यद्यैवतेपुरः ॥ २५ ॥ इतिनिर्दंभवचनंश्रुत्वातुकुलजोऽब्रवीत् ॥ अहोस्त्रीणां

नदंडोऽस्तिनतवाप्यस्तिदूषणम् ॥ २६ ॥ अहंतवपरीक्षार्थमागतोऽत्रनसंशयः ॥ यनक्रोधोजितोलोकेतेनसर्वेऽरयोजिताः ॥ २७ ॥
लोभमोहादयोऽन्येयेभक्तिविघ्नकरानृणाम् ॥ इत्युक्त्वासययौकापिगोपालोऽपिगृहेस्थितः ॥२८॥ लषानामबभूवैकोमरुदेशेऽतिभक्ति
मान् ॥ भिक्षामादायसततमन्नंसद्भ्योददौमुदा ॥ २९ ॥ एवंतस्यव्रतंह्यासीदेकस्मिन्दिवसेतदा ॥ दुर्भिक्षमभवद्घोरंतदासोऽप्यतिचिं
तितः ॥३०॥ तस्मिन्दिनेभोजयित्वासाधून्स्वयमुपोषितः ॥ पत्नीमुपोषितांप्राहकिंकरिष्याम्यतःपरम् ॥ ३१ ॥ देशान्तरेऽद्य
गंतव्यंस्थातव्यंचात्रतद्वद ॥ मयात्वेकंतुनिश्चित्यस्थापितंशृणुभोप्रिये ॥ ३२ ॥ यस्मिन्दिनेऽत्रसाधुभ्योनदास्यामिकथंचन ॥
तदासंदीप्यभवनंमरिष्येनात्रसंशयः ॥ ३३ ॥ इत्युक्तासापिनिःशंकातथैवाहपतिंमुदा ॥ रात्रावुभौसुषुपतुर्लषास्वप्नेददर्शह ॥३४॥ वि
ष्णुभक्तःसमागत्यवदत्यतिदयान्वितः ॥ त्वयाभक्तनकर्तव्याचिंतात्द्दिकथंचन ॥३५॥ प्रातरेत्यपुराधीशोमहिषींददतींपयः । पंचाश
न्मानगोधूमानिहागत्यप्रदास्यति ॥ ३६ ॥ कोष्ठयांकृत्वातुगोधूमान्पिधायोपरियत्नतः ॥ अधस्तन्मुखतोनित्यंगृहाणातुलितंस्व
यम् ॥३७॥ महिष्याःपयसस्तक्रंघृतंचापिभविष्यति ॥ तेनभोजयभक्तांस्त्वंयुवाभ्यामपिभुज्यताम् ॥३८॥ दुर्भिक्षभयतोमृत्यौनमनः
कर्तुमर्हसि ॥ इतिस्वप्नंसमीक्ष्यासौसमुत्थायहरिंस्मरन् ॥ ३९ ॥ प्रातःपत्नींवदन्नेतद्ग्रामेशोग्रामणीःस्थितः॥सआहस्वजनान्सर्वान्दु
र्भिक्षोऽयंमहानभूत् ॥ ४० ॥ सर्वेषामन्नमस्त्यत्रसर्वंसंवत्सराधिकम् ॥ लषाभक्तायदत्त्वाहगृह्यतामिदमद्यभोः ॥ ४१ ॥ व्ययीकृते
स्मिन्वक्तव्यंपुनर्दास्याम्यहंतव ॥ इतिश्रुत्वालषाप्राहपर्य्याप्तमिदमेवमे ॥ ४२ ॥ ग्रामणीःस्वगृहंयातोलषाभक्तोऽपितत्क्षणात् ॥

स्वप्नंसंस्मृत्यकोष्ठ्यांसकृत्वातद्दुपाहरत् ॥ ४३ ॥ महिषीघृततक्राभ्यांभोजयामासवैष्णवान् ॥ एवंदुर्भिक्षसमयंसर्वंनिन्येतुतेनवै ॥ ४४ ॥ ततःश्रीमज्जगन्नाथंद्रष्टुंसचलितोऽभवत् ॥ कुर्वन्साष्टांगनमनंपुरुषोत्तमपुरेगतः ॥ ४५ ॥ कृशोऽपिनैवतत्याजसाष्टांगंप्रणतिलषः ॥ अथाष्टादशनालायांदृष्ट्वास्वप्नंतुपूजकः ॥ ४६ ॥ आदायशिबिकांतत्रलषंसंस्थाप्यसंस्कृतम् ॥ दर्शयामासनीत्वातंजगन्नाथंसतांगतिम् ॥ ४७ ॥ दृष्ट्वातत्रजगन्नाथंलषापूजकसद्मनि ॥ अवात्सीत्तत्ररात्रौचजगन्नाथोनृपंप्रति ॥ ४८ ॥ उवाचस्वप्नमध्येचकन्यांदेहिलषायच ॥ प्रातरुत्थायराजासतस्मैदातुंसमुत्सुकः ॥ ४९ ॥ लषमाकारयामासदातुंकन्यांसुरूपिणीम् ॥ लषस्तत्सविधेगत्वानाग्रहीत्तत्सुतांतदा ॥५०॥ राजातंरोधयित्वाचतस्मैकन्यांददौपुनः ॥ जगन्नाथाज्ञयातस्याभवद्वैवाहिकोविधिः ॥५१॥ तदालषोऽग्रहीत्कन्यांगृहीत्वागृहमागतः ॥गृहमागत्यतेनाथाऽभ्यागताश्चैवसाधवः ॥ ५२ ॥ तर्पितास्तुततोयावज्जीवंहरिपदाम्बुजम्॥स्मरन्साधुजनान्नित्यमर्चयन्नतिभक्तितः ॥५३॥ अंतेजगामश्रीकृष्णसन्निधिंयोगिदुर्लभम् ॥५४॥ इतिश्रीभगवद्भक्तिमाहात्म्येलषाभक्तचरितंनामविंशाधिकशततमःसर्गः ॥१२०॥ छ॥ तदाजाग्रामवास्यासीद्गुर्ज्जरेषुचनागरः ॥विप्रोनाम्नातुनरसीमहंतेत्युपनामकः ॥ १॥ सौराष्ट्रदेशेविख्यातःपूर्वंजातोद्विजोत्तमः ॥पश्चात्तुद्वारकायांवैअष्टयोजनपश्चिमे ॥ २ ॥ पर्वतोरैवतोनामतस्यैवतुसमीपतः ॥ जूनागढेतिविख्यातस्तत्रोवासनिरंतरम् ॥ ३ ॥ नरसीपितृमातृभ्यांरहितोज्येष्ठबंधुयुक् ॥ तत्पत्नीचापिभवनेस्वयमस्त्रीकएवसः ॥ ४ ॥ एकदापर्य्यटित्वासग्रामेतस्माद्गृहंगतः ॥ भ्रातृजायामुवाचेदंजलंदेहिपिपासितः ॥ ५ ॥ साकार्य्यवशतःक्रुद्धाभर्त्सयंत्यब्रवीद्वचः ॥ कृत्वा

काय्यैश्रमेणाद्ययदत्रागतवानसि ॥ ६ ॥ ततःपिपासितोऽत्यर्थंजलपत्रेवंनलज्जसे ॥ पानभोजनवेलायांदृश्यसेत्वंहिसर्वदा ॥ ७ ॥
नान्यस्मिन्गृहकार्य्येषुततोयाहिपिबान्यतः ॥ ममनैवावकाशोऽस्तिस्वयंनीत्वापिबात्रव ॥ ८ ॥ इतिभ्रातृवधूवाक्यंश्रुत्वाशनिर्मि
वद्द्विजः ॥ तत्कालंनिर्ययौगेहान्मरणेकृतनिश्चयः ॥९॥ कच्चिद्दत्त्वामरिष्येऽद्यनैतस्याःकटुभाषणम् ॥ श्रोतुमिच्छामिचंडायाइतिनि
श्चित्यनिर्गतः ॥ १० ॥ ययौस्वग्रामतःक्रोशत्रयोपरिपिपासितः ॥ गोपनाथेतिनाम्नास्तियत्रलिंगंवरप्रदम् ॥ ११ ॥ तत्रतस्थौ
ससप्ताहमन्नपानविवर्जितः ॥ नमृतस्तुतदोत्थायमर्तुमुद्योगमाचरत् ॥ १२ ॥ गृहीत्वागुरुपाषाणंस्वशिरःशिवलिंगके ॥ संस्थाप्य
हंतुमारब्धःस्मरन्भ्रातृवधूवचः ॥ १३ ॥ अथोतुतोषभगवान्महादेवोदयानिधिः ॥ विप्ररूपधरस्तत्रसमायातोन्यवारयत ॥ १४ ॥
किमर्थमात्महत्येयंक्रियतेमूर्खवत्त्वया ॥ यमिच्छसिवरंब्रूहिप्रियंमत्तोददामिते ॥ १५ ॥ इतिश्रुत्वातुनरसीप्राहतंविप्ररूपिणम् ॥ त
स्मात्तवप्रियंयत्स्याद्दर्शयित्वाप्रदेहितत् ॥ १६ ॥ इतितद्वचनंश्रुत्वाविप्ररूपधरःशिवः ॥ चिंतयामासहृदयेकथंदद्यामहंप्रियम् ॥ १७ ॥
इतिश्रुत्वातुनरसीतस्थौनेत्रेनिमील्यसः ॥ ददर्शाथस्वप्नतुल्यंनीत्वासतंद्विजंशिवः ॥ १८ ॥ आनीयमथुरायांचदर्शयामासस्वप्रिय
म् ॥ प्रदीपधारकंकृत्वानरसींस्त्रीस्वरूपिणम् ॥ १९ ॥ स्वयंशिवोरासनृत्येगत्वोवाचदयान्वितः ॥ अयंकृष्णइयंराधाप्रियमे
तद्द्वयंमम ॥ २० ॥ राधाकृष्णेतिमंत्रोऽयंगृह्यतांसर्वकामदः ॥ ततःकृष्णःशिवंप्राहकोयंदीपधरस्तव ॥ २१ ॥ भक्तोऽयंतवदेवेशमया
नीतस्त्वदंतिके ॥ कृपावलोकनेनेमंकृतार्थंकुरुभूतले ॥ २२ ॥ श्रुत्वेदंशंभुवचनंकृष्णःप्रोवाचशंकरम् ॥ यस्तेभक्तोममातीवभक्तः

प्राणसमः सतु ॥ २३ ॥ त्वनिंदांप्रकुर्वाणोमद्भक्तिंकुरुतेयदि ॥ समद्द्वेष्योनसंदेहःसत्यंसत्यंवदाम्यहम् ॥ २४ ॥ मद्द्वेषान्नरके
घोरेपीड्यतेयमकिंकरैः ॥ पश्चाद्दिट्कृमिरूपणग्रामशूकरयोनिजः ॥ २५ ॥ खिद्यतेऽमेध्यभक्ष्यार्थंजन्मजन्मनिमानवः ॥ अतो
ऽयंतवभक्तश्चेन्ममातीवप्रियः शिव ॥ २६ ॥ इत्युक्त्वानरसींदीपधारिणीरूपधारिणम् ॥ तिष्ठमासंस्मरंश्चित्तेगीतनृत्यपरायणः
॥ २७ ॥ संसारेस्वर्गलोकेऽपिसुखंदास्याम्यनुत्तमम् ॥ परलोकेतुमामेवत्वंसंप्राप्स्यस्यसंशयम् ॥ २८ ॥ यदायदात्वंकार्यार्थेस्मरि
ष्यसितदात्वहम् ॥ वेषांतरेणसंप्राप्तःकरिष्यामितवेप्सितम् ॥ २९ ॥ इत्युक्तोनरसीसर्वंदृष्ट्वास्वप्नवदुत्थितः ॥ गोपनाथस्यनिकटे
तूष्णींतस्थौक्षणंततः ॥ ३० ॥ राधाकृष्णेतिनामैवमंत्रंहृदिजपन्मुदा ॥ उत्थायचशिवंनत्वाययौग्रामांतरंक्वचित् ॥ ३१ ॥ तत्रैक
स्तस्यजातीयोज्ञात्वातंनरसींस्वयम् ॥ अंतर्गतेनहरिणाप्रेरितोऽस्मैददौसुताम् ॥ ३२ ॥ कृत्वाविवाहंस्वग्रामेगत्वातस्थौहरिंभजन् ॥
तत्रकन्यांचपुत्रांश्चसमुत्पाद्यमुमोदह ॥३३॥ सर्वदासाधुभिःसार्द्धंनृत्यगीतपरायणः ॥ कंकरादिकवाद्यानिवादयन्वैस्त्रियोयथा ॥३४॥
अथतत्रसजातीयैस्त्यक्तोभ्रात्रापिसर्वथा ॥ अयंकुलकलंकोमेयदयंनृत्यतिस्वयम् ॥ ३५ ॥ श्रुत्वापिनरसीचित्तेसक्रोधोनाभवत्तदा ॥
कुर्वन्नागतसत्कारंत्यागंचत्यजतांनृणाम् ॥३६ ॥ एवंकतिपयेजातेकालेकोऽपिगृहीतदा ॥ द्वारावतींव्रजंस्तस्मिन्नगरेसमुपागतः॥३७॥
ग्राम्यान्दृष्ट्वासचैकत्रस्थितांस्तन्निकटेगतः ॥ अहंद्वारावतींयामिवर्ततेमेधनंबहु ॥ ३८ ॥ मार्गेचौरभयादत्रसाधुकारश्चकोऽपिचेत् ॥
दत्त्वातस्मैधनंतस्यपत्रंनीत्वाव्रजाम्यहम् ॥ ३९ ॥ नीत्वापत्रमहंतत्रग्रहीष्यामियथासुखम् ॥ इतिश्रुत्वातुतेसर्वेधूर्ताःपथिकमब्रुव

नू ॥ ४० ॥ अहोऽद्यनरसीभक्तःसाधुकारोमहानिह ॥ तत्रगच्छसतेकार्य्यंकरिष्यतिनसंशयः ॥ ४१ ॥ इतिश्रुत्वासपथिकोनर
सीगृहमागतः ॥ उवाचतंधनंह्येतद्गृहीत्वापत्रमर्प्पय ॥ ४२ ॥ द्वारकांयाम्यहंतत्रयथाशीघ्रंमिलेद्धनम् ॥ साधुकारतथाक्षिप्रंकुरुया
मित्वरान्वितः ॥ ४३ ॥ इत्युक्तोनरसीचित्तेचिंतयित्वातिदुर्जयम् ॥ ग्रामीणानांतथाकृष्णंस्मृत्वापथिकमब्रवीत् ॥ ४४ ॥ अ
होचेदंकियत्तेऽस्तिधनंपत्रंददाम्यहम् ॥ इत्युक्तःसददौसप्तशतीर्मुद्रास्तुराजतीः ॥ ४५ ॥ गृहीत्वानरसीमुद्राःपत्रंचपथिकायतत् ॥
दत्त्वासर्वंहरिप्रीत्यैसाधुभ्यःप्रददौमुदा ॥ ४६ ॥ पत्रंलिलेखनरसीश्यामलाययथोचितम् ॥ साधुकारःप्रभवतिमुद्राःसप्तशतीमि
ताः ॥ ४७ ॥ दद्यैवास्मैप्रदातव्यास्त्वयतांसंतिमेगृहे ॥ अथासौपत्रमादायततोद्वारवतींपुरीम् ॥ ४८ ॥ तत्रपप्रच्छसर्वान्सश्याम
लःकोऽस्तिसाधुकृत् ॥ उक्तःसर्वैर्नचात्रास्तिकोऽपिश्यामलनामकः ॥ ४९ ॥ ततोऽतिचिंतितोविप्रोग्रामाद्बाह्यमुपागतः ॥ ददर्शप
थिकस्तत्ररथमेकंमनोरमम् ॥ ५० ॥ श्वेताश्वाभ्यामुह्यमानंतस्योपरिमहाद्भुतम् ॥ साधुकारोऽस्तिकुत्रेतिरथीश्रुत्वातमब्रवीत् ॥ ५१ ॥
अहोऽहंश्यामलोनाम्नासाधुकारोवसामिच ॥ किंतेऽभिलषितंब्रूहीत्युक्तःपथिकआहतम् ॥ ५२ ॥ अहोग्रामेनकेनापिदर्शितस्त्वं
तदात्वहम् ॥ अतिखिन्नःपरावृत्यचलितोनरसीगृहम् ॥ ५३ ॥ त्वन्नाम्नापत्रमेकंतुनरसीप्रददौमम ॥ नीत्वासप्तशतीर्मुद्रास्तामेऽद्यै
वसमर्प्पय ॥ ५४ ॥ इत्युक्त्वानरसीपत्रंश्यामलायसमर्पयत् ॥ सतुपत्रंगृहीत्वातन्नेत्रेसंयोज्यहृष्टवत् ॥ ५५ ॥ पथिकंप्राहध
न्योऽसियदानीयददौमम ॥ अतिप्रियंतस्यपत्रंनानीतंकेनचित्पुरा ॥ ५६ ॥ पथिकायैवमुद्रास्तागृहाणाद्यगृहाद्बहिः ॥ प्रस्थाप्या

हंसुहूर्तेनकश्चिद्गंतुमिहागतः ॥ ५७ ॥ अतोनयामिभवनमित्युक्त्वाप्रददौसताः ॥ मुद्राःश्यामलनामाथपत्रंचापिस्वकंददौ ॥ ५८ ॥
पथिकंचापिसंप्राहवक्तव्योमद्वचःसवै ॥ एवमेवसदापत्रंप्रेषणीयनिरंतरम् ॥ ५९ ॥ इतिश्रुत्वासपथिकोनीत्वापत्रंतथाधनम् ॥ द्वा
रकायामुपागत्ययात्रांचक्रेऽतिभक्तितः ॥ ६० ॥ अथश्यामलनामापिसाधुकारस्तिरोऽभवत् ॥ पथिकोनरसीग्रामंकृत्वायात्रामुपाग
तः ॥ ६१ ॥ तत्रतेदुर्जनाःसर्वेदृष्ट्वातंपथिकंमुदा ॥ तेनसाकंसमायातानरसीमंदिरंद्रुतम् ॥ ६२ ॥ अप्राप्यधनमेषोऽत्रकिंकरिष्य
तिचेतित ॥ द्रष्टुंतद्दुर्दशांदुष्टास्तस्थुःसर्वेस्मिताननाः ॥ ६३ ॥ पथिकस्तत्रचागत्यदृष्ट्वातंनरसींमुदा ॥ प्रणम्यकथयामासधन्यो
ऽसित्वंनसंशयः ॥ ६४ ॥ यस्यतेतादृशोभृत्योद्वारकायांविराजते ॥ श्यामःकमलपत्राक्षोयुवासर्वांगसुंदरः ॥ ६५ ॥ कुण्डलीपीत
वसनःश्रीकृष्णइवचापरः ॥ नविस्मरामितंचाहंकथंचिदपिकुत्रचित् ॥६६॥ दृष्ट्वैवमुद्राःप्रददौपत्रंतेश्यामलोमुदा ॥ इत्युक्त्वाप्रददौ
पत्रंपथिकोनरसींतदा ॥६७॥ नीत्वाशिरसिचोत्थायपथिकस्यप्रदक्षिणम्॥कृत्वाप्रणामंचक्रेसहर्षास्राविललोचनः ॥६८॥ ततस्तदुर्ज
नाःसर्वेश्रुत्वादृष्ट्वातदद्भुतम् ॥ अधोमुखाःस्वस्ववेश्मजग्मुःसर्वेऽतिचिंतिताः॥६९ ॥ नरसीचापितंगेहेस्थापयित्वादिनत्रयम् ॥ शुश्रूष
यित्वादत्त्वाथधनंसविससर्जह ॥ ७० ॥ इति श्रीभगवद्भक्तिमाहात्म्येनरसीभक्तचरितंनामैकविंशाधिकशततमःसर्गः ॥ १२१ ॥
एकदानरसीपुत्रीस्वपतेर्मंदिरेसती ॥ ज्ञातागर्भवतीतस्याःसप्तमेमासिचागते ॥ १ ॥ स्नुषापितुर्गृहात्सर्वैर्भोजनांबरभूषणैः ॥ संतो
ष्याबांधवाग्राम्याइत्याचारस्तुकौलिकः ॥ २ ॥ ततस्तुनरसीपुत्र्यायाश्वश्रूःसातिदुःखिता ॥ स्नुषांदृष्ट्वाब्रवीद्वाक्यंकथंकुर्वेऽहमु

त्सवम् ॥ ३ ॥ अस्याःपितातिनिर्लज्जोदरिद्रोभिक्षुकैःसह ॥ झर्झरंवादयन्नृत्यंकुर्वन्गायतिसर्वदा ॥ ४ ॥ किंकरोमिकपालेमेलिखि
तोविधिनाह्ययम् ॥ एवंमुहुर्भाषमाणातदातस्याःस्नुषास्वयम् ॥ ५ ॥ तातायनरसीनाम्नेप्रेषयामासपत्रकम् ॥ अत्रसर्वेविनिंदंतित्वांत
तोयदिचेद्धनम् ॥ ६ ॥ तवकिंचिद्भवेत्तर्हिसमागत्यतुतेनवै ॥ कृत्वायथोचितोत्साहंपुनर्गच्छेतिमेमनः ॥ ७ ॥ दृष्ट्वातुपत्रंनरसी
तत्कालमुत्थितःस्वयम् ॥ वृद्धोक्षेणोहितंजीर्णंरथमारुह्ययततः ॥ ८ ॥ गायन्हरिकथांभक्त्यास्वजामातृगृहंगतः ॥ अथतत्रत्यम
नुजादृष्ट्वातंनरसींतथा ॥ ९ ॥ हसंतःप्राहुरन्योन्यमेषपश्यागतोऽत्रभोः ॥ तत्पुत्रीतुतदेकांतेपितरंप्राहलज्जिता ॥ १० ॥ किमर्थ
मागतोऽस्यवंहसिष्यंतिजनाइमे ॥ नकिंचिद्वर्ततेतार्हिशीघ्रंगच्छनिजंगृहम् ॥ ११ ॥ इतिपुत्रीवचःश्रुत्वानरसीचातिहर्षितः ॥ पुत्रीं
प्राहत्वयानैवचिंताकार्य्याकथंचन ॥ १२ ॥ पूरयिष्यतितेसर्वंहरिरत्रमनोरथम् ॥ तस्मात्त्वंपृच्छश्वश्रूंवैपृच्छ्यसर्वंलिखापय ॥
॥ १३ ॥ आनीयदेहिमेपत्रंततस्त्वंमुदिताभव ॥ ततस्तुनरसीपुत्रीश्वश्रूंगत्वाब्रवीद्वचः ॥ १४ ॥ पितामेसर्वसामग्रींप्रलिखाप्या
थयाचते ॥ इतिस्नुषावचःश्रुत्वाश्वश्रूर्हास्यंविधायसा ॥ १५ ॥ प्रष्टव्यानात्रकिमपिविस्मृतंतद्विभावय ॥ इत्युक्तासागताश्वश्रूस
मीपंपुनरब्रवीत् ॥ १६ ॥ श्रुत्वाजहाससात्युच्चैःक्रोधेनप्रस्तरद्वयम् ॥ लिखापयित्वाप्रददौस्नुषायैसापिहर्षिता ॥१७॥ गत्वापित्रे
ददौसापिनरसीतत्क्षणंमुदा ॥ झर्झरादिकमादायक्वचिज्जीर्णगृहेस्थितः ॥ १८ ॥ राधाकृष्णौभजन्प्रेम्णातत्रत्यंवेश्मनिन्यधात् ॥
अथवैष्णवरूपेणभगवान्भक्तवत्सलः ॥ १९ ॥ आगत्यतस्मिन्भवनेसर्वसंपाद्यनिर्ययौ ॥ ततस्तुनरसीसर्वानाहूयातिविनीतवत् ॥

॥ २० ॥ वस्त्रालंकरणादीनिभोजयित्वाददौमुदा ॥ सर्वान्संतोष्यवस्त्राद्यैर्दक्षिणाभिस्तथैवच ॥ २१ ॥ सौवर्णप्रस्तरद्वंद्वंसंबंधि
न्यैददौमुदा ॥ साचातिलज्जिताभूत्वाविस्मयंपरमंगता ॥ २२ ॥ ततस्तद्ग्रामनिलयाःप्रशंसुश्चापितंमुदा ॥ तत्रैकाविस्मृताकाचि
द्ब्राह्मणीसासमागता ॥ २३ ॥ नरसीदुहितातस्यैस्वकीयाभरणादिकम् ॥ ददौनंदगृहेसातुनवंसर्वंजिघृक्षते ॥ २४ ॥ ततस्तु
नरसीभक्तःपुनस्तुष्टावतंहरिम् ॥ अथसर्वंसमायातंतदर्थंतद्गृहेपुनः ॥ २५ ॥ नीत्वातन्नरसीतस्यैददौचातिविनीतवत् ॥ स्वयमाग
त्यभवनेराधाकृष्णौभजन्मुदा ॥ २६ ॥ सर्ववैषयिकंसौख्यंहृदिमेनेतृणायसः ॥ अथसानरसीपुत्रीसुषुवेपुत्रमुत्तमम् ॥ २७ ॥ स्थि
त्वाकतिदिनंतत्रपतिगेहेस्वकंसुतम् ॥ संस्थाप्यश्वश्रूनिकटेस्वयंतातगृहंप्रति ॥ २८ ॥ दृष्ट्वाभक्तेस्तुमाहात्म्यंविरक्तासाप्यभूत्तदा ॥
एकातुतनयातस्यगृहएवस्थिताह्यभूत् ॥ २९ ॥ तेचापिभक्तिसंजातेकन्यकेपितृमंदिरे ॥ ताभ्यांचैवातिभक्ताभ्यांकन्याभ्यांनरसी
द्विजः ॥ ३० ॥ सस्त्रीकोभगवन्मूर्तेरग्रेगायन्ननर्तह ॥ एकदाकापिगणिकागायंतीतत्रचागता ॥ ३१ ॥ उक्तासर्वैस्तुनरसीगृहंग
च्छतवेप्सितम् ॥ करिष्यतिनसंदेहःसतुनृत्यादिपारगः ॥ ३२ ॥ इत्युक्त्वासागतावेश्यातस्थौतस्यसमीपतः ॥ भगवद्भजनेस
क्तात्यक्त्वावृत्तिंजुगुप्सिताम् ॥ ३३ ॥ अथैकदातुनरसीमातुलःसचिवःस्थितः ॥ तत्रत्यराज्ञोनिकटेराजानंसोऽब्रवीद्वचः ॥ ३४ ॥
राजन्नयंतुनरसीकलंकोऽभूत्कुलेमम ॥ वेश्ययासहकन्याभ्यांस्वयंनृत्यतिगायति ॥ ३५ ॥ तस्मादयंबहिष्कार्योग्रामादस्मान्नसंश
यः ॥ इत्युक्तोनृपतिस्तेनपदातींश्चतुरोद्रुतम् ॥ ३६ ॥ प्रेषयामासनरसींशीघ्रमानयमेंऽतिकम् ॥ गत्वातिक्रुद्धाःप्राहुस्तेचलराजसमी

पतः ॥ ३७ ॥ ततस्तुनरसीताभिःस्त्रीभिर्गायन्समाययौ ॥ दृष्ट्वाराजातुतान्सर्वाँल्लौकिकेमतिमान्स्वयम् ॥ ३८ ॥ नरसीमाह किंचैतत्क्रियतेकुलगर्हितम् ॥ श्रुत्वासोऽप्याहभोराजन्नमेजातिःकुलंनवा॥३९॥ सर्वैस्त्यक्तोऽहमत्रास्मिस्वेच्छयापुनरेवमाम् ॥ अयंवद तिनिर्लज्जोमत्कुलेपतितंस्वयम् ॥४०॥ त्वंतुराजासिलोकानांदुर्जनोत्कैर्बहिष्कृतः ॥ श्रुत्वाभागवतंप्रायोव्यस्माषीःसंगदोषतः ॥ ४१ ॥ इतिश्रुत्वाततोराजापौराणिकमवैक्षत ॥ सआहराजाभक्तोऽयंसत्यमेवनसंशयः ॥ ४२ ॥ राजापिनरसीप्राहगच्छसाधोयथासु खम् ॥ पुरेनिवसतस्तेमेनकाचिद्भीतिरस्तिभोः ॥ ४३ ॥ इत्युक्तेनरसीगेहेसमायातोऽतिभक्तितः ॥ जानन्नसारंसंसारंदध्यौहरि पदांबुजम् ॥ ४४ ॥ एकदातस्यभवनेसहस्रावधिसाधवः ॥ समायाताःक्षुधार्तास्तान्दृष्ट्वास्वयमुपस्थितः ॥ ४५ ॥ कस्यचिद्वणि जोगेहेगत्वातंप्राहचार्तवत् ॥ अहोकेदाररागोऽयंत्वद्गृहेस्थाप्यतेमया ॥ ४६ ॥ त्वंसहस्रमितामुद्रादेहिमेसाधुभुक्तये ॥ दास्यामि यावत्तेनैवधनंतावदहंपुनः ॥ ४७ ॥ गायामिनैवकेदारंसत्यमेतद्ददाम्यहम् ॥ इत्युक्तोवणिगुत्थायपत्रंनीत्वाधनंददौ ॥ ४८ ॥ तस्य पत्नीद्वयंचासीदेकाभक्तिमतीस्थिता ॥ साब्रवीन्नरसीभक्तंश्रीकृष्णंमेप्रदर्शय ॥ ४९ ॥ भविष्यतीतितामुक्त्वानरसीगृहमागतः ॥ नीत्वाधनंभोजयित्वास्वयंसंपूज्यकेशवम् ॥ ५० ॥ अगायत्प्रियंरागंनातितृप्तोबभूवसः ॥ तद्दिनेऽभ्यपतन्नैवमालामूर्तेर्गलादपि ॥ ॥ ५१ ॥ अन्यस्मिन्दिवसेतस्यकेदारंगायतःसतः ॥ कृष्णमूर्तेर्गलान्मालाप्रसादान्निपपातह ॥ ५२ ॥ तदादितस्यगानंसतत्या जातिसुचिंतितः ॥ मालायाःपतनंदृष्ट्वामूर्तेःकंठप्रदेशतः ॥ ५३ ॥ ज्ञात्वैवंदुर्जनाःसर्वेराजानंप्राहुरग्रतः ॥ भूपतेनरसीगीतसम्ये

यच्छ्रुतंत्वया ॥ ५४ ॥ मिथ्यैवतन्नसंदेहःशृणुतस्यतुकारणम् ॥ अयंस्वभवनेचैवसूत्रमालांविधायच ॥ ५५ ॥ पुष्पतारवशान्मा
लात्रुटितापतितास्वयम् ॥ तस्माद्द्यपरीक्षस्वतवाग्रेप्रकरोतुतत् ॥ ५६ ॥ इतिदुष्टवचःश्रुत्वाराजातंनरसींद्विजम् ॥ आनीयोवा
चमद्गेहेभगवन्मूर्तिरस्तिभोः ॥ ५७ ॥ तत्रगायस्वतन्मूर्तेर्गलान्मालापतिष्यति ॥ तदासत्यंविजानामिह्यन्यथाकपटेनतत् ॥ ५८ ॥
इत्युक्तोनरसीवीणांधृत्वागातुंव्यवस्थितः ॥ तदादुष्टस्तुपट्टस्यदृढसूत्रेऽकरोत्स्रजम् ॥ ५९ ॥ मुहूर्तंसजगौभक्तोनरसीचातिचिं
तितः ॥ नपपाततदामालादुष्टाःसर्वेऽतिहर्षिताः ॥ ६० ॥ ततस्तुनरसीचित्तेहरिंसस्मारदुःखितः ॥ नकापिहानिर्मेनाथतवैवेयंविडं
बना ॥ ६१ ॥ इत्याहमनसातस्मिन्क्षणे श्रीभगवान्हरिः ॥ कृत्वातुनरसीरूपंनीत्वामुद्रासहस्रकम् ॥ ६२ ॥ जगामतस्यवैश्यस्य
गृहंभक्त्यातुवेगतः ॥ तमाहनरसीक्वास्तिपतिर्गृह्णात्विदंधनम् ॥ ६३ ॥ ददातुममतत्पत्रंकेदारोयत्रवैधृतः ॥ इतिश्रुत्वासवैश्यस्तु
सुतएवाहतांप्रियाम् ॥ ६४ ॥ गृहाणमुद्रास्तत्पत्रंदेहितस्मैतुसाधवे ॥ इत्युक्तासातुतंपत्नीपत्रंतस्यकरेददौ ॥ ६५ ॥ धनंररक्षकुत्रा
पिपरंतुतन्मनोभृशम् ॥ नरसीरूपिणंदृष्ट्वासाभिलाषमभूत्तदा ॥ ६६ ॥ नायंसभक्तःकोऽप्येषतद्रूपेणागतस्त्विह॥इतिपत्येयथार्थंसा
प्रोवाचागत्यमंदिरे ॥ ६७ ॥ भगवानपितत्पत्रंनरसीनिकटेगतः ॥ उपरिष्टात्पातयित्वाददौसोऽपिगृहीतवान् ॥६८॥ ततःकेदाररागे
णजगौसंन्यासिवद्द्विजः ॥ तत्क्षणान्मूर्तिकंठात्तुमालाभिपतिताभुवि॥६९॥त्रुटित्वाथद्वितीयापिनरसीकंठदेशगा ॥ चित्रंबभूवसर्वेषां
तत्रत्यानांतुपश्यताम् ॥७० ॥ अथराजामहाश्चर्यंदृष्ट्वातान्दुर्जनान्स्वयम् ॥ निर्भर्त्स्यनरसींभक्त्यापूजयित्वाब्रवीद्वचः ॥७१॥ भक्त

राजन्क्षमस्वैतन्ममदुष्टस्यचेष्टितम् ॥ किमिदंपरमाश्चर्य्यंपत्रंस्यात्पतितंतुयत् ॥ ७२ ॥ इतिश्रुत्वाततोभक्तोनरसीप्राहतंनृपम्॥केदाररा
गवृत्तांतंतत्पत्रंचाप्यदर्शयत् ॥ ७३ ॥ ततोराजातिमुदितोनमस्कृत्यददौधनम् ॥ नतज्जग्राहनरसीसंतुष्टःप्रययौगृहम् ॥७४॥ इतिश्री
भगवद्भक्तिमाहात्म्येनरसीभक्तिचरितंनामद्वाविंशत्यधिकशततमःसर्गः ॥ १२२ ॥ एकदाधनिकःकश्चिन्नागरोब्राह्मणंनिजम् ॥
कन्यार्थंचवरंज्ञातुंप्रेषयामासतत्रहि ॥ १ ॥ तत्रसर्वेद्विजादुष्टास्तंविप्रंप्राहुरादृताः॥अहोतस्यचधनिनःकन्यैकावर्ततेशुभा ॥२॥ तस्याः
पाणिग्रहार्थायवरस्तेतनयोवृतः॥इतिश्रुत्वातुनरसीकृतांजलिरुवाचतम् ॥३॥ अहोनाहंतुतद्योग्यःसंबंधेनमहान्धनी ॥ अहंतुभिक्षुको
दीनस्तस्मादन्यंवरंवृणु ॥ ४ ॥ इत्युक्तःसद्विजःप्राहतद्योग्यस्त्वयमेवमे ॥ इत्युक्त्वातिलकंतस्यभालेऽङ्गुष्ठेनचाकरोत् ॥ ५ ॥ दत्त्वामु
द्रांनालिकेरंहर्षितोगृहमाययौ ॥ कन्यायाःपितरंप्राहनरसीतनयोमया ॥ ६ ॥ वृतोवरस्तेपुत्र्यर्थंसोऽस्यायोग्योनसंशयः॥इतिश्रु
त्वाविप्रवाक्यंसधनीकन्यकापिता॥७॥ निर्भर्त्स्यविप्रंप्रोवाचकिंकृतंमूर्खवत्त्वया॥क्वाहंलक्षाधिपःक्वासौकर्तव्योहिवरोमया ॥८॥ इति
तस्यवचःश्रुत्वासविप्रःकुपितोऽब्रवीत्।अहोऽङ्गुष्ठेनभालेवैदत्तंतुतिलकंमया ॥९॥ तंछेदयततोयामिमुद्रामानेतुमप्यहम् ॥ इतिश्रुत्वाततः
सोऽपिधनीतूष्णींस्थितःस्वयम् ॥१०॥ कन्यायाभाग्यमेवंहिकिंमेमोहेनजायते।बोधितोऽन्यैर्ज्ञातिवर्गैःस्वीकृत्योद्योगवानभूत् ॥११॥
विवाहलग्नंपत्रंसलिखित्वाप्रैषयत्सतु ॥ नीत्वातन्नरसीपत्रंस्थापयामासकुत्रचित् ॥ १२ ॥ विज्ञाप्यराधाकृष्णाभ्यांव्यग्रोऽभूत्सस्वयं
द्विजः ॥ जगौश्रीकृष्णचरितमवशिष्टेदिनत्रये॥१३॥विवाहस्यततःकृष्णोवैष्णवस्यकुटुंबिनः ॥ रूपंकृत्वासपत्नीकोदेशांतरनृपच्छ

लात् ॥ १४ ॥ निमंत्रितोऽहंशिष्योऽस्यसमायातइतिब्रुवन्॥आनिन्येसर्वसंभाराञ्छ्रीकृष्णोराजदुर्लभान् ॥१५॥ ततोविवाहपूर्वाहत्रये
सर्वान्निमंत्र्यसः ॥ भोजयामासविविधैर्मिष्टान्नैर्लोकदुर्लभैः ॥ १६ ॥ तंमुक्त्वावाससाबद्धानिन्युःस्वंस्वंगृहंजनाः ॥ तथापिसर्वसाम
ग्रीतथैवासीच्चतद्गृहे ॥ १७ ॥ ततस्तुवरयात्रायांतद्रूपोभगवानयम् ॥ तदातंनरसीप्राहनाहंगच्छामितत्रवै ॥ १८ ॥ गत्वात्वमेवसंबं
धीभविष्यसियथोचितम् ॥ अथकन्यापितातंतुविप्रंमुहुरवोचत ॥ १९ ॥ त्वयाकन्याविवाहोऽयंगर्हितोनात्रसंशयः ॥ सायंकालःस
मायातआगमिष्यतिवानवा ॥ २० ॥ इतिश्रुत्वातुविप्रस्तुग्रामाद्बाह्यंगतस्तदा ॥ ददर्शचागतंसर्वंवरंसैन्यसमावृतम् ॥ २१ ॥ कन्या
पितरमाहासौपश्यायातोवरस्तव ॥ ततःकन्यापितोवाचविप्रंभ्रांतोऽसिकिंतुभोः ॥ २२ ॥ दीनातिदीनोनरसीक्वेदंसैन्यंमहीपतेः ॥ एवं
ब्रुवतिवैतस्मिन्सैन्यंग्रामेसमागतम् ॥ २३ ॥ कन्यापिताविनिश्चित्यसएवायमितिद्रुतम्॥गत्वागृहेनिजान्बंधूनाहकिंतुभविष्यति ॥
॥२४॥ अतःपरंचमेग्रामेसर्वेषांवित्तसंचयैः ॥ सत्कारोनास्यभविताकिंकर्तव्यमतःपरम् ॥२५॥ इत्येवंमंत्रयित्वासप्रेषयामासतंद्विजम्
नालंसैन्यस्यसत्कारमहंहिकर्तुमत्रभोः ॥ २६ ॥ कन्येयंवर्ततेचैकाममदीनस्यगृह्यताम् ॥ गत्वैवंनरसीभक्तोवक्तव्योमद्वचस्त्वया ॥
॥ २७ ॥ श्रुत्वाविप्रस्तुतंप्राहकथमेवंवदस्यहो॥क्वतेसर्वायोवित्तानियशःकौलीन्यमप्यहो ॥२८॥ यदेवंभाषसेऽद्येतिश्रुत्वासोऽतिविल
ज्जितः ॥ ततःसविप्रोगत्वातंनरसीमाहनम्रवत् ॥२९॥ नैतेषांपूजनेशक्तोदरिद्रोऽयंद्विजोयथा ॥ यथाशक्तिततःपूजांकरिष्यतिनसंशयः
॥ ३० ॥ तथेतिश्रुत्वाविप्रोऽसौकन्यापितरमब्रवीत् ॥ सोऽपिहृष्टःसमुद्योगंकृत्वाकन्यांददौमुदा ॥ ३१ ॥ ग्राहयित्वाहरिःकन्यांव्य

वहत्ययथाविधि ॥ दीनानाथदरिद्रेभ्योदत्त्वास्वगृहमाययौ ॥ ३२ ॥ दृष्ट्वातत्सैन्यसंभारंग्रामेमार्गेऽतिविस्मिताः ॥ प्रशंसंतोऽपि
नरसींसुहृदंतोऽद्भुतदर्शनात् ॥३३॥ एवंदिनत्रयंस्थित्वानृपरूपधरोहरिः ॥ संतोष्यनरसींसैन्यंनीत्वाधाममयौस्वकम् ॥३४॥ एवंसनरसी
भक्तोराधाकृष्णप्रसादतः ॥ भुक्त्वामनोरथान्सर्वाञ्जगामांतेहरेःपदम् ॥ ३५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येनरसीचरितंनामत्रयोविं
शत्यधिकशततमःसर्गः ॥ १२३ ॥ ॥ दिवोदासकुलेजातःसद्नोऽतीवभक्तिमान् ॥ नंददासस्तथारामपुरग्रामेबभूवह ॥ १ ॥ एवं
हिवंगदेशेऽभूद्गोपालोऽतिहरिप्रियः ॥ निवसन्नृहरिग्रामेययावंतेहरेःपदम् ॥ २ ॥ गढानगरवास्येवंमाधवोभक्तिमानभूत् ॥ नृत्येनगी
तवाद्याभ्यांतोषयामासवैहरिम् ॥ ३ ॥ एकदाराजनिकटेदुर्जनैःकथितंवचः ॥ दंभेनायंस्वमात्मानंपूजयत्यतिदुर्मतिः ॥ ४ ॥ इति
श्रुत्वाननर्तासौमाधवोभक्तसत्तमः ॥ नविवेदस्वमात्मानंप्रासादाग्रात्पपातह ॥ ५ ॥ भूमौकटाहेपतितोनममारेच्छयाहरेः ॥ राजादु
ष्टांस्तुनिर्भर्त्स्यतस्मैदत्त्वातुजीविकाम् ॥६॥ विससर्जततःसोऽपिगृहमागत्यनिर्व्यथः ॥ पूर्ववत्पूजयामासभगवंतंदिवानिशम् ॥७॥
राजसेनगरेचेत्थमंगदोऽभून्महायशाः ॥ कथामस्यप्रवक्ष्यामिपरमाश्चर्यकारिणीम् ॥८॥ पूर्वंतुभक्तिनिर्मुक्तोनृपमंत्रिपितृव्यकः ॥ प
त्नीतस्यमहाभक्त्यागुरुशुश्रूषणेरता ॥ ९ ॥ एकदातुगुरोरग्रेएकांतेसंस्थितासती ॥ अथांतरेंऽगदस्तत्रसमायातोददर्शताम् ॥१०॥
कोऽयंकिंभाषसेत्वंतद्ब्रूहीत्युक्त्वाथसाब्रवीत् ॥ अयंमेगुरुरत्रास्तिपितृवत्पूजयामितम् ॥ ११ ॥ अतःक्रुद्धोऽगदःप्राहगुरुश्चतेनकिं
गृहे ॥ एकांतेतस्यकिंचास्तिप्रयोजनमिदंमहत् ॥१२॥ ततोगुरुःसमुत्थायसोद्वेगःप्रययौगृहात् ॥ अंगदस्यतुपत्नीसारुष्टासुष्वापकुत्र

चित् ॥१३॥ अथमध्याह्नसमयेविश्रामार्थंगतोऽगदः ॥पत्नींसमीपेतांदृष्ट्वामहाशोकेनपातिताम् ॥ १४ ॥उवाचतांकएषोऽस्तिशोक
स्तन्वंगितेहृदि ॥ वदतस्यप्रतीकारंकरिष्येऽहंनसंशयः ॥१५॥ पत्न्युवाच॥चत्वयामिथ्याभिशापोऽद्यगुरमेसमर्पितः ॥ सगुरुःपितृतु
ल्योऽस्तिपरिवादस्तुतेनमे ॥ १६ ॥ यत्कृतोभवतातेनमरिष्येऽहंनसंशयः ॥इतिश्रुत्वाप्रियावाक्यमंगदश्चातिदुःखितः ॥१७॥सहसैव
तदुक्तंतत्क्षमस्वाद्यप्रसीदमे ॥अतःपरंप्रियेब्रूहितत्करोम्यविचारितम् ॥ १८ ॥ इतिश्रुत्वाततःप्राहप्रियभक्त्यासतीतुसा ॥ अहोस्त्रीधन
पुत्रादिमोहवानसिकिंवृथा ॥ १९ ॥ नतेसहायःकोऽप्यस्तिनाहंनेदंधनंमम ॥ ततःश्रीकृष्णचरणौशरणीकुरुसर्वदा ॥ २० ॥ महापदि
स्मृतौचेमौरक्षितारौभविष्यतः ॥ तमेवगुरुमानीयभक्त्याशिष्योभवाधुना ॥ २१ ॥ तेततःपूर्ववत्प्रीतिर्भविष्यतिनसंशयः ॥
एवंपत्नीप्रेरणयाकृत्वातंगुरुमंगदः ॥ २२ ॥ भक्तोबभूवपत्न्यासतयाचातीवतोषितः ॥ एकदातस्यभ्रातृभ्योराजमंत्रीकश्चिद्गतः ॥
॥ २३ ॥ जेतुंशत्रुपुरेतत्रानिन्येचांगदमप्यसौ ॥ गतेषुतेषुरिपवस्त्यक्त्वासर्वेतुविद्रुताः ॥ २४ मंत्रीपुरंलुंठयित्वाराजसंनिधि
मागतः ॥ अंगदःप्रापतत्रैकंशिरोऽलंकरणंमहत् ॥ २५ ॥ बहुमूल्यैश्चरत्नैश्चखचितंदिव्यहाटकम् ॥ तत्रैकोहीरकश्चासीन्महान्तंतंरर
क्षसः ॥ २६ ॥ जगन्नाथायदास्यामीत्येवंबुद्ध्यातिभक्तिमान् ॥ अन्यानिसर्वरत्नानिविचिंत्यापत्तितोधनैः ॥ २७ ॥ भोजयामा
ससाधून्सदीनान्विप्रान्मुदांगदः ॥ कर्णाकर्णिततोग्रामेश्रुतंसर्वैर्महाद्भुतम् ॥ २८ ॥ केनापिराज्ञेकथितंरत्नंतत्रमहाद्भुतम् ॥ श्रुत्वा
राजातुभृत्येनयाचयामासतंमणिम् ॥ २९ ॥ नददावंगदोराज्ञेततोमंत्रिणमब्रवीत् ॥ भ्रातृपुत्रश्चांगदस्यसोऽप्युवाचततोमणिम् ॥३०॥

नददौभ्रातृपुत्रायप्राहायंश्रीहरेर्नते ॥ ततोराजांगदगृहेभगिनीतस्ययास्थिता ॥३१॥ तामाहान्नेतुगरलंदत्त्वाहत्वांगदंत्वया ॥ मणि
र्देयोऽद्यमेतुभ्यंदास्यामिविविधंधनम् ॥३२॥ इत्युक्ताभगिनीराज्ञादत्त्वान्नेतुविषंस्वयम् ॥भ्रात्रेंऽगदायप्रददौभोक्तुंसोऽपिचपूर्ववत् ॥३३॥
अर्प्पयित्वाभगवतेभागिनेयींसमाह्वयत् ॥ विषदात्र्याभगिन्याःसापुत्रीतस्यापितादृशी ॥ ३४ ॥ स्नेहात्तस्यैपुरादत्त्वाभोक्त
व्यमितितन्मनः ॥ अथांगदस्यभगिनीस्वपुत्रींप्रेमदर्शनात् ॥ ३५ ॥ रुदंतीमनसात्मानंधिक्चकारात्मनापुनः ॥ दृष्ट्वारुदंतींतांप्रा
हकिंकरोषिक्वचास्तिसा ॥ ३६ ॥ नाहंतावत्तुभोक्ष्यामियावन्नैष्यतितेसुता ॥ इत्युक्ताभगिनीप्राहत्वंभुंक्ष्वेदंविषान्वितम् ॥ ३७ ॥
राज्ञोक्ताहंत्वद्वधायविषमन्नेन्यवेशयम् ॥ मण्यर्थंतुनिहत्याशुमणिंमेदेहितेधनम् ॥ ३८ ॥ दास्यामिविपुलंचेतिनृपोक्ताकरवाण्य
हम् ॥ इति श्रुत्वांगदःप्राहभगिनींभर्त्सयन्मुहुः ॥ ३९ ॥ किमेवंमापसेपापेकृत्वाकर्म्मेदृशंपुनः ॥ श्रीकृष्णायार्प्पितंचैतत्सवि
षंनमयाक्वचित् ॥ ४० ॥ भोक्तव्यमितिउक्त्वाद्यमारिष्येनात्रसंशयः ॥ इत्युक्त्वाबुभुजेऽन्नंसप्रसादंमनसातदा ॥ ४१ ॥ विषतेज
स्तदंगेषुबबाधेनैवकिंचन ॥ पूर्वतोऽप्यधिकाकांतिस्तस्यासीदंगदस्यतु ॥ ४२ ॥ श्रुत्वाराजातुतत्सर्वंभृत्याननतिबलीयसः ॥
प्रेषयामासहत्वातंमणिमानयतद्रुतम् ॥ ४३ ॥ ततस्तेराजभृत्यास्तुगताअंगदमंदिरे ॥ अंगदस्तान्समाकर्ण्यमणिमादायस
त्वरम् ॥ ४४ ॥ प्रविलाप्यगतोगेहाज्जगन्नाथायचार्पितुम् ॥ राजभृत्याअपितदादुद्रुवुस्तमनुद्रुतम् ॥ ४५ ॥ कियद्दूरे
ऽपितेगत्वासन्निरुध्यस्थिताजनाः ॥ आहुस्तमंगदंदेहिमणिंहन्मोनचेद्वयम् ॥ ४६ ॥ इतिश्रुत्वांगदःप्राहदीयतेतिष्ठताधुना ॥

स्नात्वातडागसलिलेबहिष्कृत्यप्रदीयते ॥ ४७ ॥ इत्युक्त्वासजलेगत्वास्नात्वानीत्वामणिंकरे ॥ तान्वदन्पश्यतेमंभोमणिंममकरे
स्थितम् ॥ ४८ ॥ जगन्नाथायदास्यामितदर्थंरक्षितंमया ॥ इत्युक्त्वागाधसलिलेचिक्षेपपश्यतांनृणाम् ॥ ४९ ॥ ततःसर्वैराजभृत्या
निपत्यसलिलेद्रुतम् ॥ मणिमन्वेषयंतस्तेतेभ्यएकोययौद्रुतम् ॥ ५० ॥ ग्राहराजाऽपितच्छ्रुत्वासमायातोजलाशये ॥ बहिर्निष्कास
यामास जलंसर्वंनराधिपः ॥ ५१ ॥ अप्राप्यतंमणिंराजारात्रौतत्रवसन्स्थितः ॥ अथस्वप्नेजगन्नाथोराजानंसाधुरूपधृक् ॥५२॥ उवा
चश्रीजगन्नाथोजग्राहतंमणिंनृप ॥ किंवृथाखिद्यसेयाहिगृहंश्रीपुरुषोत्तमः ॥ ५३ ॥ संपादयतिसंकल्पंभक्तानांनात्रसंशयः ॥ एवंदृष्ट्वा
ततोराजाततःस्वभवनंययौ ॥ ५४ ॥ तावत्सचांगदोभीत्यासकुटुंबःपलायितः ॥ राजातंनिर्गतंज्ञात्वातत्याजान्नंजलंशुचा ॥ ५५ ॥
यावन्नायात्यंगदोऽत्रनतावद्भोजयाम्यहम् ॥ ततोराज्ञाद्विजास्तत्रमंत्रिणःप्रेषिताद्रुतम् ॥ ५६ ॥ तेंऽगदद्वारमागत्यउपोषणपरायणाः ॥
अंगदायाभयंदत्त्वासमानिन्युर्नृपांतिके ॥५७॥ राजादृष्ट्वासमुत्थायमत्वातंसाधुसत्तमम्॥प्रणम्यतस्यशिष्योऽभूत्सोऽपिभक्तोबभूवह॥
एवंभक्तेस्तुमाहात्म्यंकोवेदितुमिहक्षमः ॥ ५८ ॥ इतिश्रीभगवद्भक्तमाहात्म्येअंगदभक्तचरितंनामचतुर्विंशत्यधिकशततमः
सर्गः ॥ १२४ ॥ छ ॥ करोलीग्रामनृपतेःकथांवक्ष्येमनोरमाम् ॥ चतुर्भुजेतिनाम्नस्तुभक्तराजस्यपावनी ॥ १ ॥ आसीद्राजामहा
भक्तो भगवद्भक्तपूजकः ॥ ग्रामाच्चतुर्दिक्षुनृपोभृत्यान्संस्थाप्यनित्यशः ॥ २ ॥ यंकंचिद्वैष्णवंदृष्ट्वानयतेत्युक्तवांस्तुतान् ॥ तैरानीतं
स्वतः प्रातंदृष्ट्वाराजासवैष्णवम् ॥ ३ ॥ पूजयामास श्रीकृष्णबुद्ध्यापत्नीसमन्वितः ॥ यावन्मनोरथंतस्यददौवित्तानिभक्तितः ॥४ ॥

एवंश्रुत्वाऽथतद्वार्तामन्यदेशाधिपोनृपः ॥ उवाचकोऽयंधर्मस्ययद्विवेकोनजायते ॥ ५ ॥ अपात्रपात्रयोश्चैवतस्मादेतन्नशस्यते ॥
इतिश्रुत्वाऽब्रवीत्तस्यद्विजःपौराणिकोनृपम् ॥ ६ ॥ राजन्नैवंवदत्वंभोमहाभक्तःसभूपतिः ॥ निर्दंभोभक्तपूजायांवर्ततेतस्यचेन्मतिः ॥
॥ ७ ॥ पात्रापात्रविचारस्तुनभक्तेर्लक्षणंनृप ॥ अपात्रमपिविज्ञायसद्रूपंपूजयत्यसौ ॥ ८ ॥ इतिश्रुत्वाततोराजास्वबंदिनमुवाचह ॥
चतुर्भुजनृपद्वारिभक्तरूपधरोव्रज ॥ ९ ॥ सत्कुर्यात्सयथात्वांतुतथावदममाग्रतः ॥ इतिश्रुत्वासबंदीतुमालांमुद्रांवहन्ययौ ॥ १० ॥
श्रुत्वा चतुर्भुजोभक्तमागतंद्वारिचाययौ ॥ सपत्नीकस्तुसंपूज्यददौधनमनेकशः ॥ ११ ॥ ज्ञात्वातंबंदिनंबुद्ध्यापरीक्षार्थसमागतम् ॥
चतुर्भुजस्तुतत्रैकंकौशलंकृतवान्स्वयम् ॥ १२ ॥ कृत्वातुसंपुटेचैकंराजाकाणवराटकम् ॥ संवेष्ट्यप्रददौस्वर्णसूत्रवस्त्रैरपूर्ववत् ॥
॥ १३ ॥ अथबन्दीप्रसन्नात्मानृपांतिकमुपागतः ॥ उवाचतस्यसत्कारंदत्तंसर्वंप्रदर्शयन् ॥ १४ ॥ उवाचपश्चादेकंतुकिंचिद्दत्तंनृ
पेणमे ॥ तत्पश्यत्वंमहाराजदर्शयामितुतेऽधुना ॥ १५ ॥ इत्युक्त्वातत्पुरस्कृत्यस्वर्णवस्त्रपृथक्कृतम् ॥ पश्चात्तुसंपुटेसर्वैर्दृष्टःका
णवराटकः ॥ १६ ॥ किमिदंकिमिदंचेतिप्रोच्चराजाप्युवाचतम् ॥ पौराणिकः सचाप्याहराजानंतस्यकारणम् ॥ १७ ॥ राजन्व
राटकंमध्येदत्त्वादिव्येनवाससा ॥ संवेष्ट्यप्रददौतस्यभावंशृणुवदाम्यहम् ॥ १८ ॥ अयंबन्दीमयाज्ञातोयथाकाणवराटकः ॥ परंतुसा
धुरूपेणवेष्टितोऽयंतुभक्तवत् ॥ १९ ॥ मयासंपूजितोयद्वत्त्वयाऽयंतुवराटकः ॥ सुवर्णवस्त्रसन्नद्धोदृश्यतेपरमादरात् ॥ २० ॥ इति
श्रुत्वाततोराजामत्वासत्यंप्रसन्नधीः ॥ प्राहपौराणिकंगच्छत्वंद्रष्टागत्यमांवद ॥ २१ ॥ इतिश्रुत्वाययौविप्रश्चतुर्भुजसमीपतः ॥

राजातमपिसंपूज्यविससर्जमुदान्वितः ॥ २२ ॥ ततःपौराणिकोविप्रश्चतुर्भुजमयाचत ॥ शुकसारिकयोर्मध्येदेह्येकंमेनृपोत्तम
॥ २३ ॥ श्रुत्वैतत्प्रददौराजाशुकंपौराणिकायसः ॥ गृहीत्वातंशुकंविप्रःस्वराजांतिकमागतः ॥ २४ ॥ दर्शयित्वाधनंराज्ञेशुकंतंप्र
ययौद्विजः॥ राजाप्रोवाचकोऽसीतिश्रुत्वाभूपंशुकोऽब्रवीत् ॥ २५ ॥ कस्त्वंकोऽहमितिभ्रांतिःसंसारेवर्त्ततेनृणाम् ॥ अहंकृष्णमयंसर्वं
पश्यामिनृपसत्तम ॥ २६ ॥ इतिसंचिंत्यराजेंद्रवदकृष्णंमुहुर्मुहुः ॥ राधाकृष्णेतिकृष्णेतिगोविंदेतिसदाजप ॥ २७ ॥ इतिश्रुत्वाशुकव
चोविस्मयंपरमंगतः ॥ तत्कथाश्रवणाद्भक्तिंप्राप्याभूद्वैष्णवोनृपः ॥ २८ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येचतुर्भुजमाहात्म्यचरितंनाम
पंचविंशत्यधिकशततमःसर्गः ॥ १२५ ॥ छ ॥ राजासीन्मेरताग्रामेजयमल्लेतिविश्रुतः॥कन्याबभूवतस्यैकामीराबाईतिविश्रुता ॥१॥
तस्यराज्ञोगृहेकृष्णमूर्तिःपरमशोभना ॥ नाम्नागिरिधरेत्यतत्तद्भक्ताःसर्वएवते ॥ २ ॥ मीरापिपितृवाक्येनविवाहंस्वीचकारसा ॥
चित्तेगिरिधरंदेवंपतिंकृत्वाव्यवस्थिता ॥ ३ ॥ जयमल्लस्ततोमीरांसुमुहूर्तेददौमुदा ॥ सनापुत्रायवीरायधनानिविविधानिच ॥ ४ ॥
ततःसमीरांनीत्वास्वंभवनंचलितोऽभवत् ॥ मीरागिरिधरंत्यक्त्वानगंतुंसहतेस्मसा ॥ ५ ॥ प्रस्थानसमयेमीरारुदतीमूर्च्छितापतत्
ततस्तौपितरौतस्याःसमागत्येदमूचतुः ॥ ६ ॥ किमस्तिहृदयेमीरेतद्द्रुतंवदाशुमाम् ॥ तयोक्तंमेगिरिधरंदेहिप्रियतरंपितः ॥ ७ ॥
इति श्रुत्वावचस्तस्याःपितरावतिमोहितौ ॥ ददतुस्तंगिरिधरंपुत्रींतोषयतावुभौ ॥ ८ ॥ अथमीरागिरिधरंशिबिकायांनिधायतम् ॥
हर्षिताप्रययौपत्युर्गेहंसैन्यसमन्विता ॥ ९ ॥ तत्रश्वश्रूःसमागत्यमीरयासहचात्मजम् ॥ ग्रामदेवीसमीपेतुनिनायातिप्रमो

दिता ॥ १० ॥ पुत्रेणपूजयित्वातांदेवींमनीराममथाब्रवीत् ॥ स्नुषेसंपूज्यमनसाग्रामदेवींनमस्कुरु ॥ ११ ॥ इति श्वश्रूवचः श्रुत्वामीराप्राहकृतांजलिः ॥ विनागिरिधरंदेवींनमस्कुर्यामहंनहि ॥ १२ ॥ इतिश्रुत्वापुनःश्वश्रूराहसौभाग्यवर्द्धनम् ॥ भविष्यतिततस्त्वंतुनमस्कुरुनसंशयः ॥ १३ ॥ इतिश्रुत्वापुनःप्राहमीराश्वश्रूंनमेपतिः ॥ मरिष्यतिततोनित्यंसौभाग्यंवर्ततेमम ॥ ॥ १४ ॥ किंचेमाविधवाःसंतिग्रामेतवकथंस्त्रियः ॥ इतिश्रुत्वाततःश्वश्रूःकोपेनस्फुरिताधरा ॥ १५ ॥ वधूपुत्रौपरित्यज्यपतिसन्निधिमागता ॥ उवाचतंमहादुष्टास्नुषानीतात्वयागृहे ॥ १६ ॥ अद्यैवनशृणोत्युक्तंकिमेषाग्रेकरिष्यति ॥ अहंतुनैववक्ष्यामिकिंचिदस्यैहिताहितम् ॥ १७ ॥ इतिश्रुत्वाततोराजाततःक्रुद्धोविचारयन् ॥ प्रणामोऽस्याःकलंकःस्यात्स्त्रीवधश्चातिदारुणः ॥ १८ ॥ तस्मात्कचिद्गृहेरक्ष्याभोजनाच्छादनादिभिः ॥ जिज्ञासानैवगेहेऽस्याःप्राधान्यंस्यात्कथंचन ॥ १९ ॥ इतिनिश्चित्यतांमीरांस्थापयामाससंदिरे ॥ कांचित्तत्ररक्षासौद्वारपालान्सुधार्म्मिकान् ॥ २० ॥ मीरागिरिधरंनित्यंपूजयंतीपतिव्रता ॥ नवेदकिंचिच्चरितंश्वश्र्वाश्वशुरस्यवा ॥ २१ ॥ पूजयंतीगिरिधरंनिर्लज्जासाधुभिःसह ॥ अनभिज्ञकुलाचारानिमग्नानंदसागरे ॥ २२ ॥ तदाराणादयःसर्वेतदाचारेणदुःखिताः ॥ कुलेकलंकभूतेऽयंमरिष्यतिकदापुनः ॥ २३ ॥ एवंविचिंतयंतस्तेलेभिरेशर्म्मनकाचित् ॥ मीरांननांदाचैकस्मिन्दिनेऽभ्येत्याब्रवीच्चताम् ॥ २४ ॥ भ्रातृजायेकिमेवंत्वंकुलद्वयकलंकिनि ॥ भूत्वागायसिनिर्लज्जावैष्णवानांपुरःस्थिता ॥ २५ ॥ श्वशुरोदुःखितौतत्रहृष्ट्वैदंतवचेष्टितम् ॥ पितापिजयमल्लस्तेयशस्वीकिंवदिष्यति ॥ २६ ॥ इतिश्रु

त्वातुतद्वाक्यंमीराप्राहहसन्मुखी ॥ कुलेयावर्ततेतस्याःसत्यमेतन्नसंशयः ॥ २७ ॥ नाहंजानामिपितरौश्वशुरौपतिमेवच ॥ नान्यंपु
मांसंजानामिऋतेगिरिधरंशुभम् ॥ २८ ॥ किंकरोम्येवमेवास्तिमनोविक्षिप्तवन्मम ॥ लग्नंगिरिधरेऽन्यत्रनयातिकथमप्यहो ॥ २९ ॥
तस्माद्धिताहृशंचित्तंकोऽन्यथाकर्तुमर्हति ॥ मयात्यक्तंकुलंशीलंहरिंशरणमागता ॥ ३० ॥ इतिश्रुत्वावचस्तस्याननांदाक्रोधसंयुता ॥
आगत्यपितरौप्राहभ्रातृभार्यात्वियंपितः ॥ ३१ ॥ मयोक्ताबहुशःप्रेम्णालोभेनचभयेनच ॥ नसामन्यतमद्वाक्यंगीतनृत्यपरायणा ॥
॥ ३२ ॥ इतिश्रुत्वावचःपुत्र्याराणाभूपोऽतिकोपितः ॥ महाविषंप्रेषयित्वाकृत्वासौवर्णभाजने ॥ ३३ ॥ प्रेषयामासमीरायैविष्णुपा
दोदकंतथा ॥ भृत्योनीत्वाददौतस्यैराजोक्तमपितांवदन् ॥ ३४ ॥ अद्यराज्ञार्चितोदेवस्तस्येदंचरणोदकम् ॥ दत्तंतुभ्यमितिश्रुत्वामी
राहर्षात्समुत्थिता ॥ ३५ ॥ निधायपाणौतत्पात्रंपपौभक्तिसमन्विता ॥ विष्णुपादोदकधियायत्पपौगरलंसती ॥ ३६ ॥ ततोगिरिधरोमी
रांददर्शभक्तवत्सलः ॥ नमीरायास्तदाकिंचिद्वैरूप्यमभवत्तनौ ॥ ३७ ॥ कांतिर्दशगुणाजातानैरुज्यमप्यजायत ॥ एवंज्ञात्वानृपोराणावि
स्मयंपरमंगतः ॥ ३८ ॥ मरिष्यतिकदाचैषेत्येवंसंप्रार्थयन्स्थितः ॥ एकदासतुमीरायाःश्रुत्वादुश्चेष्टितंनृपः ॥ ३९ ॥ तत्रत्यंरक्षकंप्राहय
दैकांतेस्थिताभवेत् ॥ केनापिसाधुनासाकंतदैवागत्यमांवद ॥ ४० ॥ इतिराजवचःश्रुत्वाज्ञात्वातंसमयंजनः ॥ आगत्योवाचराजानंरा
जात्वेकस्तदोत्थितः ॥ ४१ ॥ तद्गृहद्वारिसंलग्नःकपाटेसमुपस्थितः ॥ शुश्रावमीरावचनमन्यस्यापितथावचः ॥ ४२ ॥ अस्पष्टा
क्षरमव्यग्रंततोराजाहतांस्नुषाम् ॥ उद्घाटयकपाटंतुकस्तिष्ठतिसहत्वया ॥ ४३ ॥ इति श्रुत्वाततोमीरास्वयमुद्घाट्यसाद्भुतम् ॥ त

स्थावधोमुखीहस्ताश्वशुरंनृपतिंसती ॥ ४४ ॥ राजाप्राहत्वयासार्द्धंकःस्थितोमंदिरेवद ॥ इतिश्रुत्वावचोमीरानिर्लज्जानृपमब्रवीत ॥
॥ ४५ ॥ त्वंरहस्यागतोराजन्निरीक्षस्वस्वकंगृहम् ॥ नापश्यत्सगृहेकंचिद्दतेगिरिधरंप्रभुम् ॥ ४६ ॥ ततोऽतिलज्जितोराजासमागत्य
स्वमन्दिरम् ॥ उक्त्वापत्न्यैतुतत्सर्वंतस्थौविस्मितमानसः ॥ ४७ ॥ एकदाकोऽपिदुष्टात्माकामीवैष्णवरूपधृक् ॥ ज्ञात्वातिसुंदरींमी
रामुवाचरतिमर्प्पय ॥४८ ॥ इतिश्रुत्वाततोमीरानचुकोपाहतंपुनः ॥ भोजनंकुरुसाधोऽद्यनिशिदास्यामितेरतिम् ॥ ४९ ॥ ततोमीरां
गिरिधरस्यांतिकेविष्णुवल्लभाम् ॥ समानीयाथतत्रैवशय्यांचक्रेमनोरमाम् ॥ ५० ॥ सायंपूजादिकंकृत्वासमलंकृत्यवैपुनः ॥समाहूत
वतीप्रेम्णातंधूर्तंसाधुरूपिणम् ॥ ५१ ॥ ससमागत्यतांमीरांददर्शनिजमातरम् ॥ कृतांजलिपुटःपादौनिपत्येदमभाषत ॥ ५२ ॥
मातःक्षमस्वदुष्टस्यममचैतद्विचेष्टितम् ॥ अज्ञानाज्जननीतत्त्वामुक्तमेवंवचोमया ॥ ५३ ॥ ततस्तेवैष्णवाःसर्वेविस्मयंपरमंगताः ॥
तमप्युत्थापयामासमीरापुत्रधियास्वयम् ॥ ५४ ॥ एवंभक्तेःप्रभावंतुज्ञात्वासोऽपिचदुर्म्मतिः ॥ भक्तिमार्गरतोभूत्वापरमंपदमाप्तवा
न् ॥ ५५ ॥ एवमेकदिनेदिल्लीश्वरोम्लेच्छःस्वयंप्रभुः ॥ श्रुत्वामीरायशोद्रष्टुंतेनसैन्येनसंगतः ॥ ५६ ॥ वेषांतरेणचायातोमीरांतत्का
लमाह्वयत् ॥ गत्वातन्निकटेराजामीरांगिरिधराकृतिम्॥५७॥ दृष्ट्वातिविस्मितोभक्त्याचक्रेपद्यंमनोरमम् ॥ अद्यमेदृष्टिसंप्राप्तोनंदनंदन
एषभोः ॥ ५८ ॥ इत्याद्यर्थकगीतेनगायन्नागत्यवेश्मनि ॥ मीरांमातृसमांजानन्सेवयामासयत्नतः ॥ ५९ ॥ एकदासागतामीरावृंदा
वनमनुत्तमम् ॥ जीवगोस्वामिवृत्तांतंशुश्रावजनवक्त्रतः ॥ ६० ॥ आबालब्रह्मचार्य्येषस्त्रीमुखंनैवपश्यति ॥ इतिज्ञात्वाययौमीरा

तंद्रष्टुंभक्तसत्तमम् ॥ ६१ ॥ ततोमीरापोडशाब्दंपुरुषंतंददर्शह ॥ उत्थायाश्लिष्यतंधृत्वाकरेस्वासनमानयत् ॥ ६२ ॥ उप
विश्यततोजीवगोस्वामीतांददर्शह ॥ मीरांस्त्रियंततश्चित्तेविस्मितोऽवोचताग्रतः ॥ ६३ ॥ स्त्रीमुखंनैवपश्यामीत्येतद्यन्मेऽस्तिवै
व्रतम् ॥ इतिश्रुत्वावचोमीराजीवगोस्वामिनंपुनः ॥ ६४ ॥ नमश्चक्रेमुहुःसोऽथतांननामपुनश्चसः ॥ कृत्वावृंदावनेयात्रांमीराद्वारव
तींययौ ॥ ६५ ॥ तत्रैवोवासमुदितास्मरंतीज्ञातिचेष्टितम् ॥ अथराणानृपोविप्रान्प्रेषयामासतत्रह ॥ ६६ ॥ मीरामानेतुमनघांज्ञा
त्वाविप्राययुर्द्रुतम् ॥ मीरामूचुस्तुतेगत्वानयास्यामीतिचाब्रवीत् ॥ ६७ ॥ ततस्तेब्राह्मणाःसर्वेत्यक्ताशनजलास्तुताम् ॥ त्वदृश्या
मोजीवितंसर्वेनत्वंयास्यसिचेद्गृहम् ॥ ६८ ॥ इतिज्ञात्वाततोमीराश्रीकृष्णांतिकमागता ॥ आहूयतान्द्विजानाहमयाद्यप्रार्थितोहरिः ॥
॥ ६९ ॥ यूयंपश्यतयद्ब्रूयादेवं मेकरुणानिधिः ॥ करिष्यामिनसन्देहोभवतांपश्यतामिह ॥७०॥ इत्युक्त्वातंहरिंचित्तेमीराप्राहाति
दुःखिता ॥ दासीभूत्वातवाहंभोःक्वगच्छाम्यधुनापुनः ॥ ७१ ॥ गणिकाशबरीगृध्रांस्त्वंसमुद्धृतवानसि ॥ अहंवराकीकियतीनमांत्य
जमहाभुज ॥ ७२ ॥ इत्येवंविलपंत्यास्तुमीरायाभक्तिपूर्वकम् ॥ ब्रह्मांडंस्फुटितंतस्यास्तेजोविद्युदिवज्वलत् ॥ ७३ ॥ निर्गत्यकृष्ण
प्रतिमामुखेन्यस्तमिवाभवत् ॥ एवंदृष्ट्वाततेविप्राःशोकाश्चर्य्यसमन्विताः ॥ ७४ ॥ हाहाकृत्वारुदंतस्तेसंस्कारंचक्रुरर्थवत् ॥ ७५ ॥
इति श्रीभगवद्भक्तिमाहात्म्येमीराचरितंनामषड्विंशत्यधिकशततमःसर्गः ॥ १२६ ॥ ॥ छ ॥ कच्छवाहःक्षत्रियेषुपृथ्वीराजोबभू
वह ॥ आमेरकोटेनिवसन्हरिभक्तिमतांवरः ॥ १ ॥ कृष्णदासस्यशिष्यःसद्गुरुशुश्रूषणेरतः ॥ एकदासद्गुरुःकृष्णदासोद्वारवतींव्रज

न् ॥ २ ॥ गुरोत्वयाननेतव्यःपृथ्वीराजःकथंचन ॥ गतेऽस्मिन्राज्यविभ्रंशोभविष्यतिनसंशयः ॥ ३ ॥ इत्येकांतेगुरुःश्रुत्वापृ
थ्वीराजमुवाचह ॥ नत्वयासहगंतव्यंतिष्ठात्रैवममाज्ञया ॥ ४ ॥ इति श्रुत्वागुरुवचःपृथ्वीराजउवाचतम् ॥ स्नानंकृत्वातुगोमत्यांदृष्ट्वा
कृष्णंततःपरम् ॥ ५ ॥ शंखचक्रादिकंनीत्वाआगमिष्याम्यहंद्रुतम् ॥ इतिस्थितंमनःकिंतुभवदाज्ञागरीयसी ॥ ६ ॥ अतःपरं न
गच्छामिभवदाज्ञांकरोम्यहम् ॥ इतिश्रुत्वागुरुःप्राहसर्वं तेऽत्रभविष्यति ॥७॥ हरिंभजन्गृहेस्थित्वाकुरुराज्यमकंटकम् ॥ इत्याज्ञांशि
रसाधृत्वादत्त्वाधनमनेकशः ॥ ८ ॥ गुरुंप्रस्थाप्यभवनेतस्थौभक्तिसमन्वितः ॥ अथैकस्मिन्दिने राजा सपत्नीकोवनंगतः ॥ ९ ॥
विहारार्थंतुतत्रैव निश्युवासहरिंस्मरन् ॥ पृथ्वीराजस्तदास्वप्नेकृष्णदासंददर्शह ॥ १० ॥ स्वयंद्वारवतीमेत्यकृष्णमूर्तिंमनोरमाम् ॥
कृष्णदासोऽब्रवीत्स्वप्नेद्वारकेयंचगोमती ॥ ११ ॥ तत्रस्नात्वाहरेर्मूर्तिंदृष्ट्वाशंखगदादिकम् ॥ गृहीत्वागच्छभवनेभवंदृष्ट्वाचकारह ॥
॥ १२ ॥ सर्वंततःसमुत्थायजाग्रद्वाहृददर्शह ॥ शंखचक्रादिभिर्युक्तोगोमतीसलिलंतथा ॥ १३ ॥ पत्नींप्रोवाचतंस्वप्नंसापिदृ
ष्ट्वातुगोमतीम् ॥ प्रातःसस्नौजलेतस्मिन्महाभक्तिसमन्वितः ॥ १४ ॥ अथोपायनवित्तैस्तुमठंनिर्माय्भूपतिः ॥ स्थापयामास
कृष्णस्यमूर्तिंपरमशोभनाम् ॥ १५ ॥ एकदाकोऽपिचांधोऽभूद्वैद्यनाथंजगामसः ॥ नेत्रार्थंतस्यस्वप्नेतुवैद्यनाथोऽब्रवीद्धितम् ॥ १६॥
आमेरकोटेचास्त्येकःपृथ्वीराजोऽतिवैष्णवः ॥ अंगप्रोक्षणवस्त्रेणतस्यनेत्रेप्रमार्जय ॥ १७॥ भविष्यतिततोनेत्रद्वयंदृष्ट्वासचांधवत् ॥
पृथ्वीराजस्यनिकटेसमागत्याब्रवीच्चतत् ॥१८॥ अहोऽगप्रोक्षणंस्वीयंवस्त्रंप्रोक्ष्यकलेवरम् ॥ देहिमेऽधायकृपयाततोनेत्रेभविष्यतः॥

॥१९॥ इत्याज्ञावैद्यनाथस्यजातामेऽस्तिदयानिधे ॥ पृथ्वीराजोवचः श्रुत्वासर्वान्संपृच्छ्यचद्विजान् ॥ २० ॥ तदाज्ञयानवीनेनवा
ससांगंप्रमार्ज्यच ॥ ददौतस्मैचांघदृशेसोऽर्पितेनस्वलोचने ॥ २१ ॥ प्रोक्षयामासमुदितस्तदातस्यदृशौशुभौ ॥ तदैवविमलेजाते
दृष्ट्वासर्वेऽतिविस्मिताः ॥ २२ ॥ एवंप्रभावोभक्तस्तुवर्ततेऽद्यापिभूतले ॥ कस्तंवर्णयितुंशक्तोविनाहरिकृपांबुधः ॥२३॥ इतिश्रीभगवद्भ
क्तिमाहात्म्येपृथ्वीराजचरितंनामसप्तविंशत्यधिकशततमःसर्गः ॥१२७॥ श्रुत्वाद्भुतंतुमीरायाश्चरितंतत्पितानृपः ॥ जयमल्लोविरक्तोऽ
भूद्भगवद्भजनेरतः ॥ १ ॥ स्वयमेकदिनेरात्रौप्रासादेसंस्थितोनृपः ॥ कृष्णमूर्तिरधस्तत्रवर्ततेइतिसंस्मरन् ॥ २ ॥ उत्थायाधःसमागत्य
निन्येतत्रैवतांनिशाम्॥प्रातःस्वगृहतोऽत्यंतमुच्चैर्मठमकल्पयत् ॥३॥ तत्रसंस्थाप्यश्रीकृष्णमूर्तिंसर्वोपरिस्वयम् ॥ दासवत्सेवयामास
दिवानिशमतंद्रितः ॥ ४ ॥ एकस्मिन्दिवसेराजारात्रौशय्यांविधायच ॥ दत्त्वोपकरणंसर्वस्वमंदिरमुपागतम् ॥ ५ ॥ अथराज्ञीतुराजा
नंकिंचित्कुंगतारहः ॥ भगवन्निकटेयातातत्रापश्यन्महाद्भुतम् ॥ ६ ॥ श्रीकृष्णमूर्तिंशय्यायांशयानांपर्णवीटिकाम् ॥ चर्वयंतींततः
शीघ्रंपरावृत्यागतागृहम् ॥७॥ पतिंप्रोवाचमुदिताविस्मयोत्फुल्ललोचना ॥ राजाश्रुत्वाप्रियामाहधन्यासित्वंनसंशयः ॥ ८॥ एवं
स्वभयरामोऽभूत्कर्म्मशीलस्तथैवच ॥ भगवानभयरामोराजमल्लःस्वकंधरः ॥९॥ एतेऽपिचमहाभक्तामथुराप्रांतवासिनः ॥ कीर्तिदास
क्तिदाश्चैवनामतोऽपिनसंशयः ॥१०॥ डोडच्छायामभूद्राजाभक्तिमान्साधुपूजकः॥नाम्नामधुकरेत्येतत्सयातोऽतिदयान्वितः ॥ ११ ॥
तस्यैवंनियमोराज्ञःसाधुरूपधरस्तुयः ॥ तंभक्त्यापूजयामासकृष्णवच्चातिहर्षितः ॥ १२ ॥ अथैकस्मिन्दिनेकोऽपिदुष्टोगर्दभमानय

त् ॥ मालातिलकभूपाढ्यवैष्णवोयऽमितिब्रुवन् ॥ १३ ॥ श्रुत्वाराजातिहर्षेणसमागत्यतदंतिकम् ॥ अहोभाग्यमितिप्रोच्य
पूजयामासभक्तितः ॥ १४ ॥ तस्यपूजयतस्तत्रचरणंगर्दभस्यवै ॥ मनुष्यपादसदृशंबभूवात्यंतमद्भुतम् ॥ १५ ॥
श्यामपृष्ठंरक्ततलंपंचांगुलियुतंशुभम् ॥ राजादृष्ट्वाप्रभोरेतदित्युक्त्वाचरणोदकम् ॥ १६ ॥ जग्राहचततोहृष्टःप्रपला
य्यगतःक्वचित् ॥ सर्वेदृष्ट्वामहाश्चर्य्यंसाधुसाध्वितिचाब्रुवन् ॥ १७ ॥ राजापिगर्दभंतंतुररक्षवाजिमंदिरे ॥ शुश्रूषायैदासमे
कंयोजयामासभूपतिः ॥ १८ ॥ रामराजातथैवाभूद्भक्तःश्रीकृष्णतुष्टये ॥ याचमानायप्रददौयद्यदिच्छतियाचकः ॥ १९ ॥
एकदारासलीलायांकश्चिदागत्यतंद्विजः ॥ रामराजाभिधंभूपंययाचेतस्यकन्यकाम् ॥ २० ॥ श्रुत्वातद्दासवर्गास्तंब्राह्मणं
प्रतिचुक्रुधुः ॥ तान्निवर्त्यततोराजाब्राह्मणायददौसुताम् ॥ २१ ॥ धनादिदत्त्वाबहुशोदासदासीगृहादिकम् ॥ चकारस्वसमंभूपोजामात
रमपिक्षणात् ॥ २२ ॥ अथापरोबभूवैकोरामराजातिभक्तिमान् ॥ एकदामथुरायांतुसमायातोनृपोत्तमः ॥ २३ ॥ सपत्नीकोधनंनी
त्वाकृत्वायात्रामशेषतः ॥ दत्त्वावित्तानिसर्वाणिऋणंकृत्वापुनर्ददौ ॥ २४ ॥ ऋणंदातुंततस्तस्यपत्नीस्वंकंकणद्वयम् ॥ ददौ
राज्ञेऽतिमुदिताकंकणंपरमाद्भुतम् ॥ २५ ॥ गृहीत्वारामराजासनामादासकरद्वये ॥ परिधार्यागतोगेहेपत्नींप्राहातिहर्षितः ॥ २६ ॥
साश्रुत्वाहर्षितोवाचगेहाद्दास्यामितद्दृणम् ॥ अथप्रातर्गृहंगंतुंरामराजोव्यवस्थितः ॥ २७ ॥ सायंकालेतुसचिवस्वरूपेणहरिःस्व
यम् ॥ रामराजकृतर्णंतुवैश्यायप्रददौतदा ॥ २८ ॥ रामराजापिकंचित्तंप्रेक्ष्यचोवाचतंविशम् ॥ प्रातर्यास्याम्यहंगेहेततोदास्यामि

तेधनम् ॥ २९ ॥ तदर्थमेकंकंचित्त्वंसहदेहिनिजंजनम् ॥ इतिश्रुत्वाततोवैश्यःसमुत्थायनृपांतिके ॥ ३० ॥ आगत्योवाचराजा
नंधनंप्राप्तंमयाविभो ॥ अद्यतेसचिवोगत्वादत्त्वाधनमशेषतः ॥ ३१ ॥ मद्गृहात्कचिदन्यत्रजगामपश्यतांनृणाम् ॥ सचिवस्तुततः
प्राहनाहंतत्रगतोनृप ॥ ३२ ॥ नददौवाधनंचास्मैकिंवदत्येषमत्तवत् ॥ इतिश्रुत्वावणिग्गत्वागृहेनीत्वाधनंसुतान् ॥ ३३ ॥ साक्षि
णस्तुसमादायदर्शयामासभूपतिम् ॥ राजादृष्ट्वाद्भुतंमेनेश्रीकृष्णस्यविचेष्टितम् ॥ ३४ ॥ वणिजेप्रददौभूरिधनंचपारितोषकम् ॥ एवं
खेमालरतनोभक्तोऽभूदतिविश्रुतः ॥ ३५ ॥ समृत्युसमयेऽत्युच्चैरुरोदाथसुतोऽब्रवीत् ॥ किंकरिष्यामितद्ब्रूहिकरिष्येवचनंतव ॥३६॥
इतिश्रुत्वाब्रवीत्पुत्रंखेमालरतनस्तथा ॥ स्वयमानीयकुंभेनजलंपुष्पादिकंतथा ॥ ३७ ॥ नविष्णुःपूजितश्चित्तेसहयातिमनोरथः ॥
इतिश्रुत्वातुतत्पौत्रःपितामहमुवाचतम् ॥३८॥ अहमेवकरिष्यामिसर्वथाहरिपूजनम् ॥ इतिश्रुत्वातुवचनंमूर्ध्न्याघ्रायातिहर्षितः॥३९॥
एवमेवंभजन्कृष्णंवयोगमयनान्यथा ॥ ततस्तस्यसुखंसर्वंभविष्यतिनचान्यथा ॥ ४० ॥ इतिश्रुत्वाकरोत्सर्वंपितामहवचःसवै ॥
एवंवंशेहरेर्भक्तिंस्थापयित्वादिवंगतः ॥४१॥ खेमालरतनोनाम्नामहाभागवतोत्तमः ॥ ततस्त्यक्त्वाशरीरंसमुक्तिंप्राप्तोनसंशयः ॥४२॥
॥ इति श्रीभगवद्भक्तिमाहात्म्येरामराजादिचरितंनामाष्टाविंशत्यधिकशततमःसर्गः ॥ १२८ ॥ ॥ छ ॥ चतुर्भुजोबभूवैकोभक्तः
सर्वसुहृत्तमः ॥ गोस्वामिहरिवंशस्यशिष्यःपरमधार्म्मिकः ॥ १ ॥ एकदागोडवानारदेशेम्लेच्छमयेगतः ॥ तत्रजीवबलिंदृष्ट्वा
देवीसन्निधिमागतः ॥ २ ॥ प्रसाद्यदेवींप्रोवाचमातर्जीवबलिंत्यज ॥ पायसान्नेनलोकानांवरदाभवचंडिके ॥ ३ ॥ इतिसंप्रार्थिता

देवीनिशिस्वप्नंददौपुरं ॥ अद्यादिपायसान्नेनबलिंमेसंप्रयच्छभोः ॥ ४ ॥ चतुर्भुजोऽतिभक्तोमेतदुक्तंपूजनंकुरु ॥ नोचेत्सर्वान्हरि
ष्यामिसत्यमेतन्नसंशयः ॥ ५ ॥ इतिश्रुत्वाजनाःसर्वेचतुर्भुजमुपागताः ॥ श्रुत्वातन्मुखतःसर्वेजीवदानंचतत्यजुः ॥ ६ ॥ एक
दाकस्यचित्तस्यवैश्यस्यधनसंचयम् ॥ गृहीत्वाचोरआयातस्तत्पृष्ठानुगतोद्रुतम् ॥ ७ ॥ गृहीत्वातेनवैश्येनचोरोनीतोनृपांतिके ॥
तत्रराजसभायांसप्राहनैवंहृतंमया ॥ ८ ॥ दिव्यंदिनेतृतीयेचगृहाणेत्यब्रवीच्चसः ॥ स्वीचकारसचोरोऽपितस्मिन्नेवदिनेक्वचित् ॥ ९ ॥
पुराणेशुश्रुवेदीक्षाग्रहणेभक्तिपूर्वकम् ॥ जन्मांतरंभवेन्नृणांसत्यंसत्यंनसंशयः ॥ १० ॥ ततउत्थायचोरःसचतुर्भुजसमीपगः ॥
जग्राहवैष्णवींदीक्षांकृतकृत्योबभूवह ॥ ११ ॥ अथतृतीयेदिवसेदिव्यस्थानेधृतोगतः ॥ प्रतिज्ञामकरोत्तत्रचोरःस्मृत्वागुरोः
पदम् ॥ १२ ॥ नमयाचोरितंकिंचित्कस्यापीहतुजन्मनि ॥ इत्युक्तालोहमादायकरेसप्तपदींययौ ॥ १३ ॥ ततस्तत्याजतल्लोहं
खदिरांगारसन्निभम् ॥ दृष्ट्वाराजादयःसर्वेसाधुसाध्वितिवादिनः ॥ १४ ॥ राजाक्रुद्धोऽब्रवीद्वैश्यंदंडयानृतवादिनम् ॥ ततोभृत्या
स्तुतंनीत्वागताःकारागृहंप्रति ॥१५॥ तदाचोरोऽपितन्मंत्रग्रहणाद्वैष्णवोऽभवत्॥आगत्यभूपतिंप्राहराजन्वैश्योऽतिधार्म्मिकः ॥१६॥
मयैवचोरितंवित्तंवैश्यस्यास्यनसंशयः ॥ मयादिव्यंजितंयत्तुशृणुतत्कारणंनृप ॥ १७ ॥ जन्मांतरंभवेदीक्षाग्रहणादितिमेश्रुतम्॥ततो
दीक्षांगृहीत्वातुमयालोहोधृतःकरे ॥ १८ ॥ अत्रजन्मनिकस्यापिनकिंचिच्चोरितंमया ॥ इतिप्रतिज्ञयादीक्षाकालाज्जन्मांतरंत्विदम् ॥
॥१९॥ तस्माद्वैश्यंसमानीयत्यक्तुमर्हसिभूपते॥राजाचतुर्भुजंभक्तंसमानीयप्रपूज्यच ॥२०॥ मोचयामासतंवैश्यंसचोरोऽपिधनंददौ॥

वैश्यायवैष्णवोभूत्वाचौर्य्यंतत्याजयत्नतः ॥ २१ ॥ राजाचतुर्भुजस्याथशिष्योभूत्वातिवैष्णवः ॥ यावज्जीवंहरिंस्मृत्वाजगामांतेहरेः
पदम् ॥ २२ ॥ चतुर्भुजस्यचणकक्षेत्रमेकदिनेपथि।स्थितमागंतुकैर्भक्तैर्लुंठितंचाल्पशेषितम् ॥२३॥ तद्रक्षकःसमागत्यप्रोवाचाथचतु
र्भुजम् ॥ समागत्यतुतान्सर्वान्सत्कृत्यपरयामुदा ॥२४॥ आनीयभोजयामासभर्त्सयन्रक्षकंमुहुः॥अथक्षेत्रेतुसर्वेभ्योऽधिकमन्नंबभूवह
॥ २५ ॥ एवंचाल्कनामाभूद्भक्तःसर्वसुहृत्तमः॥महाभक्तोजगन्नाथपूजायांनिरतःसदा॥२६ ॥यदृच्छालाभसंतुष्टःप्रतिग्रहविवर्जितः ॥
एकदाविमलानंदःषट्पंचाशत्प्रकारकम् ॥ २७ ॥ भोज्यंगृहेजगन्नाथंध्यात्वाभक्त्यासमर्प्पयत ॥ तस्मिन्नेवदिनेरात्रौराजास्वप्नंददर्शह
॥ २८ ॥ आगतोवैष्णवैःसार्धमेकोभक्तोत्तमोमहान् ॥ ततोनीलाचलेशस्तंभोजनायाब्रवीद्वचः ॥ २९ ॥ समहान्वैष्णवःप्राहवि
मलानंदमंदिरे ॥ सम्यग्भुक्तंमयाराजन्नेतैस्सहनसंशयः ॥ ३० ॥ अभून्नैवंहशीतृप्तिःकदाचिदपिमेक्वचित् ॥ इत्युक्त्वासगतःसाधुर्म
हान्निजजनैःसह ॥ ३१ ॥ राजाप्रबुद्धस्तंस्वप्नंचिंतयन्प्रातरेवहि ॥ विमलानंदभवनंगत्वापप्रच्छतंपुनः ॥ ३२ ॥ पूर्वस्मिन्वा
सरेब्रह्मन्किंत्वयाहरयेऽर्प्पितम् ॥ तद्वदेतिनिशम्याथविमलानंदआहतम् ॥ ३३ ॥ षट्पंचाशत्प्रकारंतुभोज्यमर्पितवानहम् ॥ इति
श्रुत्वाततोराजाविमलानंदचेष्टितम्॥३४॥ स्तुवन्नागतवान्गेहंतंमहांतममन्यतामदनमोहनभक्तोऽभूद्दिल्ल्यांसूरोऽतिभक्तिमान् ॥ ३५ ॥
दिल्लीश्वरनृपस्यासीदधिकारीमहानयम् ॥ कुर्वञ्छ्रीकृष्णभजनंराजकार्य्यंचकारसः ॥ ३६ ॥ दिल्लीश्वरोददौतस्मैकियद्देशाधिका
रिताम् । तत्रोत्पन्नंधनंराज्ञेदत्त्वायच्चावशेषितम् ॥ ३७ ॥ तत्साधुभ्योददौनित्यंहरिपूजापरायणः ॥ एकदासूरदासःसगुडंहद्ग्राम

नोरमम् ॥ ३८ ॥ तदैवशकटेकृत्वागुरवेऽपूपसिद्धये ॥ प्रेषयामासभक्त्यासमथुरायांमहामनाः ॥ ३९ ॥ निश्यागतंगुडंदृष्ट्वागुरुः शिष्यमुवाचह ॥ प्रातरेतैर्विधेयावैह्यपूपाहरयेशुभाः ॥ ४० ॥ इत्युक्त्वासस्वयंशिष्योददर्शस्वप्नमुत्तमम् ॥ स्वयमागत्यवदति श्रीमन्मदनमोहनः ॥ ४१ ॥ अस्येदानींगुडस्यत्वंकृत्वापूपान्प्रयच्छमे ॥ इतिदृष्ट्वापिसुष्वापभ्रांतिरेवेतिचिंतयन् ॥ ४२ ॥ पुनर्ददर्शतादृग्वैस्वप्नमुत्थाययत्ततः ॥ कृतापूपान्समर्प्याथहरयेवैष्णवैःसह ॥ ४३ ॥ प्रीत्याप्रसादंबुभुजेततःसुष्वापनिर्भयः ॥ एकदा सूरदासस्तुपद्यंचक्रेऽद्भुतार्थकम् ॥४४॥ साधोरुपानहौधृत्वातरिष्यामिभवार्णवम् ॥ इतिश्रुत्वातुकश्चिद्वैसाधुःसोपानदागतः ॥ ४५ ॥ मथुरायांसूरदासपरीक्षार्थंसधूर्तवत् ॥सूरदासोगुरुद्वारिस्थितस्तत्रगतःसवै ॥४६॥ उवाचसूरदासंभोप्रष्टुमिच्छामितेगुरुम् ॥ इतोऽहं संप्रयास्यामिपश्योपानद्द्वयंमम ॥ ४७ ॥ नकाचिद्भीःसुखंगच्छेत्युक्तःसूरेणसोऽगमत् ॥ तत्रसूरगुरुंनत्वासूरदासःक्ववर्तते ॥ ४८ ॥ इत्युक्तेतेनधूर्तेनततोगुरुरथाह्वयत् ॥ सूरदासंततःसोऽपिगुरुसन्निधिमागतः ॥ ४९ ॥ तस्योपानद्द्वयंप्रोक्ष्यकृत्वाकरतलेमुदा ॥ गुरोममाद्यफलितस्त्वत्प्रसादान्मनोरथः ॥ ५० ॥ प्रार्थितोयस्तुगीतेनमयालब्धस्तुसोऽचिरात् ॥ इतिदृष्ट्वातदासोऽपियःपरीक्षार्थमागतः ॥ ५१ ॥ उत्थायपादयोस्तस्यनिपपातक्षमापयन् ॥ एकदासूरदासस्यगृहेराजधनंस्थितम् ॥ ५२ ॥ लक्षावधिददौ सर्वंदुर्भिक्षसमयेमुदा ॥ साधुभ्योऽथनृपोभृत्यानानेतुंतद्धनंस्वकम् ॥ ५३ ॥ प्रेषयामासतेभृत्याःसूरदासांतिकंगताः ॥ उच्चुर्धनंप्रयच्छेतिश्रुत्वासूरोऽपितत्क्षणात् ॥ ५४ ॥ धनभांडप्रस्तरादिकृत्वासंमुद्रयतन्मुखम् ॥ ददौलिखित्वातत्पत्रंयथावत्कथयाम्यहम्

॥ ५५ ॥ राजन्लक्षावधिधनंममगेहेस्थितंतव ॥ दुर्भिक्षसाधुभिर्भुक्तंभवद्भीत्यापलायितः ॥ ५६ ॥ अहंकांचिन्निलीयास्मीत्येवं
विज्ञापनामम ॥ इतिसंलिख्यपत्रंसप्रपलाय्यगतःक्वचित् ॥ ५७ ॥ दिल्लीश्वरोऽपितंदृष्ट्वाभांडंप्रस्तरपूरितम् ॥ पत्रंचतादृशंदृष्ट्वाह
सन्निदमुवाचह ॥ ५८ ॥ किंकुर्य्यांसाधुभिर्भुक्तंसकिमर्थंपलायितः ॥ ततष्टोडलमल्लेनसूरदासोऽतियत्नतः ॥ ५९ ॥ ततोदिल्लीश्व
रंचोक्त्वाकारागारेनिवेशितः ॥ ततःसूरोहरेर्गीतिंनिर्ममेभक्तिपूर्वकम् ॥ ६० ॥ आहतंभूपतिंस्वप्नेश्रीमन्मदनमोहनः ॥ मद्भक्तोऽयंसू
रदासःकारागारेधृतस्त्वया ॥ ६१ ॥ इदानींमुंचतंनोचेत्प्रातर्यास्यसिदुर्दशाम् ॥ इतिदृष्ट्वानृपःस्वप्नंसूरंतत्कालमानयत ॥ ६२ ॥
क्षमापयन्धनंभूरिदत्त्वातत्राधिकारिताम् ॥ ददौससूरदासस्तुनजग्राहाधिकारिताम् ॥६३ ॥ वृंदावनंसमागत्यनिर्ममेगीतमुत्तमम् ॥
तत्राप्याश्चर्य्यमतुलंयस्मिन्नेवादिनेकृतम् ॥ ६४ ॥ तदैवचश्रुतंसर्वैर्गीतिंक्रोशशतोपरि ॥ एवंभक्तिवशात्सूरदासोविख्यातिमानभूत्
॥ ६५ ॥ वसन्वृंदावनेऽन्तेसजगामहरिसंदिरम् ॥ इति श्रीभगवद्भक्तिमाहात्म्येसूरदासचरितंनामैकोनत्रिंशदधिकशततमःसर्गः
॥ १२९ ॥ ॥ छ ॥ एवंकात्यायनीदासोबभूवातीवभक्तिमान् ॥ यस्मिन्गायतिवृक्षादिर्बभूवस्पंदवर्जितम् ॥ १ ॥ एवविलंदाग्रा
मेतुभक्तोऽभूदतिविश्रुतः ॥ मुरारिर्नामतन्निदंमोवक्ष्याम्यस्यकथांशुभाम् ॥ २ ॥ समुरारिर्महाभक्तोबभूवनृपपूजितः ॥ ग्रामेसर्वैर्वृधमा
नोनिःसंगोलोभवर्जितः ॥ ३॥ स्वग्रामेचैकदास्नात्वाससमागच्छन्निजालयम् ॥ मार्गेकोऽपिगृहेभक्तःतुलसीतरुसन्निधौ ॥ ४ ॥ पूजयि
त्वाहरिंतस्मादागृहावसवैष्णवम् ॥ अहोकोऽप्यत्रभक्तोऽस्तिगृह्णातुचरणोदकम् ॥ ५ ॥ इतिश्रुत्वावचस्तस्यमुरारिस्तद्गृहंययौ ॥

ददर्शतुलसींतत्रशालग्रामशिलार्चनम् ॥६॥ हृष्टस्तमाहदेहीतिश्रुत्वाभीतःसपूजकः ॥ नाथाहंचर्म्मकारोऽस्मिक्षम्यतांममदुर्नयम् ॥ ॥७॥ इत्युक्तवंतंतंप्राहमुरारिःप्रहसन्निव ॥ माभैस्त्वंसाधुभक्तोऽसिभक्तिरस्तुतवाच्युते ॥८॥ अतोमेत्वंचताताोऽसिदेहिमेचरणोदकम् ॥ इत्येवमाग्रहंकृत्वापीत्वातच्चरणोदकम् ॥ ९ ॥ जगामस्वगृहंहृष्टोमुरारिर्लोकपूजितः ॥ अथग्रामजनाःश्रुत्वातत्संसर्गंचतत्यजुः ॥ १० ॥ राजापिचसमागत्यमुरारिंगुरुमब्रवीत् ॥ किमिदंश्रूयतेनाथतत्रपादोदकग्रहः ॥ ११ ॥ सत्यंभोचर्म्मकारेणसमाहूतोगतःस्वयम् ॥ तत्कराद्दलतोनीत्वापीतंतच्चरणोदकम् ॥ १२ ॥ इति श्रुत्वाथराजापिविमनास्ततउत्थितः ॥ जगामस्वगृहंतस्यपरित्यागेनदुःखितः ॥ १३ ॥ एवंज्ञात्वामुरारिस्तंतंग्रामंपरिहायसः ॥ अन्यत्रोवासहृष्टात्माहरिकीर्तननतत्परः ॥ १४ ॥ श्रीरामनवमींप्राप्यमहोत्साहंचिकीर्षितः ॥ राज्ञःस्वप्नोबभूवाथराज्ञावाश्चर्य्यकारकः ॥ १५ ॥ तंमुरारिंविनापूजांममभाकुरु भूपते ॥ करिष्यसिविनातंचेदकल्याणंभविष्यति ॥ १६ ॥ एवंक्रोऽपिवदत्यत्यवैष्णवःक्रोधसंयुतः ॥ दृष्ट्वास्वप्नमिमंराजाप्रातरुत्थायचिंतितः ॥ १७ ॥ आहूयोवाचतंस्वप्नंसचिवादींस्ततःस्वयम् ॥ मुरारिसन्निधौगत्वाप्रार्थयामासभक्तितः ॥ १८ ॥ क्षंतव्यमितिमूर्खस्यदुष्टस्याचरितंगुरो ॥ इतिश्रुत्वामुरारिस्तुनददर्शचतन्मुखम् ॥ १९ ॥ येभक्तिविमुखास्तेषांनाहंपश्यामिचाननम् ॥ इति श्रुत्वाततोराजाबद्धांजलिरुवाचतम् ॥ २० ॥ त्वमेवशिक्षकोमेऽसिकथमेतावतीकृपा ॥ नकृतामयिपापिष्ठेकथंप्रज्ञामवाप्नुयाम् ॥ २१ ॥ यथासंताडितोयातिपशुःपथिनिरंतरम् ॥ नतथासत्कृतःप्रेम्णावाण्याचापितिरस्कृतः ॥ २२ ॥ इति श्रुत्वाप्रसन्नो

ऽभून्मुरारिस्तमुपागतः ॥ राज्ञासहनिजंग्रामंमिलंदाख्यंमनोरमम् ॥ २३ ॥ तत्रश्रीरामनवमीदिनेकृत्वामहोत्सवम् ॥ मुरा
रिस्तुस्वयंनृत्यञ्जगौरामायणंमुदा ॥ २४ ॥ श्रीरामवनवासस्यकथायातायदातदा ॥ मुरारिस्तुतदाव्यग्रचित्तोनृत्यञ्जगौक
थाम् ॥ २५ ॥ गतेरामेसमूर्च्छाथश्रीमान्दशरथोनृपः ॥ इत्युक्तातुकथांसोऽपिमुरारिर्मूर्च्छितोऽभवत् ॥ २६ ॥ पुनरुत्थायहारा
महारामजनकात्मजे ॥ अनुकुर्वन्दशरथंमुरारिर्विजहावसून् ॥ २७ ॥ पश्यतांसर्वलोकानांतदद्भुतमिवाभवत् ॥ अथराजारुदन्नेत्य
समुत्थापितवान्गुरुम् ॥ २८ ॥ नोत्तस्थौसमृतोयस्मात्ततःसर्वेऽतिदुःखिताः ॥ संचस्करुर्मुरारेस्तुदेहंविधिवदुज्ज्वलम् ॥ २९ ॥
एवंभक्तेस्तुमाहात्म्यंकोज्ञातुंक्षमतेबुधः ॥ यथाकथंचिद्भक्तिश्चेन्नृणांसंसारतारिणी ॥ ३० ॥ इति श्रीभगवद्भक्तिमाहात्म्ये
मुरारिदासचरितंनामत्रिंशदधिकशततमःसर्गः ॥ १३० ॥ तुलसीदासचरितंवक्ष्यामिपरमाद्भुतम् ॥ यस्यश्रवणमात्रेणकृतकृत्यो
भवेन्नरः ॥ १ ॥ गंगायमुनयोर्मध्येदेशःपुण्यतमोमहान् ॥ अंतर्वेदीरितिख्यातोमुनिभिःपरिसेवितः ॥२॥ तत्रैकोऽस्तितरीनाम्नाग्रामो
ब्राह्मणसंकुलः ॥ तत्रासीत्तुलसीनामाशुक्लइत्युपनामकः ॥ ३ ॥ कारयित्वातद्विवाहंपितातस्यदिवंगतः ॥ माताप्यनुययौतस्य
स्वपतिंसत्यतत्परा ॥ ४ ॥ अथोसतुलसीनामास्वपत्न्यासहनित्यशः ॥ रेमेपितृधनंप्राप्यदानभोगसमन्वितः ॥ ५ ॥ काले
नतस्यपुत्रोऽभूद्दृष्ट्वातंचातिहर्षितौ ॥ तुलसीतस्यपत्नीचेत्युभौपूर्णमनोरथौ ॥ ६ ॥ एकदातस्यपत्नीतुसमीपेमातृमंदिरे ॥ तमनुक्त्वा
गताचाथसोऽप्यदृष्ट्वागृहेचताम् ॥ ७ ॥ ययौतदैवश्वशुरगेहेपत्नींददर्शह ॥ दृष्ट्वातमागतंपत्नीभर्त्सयंतीवचोऽब्रवीत् ॥ ८ ॥ किमर्थं

मागतोऽस्यत्रनगेहेस्थातुमिच्छसि ॥ इत्युक्तःप्राहतांपत्नींप्रहसंस्तुलसीद्विजः ॥ ९ ॥ त्वयाविनावरारोहेमंदिरंविपिनायते ॥ स्थातुं शक्नोमिनैवातस्त्वामदृष्ट्वाकथंचन ॥ १० ॥ इत्युक्ताप्राहतत्पत्नीसाक्रोधेनपतिंपुनः ॥ किमर्थंभाषसेव्यर्थंगच्छस्वभवनंप्रति ॥११॥ अस्थिचर्म्ममयेचास्मिन्ममदेहेऽस्तियादृशी ॥ प्रीतिःसायदिरामेस्यात्तदाधन्योभविष्यसि ॥१२॥ श्रुत्वैतद्वचनंतस्याःपत्न्याःसतुलसीद्विजः ॥ तदैवोत्थायचलितोज्ञात्वापत्नींहितैषिणीम् ॥१३॥ दृष्ट्वातंचलितंपत्नीपुनःप्राहपतिंप्रति ॥ अतःक्रोधंचत्यक्त्वात्वंमुक्त्वा गच्छसिमंदिरम्॥१४॥अहंचापिगमिष्यामित्वयासहनसंशयः ॥ इतिश्रुत्वातुतद्वाक्यंप्राहासौतुलसीद्विजः ॥१५॥ अतःपरंनवक्तव्यं त्वयाकिमपिमत्कृते ॥ कोमोक्ष्यतिपतिःक्वासौकःस्थास्यतिगमिष्यति ॥ १६ ॥ गृहंकस्येतिसर्वंमेविस्मृतंत्वदनुग्रहात् ॥ धन्यासि त्वंमयिस्नेहवतिचासिनसंशयः ॥१७॥ यत्त्वयागुरुणेवाहमुद्धृतोभवसागरात् ॥ इत्युक्त्वातुलसीविप्रस्तत्कालंप्रस्थितोऽभवत् ॥१८॥ पत्नीचाप्यतिसंदिग्धारुदंतीकियदन्वगात् ॥ गत्वायोध्यांददर्शाथसीतारामौमुदान्वितः ॥ १९ ॥ तीर्थोपवासविधिनासुष्वापसरयूतटे ॥ किंजपन्निहमुक्तःस्यामितिचिंतापरोऽभवत् ॥ २० ॥ तदासदृष्टवान्स्वप्नेपितरंभक्तरूपिणम् ॥ वदंतंवत्सरामेतिमन्त्रं जपनिरंतरम् ॥ २१ ॥ एतन्मन्त्रसमोनास्तिमन्त्रस्तुभुवनत्रये ॥ इमंजपंतिदेवाश्चगन्धर्वोरगकिन्नराः ॥२२॥ यस्योच्चारणमात्रेणपापराशिःप्रलीयते ॥ भवंतिकृतकृत्यावैमनुष्यानात्रसंशयः ॥२३॥ रामनामसमंवत्सनास्तिकिंचिज्जगत्त्रये ॥ चतुर्वर्गप्रदंनॄणांसत्यंसत्यंवदाम्यहम् ॥ २४ ॥ जपोहोमस्तथाध्यानंदानंतीर्थनिषेवणम् ॥ जानीहिसर्वसिद्धान्तंरामनामसमंनहि ॥ २५ ॥ तस्मादिदंरा

मनामगृहीत्वामन्त्रमुत्तमम् ॥ यावदायुःसुखीभूत्वाव्रजांतेरामसन्निधिम् ॥ २६ ॥ किंचप्रातस्तवाकस्मात्सरयूतीरवर्तिनः ॥ सन्निधा
वेत्यतुलसीमालांदास्यतिवैष्णवः ॥ २७ ॥अथैवंस्वप्नमालोक्यप्रबुद्धस्तुलसीद्विजः ॥ परमानन्दमग्नस्तंजजापसमनुंहृदि ॥ २८ ॥
प्रातरुत्थायसुस्नातःसीतारामौनिरीक्ष्यच ॥ आसीनःसरयतीरेतत्रायातिचवैष्णवः ॥ २९ ॥ मालांगृहीत्वातुलसीदासाय
प्रददौसतु ॥ जग्राहतांतुमालांसरात्रिस्वप्नमनुस्मरन् ॥ ३० ॥ एवंमालांचमन्त्रंचप्राप्यसोऽतीवहर्षितः ॥ एकचित्तोजपंस्तत्र
तस्थौभक्तिसमन्वितः ॥ ३१ ॥ ततःकाशींसमागत्यअसीनद्याउदग्दिशि ॥ हनुमद्दक्षिणेकृत्वाकुटींतत्रावसत्सुखम् ॥ ३२ ॥
रामनामजपासक्तोरामायणपरायणः ॥ भुंजानःपरमप्रीत्यायथालब्धमयाचितम् ॥ ३३ ॥ यत्ररामकथाकाश्यांगत्वातत्राति
सादरम् ॥ शुश्रावसततंनित्यंलोभमोहविवर्जितः ॥ ३४ ॥ अथैवंवसतस्तस्यश्रीरामस्यकृपाह्यभूत् ॥ संस्कृतंप्राकृतंचै
वकाव्यंचक्रेमनोहरम् ॥ ३५ ॥ एकदानिशिसस्वप्नंददर्शपरमाद्भुतम् ॥ ध्यायमानोराममूर्तिंसमागत्याब्रवीदिदम् ॥ ३६ ॥
शृणुत्वंतुलसीभक्तत्वयितुष्टोऽस्म्यसंशयम् ॥ ततोवक्ष्यामिजगतांहितंतवविशेषतः ॥ ३७ ॥ कुरुरामायणंसर्वंभाषयात्वंम
दाज्ञया ॥ त्वंमयोद्धृतएवासिलोकेस्यादुपकारकम् ॥ ३८ ॥ कलौमूर्खाभविष्यन्तिनज्ञास्यंतिचसंस्कृतम् ॥ तेषांहितमिदंलो
केभविष्यतिनसंशयः ॥ ३९ ॥ येगास्यंतित्वयाप्रोक्तंरामायणमनुत्तमम् ॥ तेममातिप्रियानित्यंतेभ्योदास्याम्यभीप्सित
म् ॥ ४० ॥ एवंदृष्ट्वातुतुलसीदासःस्वप्नंसमुत्थितः ॥ कृतकृत्यमथात्मानंमेनेऽयंभक्तसत्तमः ॥ ४१ ॥ गणेशादीन्नमस्कृत्यप्रा

रेभेभक्तिपूर्वकम् ॥ कुर्वन्नहर्निशंभक्त्यासंपूर्णमकरोन्मुदा ॥ ४२ ॥ दृष्ट्वातन्निर्मितंसर्वैस्तुत्वासंजगृहुर्बुधाः ॥ देशेदेशांतरेख्यातमं
बुधावपिपूजितम् ॥ ४३ ॥ एकदायदभूत्तस्यमाहात्म्यंतद्वदाम्यहम् ॥ तस्यैवंनियमःकाश्यांचक्रेशौचंनकुत्रचित् ॥ ४४ ॥ असी
नदीदक्षिणतीरेसेन्यससर्वदामूत्रपुरीषयोश्च ॥ कृत्वाविसर्गंपुनरेत्यमंदिरेचकारचावश्यकमाह्निकंमुदा ॥ ४५ ॥ अथास्यदक्षेक्वचि
दाम्रवृक्षेशौचावशेषंजलमाक्षिपत्तदा ॥ पीत्वाप्रसन्नोऽभवदाहकश्चिन्माध्व्यागिरावैतुलसींपरेतः ॥ अहोतवैतज्जलदानतोऽहंप्रीतोददे
स्वाभिमतंवदत्वम् ॥ ४६ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येतुलसीदासचरितंनामैकत्रिंशदधिकशततमःसर्गः ॥ १२१ ॥ इत्यु
क्तस्तुलसीदासःप्रेतंप्राहातिनिर्भयः ॥ कस्त्वंकथमिमांयोनिंसंप्राप्यात्रविषीदसि ॥ १ ॥ इतिश्रुत्वाब्रवीत्प्रेतःसाधोमच्चरितंशृणु ॥
आसंपूर्वमहंविप्रोविंध्येराजपुरोहितः ॥ २ ॥ लुब्धःसत्कर्म्मरहितःसाधुविद्वेषकारकः ॥ परनिंदारतोनित्यंविद्वद्ब्राह्मणकंटकः
॥ ३ ॥ राज्ञादत्तंद्विजातिभ्योयद्धनंचतदर्धकम् ॥ स्तोकंदत्वाद्विजातिभ्यःसर्वंरक्षितवानहम् ॥ ४ ॥ एवंमयावयोनीतंनदत्तं
किमपिस्वयम् ॥ नसत्कृतंनोपकृतंमनोवाक्कायकर्मभिः ॥ ५ ॥ एकस्मिन्दिवसेद्वारिसमायातःपिपासितः ॥ तस्मैक्रोधेनमहताकिं
चिद्दत्तंजलंमया ॥६॥ एवंतत्कर्मणाचात्रजलेनतदुपस्थितम्॥इतिश्रुत्वातुतुलसीदासःपप्रच्छतंपुनः॥कथमत्रागमोऽथेतिश्रुत्वासोऽप्यब्र
वीत्पुनः ॥ ७ ॥ एकदास्मद्देशीयोराजाकाशीमुपागतः ॥ तेनसाकमहंलोभादिहायातोऽथदैवतः ॥ ८ ॥ सर्पदष्टोमृतश्चाहंततोमां
यमकिंकराः ॥ नेतुमागतवंतस्तान्वेसमुद्धान्स्ववारयत ॥ ९ ॥ भीमोविनायकोदेवोनायंनरकमर्हति ॥ अनिच्छयापियत्काशीयात्रायां

मृत्युमाप्तवान् ॥१०॥ अतएवमहापापीश्रुतिपथान्नाहितःसदा ॥ भुंजानोनरकान्घोरान्कालभैरवयातनाम् ॥ ११ ॥ रामभक्तस्यविप्रस्यपी
त्वाशौचावशेषतः ॥ जलंकाशींसमासाद्यमुक्तोभवितुमर्हति ॥ १२ ॥ इत्येतत्कथितंसर्वंसाधोह्याचरितंमया ॥ त्वंयदीच्छसितद्ब्रू
हिद्त्वायास्यामिसद्गतिम् ॥ १३ ॥ श्रुत्वैवंतुलसीदासस्तमुवाचातिहर्षितः ॥ रामंदर्शयमेब्रह्मन्परिवारसमन्वितम् ॥ १४ ॥
इतिश्रुत्वाब्रवीत्प्रेतोनशक्यंतन्ममास्तिभोः ॥ किंतूपायंप्रवक्ष्यामियथाद्रक्ष्यसिराघवम् ॥ १५ ॥ हनूमन्निकटेश्रीमद्रामायणकथा
श्रवे ॥ नित्यमायातिपूर्वयोयातिपश्चात्तुसर्वदा ॥ १६ ॥ कुष्ठरोगातुरोदीनोदुर्दर्शःसाधुरूपधृक् ॥ हनूमंतंविजानीहितमेवभक्तस
त्तमम् ॥ १७ ॥ यदातुससमुत्थायव्रजेत्त्वंतमनुव्रज ॥ गत्वैकांतेनिपत्याथपादौधृत्वाप्रसादय ॥ १८ ॥ अथप्रसन्नोहनुमांस्त्वांवदि
ष्यतियद्वचः ॥ तदेवसत्यंजानीहिभक्तराजनमोऽस्तुते ॥ १९ ॥ इत्युक्त्वासचप्रेतस्तुकाशींगत्वाथतारकम् ॥ मंत्रंगृहीत्वामुक्तोऽभूद्वि
श्वेश्वरकृपावशात् ॥२०॥ अथोसतुलसीदासःस्नात्वासंपूज्यराघवम्॥हनुमन्निकटेपूर्वंसचासीद्गतवान्मुदा ॥२१॥ जानेऽहंत्वांनसंदेहोब्र
ह्मराक्षसवाक्यतः ॥ कुरुप्रसादंदेवेशहनुमन्भक्तवत्सल ॥२२॥ इत्युक्तोहनुमानाहकिमिच्छसिवदस्वतत् ॥ ततस्तुतुलसीदासःप्राहतंपा
दयोःपतन् ॥२३॥रामःसपरिवारोमेदृक्पथेस्यात्कदाविभुः ॥ श्रुत्वैतन्मारुतिःप्राहचित्रकूटंचत्वंव्रज ॥ २४ ॥ तत्रगत्वाभवद्धेतुःसेत्स्य
तीतिवदन्मुदा॥मुहुःप्रणम्यतंतत्रननर्तानंदविह्वलः ॥ हनुमान्प्रययौतस्मात्सोऽपिस्वगृहंगतः ॥२५॥ प्रार्थयंस्ताद्दिनंनित्यंचित्रकूटंययौ
मुदा ॥ एकस्मिन्दिवसेतत्रददर्शाद्भुतमुत्तमम् ॥२६॥ तत्रपौरजनाएत्यरामलीलांप्रकुर्वते ॥ तत्रापिजित्वापौलस्त्यंपुष्पकोपरिसंस्थितः

॥ २७॥ सीतयालक्ष्मणेनापिभ्रात्राजांबवतायुतः ॥ विभीषणेनसुग्रीवहनुमत्प्रमुखैर्वृतः ॥ २८ ॥ गुहाश्रमादयोध्यायांगच्छन्दृष्टस्तुते
नवै ॥ एवंदृष्ट्वारामलीलांमोहितोऽभून्महामनाः ॥२९॥ रामलीलेतितुलसीदासोजानन्समागतः ॥ कियद्दूरेततस्तत्रहनुमान्साधुवेष
धृक् ॥ ३० ॥ मिलितस्तंतुतुलसीदासोहृष्टवदब्रवीत् ॥ अहोपूर्वंरामलीलांदृष्ट्वेदानीमिहागतः ॥ ३१ ॥ चित्रकूटसमीपेतुगत्वातां
द्रष्टुमर्हसि ॥ इति श्रुत्वातुहनुमान्संप्राहप्रहसन्निव ॥३२॥ अहोक्वसाश्विनेमासिरामलीलाप्रजायते ॥ किमिदंभाषसेसाधोभ्रांतिमानिव
सर्वथा ॥ ३३ ॥ इतिश्रुत्वातुतुलसीदासस्तेनसमंययौ ॥ चित्रकूटंपुनस्तत्रसर्वंपृच्छतिसादरम् ॥ ३४ ॥ इदानींरामलीलात्रास्थिताः
साधुजनागताः ॥इति श्रुत्वातुवचनंसस्मारोक्तंहनूमतः ॥३५॥अहोरामेणप्रभुणावंचितोऽहंदुराशयः ॥ यत्तदामोहयामासमाययाममम
मानसम् ॥३६॥ तदालीलेतिमेबुद्धिरभवद्भ्रांतिशालिनी ॥ इत्युक्त्वाप्ररुरोदोच्चैस्तत्रत्यैर्निश्चितंतदा ॥ ३७ ॥ विक्षिप्तोऽयंवभूवात्रमत्वा
सर्वैस्तिरस्कृतः ॥ समागत्यनिजेगेहेभर्त्सयन्निजमानसम् ॥ ३८ ॥ त्यक्ताहारोनिशायांससुष्वापातिविमोहितः ॥ ददर्शतंहनूमंतं
यथाद्राक्षीद्विमानगम् ॥३९॥ अहोभाग्यंतवैवैतन्नान्यस्यजगतीतले ॥ कस्यचिज्जायतेचैवंदर्शनंसुरदुर्लभम् ॥ ४० ॥ तस्माच्चिंतांप
रित्यज्यभजंतंरघुनंदनम् ॥ज्ञानपूर्वंहिसाक्षात्तंद्रष्टुमर्हतिकःक्षितौ ॥ ४१ ॥ धनुर्बाणधरंश्यामंजटावल्कलमंडितम् ॥ जानकीलक्ष्मणा
भ्यांचसेवितंवामदक्षयोः ॥ ४२ ॥ सुग्रीवोपासनंकिंचिद्धदंतंसस्मिताननम् ॥ दृष्ट्वाग्रस्थंतुभरतंपादुकेदधतंस्वके ॥४३॥मुंचंतंहर्षजंवा
रिनेत्राभ्यांप्रेमविह्वलम् ॥ कृतांजलिपुटंशांतमानंदैकदृशंमुदा ॥ ४४ ॥पश्यंतंहनुमन्तंतंविभीषणपुरःस्थितम् ॥ अयोध्यांद्रष्टुकामैस्तैर्वा

नरैः पारितोषितम् ॥४५॥ स्तूयमानंसुरगणैर्वर्षद्भिः कुसुमान्यलम्॥इत्येवंसंस्मरन्नित्यंशृण्वन्रामायणंमुदा ॥ उवासकृतकृत्यः सकाश्यां
विश्वेश्वराज्ञया ॥ ४६ ॥ इति श्रीभगवद्भक्तिमाहात्म्येतुलसीदासचरितंनामद्वात्रिंशदधिकशततमः सर्गः॥१३२॥ छ ॥ एकदातुद्विजः
कश्चिदायातोद्वारिसंस्थितः ॥ ब्रह्महत्यायुतोहत्याचिह्नंचापिसमुद्वहन् ॥ १ ॥ मध्याह्नेतुलसीदासमाजुहावबुभुक्षितः ॥ अहोगतासाह
त्यातेसीतारामेतिभाषणात् ॥ २ ॥ ततस्त्यजदेहत्यायालक्षणंचातिगर्हितम् ॥ स्नात्वाजह्नुसुतायांत्वंशीघ्रमागच्छमद्गृहे ॥ ३ ॥ त्वया
सहाहंभोक्ष्यामिनिष्पापस्त्वंनसंशयः ॥ इत्युक्तः सद्विजोगंगास्नानंकृत्वासमागतः ॥ ४ ॥ पुनस्तमाहतुलसीसीतारामंवदत्रिधा ॥
ततः समीलिताक्षः सन्सीतारामेत्युवाचसः ॥५॥ त्रिधाशनैःशनैर्हृष्टस्ततस्तंप्रेमपूर्वकम् ॥ करेधृत्वागृहेगत्वासहतेनातिहर्षितः ॥ ६ ॥
बुभुजेतुलसीदासः स्वगेहेपश्यतांनृणाम् ॥ एवमस्यतुवृत्तांतंशुश्रुवुःपुरवासिनः ॥ ७ ॥ आगत्यपंडिताविप्रास्तमूचुःकिंकृतंत्वया ॥
ब्रह्महत्याकृतासाकंभुक्तवानस्तियद्भवान् ॥८॥ अतोनयैनंभवतःस्पर्शंकुर्य्यान्नकर्हिचित् ॥ इतिश्रुत्वावचस्तेषामुवाचप्रहसन्निव ॥९॥
परीक्ष्यतामयंविप्रःसर्वैर्विश्वेश्वरांतिके ॥इतिश्रुत्वाब्रवीत्कश्चिदेतद्धस्तात्तुगौर्यदि ॥ १० ॥ ग्रासंभुंजीतमुदितानिष्पापोऽयंतदाद्विजः ॥
इतिश्रुत्वातुतुलसीदासश्चातीवहर्षितः ॥११॥ सत्यमेतन्नसंदेहःकिंचान्यच्छृणुमेवचः ॥ गवांग्रासंभक्षयित्वानंदिनंभक्षयाम्यहम् ॥१२॥
रामेत्युच्चारणादेवयदिपूतोभवेद्द्विजः ॥ इतिश्रुत्वातुतेसर्वेविश्वेशांतिकमागताः ॥ १३ ॥ नीत्वातुतुलसीदासोब्राह्मणंसमुपागतः ॥
तत्रब्राह्मणहस्तेनग्रासंपूर्वंगवेददौ ॥१४॥ मुदिताबुभुजेसागौर्ग्रासंसर्वंततस्तुसः ॥ स्थाल्यामन्नंनिधायाथद्विजहस्तेददौस्वयम् ॥१५॥

उवाचनंदिनंविप्रोभोजयित्वातुभक्तितः ॥ स्वयंतुष्टावतत्रैवनंदिनंपरमादरात् ॥ १६ ॥ यद्येषब्रह्महत्यावान्सीतारामेतिभाषणात् ॥ निष्पापोऽभूत्तदास्यत्वंहस्तेनान्नंतुभक्षय ॥ १७॥ इत्युक्तःसतुनंदीवैपाषाणस्याद्भुताकृतिः ॥ अधःकृत्वामुखंपात्रेभोजयन्बुभुजेमुदा ॥ १८ ॥ पश्यतांसर्वलोकानांतदद्भुतमिवाभवत् ॥ सर्वेतद्बुभुजेचान्नंजयशब्दोमहानभूत् ॥ १९ ॥ ततस्तेपंडिताःसर्वेदृष्ट्वातत्परमाद्भुतम्॥साधुसाध्वितितुलसीदासंतुष्टुवुरादरात् ॥२०॥ विप्रोऽपिनाममाहात्म्यंज्ञात्वातज्जपतत्परः॥बभूववैष्णवश्रेष्ठस्त्यक्तसर्वमनोरथः ॥ २१ ॥ एकदाकोऽपितद्गेहेचौरएकः समागतः ॥ निशिचोरयितुंभित्त्वावेश्ममध्येजगामसः॥२२॥ददर्शपुरुषंतत्रश्यामंकमललोचनम् ॥ धनुर्बाणधरंगेहेजाग्रंतंतुमनोहरम् ॥ २३ ॥ तंदृष्ट्वातस्करः शीघ्रंनिर्ययौगृहतोबहिः ॥ निशिस्थित्वाकियत्कालंपुनरागत्यपश्यति ॥ २४ ॥ दृष्टातंजाग्रतंगेहेपुनस्तस्मात्पलायितः ॥ एवंगतानिशासर्वाचोरोऽपिस्वगृहंगतः ॥ २५ ॥ एवंदिनद्वयेजाते तस्करःपुनरेत्यसः ॥ दृष्ट्वातंजाग्रतंचित्तेमहाश्चर्यममन्यत ॥ २६ ॥ ततश्चोरः समायातस्तुलसीदाससान्निधौ ॥ त्वद्गृहेयोघनश्यामोधनुर्बाणधरःपुमान् ॥ २७ ॥ तंदर्शयमहाभक्तंपुरुषंसवभूषणम् ॥ तद्दर्शनमृतेसाधोनकरिष्यामिकिंचन ॥ २८ ॥ श्रुत्वेदंतुलसीदासःप्राहदृष्टःकदात्वया ॥ मद्गेहेपुरुषस्तादृक्तंवदाशुयथार्थतः ॥२९॥ श्रुत्वासतुलसीदासवाक्यंचौरोऽब्रवीत्तम् ॥तस्करोऽहंतवगृहेग्रहीतुंधनमागतः ॥ ३० ॥ तत्रगेहेत्वपश्यंतंजाग्रतंसुमनोहरम् ॥ धनुर्बाणधरंश्यामंततोऽहंप्रपलायितः ॥३१॥ ॥ एवंदिनद्वयेजातेपुनरागतवानहम् ॥दृष्ट्वातंजाग्रतंभीत्याप्रपलाय्यगतोगृहम् ॥ ३२ ॥ परंतुदृष्ट्वातद्रूपंपरमानंदकारकम् ॥ततोदर्शयतंसाधोतदर्थमहमाग

तः ॥ ३३ ॥ श्रुत्वैवतुलसीदासोज्ञात्वारामकृपांस्वयम् ॥ धनंस्वस्यददौसर्वंब्राह्मणाययदृच्छया ॥ ३४ ॥ तावद्गृहाणनिःशंकइत्यु
क्त्वाप्रददौधनम्॥ सचोरोनैवजग्राहतद्धनंभक्तिमानभूत् ॥ ३५ ॥ तुलसीदासशिष्योऽभूत्सीतारामौभजन्मुदा ॥परित्यज्यनिजांवृत्तिं
साधुसेवापरायणः ॥३६॥ गुरुभक्तिरतोनित्यंबभूवातीववैष्णवः ॥ सदासाधुगणासेवीपरमेरमतेसदा ॥ ३७ ॥ इति श्रीभगवद्भक्तिमा
हात्म्येतुलसीदासचरितंनामत्रयस्त्रिंशदधिकशततमःसर्गः ॥ १३३ ॥ ७ ॥ एकदाकोऽपितत्रैवकाश्यांविप्रोमृतोयुवा ॥ तेनसाकंतुत
त्पत्नीप्रवेष्टुंचलितानलम् ॥ १ ॥मार्गेददर्शतुलसीदासंसाप्रणनामह॥ तस्यैसोऽप्याशिषंप्रादाद्भवसौभाग्यशालिनी ॥२॥ ततःसाऽधो
मुखीतस्थौतस्याबंधुजनाःपुनः ॥ऊचुस्तेतुलसीदासमद्ययंविधवाह्यभूत् ॥ ३ ॥ सहगंतुमिहायातासत्यंतस्माद्भवद्वचः।कथंफलिष्यति
त्वस्यासुप्तंबीजमिवोषरे॥४॥ इतिश्रुत्वातुतुलसीदासस्तेषांवचस्स्वयम्॥ स्नात्वागच्छन्गृहेतस्मान्मार्गादेवन्यवर्तत ॥ ५ ॥ गत्वागंगा
तटेतस्माद्भर्तुःशवसमीपतः ॥ वस्त्रेणाच्छाद्यतंप्रेतंस्वयंतत्रोपविष्टवान् ॥६॥सीतारामौजपंश्चित्तेतद्रूपंहृदिचिंतयन् ॥ प्रार्थयामासविप्र
स्यजीवनंरघुनंदनात् ॥७॥ याममेकंहृदिभजञ्छ्रीरामंभक्तवत्सलम् ॥ तस्थौतदातंश्रीरामोजीवयामासवैद्विजम् ॥ ८ ॥ अथोत्थाय
सविप्रस्तुकिंजातमितिचाब्रवीत् ॥ आत्मीयास्तेऽपितंप्राहुरेषतेप्राणदःपिता ॥ ९ ॥ त्वांमृतंजीवयामासपश्यतांसर्वदेहिनाम् ॥ इति
श्रुत्वातुतुलसीदासंदंडवदानमत् ॥ १० ॥ सोऽपितस्मात्समुत्थायस्नात्वागंगाजलेक्वचित् ॥ ययौस्ववेश्मतुलसीदासोरामंहृ
दिस्मरन् ॥ ११ ॥ सोऽपिविप्रस्तयापत्न्यासाकंबंधुसमन्वितः ॥ आजगामगृहेतस्थौसुखेनकतिवत्सरान् ॥ १२ ॥ एवं

प्रभावस्तुलसीदासोऽभूद्भक्तवत्सलः ॥ नज्ञातवान्किमप्यन्यच्छ्रीरामचरणांबुजात् ॥ १३ ॥ तस्यप्रभावंश्रुत्वैवंदिल्लीशोद्रष्टुमागतः ॥ सत्कारेणसमानिन्येस्वगृहेसंस्कृतस्थले ॥ १४ ॥ सतंतत्रागतंज्ञात्वास्वयमागत्यभूपतिः ॥ प्रणम्यस्वासनाद्ग्रेदिल्लीशश्चोपवेशयत् ॥ १५ ॥ अथतंतुलसीदासंभूपतिःप्राहधूर्तवत् ॥ श्रूयतेतवसामर्थ्यमलौकिकमिहास्तिभोः ॥ १६ ॥ तद्दर्शयचमत्कारमथकिंचिन्महामते ॥ इतिश्रुत्वासतुलसीदासस्तंप्राहसस्मितम् ॥ १७ ॥ नमेसामर्थ्यमस्तीहनचमत्कारवानहम् ॥ राममेकंतुजानामिसत्यमेतद्ब्रवीमिते ॥ १८ ॥ इतितस्यवचःश्रुत्वादिल्लीशश्चातिकोपनः ॥ भृत्यानुवाचनीत्वेमंनिरुध्यस्थापयक्वचित् ॥ १९ ॥ यावदेतस्यरामोमेचमत्कारंनदर्शयेत् ॥ तावन्नायंबहिःकार्य्योभवद्भिर्ममशासनात् ॥ २० ॥ ततःसतुलसीदासोसस्माररघुनंदनम् ॥ हनूमंतंतत्पुरस्तात्तुष्टावभक्तरक्षकम् ॥२१॥ धनुर्बाणधरोवीरःसीतालक्ष्मणसंयुतः ॥ रामचन्द्रःसहायोमेकिंकरिष्यत्ययंमम ॥ २२ ॥ हनुमन्नञ्जनीसूनोवायुपुत्रमहाबल ॥ महालांगूलविक्षेपनिहताखिलराक्षस ॥ २३ ॥ श्रीरामहृदयानंदविपत्तौशरणंभव ॥ लक्ष्मणेनिहतेभूमौनीलद्रोणाचलंद्रुतम् ॥ २४ ॥ ययौजीवितवान्यतांशक्तिंप्रकटीकुरु ॥ यंनलंकेश्वरोवीरोनिःशंकंविजितस्त्वया ॥ २५ ॥ दुर्निरीक्ष्योऽपिदेवानांतद्बलंदर्शयाधुना ॥ ययालंकांप्रविश्यत्वंज्ञातवाञ्जानकींस्वयम् ॥ २६ ॥ रावणांतःपुरेऽत्युग्रेतांबुद्धिंप्रकटीकुरु ॥ रुद्रावतारभक्तार्त्तिविमोचनमहाभुज ॥ २७ ॥ कपिराजप्रपन्नस्त्वांशरणंभवरक्षमाम् ॥ इत्यष्टकंहनुमतोयःपठेच्छ्रद्धयान्वितः ॥ २८ ॥ सर्वकष्टविनिर्मुक्तोलभतेकांक्षितंफलम् ॥ एवंस्तुवतितुलसीदासेश्रीहनुमान्स्वयम् ॥ २९ ॥

कोटिशोवानरान्नीत्वादिल्लीग्राममुपागतः ॥ आज्ञापयततान्सर्वान्दारयतपुरीमिमाम् ॥ ३० ॥ कदर्थीकुरुताद्यैवराजानंराज्यगर्वि
तम् ॥ इतितद्वचनंश्रुत्वावानराद्रुद्रुवुस्तदा ॥३१॥ इंद्रप्रस्थेमहाग्रामेसमुत्प्लुत्यगृहेगृहे ॥ मुष्टिभिश्चैवलांगूलैर्दन्तैःपादतलैरपि ॥३२॥
ताडयित्वाजनान्सर्वान्बभंजुस्तेगृहानपि॥इष्टकाभिश्चपाषाणैर्दंडैर्धूलिभिरेवच ॥३३॥ उपहत्यनृपावासमाजग्मूराजमंदिरे॥दृष्ट्वादिल्ली
श्वरोराजासहसैवोत्थितोभयात् ॥३४॥ किमिदंकिमिदंचेतिभाषमाणोनिजाञ्जनान् ॥ अथभृत्याःसमायातारक्षितुंतंनृपंबलात् ॥३५॥
एकैकस्यतुभृत्यस्यशतशोवानरास्तदा ॥ लग्नादेहेविनिष्कास्यदंतानतिभयंकराः ॥ ३६ ॥ धृत्वातंताडयामासचपेटाभिर्मुखे
कपिः ॥ एवंगृहीत्वाकतिथाभ्रामयित्वानभस्तले ॥३७ ॥ चिक्षेपराजनिकटेदूरेकोऽपिचवानरः ॥ एवंक्षणात्प्लुतंकृत्वाभृत्यान्सर्वान्मृ
तानिव ॥ ३८ ॥ दिल्लीश्वरंसपत्नीकंजगृहुस्तेऽथवानराः ॥ गृहीत्वापाणिनापाणिंभ्रामयन्परितोनिजम् ॥ ३९ ॥ संस्थाप्यकतिचि
त्कालंपुनर्नर्तयतिस्मतम् ॥ केचित्कर्णौस्पृशंतिस्महनुंश्मश्रुचकेचन ॥ ४० ॥ मुष्टिंबद्ध्वातिवेगेनहंतुमायांतिकेचन ॥ दृष्ट्वैवंदुर्द
शांभूपोमर्तुकामइवाभवत् ॥ ४१ ॥ परंतुनमृतःकोऽपितस्मिन्नपिमहाभये ॥ प्रायस्तुतुलसीदासेयासीद्भक्तिर्महीपतेः ॥ ४२ ॥
पश्चाद्दुर्विनयंज्ञात्वाभयंशिक्षामदात्प्रभुः ॥ तत्रापिपरमाश्चर्य्यंसीतारामेतिवादिनः ॥४३॥ निजघ्नुर्नैवतान्सर्वेवानरास्तिविभीषणाः ॥
एवंदिल्लीश्वरंज्ञात्वामृतप्रायंतुमंत्रिणः ॥ ४४ ॥ रामेत्युच्चैर्वदंतस्तेनृपसन्निधिमागताः ॥ तमूचुर्भूपतेरक्षराज्यमात्मानमेवच ॥४५॥
श्रुत्वास्माकंवचःपश्यकुरुसर्वंहितंविभो ॥ अयंयस्तुलसीदासोधृतःकारागृहेत्वया ॥४६॥ तस्ययोरामचंद्रोऽस्तिस्वामीसजगदीश्वरः ॥

तस्यदूतोऽस्तिहनुमांस्तस्येयंवानरीचमूः ॥ ४७ ॥ भक्तापमानादत्रैत्यकदथयतिनःप्रभो ॥ तस्माद्गृहेकुठारंतुबद्धारामेतिचा
सकृत् ॥ ४८ ॥ वदंस्तत्रप्रयाहित्वंप्रणिपत्यप्रसादय ॥ इत्युक्तःसतुतत्कालंसपत्नीकोऽतिविह्वलः ॥ ४९ ॥ बद्धाकुठाररंरामेतिवदं
स्तत्रगतोनृपः ॥ नत्वाचतुलसीदासंकृताञ्जलिपुटोनृपः ॥ ५० ॥ क्षमस्वेतिमुहुःप्राहततस्तमपिसोऽब्रवीत् ॥ राजन्पश्यचमत्कारं
रामस्यैवनसंशयः ॥५१॥ नमेकिंचिदिदंसत्यंतवाग्रेकथयाम्यहम् ॥ इत्युक्तःसपुनःपादौसपत्नीकोनिपत्यच ॥ ५२ ॥ प्रसाद्यतुलसी
दासंतत्पृष्ठेसंन्यलीयत ॥ ततःसतुलसीदासोदृष्ट्वावानरवाहिनीम् ॥५३॥ हर्षान्ननर्ततुष्टावननामचमुहुर्मुहुः ॥ ततोध्यात्वाहनूमंतंपरि
वारसमन्वितम् ॥५४॥ संपूज्यविससर्जासौततस्तेवानराद्रुतम्॥प्रासादाद्ग्रामतोगेहान्निर्गत्यबहिरागताः ॥५५॥ उत्पत्योत्प्लुत्यजग्मु
स्तेदिशोदशयदृच्छया ॥ ततःसतुलसीदासश्चलितोनिजमंदिरम् ॥ ५६ ॥ दिल्लीश्वरःसमागत्यपादयोःपतितोभुवि ॥ धनंदत्त्वाब्रवी
द्वाक्यंक्षमस्वाविनयंमम॥५७॥ किंकुर्वन्नत्रवत्स्यामिकथंतत्कृपयावद ॥ इतिश्रुत्वासतुलसीदासश्चातिदयान्वितः॥५८॥गेहमध्येक्वचि
त्स्थानंकल्पयित्वाप्रभोर्मम॥साधुसेवासमायुक्तोवसभूपसुखीभव ॥५९॥ इत्युक्त्वातुलसीदासोनजग्राहाथतद्धनम् ॥ वृंदावनंदिदृक्षुःस
न्नायातस्तेनमार्गतः ॥६०॥ गत्वावृंदावनेतत्रनाभादासंददर्शह ॥ भक्तोऽयमितिमत्वासनमश्चक्रेपुरास्वयम् ॥ ६१ ॥ नाभादासस्ततो
ज्ञात्वादंभाहंकारवर्जितम्॥ प्रणम्यतुलसीदासंतुष्टावातिमुदान्वितः ॥६२॥ अथागत्यचतत्रैववैष्णवास्तुदिदृक्षवः॥ तमूचुस्तुलसीदासं
पश्येहमुरलीधरम् ॥६३॥ श्रुत्वैवमुत्थितःसोऽपिवदन्कुत्रास्तिमेप्रभुः ॥अथतंमंदिरेनीत्वागताःसर्वेतुवैष्णवाः ॥६४॥ तन्मध्येकोऽप्यु

वाचोच्चैर्जिघृक्षुस्तत्परिक्षणम् ॥ स्वेष्टदेवंपरित्यज्ययोऽन्यदेवंनमस्यति ॥ ६५ ॥ लभतेलाघवंमूर्खोयोषेवव्यभिचारिणी ॥ इतिश्रुत्वा
सतुलसीदासस्तत्कालमुक्तवान् ॥ ६६ ॥ दृष्ट्वागोपालमूर्तिंसंस्मृत्यतंरघुनन्दनम् ॥ अहोसम्यगिदंरूपंविधायात्रविराजते ॥ ६७ ॥
धनुर्बाणधरश्चेत्स्यात्तदेवंतुलसीनमेत् ॥ इतिश्रुत्वातदैवाभूद्वंशीबाणस्वरूपिणी ॥ ६८ ॥ वेत्रंचापिधनुर्जातमद्भुतंपश्यतांनृणाम् ॥
तदासर्वेऽतिसंतुष्टाःसाधुसाध्वितिवादिनः ॥ ६९ ॥ तुष्टुवुस्तुलसीदासंप्रणेमुस्तंमुहुर्मुहुः ॥ पुनःकोऽप्याहतत्रैकःकृष्णस्तुभगवान्स्वय
म् ॥ ७० ॥ रामादयोहरेरंशाःश्रुत्वैतत्तुलसीमुदा ॥ ननतांहोमहद्भाग्यंमहद्भाग्यंनसंशयः ॥ ७१ ॥ यदंषपूर्णोभक्तानांकृपयांशोऽभव
द्धरिः ॥ एतंदृष्ट्वादृढांभक्तिंसर्वेतेवैष्णवाजनाः ॥ ७२ ॥ नमन्तस्तुलसीदासन्तुष्टुवुःपरयामुदा ॥ एवंसतुलसीदासोलोकोद्धारणहेत
वे ॥ ७३ ॥ जातोवाल्मीकिरेवासौपुनरस्मिन्महीतले ॥ मन्येवाल्मीकिरेवासौपुनर्जातोमहीतले ॥ ७४ ॥ श्रीरामचरितंगायन्नतृप्तोवै
पुरामुनिः ॥ अतोविस्तरशःकृत्वाभाषयाभ्यत्यभूतले ॥७५॥ रामायणेनपोतेनजीवमात्रमतीतरत् ॥ तस्माच्चैतादृशोभक्तोनभूतोनभ
विष्यति ॥ नमस्करोम्यहंतस्मैप्रसन्नोऽस्तुसदासमे ॥ ७६ ॥॥ इति श्रीभगवद्भक्तिमाहात्म्येतुलसीदासचरितंनामचतुस्त्रिंशद
धिकशततमःसर्गः ॥ १३४ ॥ मानदासोमहाभक्तःश्रीरामचरितंस्वयम् ॥ अनुकुर्वन्ययौधामश्रीरामस्यमहामनाः ॥ १ ॥ वल्लभा
चार्य्यपुत्रस्यविट्ठलस्वामिनःसुताः ॥ सप्तपूर्वोदितास्तत्रसप्तस्थाननिवासिनः ॥ २ ॥ श्रीमद्गोकुलनाथस्यकथांवक्ष्यामिभक्तिदा
म्॥महाभागवतःसोऽभूत्प्रसिद्धोऽद्यापिभूतले॥३॥नाथद्वारेतिविख्यातापुरीयंवनपावनी ॥श्रीमद्गोकुलनाथोऽभूत्तत्रश्रीपूजकोत्तमः ॥४॥

तत्रश्रीनाथमूर्तिंतुमन्दिराद्वाह्यतोजनाः ॥ ददृशुर्नतुतत्रासीत्किमपिव्यवधायकम् ॥ ५ ॥ अथैकस्तत्रचांडालःकांधाख्योमलशोध
कः ॥ बाह्याद्ददर्शतांमूर्तिंप्रातरारार्तिकक्षण ॥ ६ ॥ दृष्ट्वाविमोहितस्तस्थौमूर्तिमारार्तिकक्षणे ॥ नचचालस्वयंकेनाप्याहूतोनिर्ययौ
ततः ॥ ७ ॥ परंतुसंस्मरन्मूर्तिंगृहकर्म्मचकारसः ॥ एवंप्रत्यहमुत्थायप्रातरारार्तिकक्षणे ॥ ८ ॥ गत्वातत्रतुतांध्यायन्मूर्तिंपश्यन्स्थि
तोऽभवत् ॥ एवंबहुदिनेयातेदृष्टंकेनापिसाधुना ॥ ९ ॥ श्रीमद्गोकुलनाथाख्यस्वामिनेकथितंतुतत् ॥ भित्तिर्देयांतरानोचेच्चांडालो
ऽपिनिरीक्षते ॥ १० ॥ इत्युक्तःसोऽपितंप्राहकारयाद्यैवमाचिरम् ॥ ततोभृत्यानुपाहूयनिर्ममेभित्तिमुत्तमाम् ॥ ११ ॥ अथप्रातः
समागत्यचांडालोनैवदृष्टवान् ॥ महाशोकार्णवेमग्नोदुःखाद्भूमौनिविष्टवान् ॥ १२ ॥ ददर्शपुनरुत्थायनापश्यत्संस्थितस्तदा ॥ एवं
सदुःखितोभूत्वात्यक्त्वाकर्मनिजंपुनः ॥ १३ ॥ कामीप्रियावियोगेनकृपणस्तुधनक्षये ॥ यथापितासुतत्यागेतथादुःखमवाप्तवान् ॥
॥ १४ ॥ आगत्यस्वगृहंसोऽथशिश्येरोगार्तवत्क्वचित् ॥ नभुक्तवान्दिवारात्रौमूर्तिविश्लेषदुःखितः ॥१५॥ ततःसभगवान्देवःस्वप्नेप्रा
हृदयान्वितः ॥ श्रीमद्गोकुलनाथस्तांभित्तिंदूरीकुरुद्रुतम् ॥१६॥ योऽसौकांधाख्यचांडालःसोऽप्यतीवममप्रियः ॥ मद्दर्शनंविनासोऽथम
रणेकृतनिश्चयः ॥ १७ ॥ तस्माद्यथासपश्येन्मांतथाकुरुमदाज्ञया ॥ इत्युक्त्वातत्रतंकांधंप्राहवैष्णवरूपधृक् ॥ १८ ॥ अहोभि
त्तिस्तुपतितागत्वापश्यहरिंमुदा ॥ इतिदृष्ट्वातदोत्थायकांधस्तत्रागतोनिशि ॥ १९ ॥ सम्मुखेसंस्थितस्तस्थौपूजकःस्वाम्यपिस्व
यम् ॥ उत्थायभित्तिंतत्कालंदूरीचक्रेऽतिविस्मितः ॥ २० ॥ अथप्रातरभूद्द्वारःकपाटोद्धाटनेकृते ॥ कांधंसंमुखतोदृष्ट्वाकिंकरोम्यत्र

मांवद ॥ २१ ॥ इतिश्रुत्वाततःकांधःसर्वंस्वाचरितंजगौ ॥ श्रुत्वास्मृत्वास्वप्नवृत्तंतस्योपरितुतोषसः ॥ २२ ॥ प्राहत्वंत्यजस्वां
वृत्तिंभोजनंतेददाम्यहम् ॥ द्वारसंमार्ज्जनंत्वेकंकुर्वन्नत्रसुखीभव ॥ २३ ॥ इत्युक्तःसोऽपिकांधाख्यस्तंप्रणम्यमुहुर्मुहुः ॥ त्यक्त्वागृहादि
कंतत्रस्थितोभक्ततरोऽभवत् ॥ २४ ॥ वनमालीद्विभूवैकोभक्तःसर्वसुहृत्तमः ॥ मिश्रोपनामकश्चैवतथानारायणोऽभवत ॥ २५ ॥ एवं
राघवदासोऽभूद्गुरुःकृष्णैकरूपधृक् ॥ योगानंदस्यशिष्यस्तुवामनोऽतिविरक्तिमान् ॥२६॥ लषोजंगलदेशेऽभूत्पर्शुरामोऽतिभक्तिमान् ॥
श्रीभट्टकहरिव्यासपथानुसरणक्षमः ॥२७॥ विरक्तोहृदिबाह्येसराजवत्सुखमन्वभूत् । शिबिकाहस्तिवाज्यन्नधननृत्यादिसंभवम् ॥२८॥
एकमेकदिनेकोऽपितंपरीक्षितुमागतः ॥ पर्शुरामसुवाचासौकिमेवंकुरुषेवृथा ॥२९॥ त्यक्त्वासर्वंसमुत्तिष्ठसमागच्छमयासह ॥ एतावदेव
श्रुत्वासतत्कालंचोत्थितोऽभवत् ॥३०॥ त्यक्त्वावस्त्राद्यलंकारंतेनसाकंययौमुदा ॥ शिष्यास्तुचलिताःसाकंतान्निरुध्यस्वयंगतः ॥३१॥
अथगत्वाकियद्दूरेक्वचित्पर्वतसानुनि ॥ उपविष्टःपर्शुरामस्तद्धूर्तंनिकटसुखी ॥ ३२ ॥ अथांतरेसमायातोवैश्योधनसमृद्धिमान् ॥
दृष्ट्वातंपर्शुरामंतुप्रणम्यातीवभक्तितः ॥ ३३ ॥ शय्यांमाल्यंभोजनानिभृत्यापणकुटींतथा ॥ दत्त्वोवाचात्रचेदाज्ञांगृहंनिर्माययया
म्यहम् ॥ ३४ ॥ इतिश्रुत्वापर्शुरामदासस्तंवैश्यमब्रवीत ॥ इमंपृच्छमहाभक्तंनास्याधीनोऽस्म्यहंपृथक् ॥ ३५ ॥ इतिश्रुत्वासवै
धूर्तःपर्शुरामपदांबुजे ॥ निपत्यप्रांजलिर्भूत्वासमस्तौषीत्क्षमापयन् ॥ ३६ ॥ पुनःस्वधामचागत्यपर्शुरामस्तुपूर्ववत् ॥ चित्ते
हरिमयोभूत्वाप्राप्तंकर्म्मचकारसः ॥ ३७ ॥ इति श्रीभगवद्भक्तिमाहात्म्येश्रीमद्गोकुलनाथादिचरितंनामपंचत्रिंशदधिकशततमः

सर्गः ॥ १३५ ॥ आंध्रदेशेबभूवैकोगदाधरइतिश्रुतः ॥ भट्टोपनामकोजात्यातैलंगश्चातिभक्तिमान् ॥ १ ॥ सस्व
गेहेस्थितोनित्यंराधाकृष्णौभजन्द्विजः ॥ श्रीमद्भागवतंनित्यंददर्शैकांतसंस्थितः ॥ २ ॥ एकदासद्विजःकिंचिद्भाषयानिर्ममेप
दम् ॥ श्यामरागेणरक्तोऽहमित्यर्थकमनुत्तमम् ॥ ३ ॥ तत्पदंसमुपागत्यकश्चिद्वृंदावनेजगौ ॥ जीवगोस्वामिनिकटेश्रुतं तेनम
हात्मना ॥ ४ ॥ कस्येदमितिपप्रच्छगायकंसोऽब्रवीच्चतम् ॥ आंध्रदेशेऽस्तितैलंगोगदाधरइतिद्विजः ॥ ५ ॥ तेनेदंनिर्मितंपद्यं
महाभक्तिमतासता ॥ इतिश्रुत्वातदातेनजीवगोस्वामिनापुनः ॥६॥ मथुरांरंजनस्थलीमनागत्यकथंपुनः ॥ श्यामरागेणरक्तोऽभूदि
त्यर्थकपदंशुभम् ॥ ७ ॥ निर्माय शिष्यद्वितयंप्रेषयामासतंप्रति ॥ श्रीगदाधरभट्टाख्यंगत्वाशिष्यद्वयंततः ॥८॥ ग्रामाद्बहिःस्थितः
कूपनिकटेसगदाधरः ॥ पप्रच्छतुस्तमेवैतौकास्तेभट्टोगदाधरः ॥ ९ ॥ ततोगदाधरःप्राहकौयुवांकुतआगतौ ॥ इतिश्रुत्वावच
स्तस्यप्राहतुस्तौकृतांजली ॥ १० ॥ जीवस्वामिसकाशात्तुश्रीमद्वृंदावनादुभौ ॥ पत्रंदातुमिहायातौश्रीगदाधरशर्म्मणे ॥ ११ ॥
श्रुत्वैतद्वचनंभट्टःकूपप्रांतेपपातह ॥ मूर्च्छामेवापघटिकाद्वयंतस्थौततःस्वयम् ॥ १२ ॥ उत्थायपत्रंतद्धस्तान्नीत्वाशिरसिचार्प
यत् ॥ प्रतस्थेसहसाताभ्यांतत्कालंमथुरांप्रति ॥ १३ ॥ महानंदेनिमग्नःससमायातोऽतिहर्षितः ॥ प्राप्यवृंदावनंभक्त्याजीवगो
स्वामिकादिकान् ॥ १४ ॥ नमस्कृत्यततस्तैश्चतत्रोवासनिरंतरम् ॥ पुराणकथयानिन्येदिवारात्रमतंद्रितः ॥ १५ ॥ एकदाधौह
रानामग्रामस्तन्निकटेस्थितः ॥ ततःकल्याणसिंहेतिनाम्नाक्षत्रियवंशजः ॥ १६ ॥ गृहस्थोभक्तिमानासीत्समागत्यनिरंतरम् ॥

श्रीगदाधरभट्टस्यपुराणेहृष्टचेतसः ॥१७॥ पत्नीतस्यगृहेसाध्वीयुवतीकामपीडिता ॥ नतांभजतिकल्याणसिंहश्चातिविरक्तिमान् ॥१८॥
एकदासातुकल्याणसिंहपत्नीविचक्षणा ॥ ददर्शगर्भिणींकांचिदनाथांभिक्षुकींस्वयम् ॥ १९ ॥ एकांतेतांसमाहूयदत्त्वामुद्राश्चविं
शतिम् ॥ प्राहवृंदावनेगत्वाश्रीगदाधरभट्टकम् ॥ २० ॥ ब्रूहिस्वोक्त्यापुराणस्यसमयेभयवर्जिता ॥ अहोतवाहंगर्भोमेसूयेकु
त्रेतितद्वद ॥ २१ ॥ इतिश्रुत्वातदासर्वेतस्थुस्तूष्णीमधोमुखाः ॥ श्रीगदाधरभट्टस्तुप्रहृष्टेनैवचेतसा ॥ २२ ॥ तामाहमातरागच्छ
तिष्ठात्रकथयाम्यहम् ॥ अध्यायांतेनसंदेहस्त्वामप्यत्रभजाम्यहम् ॥ २३ ॥ अथसर्वेतदातांतुहंतुंकृतधियोऽभवन् ॥ स्त्रियंज्ञात्वात
तःसर्वेस्वयंमंतुंव्यवस्थिताः ॥ २४ ॥ एतावानस्यमहतःकलंकोऽभूदयंपुनः ॥ कथंजीवामइत्येवंभाषमाणाःपरस्परम् ॥ २५ ॥
राधावल्लभनामासीत्तन्मध्येकोऽपिवैष्णवः ॥ सउत्थायद्रुतंतांतुभर्त्सयन्निदमब्रवीत् ॥ २६ ॥ गृहीत्वातुमहादंडरंडेसत्यंवदाधुना ॥
एवंवदसिकेनोक्तानोचेत्त्वांहन्मिपश्यताम् ॥२७॥ इत्युक्त्वादंडमुद्यम्यगतस्तस्याःसमीपगः ॥ साभयादाहतत्सर्वंकल्याणस्त्रीकृतंत्विद
म् ॥ २८ ॥पश्येमांविंशतिंमुद्रादत्त्वोवाचाथमांप्रति॥श्रीगदाधरभट्टंत्वमेवंवदममाज्ञया ॥२९॥ एवंश्रुत्वातुतेसर्वेहर्षिताह्यभवंस्तदा ॥
कल्याणःस्वस्त्रियंहंतुंधृतासिरुदतिष्ठत॥३०॥श्रीगदाधरभट्टस्तंवारयामासयत्नतः।अन्यश्चोवाचकिंचास्यावचनेनभविष्यति ॥ ३१ ॥
एवंमनोजयस्यास्यदेवतावतिचागते ॥ कलंकेनमनःकिंचिच्चचालास्यमहात्मनः ॥ ३२ ॥ एकदाबहुभिःशिष्यैःसहितःकोऽपिवैष्ण
वः॥कथामागतवाञ्छ्रोतुंतदातस्याश्रुनापतत् ॥३३॥ अन्येषांप्रेमतोऽश्रूणिनिपेतुर्नयनात्ततः॥तदातेनापिभक्तेनद्वितीयदिवसेपुनः ॥

॥३४॥ आगत्यमरिचंचूर्णंनीत्वानेत्रेददौस्वयम् ॥ तदाश्रुपातयामासेत्येवंदृष्ट्वातुकश्चन ॥ ३५ ॥ तस्मिन्नसमुत्थितेभट्टंप्राहश्रुत्वातुत
त्क्षणात्॥जहसुर्वैष्णवाःसर्वेभट्टस्तत्राब्रवीच्चताम् ॥३६॥ नभवंतोहसंत्वत्रभक्तोऽयंनात्रसंशयः ॥ ममापिप्रेमजाश्रूणिनिपतंत्वितिवांछ
ति ॥ ३७ ॥ एवंहास्यास्पदेतस्यनहास्यंतोकमप्यभूत् ॥ तानेवंवैष्णवान्सम्यग्बोधयामासयत्नतः ॥ ३८ ॥ एकदातस्यभवने
निशिचोरःसमागतः ॥ गृहस्थंसकलंवस्तुबद्ध्वोत्थापयितुंत्वरन् ॥ ३९ ॥ नोत्तस्थौतन्महाभारंदृष्ट्वाश्रीमद्गदाधरम् ॥ आगत्योत्था
प्यशिरसिचोरस्यधृतवान्स्वयम् ॥४०॥ चोरस्यहृदयेजातंमदीयोऽयमितिस्फुटम् ॥ प्राहकोऽसीतिशनकैःश्रुत्वाभट्टोऽब्रवीद्वचः ॥४१॥
कोऽप्यस्तुकिंभवानेतद्गृहीत्वागच्छतद्रुतम् ॥प्रातःकालइवाभातिदृष्ट्वान्योधर्षयिष्यति ॥ ४२ ॥ इतिश्रुत्वावचश्चोरोज्ञात्वाभट्टंगदाधर
म् ॥ धनंत्यक्त्वापपातास्यपादयोरतिभक्तितः ॥ ४३ ॥ त्यक्त्वाचौर्यंतस्यशिष्योभूत्वाभक्तोबभूवसः ॥ अत्रापिनैवलोभोऽभूद्धना
पहरणक्षणे ॥ ४४ ॥ एकदाकोऽपिधनिकोधनंदातुमुपागतः ॥ स्वयंतुभगवद्देहेभूमिलिंपन्स्थितस्तदा ॥ ४५ ॥ प्राहैकस्तुतदाशि
ष्योदृष्ट्वातंधनिकंजनम् ॥त्यजकार्यमिदंत्वांतुद्रष्टुमायातिकश्चन ॥ ४६ ॥ श्रुत्वाहसन्नुवाचाथकिंवदिष्यसिमूर्खवत ॥ यस्यदा
सोऽस्मितद्दास्यंकरोम्यत्रहितंनिजम् ॥४७॥ इत्युक्त्वासतथैवासीद्धनिकश्चसमागतः ॥ दत्त्वाधनंप्रणम्याहलिंपंतंतंमहाशयम् ॥४८॥
अहंलिंपामिनाथस्त्वंत्यजेतिविररामसः ॥ प्रोवाचसत्यमेवैतत्किंतुमद्वचनंशृणु ॥ ४९ ॥ त्वल्लेपनेनकिंनुस्याद्दहंदासोऽस्मियस्यसः ॥
महास्यंमनुतेकिंतुतवलेपननोवद ॥ ५० ॥ योभक्तःकुरुतेभक्तिंपूजोपकरणादिकम् ॥ संपादयतिशिष्येणसुतैर्वान्यैर्नसत्तमः ॥ ५१ ॥

इतिश्रुत्वाततःसोऽपिपरितुष्टोययौगृहम् ॥ श्रीगदाधरभट्टस्तुतस्थावानंदपूर्वकम् ॥ ९२ ॥ अत्रापितस्यनैवाभूत्संकोचोहृदयेनृ
णाम् ॥ प्रतिष्ठावाजिघृक्षावादंभोवानास्पृशच्चतम् ॥ ९३ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येगदाधरदासचरित्रंनामषट्त्रिंशदधिकशतत
मःसर्गः ॥ १३६ ॥ एवंचतुर्मुखोभक्तश्चामुंडश्चतथापरः ॥ चंडदासोबभूवासौमहाभक्ताइमेभुवि ॥ १ ॥ कर्म्मापिनंदनामैकः
शालग्रामशिलांवहन् ॥ गलेबद्धाचचारोर्वीवृंदावनमुपागतः ॥ २ ॥ नेत्रंत्रिपादिकंकृत्वास्थितःसर्वत्रपर्य्यटन् ॥ यत्रस्थातुंमनश्चक्रेत
त्रतस्योपरिप्रभुम् ॥ ३ ॥ शालग्रामंस्थापयित्वास्वयंतस्थौनिरंतरम् ॥ एकदातांत्रिपदिकांविस्मृत्यान्यत्रचागतः ॥४॥ तत्रस्थातुंमन
श्चक्रेतामदृष्ट्वाविचिंतयन् ॥ चलितःपुनरुत्थाययतएवागतस्ततः ॥ ५ ॥ अथांतरेतुभगवान्सायंवैष्णवरूपधृक् ॥ तांत्रिपादींसमादा
यददौतस्मैप्रहर्षितः ॥ ६ ॥ उपवेश्यप्रभुंपश्चात्स्वयंतत्रोपविष्टवान् ॥ नोचेदतिश्रमात्साधुर्म्रियेतैवनसंशयः ॥ ७ ॥ एवंकोल्हस्त
थाल्हलोभ्रातरौपश्चिमेस्थितौ ॥ कायस्थकुलसंभूतौतयोर्वक्ष्येकथांशुभाम् ॥ ८ ॥ ज्येष्ठोभक्तःस्थितःसाधुसेवायांनिरतःसदा ॥
कनिष्ठोमद्यमांसादिभोक्ताभ्रातुश्चभक्तिमान् ॥ ९ ॥ कोल्हाद्वारावतींयातःकनिष्ठोऽपिययौसह ॥ गत्वातत्रहरंरणछोरस्यचप्रभोः ॥
॥ १० ॥ जगौस्वकृतपद्यानिज्येष्ठोभक्तिसमन्वितः ॥ ततोऽल्होपिजगौकिंचित्स्वकृतंत्रपयान्वितः ॥ ११ ॥ रणछोरस्ततस्तुष्टो
मालांस्वगलतस्तदा ॥ अल्हस्यचगलेऽकस्मात्प्रददौवायुचालिताम् ॥१२॥ अल्होनत्वाहरिंभक्त्याप्राहायमग्रजोमम ॥ तवभक्तोमहा
राजप्रसीदास्योपरिप्रभो ॥ १३ ॥ इतिदृष्ट्वापमानःसकोल्हस्त्वतीवलज्जितः ॥ निमज्यवारिधौसमतुचलितःक्रोधमूर्च्छितः ॥ १४ ॥

अहोऽस्मैपापिनेदत्त्वामालांमेनैवकिंचन॥तस्मान्मरणमेवात्रवरमेवंमनाययौ ॥ १५ ॥सर्वत्रजानुदघ्नंतुजलमासीन्महोदधेः ॥ नमश्चो
लक्षयित्वातंदुःखितंभगवान्हरिः ॥१६॥ भक्तरूपंसमादायनिनायनिजमंदिरे॥ संतोष्यबहुभिर्मंत्रैर्भोजनायन्यवेशयत् ॥ १७॥ तत्र
भोक्तुंददौपात्रंद्वितीयंभक्तरूपधृक् ॥कोह्लपप्रच्छकस्येदमह्लायेत्यब्रवीत्सतम् ॥१८॥ पुनःसदुःखितःप्राहनाहंभोक्ष्येततोहरिः ॥ भक्तरू
पधरःप्राहकोह्लमहस्यचेष्टितम् ॥१९॥ अयंपुराराजपुत्रस्त्यक्त्वासर्वंवनेगतः ॥मांस्मरन्विजहौप्राणांस्तस्मादेषप्रियोमम ॥ २० ॥
नैतेनेर्ष्याप्रकर्तव्यात्वयाकोह्लममाज्ञया ॥इत्युक्तःसतुकोह्लोऽपिनिर्मत्सरतरोऽभवत् ॥२१॥दत्त्वान्नंसाधुरूपःसकोह्लंप्राहकिमिच्छसि ॥
सआहयामिभवनमितिश्रुत्वातदाहरिम् ॥ २२ ॥ तत्कालंप्रापयामासतंसवेश्माथमायया ॥ एवंस्वप्नसमंसर्वमनुभूयसकोह्लकः ॥
॥ २३ ॥ अह्लदर्शनकामःसंसस्मारभ्रातरंमुहुः ॥ एवंगतेषुकालेषुशुश्रावाह्लंसमागतम् ॥ २४ ॥ प्रेम्णाकोह्लोऽग्रतोगत्वामिलित्वाप्रेमपू
र्वकम् ॥त्यक्त्वासर्वमुभौपश्चाज्जग्मतुर्वनमुत्तमम्॥२५॥ एवंमाधवदासोऽभूज्जीवानंदस्तथैवच ॥ उभावपिजगत्सर्वंहरिंमत्वापतुर्गतिम्
॥२६॥ एवंनारायणोनाम्नाऽकस्माद्भक्तोत्तमोऽभवत्॥तस्यज्येष्ठःस्थितोभ्रातातत्पत्नीचगृहेसतु ॥ २७॥ नकिंचिदकरोत्कार्य्यंज्येष्ठएव
धनार्जकः॥एकस्मिन्दिवसेभ्रातृपत्नीपर्य्युषितंददौ ॥२८ ॥भोक्तुंनबुभुजेभ्रातुःपत्नींप्राहातिखेदतः ॥ नाहंपर्य्युषितंभोक्ष्येतप्तंदेह्योदनं
मम॥२९॥ इतिश्रुत्वाभ्रातृपत्नीप्राहतंदेवरंक्रुधा॥एतच्चापिकुतोऽभ्येतीत्येवंचित्तेविचारय ॥३०॥किमेवंभाषसेव्यर्थमहंकाराद्विलज्जसे ॥
भोक्तुमिच्छसिचेद्भुंक्ष्वनोचेद्गच्छयथासुखम् ॥ ३१ ॥ श्रुत्वैतद्वचनंतस्यावज्रपातसमंक्रुधा ॥ जाज्वल्यमानोनिर्यातोगृहाद्वृंदावनंशु

मम्॥३२॥ राधाकृष्णेतितत्रासौमहामंत्रंजपन्द्विजः॥तस्थौचैकत्रकुंजेसनिनायकतिवासरान् ॥ ३३ ॥ अनाहारस्ततोराधातत्कालकृ
तमोदनम्॥ददौसर्वरसैर्युक्तंस्वयंवेषांतरेणसा ॥ ३४ ॥ एवंनारायणोनाम्नानामस्मरणमात्रतः॥कृतकृत्योबभूवातोमनस्ताहगपेक्षितम् ॥
॥३५॥ एवंकनिरग्रामेतुमरुदेशेऽतिविश्रुतः॥ पृथ्वीराजेतिनाम्नाभूद्दयालुर्भक्तसत्तमः ॥३६॥ तस्यगेहेहरेर्मूर्तिस्तांभक्त्यार्चयतिस्मसः ॥
क्वचिदन्यत्रचेद्यातस्तदापिमनसास्मरन्॥३७॥तांमूर्तिंपूजयामासेत्येवंतस्यव्रतंदृढम्॥एकदासनृपःक्वापिययौदेशांतरेस्वयम् ॥ ३८ ॥
सस्मारतत्रतांमूर्तिंनददर्शहृदायदा ॥ तत्स्थानेचापितांमूर्तिंततश्चिंतामवापसः ॥ ३९ ॥ कुतोनदृश्यतेमूर्तिस्तत्स्थानंचापिवा
मया ॥ प्रेषितंभृत्ययुगलंदृष्ट्वागच्छात्रवैद्रुतम् ॥४०॥ पुत्रायपत्रंप्रददौमूर्तिरस्तिगृहेनवा ॥ तत्प्रेषयलिखित्वात्वमेतदर्थप्रबोधकम् ॥
॥४१॥ अथचारद्वयंतत्रगत्वापत्रंददौद्रुतम्॥ददर्शचहरेःस्थानंकुरुतेनूतनंपुनः ॥ ४२ ॥ पृथ्वीराजसुतःपत्रंददौचारद्वयायच ॥ ज्ञात्वा
ऽपिपतिपुस्थानंक्रियतेनूतनंपुनः ॥४३॥ अतःसामूर्तिरन्यत्रस्थापितापूज्यतेमया॥जातेस्थानेयथापूर्वंस्थापयिष्याम्यहंतुताम् ॥४४॥
दृष्ट्वेदंपुत्रलिखितंपृथ्वीराजस्तुतोषह ॥ स्वयंचापिसमागत्यपूजयामासपूर्ववत् ॥ ४५ ॥ एकदाप्रतिजज्ञेसपृथ्वीराजोऽतिभक्तिमा
न् ॥ मथुरायांमरिष्येऽहमितिदिल्लीश्वरांतिके ॥ ४६ ॥ सोऽपिज्ञात्वापितंकालंपृथ्वीराजमुवाचह ॥ त्वंगच्छकाबिलेराज्येयुद्धा
करमिहानय ॥ ४७ ॥ इतिदिल्लीशवचनंपृथ्वीराजोनिशम्यह ॥ उद्विग्नःप्रययौतत्रकेशवंसंस्मरन्हृदि ॥ ४८ ॥ तत्रगत्वान्
पंजित्वाजयग्राहकरमुत्तमम्॥रात्रौस्वप्नेऽब्रवीत्तस्मैमृत्युकालंसकेशवः ॥४९॥ ततःप्रातःसमुत्थायभूपायप्रेष्यतंकरम् ॥ श्रुत्वादिल्ली श्व

सर्वंपश्चात्तापेनदुःखितः ॥ तुष्टावतंमहाराजंपृथ्वीराजंहरेःप्रियम् ॥ ५० ॥ इतिश्रीभगवद्भक्तिमाहात्म्येनारायणादिसदाचारचरितं
नामसप्तत्रिंशदधिकशततमःसर्गः ॥ १३७ ॥ जात्याकायेतिविख्यातःसीवातस्यसुतोह्यभूत् ॥ सागतश्चेतिनाम्नासःसाधुसेवापरा
यणः ॥१॥ द्वारकायांसमायातोह्यन्नवस्त्रादिभिर्जनान् ॥ तोषयामासभक्त्यासौद्वारकानाथतुष्टये ॥ २ ॥ एकदामहदाश्चर्यमजनीजेति
नामतः ॥ तुरुष्कएकआयातोलुंठितुंद्वारकांपुरीम्॥ ३ ॥आगत्यनगरीमध्येदीपयामासवह्निना ॥ ततःपलायिताःसर्वेदिशोदशभयातु
राः ॥४॥त्राहित्राहिजगन्नाथस्वभक्ताञ्शरणागतान् ॥अथैकस्मिन्क्षणेऽकस्मात्सैन्यमेकमुपागतम् ॥५॥ हत्वातुरुष्कसैन्यंतत्ससमुद्रेन्य
प्यपातयत् ॥ वह्निंनिवारयित्वातत्सैन्यंचापिपुनर्ययौ ॥ ६ ॥ कस्येदंकुतआयातमितिनोवेदकश्चन ॥ भगवत्कृपयासर्वानिर्विघ्ना
भूत्पुरीतदा॥सागतोऽपिहरिंचित्तेरक्षितारममन्यत ॥७॥ इतिश्रीभगवद्भक्तिमाहात्म्येसागतचरितंनामाष्टत्रिंशदधिकशततमःसर्गः ॥
॥ १३८ ॥ भ्राताभून्मानसिंहस्यकनिष्ठोनातिभक्तिमान् ॥ नाम्नामाधवसिंहेतितस्यरत्नावतीप्रिया ॥१॥ तस्यांपुत्रोबभूवैकःप्रेमासिं
हेतिनामतः ॥ सोऽतिवीरोमहाभक्तःसमर्थोरणवर्त्मनि ॥ २ ॥एकदानिशिशय्यायांसुप्तारत्नावतीस्थिता ॥ जाग्रतीतत्पदद्वंद्वंदासीका
चिन्ममार्जह ॥ ३ ॥श्रीमन्नंदकिशोरेतिराधाकृष्णेतिचासकृत् ॥ वदंतीशनकैर्दासीतत्पादौचाप्यसेवत ॥४॥ तदाराज्ञाश्रुतंनामदासीह
र्षाश्रुमालिनी ॥ दृष्टादृष्टापुनःसातुकिमिदंतवचेष्टितम् ॥५॥ अहेतुरेषचानंदोविक्षिप्तेवचजल्पसि ॥ सत्यंकथयमेदासीमाभयंकुरुकस्य
चित् ॥ ६ ॥इतिश्रुत्वावचस्तस्याःस्वामिन्याःसाब्रवीद्वचः ॥ भुंक्ष्वभोगान्महाराज्ञीकिंपृच्छसिवृथामम ॥ ७ ॥ इतिब्रुवंतींतांप्राहमुहूर

त्नावतीसती ॥वदत्वंनास्तितेभीतिरितिश्रुत्वाब्रवीच्चसा ॥८॥ स्वामिन्यहंतुसततंराधाकृष्णौभजेद्हृदि ॥ वदाम्येवंतुतन्नामसाधुनाशि
क्षितास्म्यहम् ॥ ९ ॥ इत्येवंभाषमाणांतांसेवातःसन्न्यवर्तत ॥ स्वयंचापितुजग्राहनामश्रीराधिकापतेः ॥ १० ॥ एवंजपंतीसारा
ज्ञीमहाभक्ताबभूवह ॥ द्रष्टुंचित्तेचकारासौश्रीमन्मदनमोहनम् ॥ ११ ॥ साधुसेवासमासक्ताशुश्रावभगवत्कथाः ॥ इंद्रनीलमणेः
कृष्णप्रतिमांप्रविधायसा ॥ १२ ॥ पश्यंतीसाधुवृंदंसाहरिबुद्ध्यामहासती ॥ एवमेकदिनेकोऽपिमहाभक्तःसमागतः ॥ १३ ॥ नृत्यञ्ज
गौहरेरग्रेसमलोष्टाश्मकांचनः ॥ रत्नावतीतुतंदृष्ट्वास्वयमेवगतासती ॥ १४ ॥ निवारितातदादास्यानबिभेतिकथंचन ॥ तत्रागत्य
स्वयंकृत्वाभोज्यंतस्मैददौमुदा ॥ १५ ॥ तांबूलादिततोदत्त्वाप्रणम्यस्वयमागता ॥ एवंदृष्ट्वामहाश्चर्यंमंत्रीराज्ञेलिलेखसः ॥१६॥ राज्ञी
रत्नावतीमार्गंत्यक्त्वासाधुजनैःसह ॥ गायत्यत्रहरेरग्रेशिक्षितापिनमन्यते ॥१७॥ दृष्ट्वेदंलिखितंराजाक्रोधाज्ज्वलितमानसः ॥ तूष्णीं
तस्थौतदायातःप्रेमसिंहोनृपांतिके ॥१८॥ तमाहराजाक्रोधेनमुंडासुतसमेहिभोः ॥ इत्युक्त्वामंत्रिलिखितंदत्त्वापुत्रायभूपतिः ॥ १९ ॥
जगामशयनागारंपुत्रःपत्रंव्यलोकयत् ॥ प्रेमसिंहोमातृभक्तिंज्ञात्वातीवप्रहर्षितः ॥२०॥ लिलेखमात्रेपत्रंसप्रेमसिंहोऽतिभक्तितः ॥ यद्रा
ब्धंत्वयामातर्नत्याज्यंसर्वथापुनः ॥ २१ ॥ राजापिमांवदत्यत्रमुंडासुतमितिक्रुधा ॥ दृष्ट्वापत्रंतदातस्यमातारत्नावतीमुदा ॥ २२ ॥
लिलेखपत्रंपुत्रायहरिभक्तायसास्वयम् ॥ नाहंपररतापुत्रनत्यक्ष्यामिव्रतंत्विदम् ॥ २३ ॥ राधाकृष्णप्रसादेनतवकीर्तिर्भविष्यति ॥
इतिदृष्ट्वातदापत्रंप्रेमसिंहोऽतिहर्षितः ॥ २४ ॥ महोत्सवंगृहेचक्रेश्रुत्वाराजाब्रवीज्जनम् ॥ किमकांडेमहोत्साहःक्रियतेतेनतद्वद ॥२५ ॥

स्मृत्वागत्यचपुनर्महागजंनिरीक्ष्य ततः ॥ मुहुर्वदतिसुंदर्याअहंजातोनसंशयः ॥ २६ ॥ इतिश्रुत्वाततोराजातंहंतुंसैन्यमाह्वयत् ॥
ग्रेमसिंहोऽपिसन्नद्धस्तत्रैकंमंत्रिसत्तमम् ॥२७॥ राजावदतित्वत्वेतांहत्वासमार्जयायशः॥ततोमंत्रीनृपंप्राहसाक्षादस्यास्तुमारणे ॥२८॥
लोकेमहान्कलंकःस्यात्तस्मादुत्तयानिहन्म्यहम् ॥ अयंयोवर्ततेव्याघ्रःपिंजरेकालसन्निभः ॥ २९ ॥ तद्गृहद्वारितंत्यक्त्वामारयिष्या
मितेनताम् ॥ इतिश्रुत्वानृपःप्राहप्रातरेवकुरुष्वतत् ॥ ३० ॥ अथव्याघ्रोययौशीघ्रंरत्नावत्यागृहेसतु ॥ इतिरत्नावतीश्रुत्वापूजयं
तीहरिंमुदा ॥ ३१ ॥ दृष्ट्वाव्याघ्रमहोभाग्यमहोभाग्यमिदंमुहुः ॥ जल्पंतीशीघ्रमुत्थायपूजोपकरणानिच ॥ ३२ ॥ गृहीत्वांगणदे
शेसाव्याघ्रसन्निधिमागता ॥ नृसिंहोऽयंसमायातोजातोयस्यकृपानिधिः ॥३३॥ अनेनभक्तरक्षार्थंहिरण्यकशिपुर्हतः ॥ इत्युक्त्वात
स्यपादेषुपाद्यंदत्वामनस्विनी ॥ ३४ ॥ कुंकुमंचंदनंमालांदत्वामाल्यंगलेददौ ॥ धूपदीपादिदत्वातंभोजयामाससोदकम् ॥ ३५ ॥
एवंसमर्च्यतंराज्ञीप्रणनामातिभक्तितः ॥ व्याघ्रोगौरिवतांपूजांप्रतिजग्राहहर्षितः ॥ ३६ ॥ एवंसमर्चनंतस्याराजमंत्रीददर्शह ॥ अथा
गत्यबहिर्व्याघ्रोमालातिलकभूषितः ॥ ३७ ॥ हत्वातमंत्रिणंदृष्ट्वानान्यान्भक्षितवान्द्रुतम् ॥ दृष्ट्वाराजातिभीतःसपत्नीगृहमुपाग
तः ॥ ३८ ॥ दृष्ट्वासमुत्थितासाध्वीकुर्वतींहरिपूजनम् ॥ राजानमश्वकाराहदासीपश्यन्नमत्यसौ ॥ ३९ ॥ राज्ञीप्राहातिमुदितारा
धाकृष्णौनमत्ययम् ॥ ममतुप्राणनाथोऽयंद्वितीयाश्रीहरेस्तनुः ॥ ४० ॥ तदाराजापिमेनेस्याभक्तिरस्तिदृढेतिसः ॥ एवमेकादिनेसा
नृसिंहोमाधवसिंहयुक् ॥ ४१ ॥ यमुनायांस्थितोनाविमज्जंतीवचनौरभूत् ॥ कैवर्तस्तुततःप्राहराजन्नौरिहमज्जति ॥ ४२ ॥ स्मरंतुहरि

भक्तान्वैस्वकुलेनावियेस्थिताः॥ततःपारंप्रयात्येषानान्यथाधोगमिष्यति ॥ ४३ ॥ इतिश्रुत्वामानसिंहोदध्यौभ्रातृवधूंचताम् ॥ ततो
र्द्धमग्नासानौकायमुनातीरमागता ॥ ४४ ॥ आगत्यमानसिंहोऽपिप्रशशंसमुदान्वितः ॥ ग्रामान्ददावन्नदानसिद्ध्यर्थंवनमागम
त् ॥ एवंरत्नावतीभक्तिःप्रसिद्धाद्यापिभूतले ॥ ४५ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येरत्नावतीचरितंनामैकोनचत्वारिंशदधिकशततमः
सर्ग्गः॥१३९॥छ॥वर्धमानस्यशिष्योऽभूद्रामदाससुतोद्विजः ॥ नाम्नासमथुरादासोहरिभक्तिरतःसदा ॥१॥ एकदातस्यनगरेसाधुरेकः
समागतः ॥ सचकारेंद्रजालादीन्दृष्ट्वालोकाविमोहिताः ॥ २ ॥ शालग्रामंतुसंपूज्यधृत्वासिंहासनेस्वयम् ॥ ननर्तचतदादेवःशालग्रामो
ऽप्यनर्तयत् ॥३॥ श्रुत्वेदंपरमाश्चर्य्यंसर्वेतत्रसमागताः॥महासिद्धोऽयमित्येवंमत्वातेतुष्टुवुश्चतम् ॥४॥ मथुरादासशिष्योऽपितत्रैकःस
मुपागतः ॥ दृष्ट्वातत्परमाश्चर्य्यंमथुरादासमाहतम् ॥५॥गुरोसमागतःसाधुःशालग्रामंचनर्तयन् ॥ स्वयंचनृत्यतित्वंभोगत्वापश्य
तदद्भुतम् ॥ ६ ॥ इतिश्रुत्वावचस्तस्यमथुरादासआहतम ॥ कोवेदसाधुचरितंनगंतव्यंतदंतिके ॥ ७ ॥ पुनःप्रसाद्यतंशिष्योनिन्ये
तद्वैष्णवांतिकम्॥तस्मिन्गतेतुमथुरादासेतत्तेजसापुनः ॥ ८ ॥ ननर्ततदाज्ञाततेनधूर्तेनचेतसा ॥ अयमागत्यमद्विद्यास्तंभंचक्रेनसं
शयः ॥ ९ ॥ एवंविचिंत्यमथुरादासेकृत्यांचकारसः ॥ साकृत्यातद्भयादेत्यकर्तारंत्वग्रसीदद्भुतम् ॥ १० ॥ ततःसमूर्च्छितोभूत्वानिप
पातधरातले ॥ आगत्यमथुरादासस्तमुत्थाप्यातिभक्तितः ॥ ११ ॥ परस्पर्शपाणिनानेत्रेबोधयित्वाप्रयत्नतः ॥ इतिसंशिक्ष्यतंसाधुं
स्वयमागत्यमंदिरे ॥ १२ ॥ राधाकृष्णौस्मरंश्चित्तेमहानंदमवाप्तवान् ॥ अभून्नारायणोदासःश्रीहरेरतिभक्तिमान् ॥ १३ ॥ तस्यैवंनि

यमोगायन्ननर्तश्रीहरेःपुरः ॥ परंतुतादृशंनृत्यंगानंवापिसुदुर्लभम् ॥१४॥ तस्यनैवश्रमःक्वापिसदातीर्थाटनेरतः ॥ गत्वासाधुसमाजेस
शिष्यैश्चबहुभिर्वृतः ॥ १५ ॥ नृत्यंकृत्वादिनंस्थित्वापुनरन्यत्रचागमत्॥एवमेकदिनेभक्तःकाशींगच्छन्पथिस्थितः ॥१६॥ प्रयागा
त्पूर्वतोग्रामेहडयाख्येतिचविश्रुते ॥ तत्रम्लेच्छोनृपःकश्चिच्छुश्रावतमुपागतम् ॥ १७ ॥ भृत्यैर्ग्रामजनैश्चापिनृत्यार्थंभक्तिमावहन् ॥
अयंतुसंदिहानोऽभूत्किंकर्तव्यमतःपरम् ॥ १८ ॥ अदृष्ट्वाममनृत्यंसगंतुमाज्ञांनदास्यति ॥ अतोनृत्यंविधास्यामिपरंतुभगवान्कथम् ॥
॥ १९ ॥ नेतव्यस्तद्गृहेयास्तितुलसीमालिकात्वियम् ॥ तांसंस्थाप्यतदग्रेऽहंनर्तिष्यामिनसंशयः ॥ २० ॥ इतिनिश्चित्यतांमालामु
च्चस्थानेनिधायसः ॥ तत्संमुखोननर्तासौम्लेच्छभूपोऽपिपश्यति ॥२१॥ अथतुष्टःसभूपालोधनंदातुंसमुत्थितः ॥ तदामदनगोपालंस
स्मारातिमुदान्वितः ॥२२॥ मुमूर्च्छन्मृतप्रायस्तंशिष्यानिन्युरन्यतः ॥ प्राप्यचैतन्यमाहाथप्रयागेनयमांद्रुतम् ॥२३॥ आगत्यतत्र
संभेदेगङ्गायमुनयोःशुभे ॥ राधाकृष्णौस्मरन्भक्तोममारज्ञानपूर्वकम् ॥२४॥ एवंनारायणोदासोभक्तोऽभूदितिविश्रुतः ॥ वोहथोजसमं
तश्चगोपालश्चगदाधरः ॥२५॥ उद्धवोरामवेणुश्चकृष्णजीवनएवसः॥परशुरामःकृष्णदासोगंगादासस्तथैवच ॥ २६ ॥ गोपालोजयदेव
श्चश्रीमन्माधवदासकः ॥ एतेचयेमहाभक्ताःप्रसिद्धाःपावनाःकलौ ॥२७॥ विदुरोरामभक्तोऽभूद्द्वितीयोऽपिस्थिरोयथा ॥ हीथरग्रामवा
सीसकृषिंकृत्वातिभक्तितः ॥ २८ ॥ अन्नदानंचसाधुभ्यःकुर्वंश्चित्तेहरिंस्मरन् ॥ तस्थावानंदपूर्वंसदरिद्रोधनवानिव ॥ २९ ॥ अना
वृष्टिवशादेकवत्सरेतस्यवैकृषिः ॥ सगर्भाशुष्कतांयातादृष्ट्वाचिंतामवापसः ॥३०॥ अन्यत्रगंतुकामोऽभूद्रात्रौस्वप्नेऽब्रवीद्धरिः॥वृद्धिर्मा

विन्यसंदेहोमागच्छान्यत्रकुत्रचित् ॥३१॥ अथप्रातःसमुत्थायविदुरोऽतीवहर्षितः॥छेदयित्वाकृषिंसर्वांदमयामासयत्नतः ॥३२॥हसि
तोवैसलोकैश्चनविश्वासंजहौहृदि ॥ तदाचतुर्गुणंधान्यमन्यवर्षाद्बभूवह ॥ ३३ ॥ दृष्ट्वासर्वेमहाश्चर्य्यंमत्वाभक्तिविचेष्टितम् ॥ तुष्टवुस्तं
जनाभक्तंविदुरंचातिहर्षिताः ॥ ३४ ॥ एवंदयालुदासोऽभूद्भक्तोदामोदरस्तथा ॥ मोहनःपरमानंदश्चेत्युभौभक्तसत्तमौ ॥ ३५ ॥
बभूवचतुरस्वामीभक्तएकोऽतिविश्रुतः ॥ पत्नींपुत्रंगृहंत्यक्त्वावृंदावनमुपागतः ॥ ३६ ॥ तस्यैवंनियमोनित्यंप्रातर्गोविंददर्शनम् ॥ म
ध्याह्नेनंदनागारेकेशवस्यचदर्शनम् ॥३७॥ राधाकुंडेततोगत्वास्वस्थानागमनंतथा॥ एवंनित्यव्रतंतस्यचतुरस्वामिनोऽभवत् ॥३८॥
जातंदिनत्रयंतस्यक्षुत्पिपासार्दितस्यवै ॥अथरात्रौहरिःस्वप्नेप्राहसाधुस्वरूपधृक् ॥३९॥ प्रतिवेश्मव्रजन्नित्यंत्वांपयःपाययाम्यहम् ॥
इत्युक्त्वादात्पयःसोऽपिपपावेवचतत्पयः ॥ ४० ॥ पयोव्रतीतिविख्यातोमथुरायांबभूवसः ॥ कदाचिद्बालवद्गोपीयाचतेऽस्याःप
योऽद्भुतम् ॥ ४१ ॥ एवंतुपरमानंदविट्ठलोमाथुरोऽपरः ॥ खेमपंडेतिविख्यातोगुनौरेचौधरस्तथा ॥ ४२ ॥ एतेमाधुकरींभिक्षांगृही
त्वावैष्णवाञ्जनान् ॥ तर्पयामासुरमलाःप्रख्याताभक्तसत्तमाः ॥ ४३ ॥ इति श्रीभगवद्भक्तिमाहात्म्येरामदासचतुरस्वामिचरितंना
मचत्वारिंशदधिकशततमःसर्ग्गः ॥ १४० ॥ ॥ छ ॥ मरुदेशेसीथराख्योग्रामश्चातीवविश्रुतः ॥ तत्राभूत्कुंभकारस्तुकुवादासेतिना
मतः ॥१॥ तस्यचैवंव्रतंनित्यंसर्वदातिथितर्प्पणम् ॥ वस्त्रंविक्रीयनीत्वान्नंसाधुभ्यःप्रददौमुदा ॥२॥ एकदासाधवस्तत्रबहवस्तुसमाग
ताः ॥ तान्दृष्ट्वाहर्षितश्चित्तेकिंकर्तव्यमितिस्मरन्॥३॥तद्ग्रामनृपतेरग्रेगत्वाप्रार्थितवानथ ॥ अहोममास्तिचेत्कार्य्यंतर्हिकारयभूपते ॥

॥४॥ तद्देतनमिदानींमेब्रहिकार्य्यंममास्तिभोः ॥इतिश्रुत्वानृपःप्राहकूपंखात्वाददामिते ॥ ५ ॥ धनमित्थंवचःश्रुत्वास्वीकृत्यधनमाददे ॥ नीत्वान्नंभोजयामाससाधून्सर्वान्मुदान्वितः ॥ ६ ॥ भोजयित्वागतोग्रामाधीशाग्रेतमुवाचसः ॥ कूपंखानयाम्यत्रस्थलंदर्शयमेऽधुना ॥७॥ ततोग्रामेशनिर्दिष्टंचाखानीत्कूपमुत्तमम् ॥ कियद्दूरंगतस्तत्रवालुकानिःसृतातदा ॥८॥ पपातमृत्तिकातत्रकूवादासस्यचोपरि ॥ अथान्येयेस्थितास्तत्ररुदंतोगृहमागताः ॥ ९ ॥ मत्वाऽशक्यंशरीरस्यनिष्कासनमतोजनाः ॥ नतत्रयेतिरेपत्नीचक्रेतस्यौर्ध्वदेहिकम् ॥ १० ॥ ततोमासांतरेकश्चित्साधुस्तत्रसमागतः ॥ शुश्रावरामरामेतिकूवादासोक्तवत्स्फुटम् ॥ ११ ॥ सग्रामेशमुवाचाशुसोऽपिभृत्यैःसमागतः ॥ खानयित्वाथराजापिशुश्रावरामनामतत् ॥१२॥ कियद्दूरेततोगत्वाकूवादासोपरिस्थितम् ॥ ददर्शमृत्तिकापुंजमहीमिवविनिर्मितम्॥१३॥ युक्त्यातमपिनिष्कास्यराजाग्रेनिन्युरादरात् ॥ महीमध्येऽन्नपानीयपूर्णपात्रद्वयंजनाः ॥ १४ ॥ कूवाग्रेददृशुःसर्वेमहाश्चर्य्यंगतास्तदा ॥ राज्ञापिसत्कृतःसोऽथसर्वेतंद्रष्टुमागताः ॥१५॥ दर्शनीयंददुस्तेयत्नैःसर्वैःशोभनंमठम् ॥निर्मापयामासहरेःकूवादासोऽतिभक्तितः ॥ १६ ॥ अथात्रभगवन्मूर्तिंतत्रस्थापयितुंमनः ॥ कूवादासश्चकाराथजातेकतिपयेदिने ॥ १७ ॥ साधवश्चागतास्तत्रकृष्णमूर्तिंमनोरमाम्॥नयंतोद्वारवत्यांतस्थापनायाथतांपुनः ॥ १८ ॥ कूवाभक्तोमठेतस्मिन्वासयामासभक्तितः ॥ भोजयित्वातिमिष्टान्नंततस्तेतत्रवैष्णवाः ॥ १९ ॥ मूर्तिंमूर्तिस्थलेन्यस्यस्तुत्यासर्वेमठेपुनः ॥ अथकूवाःसमागत्यदृष्ट्वामूर्तिंस्थितांतथा ॥ २० ॥ मनसाकामयामासयद्येषासंस्थिताभवेत् ॥ महाभाग्यंतदाकिंतुकथमेनंवदेच्चकः ॥ २१ ॥ अथप्रातःसमुत्थाय

तेसर्वेचलितांद्रुतम् ॥ मूर्तिमुत्थापयंतस्तुनोतस्थौतत्रसंस्थिता ॥ २२ ॥ कूवादासंतदासर्वेप्राहुर्नान्यंगमिष्यति ॥ इदमेवगृहंत
स्यहृद्यंत्वद्भक्तितोऽभवत् ॥ २३ ॥ एवंभक्तिवशस्तस्यमठेतस्थौनिरंतरम् ॥ एकदाशंखचक्राब्जगदादिग्रहणायसः ॥ २४ ॥ च
लितोद्वारकांसाधुस्वरूपेणहरिर्निशि ॥ स्वप्नेप्रोवाचमागच्छगृहेसर्वंभविष्यति ॥ २५ ॥ इतिश्रुत्वानिवृत्तोऽभूदागत्यभवनेस्थितः ॥
एकदास्वप्नएवासौगतोद्वारवतींपुरीम् ॥ २६ ॥शंखचक्राद्यंकनंचरणछोरस्यदर्शनम् ॥ स्वप्नेदृष्ट्वासमुत्थायसत्यमंगेददर्शतत् ॥२७॥
दृष्ट्वान्योऽपितदंगेचतन्महाश्चर्य्यमन्वभूत् ॥ समुद्रगोमतीतीर्थसंगमेचैकदाजनाः ॥ २८ ॥ स्नातुंययुस्तदातेषामेकस्मैवैष्णवायसः ॥
करमालांददौसाधोइमांसंस्नापयिष्यसि ॥ २९ ॥ सगृहीत्वागतोमालांगोमतीसंगमेपुनः ॥ स्नापयंस्तांपपाताथसामालासंगमे
करात् ॥ ३० ॥ बहुप्रयासतश्चापिनसाप्राप्ताथकेनचित् ॥ कूवादासस्तुतांमालांस्वग्रामस्यजलाशये ॥ ३१ ॥ प्रापस्नानंप्रकुर्वा
णःकालेसोऽपिसमागतः ॥ साधुर्दृष्ट्वातुतांमालांमहाश्चर्य्यममन्यत॥ ३२ ॥ कूवांप्राहकरान्मालासंगमेपतितातथा ॥ दृश्यतेचमहाश्च
र्य्यंतवहस्तगताधुना ॥ ३३ ॥ इतिश्रुत्वाततःसोऽपितूष्णींतस्थौहरिंस्मरन् ॥ एवंप्रयागदासोऽभूज्जंगीदासस्तथैवच ॥ ३४ ॥ विनो
दीपूरणश्चैववनमालीदिवाकरः ॥ नृसिंहोभगवांश्चैवकिशोरःखेमएवच ॥ ३५ ॥ जगन्नाथोद्धवौढीलात्वाहाख्यौभक्तसत्तमौ ॥ पर
मानंदनामाचखेमाख्योलोहकारकः ॥ ३६ ॥ कंदरोमधुपुर्य्यांसमहोत्सवविधायकः ॥ पाद्यतांबूलदानांतंस्वहस्तेनैवसर्वदा ॥ ३७ ॥
आगत्यमथुरांचक्रेसाधून्संतर्प्पयन्धनैः ॥ माधुरेभ्यश्चयत्किंचिद्धनंवस्त्रादिकंददौ ॥ ३८ ॥ अतस्तेनतथादृष्टावभूवुर्माथुराद्विजाः ॥

एवंगतेषुकालेषुभगवानितिनामकः ॥ ३९ ॥ ज्ञात्वैवंमाथुराःसर्वेपूर्णकोपेनदुर्ज्जनाः॥देहिदेहीतिजल्पंतःकूवाकमपितेपुनः ॥ ४० ॥
आहुर्द्वारिस्थितास्तांस्तुसमानीयस्वकेगृहे ॥ द्रव्यमन्नंतथावासःसर्वंतेभ्योददौमुदा ॥ ४१ ॥ पश्चादुवाचभोविप्रामदुक्तंशृणुताधुना ॥
एतावदेवसर्वस्वंमेभवद्भ्योऽर्पितंतथा॥४२॥अनेनैवमहोत्साहंकुरुध्वंवायथेच्छया॥इतिश्रुत्वाततोविप्राभगवानाख्यसाधवे॥४३॥ददुः
सर्वंगृहीतंयद्ग्रहीष्यामोनतेवयम् ॥ ततःसभगवान्भक्तोधृत्वासर्वंगृहेपुनः ॥४४॥ चिंतयापरयाविष्टस्तस्थौचित्तेहरिंस्मरन् ॥ अथश्री
भगवाञ्छीघ्रंभक्तरूपधरोहरिः ॥ ४५ ॥ आययौतद्गृहेतंतुप्राहकिंखिद्यसेवृथा ॥ महोत्साहंकुरुष्वाद्यसर्वानाहूययत्नतः ॥ ४६ ॥
अनेनैवतुसर्वंतेभविष्यतिनसंशयः ॥ इतिसाधुवचःश्रुत्वाभगवानुत्थितस्तदा ॥ ४७ ॥ आनीयसर्वान्वैसाधुन्माथुराननतिभक्तितः॥
धनान्यन्नानिवासांसिददावतिमुदान्वितः ॥ ४८ ॥ पूर्वसंवत्सरात्सर्वंददौदशगुणंमुदा ॥ तथापितद्गृहेतावत्स्थितंसर्वंतथाविधम् ॥
॥ ४९ ॥ द्रौपदीवस्त्रवत्सर्वमभूद्धरिकृपावशात् ॥ जयमल्लस्यवंशेऽभूद्वसुमंतोऽतिभक्तिमान् ॥ ५० ॥ सतुवृंदावनेगत्वासाधुसेवा
परोऽभवत् ॥ काशीसमीपवास्येकोहरिदासेतिविश्रुतः ॥ ५१ ॥ वैश्योवृंदावनेतस्यगुरुरासीन्महाशयः ॥ प्रतिजज्ञेसवैश्यस्तुसर्वेषा
मग्रतःस्वयम् ॥ ५२ ॥ व्रजभूमौमरिष्येऽहमितिकालांतरेसतु ॥ दुःखितःशिष्यमाहासौनयवृंदावनंद्रुतम् ॥ ५३ ॥ ततःशिष्यगणा
न्निन्युस्तंवैश्यंभग्ननाडिकम् ॥ अथमार्गेममारासौस्वयंतत्कालमेवहि ॥५४॥ वृंदावनमुपागत्यप्रणनामगुरुंस्वयम् ॥ ॥ अन्यान
पियथायोग्यंसत्कृत्ययमुनांगतः ॥ ५५ ॥ पुनर्नदृष्टःकेनापितृतीयेदिवसेत्वथ ॥ हरिदासस्यशिष्यावैसमायातागुरोर्गृहे ॥ ५६ ॥

ऊचूरुदतोभोस्वामिन्हरिदासोमृतःपथि॥अहमद्याभवच्चेतिश्रुत्वासर्वेऽतिविस्मिताः ॥ ५७ ॥ अहोतृतीयदिवसेमध्याह्नेऽत्रसमागताः ॥
सर्वैर्दृष्टोनसंदेहःप्रायोजीवःसतस्यवै ॥ हरिदासंमहाभक्तंगुरुःसस्मारवैमुहुः ॥ ५८ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येमहाभक्तानांचरितं
नामैकचत्वारिंशदधिकशततमःसर्गः ॥ १४१ ॥ ॥ छ ॥ दक्षिणस्यांतुगोपालविष्णुदासेत्युभावपि ॥ दाक्षिणात्यौमहाभक्तौसाधुसे
वापरायणौ ॥ १ ॥ यत्रयत्रव्रजेतांतौनिमंत्रणवशादुभौ ॥ सामग्रींशकटेकृत्वातत्रतत्रप्रजग्मतुः ॥ २ ॥ एकदास्वगुरुंभक्त्याप्राहतु
स्तौकृतांजली ॥ साधून्भोजयसामग्रीत्वावाभ्यांक्रियतेगुरो ॥ ३ ॥ प्रतिश्रुत्यगुरुःप्राहभोजयेथाःप्रयत्नतः ॥ ततोजलंचतुर्दिक्षुवि
क्षिप्तंगुरुणास्वयम् ॥ ४ ॥ जातानिमंत्रिताःसर्वेसाधवश्चालितास्तदा ॥ गुरुस्तावाहचायांतिसाधवोनात्रसंशयः ॥ ५ ॥ यथेष्टंचयुवां
साधून्मुदाभोजयतामुभौ ॥ अथागतान्पंचदिनंभोजयामासतुर्मुदा ॥६॥ प्रदक्षिणंचक्रतुस्तौगुरोराज्ञांप्रगृह्यतान् ॥ नामदेवकबीरादी
न्दृष्ट्वासंभाष्यचागतौ ॥ ७ ॥ ततोगुरुस्तुतान्सर्वान्यथायोग्यंददौमुदा ॥ विसर्जयामासपुनर्निजंदोषंक्षमापयन् ॥ ८ ॥ चतुरदासछो
तयश्चवासकर्णोलषातथा ॥ देवदामोदरोनाथभट्टोरसिकरायकः ॥ ९ ॥ एवमद्भुतरायश्चकीह्लशिष्याहरिप्रियाः ॥ श्रीमन्नारायणो
भट्टोजीवगोस्वामिसेवकः ॥ १० ॥ शेषावतीतिनाम्नाभूत्षंडलायांनृपोत्तमः ॥ तत्पुरोधाःपरशुरामःकन्यैकातस्यचाभवत् ॥ ११ ॥
करमैतीतिनाम्नावैमहाभक्ताहरेःप्रिया ॥ विषयेष्वनभिज्ञासावयसातुयुवत्यपि ॥ १२ ॥ राधाकृष्णैकहृदयापतिस्तस्याःसमागतः॥
नेतुंस्वमंदिरेतांतुश्रुत्वासातीवदुःखिता ॥ १३ ॥ अतःपरंतुसंसारगर्तेमांपातयिष्यति ॥ अयंपतिरयंतातइयंतुजननीमम ॥ १४ ॥

विहायनश्वरंकृष्णंपतिंनित्यसुखास्पदम् ॥ कग्निष्याम्यथपत्याहंकिमनेनविनश्यता ॥ १५ ॥ इतिनिश्चित्यसाबालाकृष्णैकशरणानि
शि ॥ निस्ससारगृहाद्दूरमुपःकालंविलोक्यसा ॥१६॥ उष्ट्रास्थिपंजरंदृष्ट्वानिलीनातत्रसंस्थिता ॥ महादुर्गंधमपितत्प्रियंमेनेगृहाद्विसा
॥ १७ ॥ अथप्रातस्तदीयास्तामन्वेष्टुंसर्वतोगताः ॥ उष्ट्रास्थिनिकटेगत्वामुद्रयित्वातिगंधतः ॥ १८ ॥ प्रपलाय्ययुः सर्वेसातू
ष्णींतत्रसंस्थिता ॥ एवंदिनद्वयेजातेपरावृत्यगताजनाः ॥ १९ ॥ सापिनिर्गत्यगंगायांगत्वास्नात्वातिभक्तितः ॥ अलंकारंतुज्ञाति
भ्योदत्त्वावृंदावनंययौ ॥ २० ॥ अथतत्रगतैवापिमाथुरोब्राह्मणस्तदा ॥ आगत्यपर्शुरामंतंप्राहपुत्रीविचेष्टितम् ॥ २१ ॥ पर्शुराम
द्विजश्रेष्ठमथुरायांसुतानव ॥ अस्तिमृत्यर्यसुतातीरेस्मरंतीश्रीहरिंसती ॥ २२ ॥ श्रुत्वेवंपर्शुरामस्तुपुत्रीसंनिधिमागतः ॥ रुदन्नुवाचतां
पुत्रींनासाच्छेदः कृतस्त्वया ॥२३॥ यदायाताग्रहंत्यक्त्वाश्वशुरस्यगृहंव्रज ॥ भक्षयिष्यंतिविपिनेव्याघ्राःपुत्रिनसंशयः ॥२४॥ इतिश्रु
त्वापितुर्वाक्यंसातंप्राहातिभक्तितः ॥ भक्तिरेवनृणांश्रेष्ठायस्यसानैववर्तते ॥ २५॥ स्वतःसंछिन्ननासोऽस्तियदुक्तंश्वाशुरेगृहे ॥ व्रजंति
तत्रसपतिःपरित्यक्तोमयाधुना ॥२६॥ तदाकःश्वशुरोमेस्याद्व्याघ्राद्भीतिस्त्वयोदिता ॥शरीरंभक्ष्यतेव्याघ्रैर्ननिनाथोमनागपि ॥ २७ ॥
त्वंविचारयभोतातगृहकूपेपतन्नपि ॥ नविजानासिचात्मानमुन्मत्तइवदृश्यसे ॥ २८ ॥ कस्तेपुत्रोऽथकापत्नीकस्तेबंधुर्धनंतुकिम् ॥ अ
न्तेकिमपिनैवास्तिसाहाय्यंतवभावय ॥ २९ ॥ पंचाशद्वर्षिकोजातःचर्वितस्यैवचर्वणम् ॥नित्यंकरोषिविषयंसेवमानोविमोहितः ॥
॥ ३० ॥ इतिश्रुत्वासुतावाक्यंसुप्तोत्थितइवाभवत् ॥ आगत्यस्वगृहेकृष्णमूर्तिंसंस्थाप्यभक्तितः ॥३१॥पूजयामासतां प्रेम्णापर्शुरामो

निरंतरम् ॥नत्याजराजसेवादिसर्वंलौकिकबंधनम् ॥ ३२ ॥ अथैकदिवसेराजासस्मारस्वपुरोहितम् ॥ पर्शुरामस्तुनायातिकुतःकतिप
याद्दिनात् ॥ ३३ ॥ इतिश्रुत्वागतश्चैकःपर्शुरामसमीपके॥ उवाचपर्शुरामंतंराजात्वांद्रष्टुमिच्छति ॥३४॥इतिश्रुत्वापर्शुरामोऽब्रवीत्तंदूत
मादरात् ॥ मद्वाक्याऩ्नृपतिर्वाच्योनाहंत्वनमेभवान् ॥३५ ॥ राजराजेश्वरश्चान्योमिलितोभाग्यतोमम ॥ तस्यैवसेवनंकुर्वेभवाद्भिः
क्षम्यतांमम ॥ ३६ ॥ इतिश्रुत्वावचस्तस्यदूतोराज्ञेन्यवेदयत् ॥ राजराजेश्वरोऽन्योऽपिमिलितोभाग्यतोमम ॥ ३७ ॥ राजाज्ञात्वा
विरक्तंतंतत्रगत्वास्वयंपुनः ॥तन्मुखात्तनयावाक्यंश्रुत्वाराजाब्रवीच्चतम् ॥ ३८ ॥ अहंतेतनयामत्रसमानेतुंव्रजामिभोः ॥ इत्युक्त्वानृप
तिस्तत्रययौयत्रस्थितासुता ॥ ३९ ॥ दृष्ट्वाकलिंदजातीरेराजावह्निशिखामिव ॥ जाज्वल्यमानांतेजोभिर्नकिंचिद्वापितुंक्षमः ॥४०॥
तथापिदूरतोनत्वाप्रांजलिःकिंचिदब्रवीत ॥ब्रह्मचारिणितातस्तेविरक्तोऽभूत्त्वयाविना ॥४१॥ अतस्तगमनंतत्रयुक्तमद्यनसंशयः ॥इति
श्रुत्वावचोराज्ञःकोसीऽतिप्राहतंनृपम् ॥४२॥राजन्पिताखिलान्भोगान्भुक्त्वाभवदनुग्रहात्विरक्तश्चेदभूदद्यतदाधन्यतमस्तुसः ॥४३॥
त्वंतुकेनबलेनाद्यमहाभ्रांतइवासिभोः ॥ प्रायोराज्यमिदंनीत्वासहैवचगमिष्यसि ॥ ४४ ॥ पित्रापितामहेनापिनेतुंशक्यमभून्नयत् ॥
इतिश्रुत्वावचोराजागृहमागत्यसत्वरम् ॥ ४५ ॥ राज्यंसमर्प्यपुत्रायस्वयंवृंदावनंगतः ॥ स्थित्वातत्रनृपोदानैस्तोषयन्विप्रसज्जना
न् ॥ ४६ ॥ अंतेजगामवैकुंठंहरिभक्तिप्रसादतः ॥ खड्गसेनोग्वालिपुरेमहाभक्तोबभूवह ॥ ४७ ॥ कृष्णलीलानुसारीसन्नृत्यंकुर्वन्म
मारह ॥ गंगादासस्तथैवाभूद्वैष्णवोभक्तभक्तिमान् ॥४८॥ गोपालोव्रजवास्येवंमहाभक्तोबभूवह ॥ व्रजंवासोवनंतस्यश्रीकृष्णाग्रेतुनर्त

नम् ॥ ४९ ॥ नान्यत्रगमनंक्वापिभिक्षामादायभोजनम् ॥ इंद्रप्रस्थादेकदातुराजातत्रसमागतः ॥ ५० ॥ श्रुत्वागानंचनृत्यंचराजातीवविमोहितः ॥ बलात्कारेणतंनिन्येदिल्लयांभक्तंसदुर्जनः ॥ ५१ ॥ तत्याजान्नंचपानीयंव्रजविश्लेषतःसतु ॥ अथराजानिशिस्वप्ने ददर्शातिभयंकरम् ॥ ५२ ॥ व्रजेयापयगोपालंनोचेद्धन्मोनसंशयः ॥ इतिदृष्ट्वानृपःस्वप्नंतत्कालंपरमादरात् ॥ ५३ ॥ गोपालं प्रेषयामासव्रजसोऽप्यतिहर्षितः ॥ संतनामाबभूवैकोशिष्योनरहरेःसुतः ॥ ५४ ॥ लालदासोऽपिसत्कृत्यसाधूंनंतगतोहरिम् ॥ एवं मांधवदासोऽभूत्सर्वभूतसुहृत्तमः ॥ ५५ ॥ अग्रशिष्यःप्रयागाख्योगुरुंहरिममन्यत ॥ रराजनृत्यसमयेगायन्हरिकथामृतम् ॥५६ ॥ त्यक्त्वाकलेवरंप्रापवैकुंठभुवनंमहत् ॥ एवंचभक्तिमाहात्म्यंकथितंवैमनीषिभिः ॥ ५७ ॥ इतिश्रीभगवद्भक्तिमाहात्म्ये लालदासचरितंनामद्विचत्वारिंशदधिकशततमःसर्गः ॥ १४२ ॥ छ ॥ आगरायामभूदेकोनाम्नाप्रेमनिधिर्द्विजः ॥ पौराणिकोमहाभक्तः सदाचाररतः सदा ॥ १ ॥ सएकदाभाद्रमासिपर्जन्येचातिवर्षति ॥ ब्राह्मेमुहूर्तेपानीयंनेतुंस्नातुंसमुत्थितः ॥ २ ॥ दिवाचंडालसंस्पर्शाद्भतोरात्रौसमुत्थितः॥स्नातुंजलंसमानेतुंद्वारदेशमुपागतः ॥ ३ ॥ दृष्ट्वामहांधकारंसकथंयामीतिचिंतयन् ॥ तदैको दीपिकांहस्तेकृत्वाग्रेयमुनांव्रजन्॥४॥ दृष्टःपश्चात्प्रमुदितोजगामातिनिराकुलः॥तत्रस्नात्वाजलंनीत्वाचलितःस्वगृहंप्रति ॥ ५ ॥ पुन दीपकमादायसोऽग्रतश्चलितोऽभवत्॥आगत्यसगृहद्वारिघटंधृत्वास्थितःस्वयम् ॥ ६ ॥ ज्ञातुंप्रदीपहस्तंतंतद्रूपेणातिमोहितः॥सततो ऽन्यत्रचागत्यकियद्दूरेऽतिसत्वरम् ॥ ७ ॥ निर्वाप्यतंप्रदीपंतुस्वयमंतर्दधेऽचिरात् ॥ दृष्ट्वाप्रेमनिधिस्तत्रविस्मितोगृहमाययौ ॥८॥

तदारभ्यसतत्याजपानीयाहरणंनिशि ॥ मत्वातंभगवद्रूपंस्वसहायार्थमागतम् ॥ ९ ॥ तस्यंप्रेमनिधेर्गेहेकथायांपुरुषाःस्त्रियः ॥
बालवृद्धायुवत्यश्चसमागत्यप्रशुश्रुवुः ॥१०॥एकदाकोऽपिदुष्टात्मादिल्लीशनिकटेगतः ॥प्राहतंप्रेमनिधिनाक्रियतेऽतीवपातकम् ॥११॥
आगरायांतुसर्वेषांस्त्रियआहृत्यवेश्मनि ॥ पुराणव्याजतस्ताभीरमतेऽर्थंचविंदति ॥ १२ ॥ इतिश्रुत्वाततोराजापदातींश्चतुरोद्रुतम् ॥
प्रेषयामासतानुक्त्वाकोपेननृपतिःस्वयम् ॥ १३ ॥ द्रुतमानयतप्रेमनिधिंपौराणिकंद्विजम् ॥ इत्युक्तास्तेसमागत्यदृष्ट्वाप्रेमनिधिंद्वि
जम् ॥ १४ ॥ धृत्वानिन्युर्नृपद्वारिसतुकृष्णंह्यपूजयत् ॥ भोजयित्वाजलंदातुंचलितस्तैर्धृतस्तदा ॥ १५ ॥ दृष्ट्वाप्रेमनिधिंराजाक्रो
धेनोवाचभर्त्सयन् ॥ अहोकभक्तिःक्वान्येषांसमुदायनिषेवणम् ॥ १६ ॥इतिराजवचःश्रुत्वाप्राहप्रेमनिधिर्द्विजः ॥ अहंश्रीकृष्णचरितं
कथयामिनिजेगृहे ॥ १७ ॥ तत्रायांतिनसंदेहःपुरुषाश्चस्त्रियोऽपिच ॥श्रोतुमेतत्तुजानामिसर्वामेमातरोनृप ॥१८॥इतिश्रुत्वानृपःक्रुद्धः
सत्यंसत्यमितिब्रुवन् ॥ भृत्यानाहातिरुद्धायंस्थापनीयःक्वचिद्गृहे ॥ १९ ॥ ततस्तैरोधितोगेहेसस्मारश्रीहरिंहृदि ॥ श्रोतारोऽनशनाः
कृष्णंसंस्मरुर्दुःखिताभृशम् ॥ २० ॥ ततोराजानिशिस्वप्नेददर्शनिजदेवताम् ॥ अरेपिपासितोऽहंतुपानीयंदेहिसत्वरम्॥२१॥कुतोनैव
पिबस्वेतिराज्ञोक्तेपुनरब्रवीत्॥महापिपासितोयस्यहस्तात्पातुंसमुद्यतः ॥२२॥ विनापराधंतंत्वंतुन्यरोधीर्दुष्टवाक्यतः ॥ इतिदृष्ट्वाभ्रम
श्चायमितिमत्वास्वपन्पुनः॥२३॥ततःपुनःसमागत्यतंदेवोवक्षसिक्रुधा॥पादेनताडयामासनपाययसिमांजलम् ॥ २४ ॥ ततउत्थायनृप
तिःस्वयंतत्रसमागतः ॥ प्रणम्यप्रार्थयामासस्वापराधंक्षमापयन् ॥२५॥ सोऽपिस्नात्वाजलंदत्त्वाहृदयेश्रोतृभिःसह ॥ द्वितीयदिवसेदेवं

संपूज्यबुभुजेस्वयम् ॥२६॥एवंभजनदासोऽभूद्वाह्वेदीनतरोऽभवत् ॥महाभक्तोहरिंचित्तेसाक्षाच्चक्रेमनोजयात्॥२७॥ बरेलाग्रामवास्येवं
हरिर्नारायणोऽभवत् ॥ हुसंगाबादवास्यासीदुद्धवोभक्तभक्तिमान्॥२८॥ मलसायांतुतुलसीरामःसाधूत्तमोऽभवत् ॥कल्याणरामदासो
ऽसौपरमानंदसंज्ञितः ॥ २९ ॥ अथस्त्रियोमहाभक्तादमावाईरमातथा ॥ मीरहीरामणीलालीनीरालक्षाचपार्वती ॥ ३० ॥ पीचनी
केशिकाधानीमतीचयमुनातथा ॥ गंगाबाईतथाजीवाहर्षाराजकुमारिका: ॥ ३१ ॥ एताःस्त्रियोमहाभक्ताकंधरःकेशवस्तथा॥ एवंके
वलरामोऽभूत्सर्वभूतसुहृत्तमः ॥३२॥ दृष्ट्वाकेवलरामस्तुहाहाकृत्वापतद्भुवि ॥ यथावृषस्यपृष्ठेऽभूद्दंडघातक्षतंतथा ॥३३॥ केवलस्या
पिपृष्ठेऽभूत्सर्वैर्दृष्टंमहाद्भुतम् ॥ एवंनटवरग्रामेपृथ्वीराजस्तुनिर्ममः ॥ ३४ ॥ नचान्यभाषणंतत्रकेवलाराधनंहरेः ॥ तावन्मध्येकिमप्य
स्तुशुभंवाशुभमेववा ॥ ३५ ॥ कदाचिन्नृपतिस्तत्रसमायातोऽतिकोपनः ॥ ग्राममध्येनाशकर्णगृहेतत्रागतःस्वयम् ॥३६॥ अथतस्य
गतोभृत्योनतंप्राहकिमप्यसौ ॥ पूजयन्नेवतूष्णींसहरेरग्रेस्थितोमुदा ॥ ३७ ॥ अथागतःस्वयंराजाभृत्यवाक्येनकोपितः ॥खड्गमादाय
तद्भक्तिपरीक्षार्थंसनिष्ठुरः ॥३८॥तावत्संपूज्यरामंसद्वारमाच्छादयत्ततः ॥बहिरेत्यपपातोर्व्यांदंडवत्तंस्मरन्हृदि ॥ ३९ ॥ राजागत्वा
तथादृष्ट्वानिश्चेष्टंतंमृतंयथा ॥ खड्गाग्रेणैवचरणौचिच्छेदस्वयमेवहि ॥ ४० ॥ नाशकर्णस्यनोपादौछिन्नौवाशोणितंस्रुतम् ॥ उत्थायच
लितोगेहेतदाभूपंददर्शह ॥ ४१ ॥ नमस्कृत्यांजलिंबद्ध्वाअहोभाग्यमितिब्रुवन् ॥ तस्मैतदग्रेराजापिजगर्हात्मानमात्मना ॥ ४२ ॥
वृथाछिन्नंपादतलमित्येवंविलपन्हृदि ॥ तद्राज्यस्यकरंतस्मैददौराजातिभक्तिमान् ॥ ४३ ॥ अथकालेनाशकर्णोममारश्रीहरिंभजन् ॥

श्रुत्वादिल्लीश्वरोराजामहाशोकाकुलोऽभवत् ॥४४॥ नाशकर्णस्ययःपूज्योरामस्तस्यार्चनायसः ॥ विप्रंनियुक्तवान्ग्रामंदत्त्वातस्मैमहो
त्तमम् ॥४५॥ हरिवंश[illegible]कल्याणःश्रीरंगोविठ्ठलस्तथा॥सदानंदःश्यामदासअनुरागालषाभिधः ॥ ४६ ॥ सारुकल्याणनामानौवंशी
नारायणस्तथा ॥ चेलादासस्तुगोपालस्तथागोपालशंकरः ॥ ४७ ॥ सखा[illegible]भक्ताइमेख्याताःकीर्तिताहरिभक्तिदाः ॥ मथुरायांस्थिताः
केचिन्मथुराप्रांतभूमिजाः ॥ ४८ ॥ इतिश्रीभगवद्भक्तिमाहात्म्येनाशकर्णचरितंनामत्रिचत्वारिंशदधिकशततमःसर्गः ॥ १४३ ॥
तुंबरुःक्षत्रियकुलेहरिदासोऽतिभक्तिमान् ॥ राजा[illegible]प्रेमश्रीकृष्णे[illegible]सर्वदा ॥ १ ॥ शरणागतरक्षायांशिबिभूपसमःसवै ॥
दानेदधीचिःस्वीकारपालनेबलिवन्नृपः ॥ २ ॥ प्रह्लादइवभक्तेषुश्री[illegible]तेषुच ॥ जयदेवइवप्रीतिर्हरौप्राणसमर्पकः ॥ ३ ॥
जगदेवोऽल्पभूमीशःश्रीकृष्णार्चनतत्परः ॥ एकदातुनटीकाचिदागताऽनर्तितुम् ॥ ४ ॥ देवाद्गृहीतासानृत्यगानविशारदा ॥
नृत्यंतींतांहरेर्दासोदृष्ट्वातुष्टोबभूवह ॥ ५ ॥ दत्त्वाधनान्यतृप्तःसन्शिरो[illegible]तुंसमुद्यतः ॥ नटीदक्षणहस्तेनगृहीत्वापुनरब्रवीत् ॥ ६ ॥
राजन्गृहीतमेतत्तेशिरोदक्षिणपाणिना ॥ नानेनाहंग्रहीष्यामिकस्मादपि[illegible]संशयः ॥ ७ ॥ तवचैतच्छिरोराजंस्त्वयितिष्ठतुमामक
म् ॥ इति श्रुत्वानटीवाक्यंराजाछेदान्न्यवर्तत ॥ ८ ॥ नर्तकीवा[illegible]न्यत्रप्रययौशुभा ॥ तत्रत्यभूपस्तांश्रुत्वासर्वनृत्यकलाव
तीम् ॥ ९ ॥ नर्तयामाससदसिदृष्ट्वानृत्यंतुतोषह ॥ धनंदातुसमुद्युक्तःसापितत्रचनर्तकी ॥ १० ॥ वामंप्रसारयामासकरंद्रा
[illegible]ग्रहेच्छया ॥ तदानिवृत्तोनृपतिर्नटींप्राहातिकोपनः ॥ ११ ॥ किमेव[illegible]मेमूर्खंकर्तुमिहेच्छसि ॥ श्रुत्वैवसानटीप्राहनाहंकुर्वत

नृप ॥ १२ ॥ दत्तोयदक्षिणोहस्तोजगद्दे (दे) वायवैमया ॥ अनेनतुगृहीतंयत्तत्कोवाप्यर्पयिष्यति ॥१३॥ अतोऽहंनैवगृह्णामिदक्षहस्ते नभपते ॥ इति श्रुत्वानृपःप्राहकिंतद्ददाम्यहम् ॥ १४ ॥ इत्युक्त्वासानटीभूपंप्राहगत्वानयाम्यहम् ॥ इत्युक्त्वासातुतत्कालंजगदेव समीपगा ॥ १५ ॥ मदीयंवस्तुदेहीतिश्रुत्वाराजाददौशिरः ॥ ततःसानर्तकीराजदेहंसंस्थाप्यचक्कचित् ॥१६ ॥ शिरोगृहीत्वातंभूपंदर्श यामासचाद्भुतम् ॥ राजन्निदंगृहीतंभोदक्षहस्तेनवैमया ॥१७॥ दृष्ट्वाराजामुमूर्च्छाथनमश्चक्रेनटींतुताम्॥ अथसानर्तकीमुंडं जगदेवशरी रके ॥१८॥ योजयामासशक्त्यावैसोऽप्युत्तस्थौनृपःस्वयम्॥एवंभूतोजगदेवइतिश्रुत्वातुकस्यचित् ॥१९॥ राज्ञःपुत्रीचजनकंप्राहनिश्चि तमानसा ॥ जगदेवःपतिश्चेत्स्यात्तदापाणिग्रहोमम ॥२०॥ इतिश्रुत्वापितातस्याजगदेवमुपाह्वयत् ॥ उवाचतनयामेनांगृहाणविधिना मम ॥ २१ ॥ नस्वीचक्रेजगदेवःप्रार्थितोऽपिमुहुर्मुहुः ॥ प्रतिजज्ञेमृतोऽप्येषनतांद्रक्ष्यामिकन्यकाम् ॥ २२ ॥ ततःकन्यापिताक्रुद्धोज गदेवस्यवैशिरः ॥ छित्त्वाततसम्मुखीकृत्यकन्याग्रेधारितंक्रुधा ॥ २३ ॥ अथतन्मस्तकंतत्रविपरीतमुखंत्वभूत् ॥ नकन्यायाःसंमुखेवै स्थितमेतन्महाद्भुतम् ॥२४॥ अथतंतुमृतंज्ञात्वापश्चात्तापोमहानभूत् ॥ राजादीनांतुसर्वेषामेतस्मिन्नंतरेनटी ॥२५॥ सैवागताददर्शा थजगदेवंतुतादृशम् ॥ स्वशक्त्यायोजयामासशिरोदेहेतुतत्क्षणात् ॥ २६ ॥ जगदेवःसमुत्तस्थौनीत्वातंनर्तकींययौ ॥ एवंनिश्चितबु द्धिःसहरिदासोऽतिवैष्णवः ॥ २७ ॥ तस्यैकाकन्यकाह्यासीत्प्रजावस्तुविधायिनी ॥ एवंमेकथितोगेहेवैष्णवोऽतियुवासवै ॥ २८ ॥ राजपूजार्थंपुष्पादिसमानयनकारकः ॥ परंतुविषयज्ञानरहितौनावुभावपि ॥२९॥ एकदासतुवैसाधुर्ग्रीष्मेप्रासादमस्तके ॥ अट्टालि

कायांसुतःसराजकन्यापिसायथौ ॥३०॥ शिश्यंतत्रैवधर्मार्तौनिर्विकारेणचेतसा ॥अथप्रातर्हरिदासोगतस्तत्रददर्शतौ ॥३१॥ शयाना
वेकशय्यायामाश्लिष्टौनिद्रितावुभौ॥दृष्ट्वास्वीयांबरंताभ्यांददावुपरिचस्वयम्॥३२॥आगत्याधोनचुक्रोधराजकार्य्यपरोऽभवत्॥अथतावु
त्थितौदृष्ट्वाराजवस्त्रंतुशंकितौ॥३३॥दृष्ट्वावांसदृशौराजाकिंज्ञास्यतिहृदिस्वयम् ॥इत्येवंचिंतयन्साधुश्चलितोऽन्यत्रदुःखितः॥३४॥अथ
राजातमेकांतेबोधयामासमाव्रज ॥धनंग्रामान्प्रदायास्मैनृपतुल्यंचकारतम्॥३५॥ एतयोरुभयोश्चित्तेनविकारोबभूवयत्॥हरिदासोऽपि
तंदृष्ट्वानचुकोपातिसाधुतः ॥३६॥ कृष्णदासोबभूवैकोमहाभक्तोहरेःपुरः ॥ नृत्यतस्तस्यचैकस्माच्चरणान्नूपुरंच्युतम् ॥३७॥ सचैकचि
त्तोनावैतितत्पादेकोऽपिबालकः॥दिव्यंतुनूपुरंदत्त्वागतःपत्न्यानिरीक्षितः ॥३८॥नृत्यांतेसस्त्रियंदृष्ट्वादिव्यमेकंतुनूपुरम्॥कस्मादितिह्यभू
देतत्प्राहसाप्यब्रवीच्चतम् ॥३९॥ एकस्तेबालकःपादेनृत्यतोनूपुरंददौ॥इतिदृष्टंमयास्वामिञ्छ्रुत्वैतत्प्रणनामताम् ॥४०॥ अथसंन्यासि
नोभक्ताःकीर्त्यंतेनामतोमया॥श्रीदामोदरतीर्थाख्योमाधवःस्वामिसंज्ञकः॥४१॥रामभद्रस्वामिनामातथाश्रीमधुसूदनः ॥सरस्वत्युपना
मासौगीताव्याख्याकरोमहान्॥४२॥अपरोजगदानंदःप्रबोधानंदइत्यपि॥कृत्वाचैतन्यशिष्योऽयंवृंदावननिवासकृत् ॥४३॥ कील्हशि
ष्योबभूवैकोद्वारकादाससंज्ञकः॥एवंपूरणदासोऽभूत्तथालक्ष्मणभट्टकः ॥४४॥ कृष्णदासस्तुयःपूर्वमुक्तःसतुवनेगतः ॥ पयोव्रतीतत्रचैकः
सायंकालेसमागतः ॥४५॥ क्षुधार्दितोव्याघ्रएकःकृष्णदासस्यसन्निधौ॥तूष्णींतस्थौततःकृष्णदासोऽतीवदयान्वितः॥४६॥उत्थायाग्रेतृ
णंदत्त्वाविशात्रेत्यब्रवीद्वचः॥भक्षयेदंशरीरंमेइत्युक्त्वाततसमीपतः ॥४७॥ श्रुत्वाव्याघ्रस्तृणेतस्मिन्नुपविष्टःक्षुधार्दितः ॥ शशाकनैवाकिं

चित्सकर्तुंत्यक्तुंचभक्षितुम् ।४८। ज्ञात्वैतत्कृष्णदासस्तुजंघायांसविभिद्यचाददौव्याघ्रायमुदितोबुभुजेसोऽतिहर्षितः ।४९। किंचित्पत्रेपरित्यज्यसोत्थितःप्रययौक्वचित् ॥ पुनश्छेत्स्यत्ययंजंघामितिज्ञात्वात्यजत्कियत् ॥५०॥ अथांतरेतुभगवान्स्वयंवैष्णवरूपधृक् ॥ समागत्यचपस्पर्शददौतत्रौषधंकिमु ॥५१॥ निर्व्यथंपूर्ववत्सद्योजातंजंघास्थलंशुभम् ॥ एवमातिथ्यवत्साधुःकृष्णदासोऽतिवैष्णवः ॥५२॥ इति श्रीभगवद्भक्तिमाहात्म्येनर्तकीभक्तिवर्णनंनामचतुश्चत्वारिंशदधिकशततमःसर्गः ॥ १४४ ॥ दक्षिणेविष्णुभक्तोऽभूच्छ्रीगदाधरदासकः ॥ सबूपनपुरग्रामेएकदागत्यसंस्थितः ॥१॥ ग्रामाद्बाह्येऽतिवृष्टिस्तुबभूवाथचतत्स्थलात् ॥ समुत्तस्थौस्थितस्तत्रकाष्ठपाषाणवन्मुदा ॥२॥ अथतत्रागतश्चैकोवणिक्छ्रीकृष्णभक्तिमान् ॥ सतस्मैप्रददौतत्रकृष्णमंदिरमुत्तमम् ॥३॥ तत्रमूर्तिंहरेर्धृत्वाभक्तांश्चपूजयन्स्थितः ॥ तस्यचेदंव्रतंनित्यंमहाभक्तस्यचाद्भुतम् ॥ ४ ॥ नकिंचिन्मंदिरेस्थाप्यंदातव्यंसर्वमेवहि ॥ एकस्मिन्दिवसेकिंचिच्छिष्येणैकेनरक्षितम् ॥५॥ प्रातरर्थेतदन्याशुदापयामासवैस्वयम् ॥ शिष्यमाहपुनःप्रातर्भविष्यतिनसंशयः ॥ ६ ॥ अथजातंदिनंतत्तुद्वितीयदिवसेगृहे ॥ भोक्तुंनैवागतंकिंचिच्छिष्यःसंपीडितःक्षुधा ॥७॥ चकारमनसाचेतःकदायास्याम्यहंसुखम् ॥ भोक्ष्येगत्वान्यभवनेइतिदुःखाद्दचिंतयत् ॥ ८ ॥ दृष्ट्वाक्षुधार्दितंशिष्यंगुरुश्चातीवचिंतितः ॥ अथांतरेतुभगवान्नीत्वामुद्राशतद्वयम् ॥ ९ ॥ श्रीगदाधरदासायददौवैश्यस्वरूपधृक् ॥ सतुशिष्यंसमाहूयगृहीत्वेदंव्रजाधुना ॥ १० ॥ कदायास्यामिचेत्येवंसफलस्त्वन्मनोरथः ॥ इतिश्रुत्वासशिष्यस्तुलज्जितस्तंक्षमापयन् ॥११॥ तस्थौसेवानुकूलःसगुरुस्तस्मात्समुत्थितः ॥ वृन्दावनमथागत्ययावज्जीवमुवासस ॥१२॥ अथनारायणो

दासोबद्रीनाथस्यदर्शनम्॥श्रीमत्केशवदेवस्यद्वारिवासंचकारह ॥१३॥ दृष्ट्वैकंतत्रवृत्तांतंसोऽतिदुःखममन्यत ॥ इतिज्ञात्वासभक्तस्तुता
न्सर्वानेकदाब्रवीत्॥१४॥ भवंतोयांतुनिःशंकंदर्शनार्थंनसंशयः॥अहंपश्यामिभवतामुपानहइमाःपुनः ॥१५ ॥ तदादिसर्वेनिःशंकंदद्द
शुःकेशवंजनाः ॥ एवमेकदिनेकोऽपिदुष्टएकःसमागतः ॥ १६ ॥ धृत्वातंभारवाहार्थंनिन्येतस्माद्बहिःक्वचित् ॥ वस्तुयोऽट्टालिकांब
द्धाददौतन्मस्तकोपरि ॥ १७ ॥ नीत्वाभारंसुखीसोऽपिययौदुष्टमनाव्रजन् ॥ अथयातःकियद्दूरंतत्रैकोमिलितःपथि ॥ १८ ॥
दृष्ट्वानारायणंदासंनमस्कृत्याब्रवीच्चतम् ॥दुष्टंकिमेतत्तेकर्म्ममहानर्थप्रदायकम् ॥ १९ ॥ अथजगद्गुरुःसाक्षाद्भगवंतंहिपश्यति।धृत्वातंभृ
त्यवद्भारंवाहयिष्यसिनिर्भयम् ॥२०॥ इतिश्रुत्वासदुष्टोऽपिप्रणनामक्षमापयन् ॥ सतुनारायणोदासोनचुकोपयथास्थितः ॥ २१ ॥
दुष्टोऽपितंसेवमानोमहाभक्तोबभूवह॥भगवद्भक्तसंसर्गात्सापराधोऽपिवैतथा ॥२२॥ भगवानितिनाम्नाभूद्भक्तोवैमथुरापुरे॥एकदायवनः
कोऽपिप्रभुस्तत्रसमागतः ॥ २३॥ आज्ञांददौमहादुष्टोमालांमुद्रांचयःपुमान् ॥ धारयिष्यतितंचाहंहनिष्यामिनसंशयः ॥२४॥ ज्ञात्वैवं
माथुराः सर्वेमालांमुद्रांचतत्यजुः ॥ दुष्टप्रभुभयात्तत्रभगवान्नजहौपुनः ॥ २५ ॥श्रुत्वातंदुष्टनृपतिर्भगवंतंसमानयत् ॥ उवाचतंममाज्ञा
भोःकुतोनकृतवानसि ॥ २६ ॥ तवाज्ञालंघनेराजन्मृत्युरेवेतिवैश्रुतम्॥मालामुद्रापरित्यागान्मृत्युरेवप्रियोमम ॥२७॥ इतिश्रुत्वाततो
राजाचांडालायसमर्प्पयत् ॥नीत्वेमंग्रामतोबाह्येजहीत्युक्त्वारहःपुनः ॥२८॥ उवाचतत्रकिंत्वेषभीतोवक्ष्यतितत्क्षणे ॥ मदग्रेकथयत्वंभो
इतिश्रुत्वाजगामसः ॥ २९ ॥ नीत्वातंभगवद्दासंचांडालःप्राहतंपुनः॥सर्वेत्यक्त्वाभयान्मालांजीवंतिसुखिनस्त्विह ॥३०॥ त्वंकुतोन

त्यजस्यैवंत्यक्त्वाजीवसुखीभव॥इतिश्रुत्वाब्रवीत्तंतुचांडालंचातिहर्षितः ॥ ३१ ॥ प्राणत्यागंवरंमन्येमालत्यागान्नसंशयः ॥तस्माद्य
थोक्तंकर्तव्यंत्वयाचांडालसत्वरम् ॥३२॥ इतिश्रुत्वावचस्तस्यचांडालोऽप्यतिहर्षितः॥समागत्याब्रवीत्सर्वंभगवद्दासभाषितम् ॥३३॥
राजाश्रुत्वास्वयंतत्रगत्वाबद्धांजलिस्तदा॥निपत्यपादयोर्भक्तंप्राहदोषंक्षमापयन् ॥३४॥धन्योऽसिभक्तराजत्वंतवभक्तिर्दृढाहृदि ॥ अ
तःपरंगृहाणत्वंयदिच्छसिधनादिकम् ॥३५॥ इतिश्रुत्वातुभगवान्नकिंचिद्धनमैच्छत॥राज्ञेप्रसन्नहृदयोदत्त्वाशिषमथोययौ ॥३६ ॥ एवं
कल्याणदासोऽभूत्सदोदारस्तुवैष्णवः॥गंगाधरस्यशिष्यश्चआत्मारामस्तथैवच ॥३७॥ गोविंददासइत्येवमाद्याभक्तास्तथापरे॥येषांतु
स्मरणंनृणांहरिभक्तिप्रदायकम्॥३८॥ इतिश्रीभगवद्भक्तिमाहात्म्येगोविंददासचरितंनामपञ्चचत्वारिंशदधिकशततमःसर्गः ॥१४५॥
वासवकुमारनामाभूद्राजातीववैष्णवः ॥सकृष्णमूर्तिंसर्वत्रनीत्वाववाजसर्वदा ॥१॥ दास्यकर्मतुतन्मूर्तेश्चक्रेतस्यत्विदंव्रतम् ॥ इंद्रप्र
स्थंकदाचित्ससमायातोनृपाज्ञया ॥२॥ तत्रपूजार्थमुदकंयमुनातःसमानयत् ॥ जयसिंहेनदृष्टःसन्संस्तुतःपरमादरात् ॥३॥ धन्योऽसि
त्वंमहाराजतवैवजन्मसार्थकम्॥यस्त्वमेवंहरेर्भक्तिंकुरुषेदंभवर्जितः ॥४॥ इतिश्रुत्वासनृपतिर्जयसिंहमुवाचह ॥ कामेभक्तिर्महाराजभ
क्तातेभगिनीपरा ॥५॥ नाम्नादीपकुमारीतिनतद्भक्तिकलापिमे ॥ ययासाकंहरिःसाक्षात्स्वयंवसतिसर्वदा ॥६॥ श्रुत्वेदंतस्यवचनंजय
सिंहोऽतिहर्षितः ॥ ग्रामोत्पन्नैर्धनैःसार्धंस्तोषयामासभक्तितः॥७॥गिरिधरेतिनाम्नैकोगोपोऽभूद्वैष्णवोत्तमः॥साधुपादोदकंभक्त्यापपौत
स्यदृढंव्रतम् ॥८॥ एकदाकतिचिद्धूर्ताएकत्रीभूयचागताः ॥ गृहीत्वासाधुनृतकमाहुरग्रेनिधायतम् ॥९॥ अहोऽयंवैष्णवःसाधोर्गृह्यतांच

रणोदकम्॥इतिश्रुत्वागिरिधरस्तत्कालंपरयामुदा ॥१०॥ प्रक्षाल्यचरणौतस्यजग्राहचरणोदकम् ॥ ततस्तत्कालमेवासौजिजीवसशवो
ऽद्भुतम्॥११॥दृष्ट्वासर्वेऽपितेधूर्ताःप्रशंसंतःपलायिताः॥भयात्तदग्रेनस्थातुंशेकुस्तेदुष्टचारिणः॥१२॥गोपालोनागतःकाचिद्विप्रोपीभक्तिम
तीह्यभूत् ॥ बालगोविंदरूपंसाध्यायंतीमातृवत्सदा ॥१३॥ सातदैवगतिंप्रापबालगोपालसेवनात् ॥ रामदासोबभूवैकोमथुरायांतुभक्ति
मान् ॥१४॥ वसन्वत्सवनेसोऽथसाधुसेवांचकारह ॥एकदातस्यकन्यायाविवाहसमयोह्यभूत् ॥१५॥ कृत्वापक्वान्नमखिलंगृहेसंस्थाप्य
तत्सुता ॥ मात्रासहगताक्वापिनिमंत्रणवशेनवै ॥ १६ ॥ अथागताबुभुक्षार्ताःसाधवोराममंदिरं ॥ कुत्रास्तिरामदासश्चेत्यूचुः
श्रुत्वासमुत्थितः ॥१७॥ पादप्रक्षालनंकृत्वापक्वान्नंह्यखिलंददौ ॥भोजयित्वागृहद्वारंकपाटेनपिधायच ॥ १८ ॥ तूष्णींतस्थौबहिर्गत्वा
समायातस्ततस्तुसः ॥ सायंकालेतुमिष्टान्नगृहेदीपायसागता ॥१९॥ ददर्शनैवपक्वान्नंपुत्रंप्राहातिदुःखिता ॥ सोऽपिदृष्ट्वातिदुःखार्तः
पित्रादत्तममन्यत ॥ २० ॥ तस्मिन्नेवक्षणेतस्यवरोद्वारिसमागतः ॥ बंधुभिर्बहुभिःसार्द्धंतंदृष्ट्वातीवचिंतितः ॥२१॥ रामदासोऽपिते
सर्वे वैष्णवाअपिचिंतिताः ॥ तन्मध्येकोऽपिचायातोमिष्टान्नंद्रष्टुमुत्सुकः ॥२२॥ तदैवभक्तिमाहात्म्यात्कृपयाश्रीहरेरपि॥मिष्टान्नंपर्वता
कारंदृष्ट्वासोतीऽवहर्षितः ॥२३॥ दर्शयामासतान्सर्वांस्ततस्तेऽतीवहर्षिताः॥भोजयामासुरादायगृहान्मिष्टान्नमेवते॥२४॥मत्वाहरिकृपां
पूर्णांबभूवुस्तेगतव्यथाः॥एवंसारस्वतोविप्रोरामरायोबभूवच ॥ २५ ॥ महाभक्तःसाधुसेवीवृंदावननिवासकृत् ॥ सुजानृपतिमंत्रीतुभग
वंतेतिविश्रुतः॥२६॥वृंदावननिवासिभ्यःसाधुभ्योऽर्थंददौमुदा॥एकदाचलितस्तस्यगुरुर्वृंदावनात्स्वयम् ॥ २७ ॥ भगवंताख्यनिकटेश्रु

त्वासोऽतीवहर्षितः॥पत्नींप्राहप्रियेऽभ्येतिगुरुस्तस्मैददावकिम्॥२८॥ श्रुत्वासापिमुदाप्राहसर्वस्वंगुरवेऽर्पय॥भूत्वाचातीवसोद्विग्नःपादौ
द्रक्ष्याम्यहंकदा॥२९॥इतिचिंतापरोवित्तान्यादायस्वयमागतः॥भक्त्यासमर्प्यगुरवेसाधुभ्योप्रददौधनम्॥ ३० ॥स्थित्वाकियद्दिनंतत्र
गतःसभवनंस्वकम्॥भुक्त्वासभोगानखिलानंतेरोगसमन्वितः ॥ ३१ ॥वृंदावनायगेहात्तुचलितोबंधुभिर्यदा ॥ गतोऽतिकेतदाबंधून्प
प्रच्छनयथक्कभोः॥३२॥ऊचुर्वृंदावनंयामःश्रुत्वातान्संन्यवारयत्॥अहोऽत्रैवतुरक्ष्योऽहंगत्वातत्रगमिष्यति ॥३३॥ नेमंमलमयंदेहंतत्र
धक्ष्यथवैमम॥दह्यमानाच्छरीरात्तुदुर्गंधःप्रभविष्यति ॥ ३४ ॥ साधूनांचप्रभोश्चैवचेतोऽनुत्साहकारकः ॥ इत्युक्त्वासमृतस्तत्रतस्मिन्न
वक्षणेनवै॥३५॥सर्वैर्वृंदावनेदृष्टएकाकीकुंजमध्यगः ॥ पुनर्नैवचकेनापिदृष्टःकुत्रापिसोऽद्भुतम् ॥३६॥ एवंलालमतीबाईराधाकृष्णप्रि
याभवत्॥वंशीवटेतथाकुंजेकालिंदीपुलिनेतथा ॥३७॥ गोवर्द्धनेतथारण्येद्वादशस्वपिसर्वदा ॥ अन्वेषयंतीतंप्रेम्णायत्रयत्रजनोऽब्रवीत्
॥ ३८ ॥ वहंतीप्रापतौ भक्त्याराधाकृष्णौतपस्विनी ॥ ३९ ॥ इति श्रीभगवद्भक्तिमाहात्म्येलालमतीचरितंनामषट्चत्वारिंशदधिक
शततमःसर्गः ॥१४६॥ छ ॥ अंतर्वेदेबभूवैकाश्चिलौलीग्रामसंभवः॥द्विवेदस्तुजगन्नाथनामाशास्त्रधनैर्युतः ॥१॥ एकदावाजपेयेनयष्टुं
चक्रेमनोद्विजः॥ग्रामेतुचंदनपुरेसंभारान्बहुशोऽकरोत् ॥ २ ॥ अध्वर्य्यवश्चर्त्विजश्चहोतारश्चतथैवच ॥ उद्गातारःसमायातावाराणस्या
निमंत्रिताः॥३॥अन्येत्वामंत्रितास्तेनयेचांतर्वेदवासिनः॥आगत्यब्राह्मणाःसर्वेराजानःसपुरोहिताः ॥ ४ ॥ तत्रकूपोदकंचासीत्समुद्रा
योमहानभूत्॥सर्वेसशंकिताश्चित्तेविनावारितुकिंभवेत् ॥५॥ जगन्नाथस्तुगंगायाभक्तोऽल्पावधिसंस्थितः ॥ गंगापूजांप्रकुर्वाणोगंगाना

मजपन्प्रियम् ॥६॥ गव्यूत्युपरिगंगाचप्रवहंतीस्थितातदा ॥ गंगांतांतुजगन्नाथोगत्वास्तुत्वान्यमंत्रयत् ॥७॥ विष्णुपादार्घसंभूतेगंगेत्रै
लोक्यतारिणि॥निमंत्रयामित्वां देवितत्रायाहिकृपांकुरु ॥ ८ ॥ इतिसंप्रार्थ्यगंगांससमायातोगृहंद्विजः ॥ सुष्वापरात्रौसर्वेषांशिष्टाचा
रंविधायच॥९॥अथरात्रौसमायातागंगातद्रासससन्निधौ ॥ जलकल्लोलनिर्घोषबोधिताखिलमानवाः ॥ १० ॥ आगत्यतज्जलंमार्गांतरे
णचययौपुनः । गंगायामेवतावत्स्वस्थानांतरमिवाभवत् ॥११॥ अथोत्थितास्तुकल्लोलनिर्घाताद्ग्रामवासिनः ॥ निमंत्रिताअपिजना
जगन्नाथोऽपितैःसह॥१२॥गंगायाअग्रतोभूत्वापूजयामासभक्तितःस्तुत्वासर्वेजनागंगांजगन्नाथंचतुष्टुवुः ।१३॥प्रातरारभ्यतेसर्वेस्तुत्वा
पानावगाहनैःक्रीडंतोजाह्नवीतोयेजाताःसर्वेऽतिहर्षिताः॥१४॥ततोजातेवाजपेयेसुवर्णानिचदक्षिणाः॥दत्त्वाविसर्जयामासब्राह्मणानति
भक्तितः ॥१५॥ गतेषुसर्वविप्रेषुतुष्टेसामाजिकेजने। जगन्नाथस्तुसंभारान्दातुंगंगातटेययौ॥१६॥संप्रार्थ्यजाह्नवींदेवींतदोवाचकृतांज
लिः॥मातर्गंगेनमस्तेऽस्तुक्षमस्वदुर्नयंमम ॥१७॥तदारभ्यद्विवेदोऽपिवाजपेयीबभूवह॥एवंभक्तस्तुमाहात्म्यंयद्गंगासमुपागता ॥ १८ ॥
अद्यापिवर्षासमयेतत्रायातिचजाह्नवी॥ प्रसिद्धमेतत्सर्वत्रकान्यकुब्जेषुवैनृणाम्॥१९॥तस्यातिसंततिर्देशेसंवर्तेऽतिप्रतिष्ठिता॥मनीराम
इतिख्यातोवाजपेयीवटेश्वरे॥२०॥सोऽतिभक्तोदयायुक्तएकपुत्रोबभूवह।एकदातस्यपुत्रस्तुममारदैवयोगतः ॥ २१ ॥ मनीरामस्तुशोका
तोगृहीत्वातनयंस्वकम्॥उपविष्टोहरिंध्यायंस्तुष्टावप्राकृतैःपदैः॥ २२ ॥ जातेशततमेपद्येउत्तस्थौसमृतःशिशुः ॥ दृष्ट्वासर्वेमहाश्चर्यंम
नीरामंप्रतुष्टुवुः ॥२३॥ एवंभक्तिवशःकृष्णोजीवयामासबालकम्। मिथिलायामभूदेकोविप्रोगोविंदठक्कुरः ॥२४॥ वेदशास्त्रार्थतत्त्वज्ञो

गोपालार्चनतत्परः ॥ काव्यप्रदीपकर्तासौदेवीपूजनपद्धतिम् ॥२५॥ चकारमंत्रशास्त्रंससाधकानांचसिद्धिदम् ॥ नवीनंतुलसीपत्रंदत्त्वा
तुपूजनेहरेः ॥२६॥ श्रीकृष्णायतदैवान्नंबुभुजेसचनान्यथा॥यदान्नेनमिलत्येतत्तद्दिनेजलमप्यसौ॥२७॥नपपावितिसंकल्पस्तस्यनित्यो
महात्मनः॥एकदासतुकाश्मीरेययौमम्मटपंडितम्॥२८॥काव्यप्रकाशकर्तारंद्रष्टुंयात्रांसमाचरन् ॥अंमटोमम्मटश्चैवकैयटश्चेतितेत्रयः॥
॥२९॥ कैयटोभाष्यटीकाकृदंमटोवेदभाष्यकृत्॥तद्गृहद्वारिगत्वासस्थितःपप्रच्छतत्स्त्रियम् ॥३०॥ कुत्रास्तेमम्मटश्चापिद्रष्टुमिच्छाम्य
हंतुतम्॥इत्युक्तासाब्रवीत्तंतुविशत्रैवागमिष्यति ॥३१॥ एषकूपोऽस्तिचात्रत्वंतावत्स्नानंसमाचर॥इत्युक्त्वासागतागेहेसोऽपिगोविंदठ
क्कुरः ॥३२॥ कूपेदूरतरंवारिचाप्राप्यायंतथाविशत्॥एवंगतेमुहूर्तेतुमम्मटोऽपिसमागतः ॥३३॥ श्मश्रुकेशधरश्चर्म्मकंचुकेपादयोर्दधत्॥
तंदृष्ट्वायवनाकारंश्रीमद्गोविंदठक्कुरः ॥३४॥शंकितोमम्मटस्तंतुनमश्चक्रेऽतिभक्तिमान्॥आहाहंमम्मटोब्रह्मन्भवान्कस्मादिहागतः ॥३५॥
इत्युक्तःसोऽब्रवीत्तंतुजलमत्रास्तिदूरतः ॥ विनाताहग्गुणेनात्रकथंस्नानंकरोम्यहम् ॥ ३६ ॥ इतिश्रुत्वावचस्तस्यमम्मटस्त्वरितोगृहे ॥ ग
त्वापात्रंसमानीयस्नानोपकरणंतथा॥३७॥आगत्यकूपनिकटेजलमादायपाणिना॥अभिमंत्र्यजलंकूपेचिक्षिपेतत्प्रभावतः॥३८॥आपूर्ण
मभवत्तत्रजलंकूपमुखावधि ॥ गोविंदठक्कुरंप्राहकुरुस्नानमिहागतः ॥३९॥ इत्युक्तोजलपात्रेणकरेणादायतज्जलम् ॥ सस्नौस्वयंददर्शैत
च्छ्रीमद्गोविंदठक्कुरः ॥४०॥मत्वाश्चर्यंततःसोऽपिस्नानंचक्रेमुदान्वितः ॥संपूज्यपक्वाभुक्त्वाचतस्थौगोविंदठक्कुरः ॥४१॥ मम्मटोऽपिस
मयातोभ्रातृभ्यांसहतत्रह ॥अथकाव्यप्रकाशंतंदर्शयामासमम्मटः ॥४२॥ गोविंदठक्कुरोदृष्ट्वाग्रंथंमम्मटनिर्मितम् ॥काव्यप्रदीपंस्वकृतंद

र्शयामासतान्स्वयम् ॥४३॥ दृष्ट्वातेऽप्यतिसंतुष्टाविलिख्याथददुश्चतम्॥ गोविंदठक्कुरःकाव्यप्रकाशंजगृहेस्वयम्॥ ४४ ॥ एवंपरस्परं
स्नेहेजातेगोविंदठक्कुरः ॥ प्रतस्थेमिथिलाप्रांतेदासेनसहितोमुदा ॥ ४५ ॥ एकस्मिन्दिवसेमार्गेनप्राप्तंतुलसीदलम् ॥ अनशनस्तदात
स्थौद्वितीयेदिवसेपुनः ॥४६॥ मार्गेच्युतोमहारण्येसंप्राप्तोऽतिपिपासितः ॥ बुभुक्षितस्तरुतलेतस्थौगंतुमशक्नुवन् ॥४७॥ दासमाहन
चाहंतुगंतुंशक्नोम्यतःपरम्॥इत्युक्तःसतुदासोवैरुदंस्तत्रसमुत्थितः ॥४८॥कियद्दूरेययौमार्गमन्वेष्टुंगांददर्शह ॥ गोपालबालमेकंतुश्या
मंद्वादशवार्षिकम् ॥४९ ॥ पद्माक्षंकुंडिकामध्येवहंतंनवनीतकम् ॥ गाश्चारयंतंतत्रैवतडागंचददर्शह ॥ ५० ॥ तत्तीरेतुलसीवृक्षंदृष्ट्वाहृ
ष्टोबभूवसः॥गोपालंतंतुपप्रच्छनवनीतंभवद्गृहे ॥५१॥ मिलिष्यतिवदास्तिक्कभवनंतवयाम्यहम् ॥ दिनद्वयमनाहारोद्वितीयेमृतवत्स्थि
तः ॥५२॥अदत्त्वातुलसीपत्रंनवनीतमिदंत्वया॥विक्रीणीतेनकोऽप्यत्रकिंचेदंतुलसीदलम् ॥५३॥गृहीत्वागच्छत्वरितंमद्वचष्ठक्कुरंवदन्॥
नेदंसमुचितंविप्रव्रतंत्राणविनाशनम् ॥५४ ॥भक्त्यैवभगवाञ्छीघ्रंसुलभोवर्ततेनृणाम् ॥इतिश्रुत्वासदासस्तुगृहीत्वानवनीतकम् ॥५५॥
नीत्वाचतुलसीपत्रंत्वरितस्तत्रचागतः ॥ उवाचस्वामिनेलब्धंद्वयमस्मिन्वनेमया ॥ ५६ ॥ समीपेऽत्रतडागोऽस्तियामिनेतुंजलंत्वहम्॥
इत्युक्त्वापात्रमादायशीघ्रमानीतवाञ्जलम् ॥५७॥स्नापयित्वापूजयित्वाभोजयित्वातिहर्षितः ॥स्वयंचबुभुजेदासःस्वामिभुक्तावशेषित
म् ॥५८॥ततस्तद्दासमाहेदंवचोगोविंदठक्कुरः॥कुत्रास्तिसतुगोपालस्तडागश्चापिकुत्रसः ॥५९॥दृष्ट्वातौतुततोमार्गंज्ञात्वायास्याम्यरण्य
तः ॥ इतिश्रुत्वासदासस्तुगृहीत्वास्वंचवस्तुहि ॥६० ॥ चलितोधनिनासाकंतत्रागत्यस्थितोऽभवत् ॥ अयंवृक्षस्तडागस्यतीरेदृष्टोमया

तदा॥६१॥अत्रैवतुलसींदृष्ट्वागोपालस्त्वत्रसंस्थितः ॥ इतिश्रुत्वाततःसोऽपिवनाद्बहिरथागतः ॥६२॥ क्वचिद्ग्रामेतिपप्रच्छजनानस्मि
न्वनेमहान् ॥ जलाशयोभवद्भिस्तुज्ञायतेवर्ततेनवा ॥६३॥ इतिश्रुत्वाजनाआहुरत्रनैवजलाशयः ॥ वनेक्वापीतिजानीहिमिथ्यादासो
वदत्ययम्॥६४॥पुनःपप्रच्छतंदासंगोपालःकीदृशस्त्वया॥दृष्टोब्रूहीतिश्रुत्वासउवाचातीवहर्षितः ॥ ६५ ॥ श्यामःकमलपत्राक्षःपुंडरी
कदलेक्षणः ॥ द्वादशाब्दवयाःपीतवासादृष्टोगवानुगः ॥६६॥ इतिश्रुत्वावचस्तस्यदासोऽद्भुतमितिब्रुवन् ॥ सएवभगवान्सत्यमित्यु
क्त्वान्यपतद्भुवि॥६७॥ब्रह्मांडमस्यपुस्फोटगतोऽसौहरिमंदिरम् ॥सोऽपिदासःशवस्याग्रेविललापातिदुःखितः ॥६८॥ दाहयित्वाशवं
तस्यरात्रौतत्रैवसंस्थितः ॥स्वप्नेददर्शकोऽप्याहमाशोकंकुरुभोद्विज ॥६९॥ तस्येदंचरमंजन्मत्वत्संसर्गवशादयम् ॥ दृष्ट्वामामेवसंप्राप्तः
कर्मणादासतांगतः ॥ ७० ॥ त्वमपिश्रद्धयाभक्त्यामांसंपूज्यनिरंतरम्॥मामेवैष्यसिसत्यंतेकथयामिनसंशयः ॥७१॥एवंदृष्ट्वातुस्वप्नंस
प्रातरुत्थायधैर्य्यवान् ॥ततश्चालकतिभिर्दिनैरागतवान्गृहम् ॥ ७२ ॥ सचोवाचजनान्सर्वांस्तद्वृत्तंभक्तिपूर्वकम् ॥ श्रुत्वातिविस्मिता
स्सर्वेप्रशशंसुश्चतंमुदा ॥ ७३ ॥ इत्येतत्सकलंख्यातंमिथिलायांगृहेगृहे ॥ तस्माद्भक्तैर्नचासाध्यंकिंचिन्नैवास्तिवैनृणाम् ॥ ७४ ॥ इति
श्रीभगवद्भक्तिमाहात्म्येजगन्नाथमनीरामगोविंदठक्करचरित्रंनामसप्तचत्वारिंशदधिकशततमःसर्गः ॥ १४७ ॥ ७ ॥ राम
प्रसादनामैवमयोध्यायामभूद्द्विजः॥त्यक्त्वासर्वमभूत्सोऽथरामभक्तोऽतिवैष्णवः ॥१॥ सदागतानांसर्वेषांसाधूनांभोजनंददौ ॥ यावद्य
स्यास्तिनिष्ठासासतावदत्रातिष्ठति ॥२॥ इत्युक्त्वातस्यभक्तस्यजीविकानैवकापिवा ॥ कुतश्चिदागतंवित्तंतस्मात्तेनहिजीविका ॥ ३ ॥

एवंबहुदिनेकालेगतेचैकदिनेपुनः॥वणिग्ददौनसामग्रींभोजनार्थंसतांतदा ॥४॥ श्रुत्वासतूष्णींस्वगृहेतस्थौचिंतापरायणः ॥ अथराम
प्रसादस्यरूपंधृत्वारघूत्तमः ॥५॥ गृहीत्वातावतीमुद्रांययौतद्वणिजोगृहे ॥ वणिग्दृष्ट्वातुतंभक्त्याकृतांजलिपुटोऽब्रवीत् ॥६॥ किमर्थमा
गतःस्वामिन्स्वयमेवेतिचासकृत् ॥आहश्रुवंततंरामप्रसादस्यस्वरूपधृक् ॥७॥ नात्रदोषोगृहाणेदंधनंदेहिचभोजनम् ॥ साधुभ्योऽहंतुग
च्छामीत्युक्त्वासगिर्ययौततः ॥८॥ अथयातेकियत्कालेवणिक्तस्यतुमंदिरे ॥ रामप्रसादस्याग्रतःकृतांजलिरुवाचतत् ॥९॥ इतिश्रुत्वा
ब्रवीद्रामप्रसादोवणिजंतुतम् ॥सहस्रावधितेजातंशृणुमेऽद्यवणिग्वचः ॥१०॥ तद्दत्त्वाभोज्यसामग्रीमानयिष्यामितेपुनः॥ इतिश्रुत्वाव
चस्तस्यवणिगाहातिभक्तितः ॥ ११॥ इदानीमेवसर्वंमेदत्त्वात्वंपुनरागतः॥ किमिदंभाषसेनाथेत्युक्त्वासतुवणिक्तदा ॥१२॥ आगत्य
भवनेनीत्वातामुद्रास्तत्रचागताः। दर्शयामाससर्वान्वैसर्वेदृष्ट्वातिविस्मिताः ॥१३॥रामप्रसादभक्तस्तुतंननामातिभक्तितः ॥ हर्षाश्रुपरि
पूर्णाक्षस्तुष्टावातिमुदान्वितः ॥१४॥एवंहिपरमाश्चर्यंज्ञात्वावैश्योऽपितत्क्षणात् ॥बभूवतस्यशिष्योवैपरित्यज्यगृहादिकम्॥१५॥ सच
रामप्रसादस्तुतेनवैश्येनसंगतः ॥अन्यैश्चबहुभिःशिष्यैर्जगाममिथिलांपुरीम्॥१६॥ तत्रदृष्ट्वाजगद्धात्रींसीतांजनकमंदिरे ॥ संपूज्यतांनृ
पतिनातत्रत्येनतदासतु ॥१७॥ रामग्रामंव्रजन्मार्गेममग्रामेसमागतः॥तत्रदृष्टःसपित्रामेपितृव्येनातिभक्तितः ॥ १८ ॥ तन्मुखात्तुमया
सर्वमेतद्वृत्तंश्रुतंपुनः ॥ अत्यल्पेऽस्मिन्नपिदिनेभगवान्भक्तवत्सलः ॥ १९ ॥प्रादुर्बभूवतद्रूपःसत्यमेतन्नसंशयः॥ अथरामप्रसादस्तुस्थि
त्वातत्रकियद्दिनम् ॥२०॥ मार्गशीर्षेसमायातेशुक्लपक्षस्यसप्तमी ॥ यदागतातदासीताविवाहस्यमहोत्सवम् ॥ २१ ॥ चक्रेराज्ञासमंभ

क्त्याश्रीमद्रामप्रसादकः ॥ तदासामिथिलासर्वाताद्दगानंदवत्यभूत् ॥२२ ॥ एवंरामप्रसादोऽभूद्भगवद्भक्तसत्तमः ॥तेद्रष्टारश्चपुरुषाःसं
तोऽभूवन्महीतले॥२३॥ तुकोजीपंढरपुरेशूद्रोभक्तोबभूवह॥ येनसाकंहरिःसाक्षाच्चक्रेसंभाषणंमुहुः॥ २४॥यस्यांतसमयेदेहोगतःपश्यत्सु
वैनृषु ॥कथाविस्तरतोऽन्यत्रवर्ततेऽतोनलिख्यते॥२५॥तथैवरामदासोऽभूद्दक्षिणेरामसेवकः ॥तस्यपुच्छमभूदेतज्ज्ञात्वासर्वैर्दृढीकृतम् ॥
॥२६॥ मारुतेरवतारोऽयंचमत्कारोऽपिताद्दशः ॥ दामाजीभृत्यचांडालवेषेणश्रीहरिःस्वयम् ॥ २७ ॥ राज्ञेमूल्यंददौसर्वंराजाचातीव
हर्षितः ॥ दामाजीशर्मणेपत्रंप्रेषयामासभूपतिः ॥ २८ ॥ सतुदृष्ट्वाद्भुतंमेनेश्रीहरेर्वैविचेष्टितम् ॥ २९ ॥ इतिश्रीभगवद्भक्तिमाहा
त्म्येरामप्रसादचरितंनामाष्टचत्वारिंशदधिकशततमःसर्गः ॥ १४८ ॥ ७ ॥ इत्येतद्भगवद्भक्तिमाहात्म्यंकथितंमया ॥ संदेहो
नात्रकर्तव्यःसर्वंसत्यंनसंशयः ॥१॥ यस्यभक्तिर्दृढाजाताधर्मोयैश्चापिरक्षितः ॥ विश्वासोयस्यहृदयेशास्त्रंतस्यैवसिद्धिदम् ॥२॥ इदा
नीमपिपश्यंतुसंदिहानामहाद्भुतम्॥ मिथ्याभिशप्तःपुरुषोदिव्यंकुर्वन्हिशुद्ध्यति ॥ ३ ॥ लोहंतप्तंकरेकृत्वाशुद्धोनानेनदह्यते ॥ अशु
द्धस्तत्क्षणादेवदग्धपाणिःप्रजायते॥४॥जलेमग्नश्चिरंतत्रशुद्धस्तिष्ठतिगेहवत्॥अशुद्धस्तत्क्षणादेवउन्मज्जतिनिमज्जति॥५॥एवंसर्पोधृतःशु
द्धंनैवकिंचिद्दशत्यहो॥अशुद्धंतत्क्षणादेवदशतीत्यद्भुतंमहत् ॥६॥एवंशास्त्रोदितंदिव्यमाहात्म्यंदृश्यतेयथा॥अद्यापिभक्तिमाहात्म्यंताद्द
शंदृश्यतेजनैः॥७॥अन्यत्रद्विजसंस्पृष्टंभोक्तुंनोजायतेमनः।जगन्नाथपुरेऽश्नातिसर्वश्रेष्ठद्विजोऽपिहि॥८॥तस्मान्मनोहिसर्वत्रसर्वेषांफलदं
नृणाम्॥तस्मिन्दृढेफलंतद्वत्संदिहानेफलंतथा॥९॥ममैवानुभवोजातोयथातत्कथयाम्यहम्।यथैतद्ग्रंथनिर्म्माणेममबुद्धिरभूत्तथा॥१०॥

अहंतुमैथिलोवेणीरामशर्मापितामम॥तारादेवीतुजननीमदेकतनयातुसा ॥११॥ मात्रावैचंद्रमाराध्यलब्धोऽहंयस्ततस्तया॥चंद्रदत्तेतिमे
नामकृतमात्मजनोदितम्॥१२॥मज्जन्मदिवसादब्दमध्येमातादिवंगता॥पितापुनर्विवाहंनस्वीचक्रेमांसुतंस्मरन्॥१३॥अथाहंनिजगेहेतुजा
तःषोडशहायनः ॥लालितःस्वजनैःसर्वैरिंगमाणोयथामति॥१४ ॥तदातत्रगतःकश्चिद्दुर्जनोराजकार्य्यकृत्॥जीवनेतिचनाम्नासप्रेरितो
म्लेच्छभूभुजा ॥१५॥ मिथिलायांचसर्वेषांजीविकाऽपहृताबलात्॥तदापलायिताःसर्वेब्राह्मणाभयविह्वलाः ॥१६॥ ममाप्यग्रधनंग्रामे
कियद्राज्ञार्पितंस्थितम् ॥ तदर्थंतस्यभृत्यैस्तुगच्छन्मार्गेधृतोह्यहम् ॥ १७ ॥ श्रुत्वामांतुधृतंमोहान्मत्पितृव्यःसमागतः ॥ श्रीमद्राघव
शर्म्माथतद्वाक्याद्भवनेस्थितः ॥ १८ ॥ तंचमांचसदुष्टात्माशृंखलाभ्यांबबंधह॥बद्धासंताडयामासकशाभिर्निर्दयैर्जनैः ॥१९॥गृहेतेव
र्ततेभूरिधनंमेसर्वमर्पय॥विद्धद्धनैवपापीमित्युच्चैःसोऽब्रवीद्वचः ॥२०॥ मस्तरामाभिधःसाधुरेकोग्रामपतिःस्थितः ॥ सोऽपिबद्धःकशा
घातैःप्राणांस्तत्याजतत्क्षणात् ॥२१॥ एवंसंताड्यमानांश्चनिन्युःकारागृहेजनान्॥तत्रसमत्पितृव्यस्तुमामुवाचदयान्वितः ॥२२ ॥आ
पदुद्धारणंनाममंत्रमापदित्वंस्मर ॥ इत्युक्तोऽहंतुतत्कालमारभ्याविरतंस्मरन् ॥ २३ ॥ स्थितोबद्धस्तुतत्रैवगतमेवदिनद्वयम् ॥तृतीयेदि
वसेसुतोजीवनोनिश्चयथैक्षत ॥२४॥ एकोदंडधरोऽभ्येत्यद्रुतंगालिंददत्पुमान् ॥बद्धानिमान्विमुंचारेसर्वनाशस्तुतेह्यभूत्॥२५॥ त्वमपि
प्रातरेवात्रविपत्तिंप्राप्स्यसिध्रुवम् ॥ इत्यर्द्धरात्रेदृष्ट्वासस्वप्नंतत्कालमुत्थितः ॥ २६ ॥ भृत्यानाहातिकोपेनकश्चिदत्रागतोनवा ॥
द्वारदेशेकपाटस्तुलापितोवर्ततेनवा ॥ २७ ॥ इत्युक्त्वासपुनर्दंडद्वयांतेचोत्थितोगृहात् ॥ भृत्यानाहूयसंत्रस्तःस्वप्नवृत्तमुवाचता

न् ॥ २८॥ भ्रमोऽयमितितेसर्वेह्युक्त्वातूष्णींस्थितामयात् ॥ तेषांमध्येह्यथैकस्तुस्वप्नवृत्तमुवाचनौ ॥ २९ ॥ दिनत्रयंनिराहारस्थितयो
स्ताड्यमानयोः॥आवयोरपिविश्वासाज्जातसंतर्बलंतदा ॥ ३० ॥ प्रातःकालेचतुर्थेऽह्निपत्रंजीवनवेश्मनः ॥ समायातंवज्रपातसमंदृष्ट्वा
समूर्च्छितः ॥३१॥ तस्यैकतनयोगेहेससुतः सहसोत्थितः ॥ अकस्मात्तत्रवह्निस्तुलग्नस्तत्रमृतःसुतः॥३२॥सपत्नीकोधनंसर्वंभस्मसा
दभवत्क्षणात् ॥ ज्ञात्वैवंसुतवृत्तांतंलुंठतिस्मधरातले ॥ ३३ ॥ दृष्ट्वातूष्णींस्थितोऽथासौगतेदंडद्वयांतरे॥तस्यस्थानेऽन्यपुरुषंप्रेषयामा
सभूपतिः ॥३४॥ कायस्थंचातिकुशलंनाम्नाद्वंद्वबहादुरम् ॥ सतुपश्चात्स्थितस्तस्यभृत्यास्तत्कालमागताः ॥३५॥ रुदंतंजीवनंकोपा
च्चुक्रुशुश्चासनात्ततः ॥ बद्ध्वासंस्थाप्यतंपश्चादावयोःशृंखलेद्रुतम् ॥३६॥ छेदयित्वाथसत्कृत्यमुमुचुस्तेहिबंधनात् ॥ अथवांस्वगृहे
गत्वायथापूर्वंस्थितौसुखम्॥३७॥ एवंमयैवानुभूतंभक्तिमाहात्म्यमुत्तमम् ॥ आर्तभक्तिस्समुत्पन्नासद्यःप्रत्ययकारिणी ॥ ३८॥ तस्मि
न्क्षणेकिमप्यन्यन्नज्ञातंहिधरातले ॥ एकाग्रचेतसादेवःस्मृतःसंकष्टनाशनः ॥ ३९ ॥ मज्जन्मपत्रिकांदृष्ट्वामह्यमुक्तंफलंततः ॥ त्रिः
सप्तमेऽब्देमृत्युस्तेभविष्यतिनसंशयः ॥ ४० ॥ तदारभ्यतुसंदेहात्सर्वाञ्ज्योतिर्विदस्त्वहम् ॥ प्रादर्शयंजन्मपत्रंसर्वैरुक्तंतदेवहि ॥
॥ ४१ ॥ तदानिश्चित्यमरणमुदासीनःस्थितोगृहे ॥ सप्तविंशतिमेऽब्देतुममकोमिलितोद्विजः ॥ ४२ ॥ सिद्धासीदुत्तमा
काचित्तस्यकर्णपिशाचिनी ॥ तमपृच्छमहंभक्त्याकियदायुर्वदास्तिमे ॥ ४३ ॥ सतुध्यात्वाकियत्कालंमामुवाचातिनि
श्चितम् ॥ त्रिंशत्तमेऽब्देकष्टंतेमृत्युतुल्यंभविष्यति ॥ ४४ ॥ परंतुवैष्णवोमंत्रोयस्त्वयायातितंयदि ॥ स्मरिष्यसितदाताहिनते

मृत्युर्भविष्यति ॥४५॥ कोऽसौमंत्रःसवक्तव्यइतिपृष्टोमयापुनः॥अब्रवीदथतन्मंत्रंसश्रुत्वासचवाहनम् ॥४६॥ यातोविप्रोययौगेहंस्वम
हंचापितत्क्षणात् ॥ भुंजानःपर्य्यटंस्तिष्ठन्स्वपन्व्यवहरन्नपि ॥ ४७ ॥ अस्मार्षंसंततंमंत्रंभक्त्यामृत्युभयेनच ॥ अथतस्मिन्वत्सरेऽ
हंपितुराज्ञांप्रगृह्यच ॥४८॥ काश्यांस्नातुंसमायातोग्रहणेचंद्रसूर्ययोः ॥ आगत्यन्यवसंस्तत्रपित्रेनोक्तंहितन्मया ॥४९॥ मयाविचारितं
काश्यांमृत्युश्चेत्सर्वतोवरम् ॥वर्षेदशद्वयेजातेवसतोममतत्रवै ॥ ५० ॥ ज्ञातंपित्रापितत्सर्वंस्नेहात्सर्वस्वमागतैः ॥ आगत्यदृष्टामांहृष्टःपं
चसप्ततिवार्षिकः ॥५१॥ ततोपितामेकृतवान्काश्यांयात्रांमयासह ॥ ततएकदिनेहृष्टःपितामाताब्रवीद्वचः ॥ ५२ ॥ तवारिष्टदिनंचातः
परमस्तिकियद्वद॥इतिश्रुत्वामयाप्युक्तमपमृत्युस्तुकार्तिकः ॥५३॥ मकरांशद्वितीयांतोवर्षोऽयंगर्हितोमम ॥ इतिश्रुत्वापुनःप्राहसमां
मद्वचनंशृणु ॥५४॥ जनन्यांतेमृतायांतुविवाहार्थमहंपुनः ॥ प्रार्थितोबंधुभिःसर्वैर्मयानस्वीकृतोहृदि ॥५५॥ विचारितमयंपुत्रःसर्वम
मकरिष्यति॥अहंतुनात्रवत्स्यामियाम्यद्यैवनिजालयम् ॥५६॥ इत्युक्त्वासाश्रुनयनःप्रतस्थेतत्क्षणात्पिता ॥ अन्येऽपिमैथिलाःसर्वे
शोकार्ताश्चैवववृजुः॥५७॥अहंतुवरुणातीरपर्य्यंतमागतोरुदन्॥ततोमांदक्षिणेतीरेसंस्थाप्यचोत्ततारसः ॥ ५८ ॥ परपारगतोमांतुदृ
ष्ट्वामोहात्पपातह॥ततोऽहंद्रुतमागत्यजलंनीत्वाददौपुनः ॥५९॥ ततउत्थायमामाहत्वंमाकाश्याबहिर्व्रज ॥ तावद्दिनेव्यतीतेतुशीघ्रमेहि
ममांतिकम् ॥ ६० ॥ ममापिचायुषोऽतस्तुअभ्रमाव्दैर्भविष्यति॥इत्युक्त्वाप्रस्थितोधैर्यंकृत्वाहमपिचागतः ॥६१॥ संस्मरंस्तन्मनुंचि
त्तेवैष्णवंविप्रभाषितम्॥ अथतस्यांतुरात्र्यांवैअपश्यंस्वप्नमद्भुतम्॥६२॥मृतोऽहंदग्धुमायातामामदेहंजनास्तदा॥निवारितास्तेशिशुभिर

लपदंडधरैस्तदा ॥६३॥ पुनःपश्याम्यहंरक्षःकोणदंडमहोद्धतम् ॥ नक्षत्रस्पाशनस्थूलंप्रलयांबुदसन्निभम् ॥६४॥ कालदंडोऽयमुदितोवेति तंचाब्रुवञ्जनाः ॥ तदाहमतिचिंतार्तस्तंमंत्रमस्मरंहृदि ॥६५॥ तस्मिन्क्षणेपुनर्दृष्टाश्चत्वारोवैष्णवामया ॥ वहंतस्तुलसीपत्रमालांतिलक भूषिणः ॥६६॥ आगत्यतेऽब्रुवन्मांतुत्वदर्थंवयमागताः ॥ इमंमहाप्रसादंतेददौद्वारावतीपतिः ॥६७॥ त्वंभुंक्ष्वेतिचश्रुत्वाहंभुक्तवांस्तत्करो त्तमात् ॥ नतादृशीसितानापिद्राक्षानैवसितोपला ॥६८॥ तानपृच्छमहंतस्यजायतेभोज्यमद्भुतम् ॥ तेऽब्रुवंस्तत्रनैवेद्यंश्रीकृष्णस्येदमेवहि ॥ ६९ ॥ यस्मैददातिसंतुष्टइदंश्रीकृष्णपूजकः ॥ सदीर्घायुःसुखीलोकेजायतेनात्रसंशयः ॥ ७० ॥ त्वमप्यकालमरणंनप्राप्स्यसियतस्त्व या ॥ भुक्तोमहाप्रसादोऽयमेतदर्थंवयंत्विह ॥७१॥ प्रेषितास्तेनयामोऽद्येत्युक्त्वाजग्मुर्यदृच्छया ॥ अहमप्युत्थितःस्वप्नात्प्रातःकालोबभू वह ॥७२॥ महाप्रसादमाधुर्यंजाग्रच्चाप्यनुभूतवान् ॥ अथैकोवैष्णवःप्रातःसमागत्याब्रवीच्चमाम् ॥ ७३ ॥ भक्तमालांतुभाषायांत्वमेतां संस्कृतांकुरु ॥ इतिश्रुत्वातुतेनाहंसहविश्वेश्वरांतिके ॥ ७४ ॥ गत्वास्थापितवान्पत्रद्वयंविधिनिषेधकम् ॥ विधिपत्रंतुबालेनतदादत्तंतु मत्करे ॥७५॥ तदारभ्यातिचिंताभूत्कथंज्ञास्यामितत्कथाम् ॥ अथलब्धानकुत्रापिकथातस्थौमनस्तथा ॥ ७६ ॥ एवंकाश्यांस्थितोऽक स्माज्जातोहमतिदुःखितः ॥ सर्वैर्ज्ञातंस्वचित्तेतुनजीविष्यत्ययंत्विति ॥७७॥ एवंभूतोऽप्यहंदैवादेवंसंजीवितःपुनः ॥ गतेतस्मिन्वत्सरेतु जातोऽहंनीरुजःसुखी ॥७८॥ तदैवफाल्गुनेमासिगतोऽहंनिजमंदिरम् ॥ तत्रदृष्ट्वातुमांसर्वेमृतंपुनरिवागतम् ॥ ७९ ॥ आनंदाश्रूणिमुमुचुरा श्लिष्यंतिस्ममांमुदा ॥ ततस्तस्मिन्वत्सरेतुपितादिविगतोमम ॥८०॥ कृत्वौर्ध्वदैहिकंतस्यप्रवृत्तोऽहंधनार्जने ॥ संसारयात्रांसततंकुर्वतो

मेगताःसमाः ॥८१॥ एवमेकदिनेस्नातुमर्द्धोदयदिनेत्वहम् ॥ ब्रह्मावर्तेतुगंगायांगतःस्नात्वातुतत्रवै ॥८२॥ वाल्मीकेराश्रमंद्रष्टुंगतस्तत्र
स्थितःक्षणम् ॥ हृष्टोभूत्वासमायातःस्वस्थानेतत्रवैनिशि ॥ ८३ ॥ पूर्वंयश्चोक्तवान्साधुर्भक्तमालांचसंस्कृताम् ॥ विधेहीतिसवैस्वप्नं
दृष्ट्वातस्मिन्महाश्रमे ॥ ८४ ॥ कुरुत्वंभक्तमालांभोःकथाचात्रैवतिष्ठति ॥ इतिश्रुत्वासमुत्थायप्रातरेवतुवैष्णवान् ॥ ८५ ॥ आपृ
च्छ्याहंतदारंभंकृतवानतिभक्तितः ॥ भक्तानांकृपयाह्येतत्परिपूर्णमभूदद्भुतम् ॥ ८६ ॥ एवंमयानुभूतंचरहस्यमुदितंत्विह ॥ तस्मा
द्भक्तेस्तुमाहात्म्यंसर्वंसत्यंनसंशयः॥८७॥इतिश्रीभगवद्भक्तिमाहात्म्येस्वानुभवकथनंनामैकोनपञ्चाशदधिकशततमःसर्गः ॥ १४९ ॥
इत्येवंभक्तिमाहात्म्यंकथितंभक्तितोमया ॥ सर्वांगमहितंसर्वंयथाशास्त्रंयथामति ॥१॥ अथयेकथिताभक्तास्तेषांमध्येतुकेचन ॥ निव
संतिहरेःपार्श्वेकेचिल्लोकनिवासिनः ॥ २ ॥ केचित्सेवापरानित्यंवैकुण्ठेऽद्यापिसंतिवै ॥ किंतुप्रियाहरेश्चैतेतेषामुक्तंकरोतिसः ॥ ३ ॥
इतिविज्ञायतेषांतुनामतोगुणतोमया ॥ कृतंहिकीर्तनं तेषांप्रसादेत्कोऽपिचेन्मयि ॥ ४ ॥ यथाराजगृहेगंतुमक्षमोराजसेविनाम् ॥ कुर्व
न्हिसेवनंमर्त्योलभतेवांछितंध्रुवम् ॥ ५ ॥ तथाहमपिभक्तानांकृतवानस्मिकीर्तनम् ॥ असमर्थोऽन्यसेवायांवाङ्मात्रेणापिसेवते
॥ ६ ॥ सर्वेभक्तवशाःप्रायोविशेषेणतुदेवताः ॥ तत्रापिदुर्गागणपवृषाकपिचतुष्टयम् ॥ ७ ॥ एतेकुर्वंति भक्तानांप्रार्थितंह्यविचा
रतः ॥ भक्त्यास्वकीयभक्तानांप्रार्थयंतिहितंध्रुवम् ॥ ८ ॥ अतोऽस्यश्रवणंपुण्यप्रदंकामार्थसाधकम् ॥ यत्कथाभक्तिजननीततो
मोक्षप्रदायकम् ॥ ९ ॥ किमत्रबहुनोक्तेनएकएवहिमारुतिः ॥ ददात्यत्रस्मृतोभक्त्यापुरुषार्थचतुष्टयम् ॥१०॥ अतोग्रन्थस्यमाहात्म्यं

यत्किंचित्कथितंमया ॥ संतःश्रुत्वाभिनंदंतुग्रन्थेकुर्वंत्वनुग्रहम् ॥ ११ ॥ पुराणश्रवणंदेशकालाचारव्यवस्थितम् ॥ अभीष्टफ
लदंनॄणामन्यथानतथार्थदम् ॥ १२ ॥ एतस्यश्रवणेऽवश्यंनियमोनाप्यपेक्षितः ॥ श्रुतमात्रस्तुफलदोनृणांशाबरमंत्रवत् ॥१३॥ किंच
प्रौढेकलौधर्मोनस्थास्यतिकथंचन ॥ तदापुराणश्रवणंकुत्रवानियमःक्वा ॥ १४ ॥ यथाद्यवेदमार्गस्तुतिरोभूतःकलेर्बलात् ॥ पुराण
मपिसर्वत्रसर्वंनैवास्तिताद्दशम् ॥ १५ ॥ अग्रेत्वेतदपिप्रायोनस्थास्यतिमुनेर्वचः ॥ तदेतदपिलोकानांहितायप्रभविष्यति ॥ १६ ॥
तस्मादेतत्तुमाहात्म्यंश्रोतव्यंसाधुभिर्जनैः ॥ तेषांहिभक्तिःसर्वस्वंसैवचात्रास्तिवर्णिता ॥ १७ ॥ अन्योऽपिशृणुयाद्यस्तुसोऽपिभक्ति
मवाप्नुयात् ॥ यतोहिभक्तसंसर्गःश्रवणादत्रजायते ॥ १८ ॥ अभिसंधाययःकामाञ्छृणोतिकीर्तनंसताम् ॥ तस्मैकामान्ददात्येष
भगवान्भक्तवत्सलः ॥१९॥ यथामातापिताप्रेमकुर्वातिपुत्रकेस्वके ॥ दत्तश्चाभिमतंचापितथाप्रीतोभवेद्धरिः ॥ २० ॥ एकादश्यामुपव
सन्कुर्वञ्जागरणंनिशि ॥ श्रुत्वैतद्भक्तिमाहात्म्यंसर्वान्कामानवाप्नुयात ॥ २१ ॥ अपुत्रोलभतेपुत्रंनिर्धनोधनमाप्नुयात् ॥ मूर्खोभवति
मेधावीश्रुत्वेमांसत्कथांशुभाम् ॥२२॥ हनुमच्चरितंश्रुत्वालभतेसर्ववांछितम् ॥ विभीषणस्यचरितंश्रुत्वापूज्योभवेन्नरः ॥२३॥ शबरीच
रितंश्रुत्वादृढभक्तिर्भवेन्नरः॥ अजामिलस्यचरितंश्रुत्वापूज्योभवेन्नरः ॥ २४ ॥ जटायुचरितंश्रुत्वाजायतेरामभक्तिमान् ॥ अंबरीषस्य
चरितंश्रुत्वाऽऽपद्भ्योविमुच्यते ॥२५॥ विदुरस्त्रीकृतांभक्तिंश्रुत्वाप्रेमहरोभवेत् ॥ सुदामचरितंश्रुत्वादरिद्रोधनवान्भवेत् ॥२६॥ चंद्रहा
सस्यचशिबेरंतिदेवस्यकीर्तनात् ॥ नशत्रुभयमाप्नोतिलभतेवांछितंफलम्॥२७॥पांचालीभक्तिमाहात्म्यंसर्वसंकटनाशनम्॥वाल्मीकि

मुनिमाहात्म्यंमहापातकनाशनम् ॥२८॥ रुक्मांगदस्यचरितंमयूरध्वजभूपतेः॥कीर्तनंसर्वपापघ्नंहरिभक्तिप्रदायकम्॥२९॥प्रह्लादचरितं श्रुत्वामुच्यतेसर्वसंकटात्॥हरिभक्तिंचसुदृढांलभेज्जन्मनिजन्मनि॥३०॥एवमन्येतुयेचाग्रेभक्तास्ततेषांतुकीर्तनात्॥हरिभक्तिमवाप्नोति ततःप्राप्नोतिवांछितम् ॥३१॥ इतिश्रीभगवद्भक्तिमाहात्म्यंकथितंमया॥प्रीत्यैभूयाद्भगवतःश्रीकृष्णस्यदयानिधेः ॥३२॥ भूत्वाप्रसन्नो भगवान्निजभक्तानुकीर्तनात् ॥ ददात्यभिमतंनॄणांश्रोतॄणांसर्वसिद्धिदः ॥३३॥प्रसीदतुहरिःश्रीमान्भगवान्भक्तवत्सलः ॥ तद्भक्त्यामेप्र सीदंतुतस्मैतेभ्योनमोनमः ॥ ३४ ॥ षट्साहस्रमिहश्लोकाउक्ताःसप्तशताधिकाः ॥ तथापंचाशदधिकंसर्गाणांचशतंशुभम् ॥ ३५ ॥

इतिश्रीभगवद्भक्तिमाहात्म्येश्रीमच्चंद्रदत्तकृतसंस्कृतभाषान्तरेपञ्चाशदधिकशततमःसर्गः ॥ १५० ॥ भक्तमालानामग्रन्थःसम्पूर्णः ॥



इदं भक्तमालापुस्तकं 'क्षेमराज-श्रीकृष्णदास' इत्यनेन मुम्बय्यां स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रयित्वा प्रकाशितम् । शके १८४८, संवत् १९८३.

# क्रय्य पुस्तकें ।



| नाम. | की. रु. आ. |
|---|---|
| अध्यात्मरामायण-मूल(गुटका रेशमी) नित्यपाठोपयोगी | १-४ |
| अध्यात्मरामायण-संस्कृतटीकासहित । ग्लेज कागज | ४-० |
| अध्यात्मरामायण- " " रफ कागज ... ... .... | ३-८ |
| अध्यात्मरामायण-भाषाटीकासहित ... ... .... | ७-० |
| अध्यात्मरामायण-श्रीरामविजय भाषाटीका सहित ... | ३-० |
| अद्भुतरामायण-मूलमात्र ... ... .... .... ... | ०-१२ |
| अद्भुतरामायण-भाषाटीकासहित ... ... .... ... | १-८ |
| वाल्मीकियरामायण-तीनश्लोकी रामानुजी भूषण संस्कृत टीकासहित. ... ... ... ... ... ... | ३०-० |

| नाम. | की. रु. आ. |
|---|---|
| गर्गसंहिता-उग्रसेनकृताश्वमेधादि १० खण्ड समाहात्म्य | ६-० |
| गर्गसंहिता-भाषाटीकासहित .... .... ... .... | १०-० |
| गर्गसंहिता-केवल उग्रसेन—अश्वमेधखण्ड .... .... | १-४ |
| वाल्मीकियरामायण-मूल गुटका .... ... .... ... | ५-० |
| वाल्मीकियरामायण-संस्कृत मूल और भाषाटीकासहित । | ३०-० |
| वाल्मीकियरामायण-मूल-रेशमी दो जिल्दोंमें ... | १०-० |
| वाल्मीकियरामायण-रामाभिरामी संस्कृतटीकासहित | १५-० |

पुस्तकें मिलनेका ठिकाना—

खेमराज श्रीकृष्णदास,
" श्रीवेङ्कटेश्वर " स्टीम्-प्रेस बम्बई.

गङ्गाविष्णु श्रीकृष्णदास,
" लक्ष्मीवेङ्कटेश्वर " स्टीम-प्रेस कल्याण-बम्बई.

# अत्रेयमभ्यर्थना ।



अत्रास्माकं मुद्रणालये ऋगाद्यो वेदाः, उपनिषदः, वेदान्तग्रन्थाः, महाभारतादीतिहासाः, श्रीमद्भागवतादिमहापुराणोपपुराणानि, धर्मशास्त्र-कर्मकाण्ड-व्याकरण-न्याय-योग-साङ्ख्य-मीमांसादिशास्त्रीयग्रन्थाः, काव्य-नाटक-चम्पू-प्रभृतयो ग्रन्थाः, सहस्रनामाद्यनेकस्तोत्रग्रन्थाः, विविधभाषाग्रन्थाश्च सीसकोत्तमसहस्राक्षरैर्मनोहरं मुद्रिता योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः ।

अधिकमस्मदीयसूचीपत्रावलोकनेन "श्रीवेङ्कटेश्वरसमाचार" पत्रप्रापणद्वारा च ज्ञेयमिति शम् ।

**क्षेमराज-श्रीकृष्णदास-"श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालयाध्यक्षः-मुम्बई-स्थः ।**

यह पुस्तक खेमराज श्रीकृष्णदासने बम्बई खेतवाडी ७ वीं गली खम्बाटा लेन, निज "श्रीवेङ्कटेश्वर" स्टीम्-प्रेसमें अपने लिये छाप कर यहीं प्रकाशित की.

॥ इति संस्कृतभक्तमाला समाप्ता ॥